# अथ प्रथममुद्रणकालिकी–प्रस्तावनिका ।

श्रीमद्भारते वर्षे तीर्थराजश्रीपुष्कराद्दुदीच्यां दिशि पंचदशयोजनानन्तरं मरुसंज्ञकदेशे बीकानेरविषयान्तर्गतश्रीरत्नगढनिवासिना गौडवंशावतंसश्रीशुक्लयजुर्वेदीयमाध्यंदिनवाजसनेयिना शिवालोपाह्वयेन श्रीरामकृष्णपौत्रेण श्रीकस्तूरीचन्द्रात्मजेन पंडितश्रीचतुर्थीलालशर्मणा मया 'श्राद्धप्रकाश' नामाऽयं ग्रंथोऽनेकनिबंधानुरोधेन कृतः, अत्र च हेमाद्रिः, पराशरमाधवः, कात्यायनसूत्रम्, कर्कभाष्यम्, काशिका, देवयाज्ञिकभाष्यम्, पारस्करसूत्रम्, हरिहरभाष्यम्, मनुस्मृतिः, मेधातिथिगोविंदराजौ, याज्ञवल्क्यः, मिताक्षरा, वृद्धपाराशरी, मदनरत्नम्, स्मृतिसंग्रहः, अष्टादशस्मृतिः, अष्टाविंशतितत्त्वानि, यजुर्वेदीयश्राद्धतत्त्वम्, निर्णयामृतः, मदनपारिजातः, त्रिस्थलीसेतुः, श्राद्धमयूखः, ब्राह्मणसर्वस्वम्, पितृभक्तिः, मत्स्यपुराणम्, कूर्मपुराणम्, वृद्धगरुडपुराणम्, ब्रह्मपुराणम्, वायुपुराणम्, अंत्येष्टयर्कः, स्मृतिचंद्रिका, शतपथब्राह्मणम्, इत्यादिमहानिबंधेभ्यः प्रमाणान्युपसंगृह्य बहुशो वारंवारं विचार्य अनेकशास्त्रार्थनिर्णयविभूषितपद्धतिसंग्रहोऽकारि । एतादृशो गौडानां महानिबंधोऽयमनेकपण्डितैः संशोध्य टिप्पणीभिश्च सनाथीकृत्य मुंबय्याख्यराजधान्यां स्वधर्मपरायणवैश्यवंशावतंसश्रीयुतश्रीकृष्णदासात्मजाय श्रेष्ठिश्रीक्षेमराजगुप्ताय तदीये "श्रीवेङ्कटेश्वर" मुद्रणालये सीसकाक्षरैः सुन्दरचिक्कणपुष्टपत्रेषु मुद्रयित्वा प्रकाशयितुं परमसंमानसंतुष्टचेतसा मया समस्तपुनर्मुद्रणाद्यधिकारप्रदानपूर्वकं दत्तः । स चोक्तश्रेष्ठिना श्रीक्षेमराजेन स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशितः । इतः परमन्यः कश्चिदपि पुस्तकव्यापारी मुद्रणसाहसं मा कार्षीत् । अभ्यर्थये च विद्वद्भ्यान् । सदयहृदयैर्नैसर्गिकगुणग्रहणसद्वृत्तैर्विद्वद्भिरयं ग्रंथपरिश्रमः कृतकृत्यः करणीयः । यदि च, अस्य शोधनसमयेऽनवधानादृग्दोषाद्वा स्थलविशेषे क्वचिद्दोषो दृश्येत, स च विद्वद्भिः क्षंतव्यः शोधनीयश्चेति शम् । श्रीकस्तूरीचन्द्रात्मजपंडितश्रीचतुर्थीलालगौडः ।

# प्रस्तावना।

विदित हो कि शास्त्रमें कल्याण होनेके अनेक उपाय लिखेहै, परन्तु जैसा श्राद्धकरनेसे होताहै वैसा और किसीसे नहीं होसकताहै; उक्तं च हेमाद्रौ व्यासेन--"श्राद्धात्परतरं नास्ति श्रेयस्करमुदाहृतम् । तस्मात्सर्वप्रयत्नेन श्राद्धं कुर्याद्विचक्षणः ॥" देवलोपि--"अरोगी प्रकृतिस्थश्च चिरायुः पुत्रपौत्रवान् । अर्थवानर्थभोजी च श्राद्धकारी भवेदिह ॥" इत्यादि अनेक मन्वादिवाक्योंसे श्राद्ध करना श्रेष्ठ है, परंच कलिकालकी प्रबलतासे तथा युगह्रास होनेसे मनुष्योंकी बुद्धि नास्तिकवासे नष्ट होगई इस कारण बहुत मनुष्य विधर्मियोंके संगसे तथा शास्त्रके अनभ्याससे और धूर्त्त लोगोंके कहनेसे सत् शास्त्रका विश्वास नहीं करते हुये श्राद्ध न करनेमें अनेक हेतु निकालतेहै और प्रत्यक्षप्रमाण दिखाते हुये श्राद्धादि महायज्ञोंको विपरीत कहतेहैं तथा भोले भाले मनुष्योंको वैदिकसनातनधर्मसे भ्रष्ट करके अधर्ममार्गमें लगादेतेहैं सो बडीही हानि है। महाशयगण! जैसे यज्ञादिकोंमें मंत्रद्वारा इंद्रादिदेवता शक्तिकरके अपने २ स्थलमें आते है । यजमानका किया हुवा पूजन होम बलिदान आदि कर्मोंमें दिये हुये हविः (पदार्थ) को देखके तृप्त होतेहैं। और यजमानके मनोरथको सफल करतेहैं; इसी प्रकार श्राद्धोंमें भी "आयन्तु नः पितरः" इत्यादि वेदमंत्रद्वारा आये हुवे पितृगण वायुरूप होकर ब्राह्मणोंके शरीरमें स्थित हुये नानाप्रकारके पायस आदि पदार्थों करके तृप्त होतेहै। फिर पुत्रादिकोंको आयु, पुत्र, धन, संपत्ति आरोग्यादि अनेक काम्य मनोरथोंको देतेहैं। देखिये संपूर्णही जगत् फलयुक्त कर्मोंमें प्रवृत्त होताहै निष्फल कर्ममें कोई भी नहीं प्रवृत्त होताहै। जैसे यज्ञादिकोंमें देवोंको फलदातृत्व है ऐसे श्राद्धादिकोंमें दिव्यपितरोंको भी फलदातृत्व है। कितनेक नास्तिक हेतुवादी कहतेहै, इंद्रादिदेवता तो चेतनाविशिष्ट ज्ञानक्रियाशक्तिवाले है इसलिये वेदमंत्रोंद्वारा यज्ञदेशमें आतेहैं। परंतु मृत पिता आदि मनुष्यगण तो स्वस्वकर्मानुसार नानायोनियोंमें गये हुये देवशक्तिहीन कैसे आसकते है? यदि आतेहैं तो फिर दीखते क्यों नहीं, आप कहें कि इंद्रादिदेवता क्या दिखाई देतेहैं? । परंच देवताओंकी तो अतीन्द्रियता पूर्णरीतिसे है तथा पदार्थको दर्शनमात्रसे ग्रहण करसक्तेहै और पितरोंकी अतींद्रियताका अभाव होनेसे तथा अपने कर्मानुसार नानायोनियोंमें भ्रमण होनेसे किसप्रकार श्राद्धदेशमें आतेहैं? और कैसे तृप्त होते हैं? तथा पराधीन हुये पुत्रादिकोंको क्या देसक्तेहैं? । और पितरोंको अन्न पहुँचानेवाला कौनहै? तथा किसप्रकार मिलताहै? इस लोकमें दिया हुआ अन्न परलोकवासियोंको नानायोनियोंमें गये हुयोंको क्या मिलताहै? कदापि नहीं मिलताहै। इस प्रकार नास्तिकलोग कहतेहै; परंच जैसे इन्द्रादिदेवगणों में चेतनविशिष्टशक्तिहै वैसेही दिव्यपितृगण अग्निष्वात्तादिकोंमें भी तेजशक्ति है और पितरोंकी वसु, रुद्र, आदित्य विश्वेदेवगण भी तो सहायता करतेहैं तो फिर श्राद्ध क्यों नहीं मिलता, अवश्यही पितृगणोंको मिलताहै। जैसे गर्भवती स्त्री अपने खाये हुये अन्न करके आप भी तृप्त होतीहै और अपने गर्भको भी पोषण करतीहै तथा अन्नदेनेवालेका भी उपकार करतीहै वैसेही वसु रुद्र, आदित्य, देवता भी श्राद्धके अन्नको देखकर तृप्त होतेहैं और अपने अधीन पिता आदिकोंको भी तृप्त करतेहैं तथा श्राद्धकरनेवालोंका भी मनोरथ पूर्ण करतेहैं। और अग्निष्वात्ता आदि दिव्य पितृगण मंत्रशक्तिकरके नामगोत्रद्वारा पुत्रादिकोंका दिया हुआ अन्न नानायोनियोंमें गये हुये पित्रादिकोंको तत् तत् योनिके योग्य भक्ष्य पदार्थ पुगाते है। और पुत्रादिकोंको उत्तम फल देतेहैं जिसके प्रमाणके लिये नीचे धर्मशास्त्रके वचन लिखतेहैं सो कृपाकरके देखना और समग्र पढना ( मनुस्मृति-मत्स्यपुराण-पद्मपुराण-महाभारत-गरुडपुराण-मार्कंडेयपुराण-हेमाद्रिशु )।

"सपिंडीकरणे जाते गताब्दे च स्वकर्मभिः॥देवत्वं वा मनुष्यत्वं पक्षित्वं [illegible] ॥ [illegible] विभिन्नाहाराणां श्राद्धं वै तृप्तिदं कथम्।यदप्यन्यैर्द्विजैर्भुक्तं हूयते यदि वानले २
शुभाशुभात्मकैः प्रेतैस्तद्दत्तं भुंजते कथम्॥श्राद्धस्यावश्यकत्वं तु अमावास्[illegible] ॥श्रीभगवानुवाच॥शृणु पक्षींद्र प्रेतानां यथाश्राद्धं तु तृप्तिदम्॥देवो यदापि जातो-
यं मनुष्यः कर्मयोगतः ॥ ४ ॥ तस्यान्नममृतं भूत्वा देवत्वेप्यनुयाति च ॥ [illegible] रूपेण पशुत्वे च तृणं भवेत् ॥ ५ ॥ श्राद्धं हि वायुरूपेण नागत्वेप्यनुगच्छति ॥
फलं भवति पक्षित्वे राक्षसेषु तथामिषम् ॥ ६ ॥ दानवत्वे तथा मांसं प्रेतत्वे [illegible]कम् ॥ मनुष्यत्वेऽन्नपानादि नानाभोगरसो भवेत् ॥ ७ ॥ गरुड उवाच–कथं कव्या
नि दत्तानि हव्यानि च जनैरिह ॥ गच्छंति पितृलोकं वा प्रापकः कोत्र गद्यते ॥ ८ ॥ मृतानामपि जंतूनां श्राद्धमाप्यायनं यतः ॥ निर्वाणस्य प्रदीपस्य तैलं संवर्द्धये
च्छिखाम् ॥ ९ ॥ मृताश्च पुरुषाः स्वामिन् स्वकर्मजनितां गतिम् ॥ गाहंति के कथं स्वस्य सुतस्य श्रेय आप्नुयुः ॥ १० ॥ श्रीभगवानुवाच ॥ श्रुते प्रत्यक्षत-
स्तार्क्ष्य प्रामाण्यं बलवत्तरम्॥श्रुत्यातु बोधितार्थस्य पीयूषत्वादिरूपता॥ ११ ॥नामगोत्रं पितॄणां तु प्रापकं हव्यकव्ययोः॥श्राद्धस्य मंत्रास्तद्वत्तु उपलभ्याश्च भक्तितः॥१२॥
अचेतनानि चैतानि प्रापयंति कथंत्विति॥सुपर्ण नावगंतव्यं प्रापकं वच्मि ते परम्॥१३॥अग्निष्वात्तादयस्तेषामाधिपत्ये व्यवस्थिताः॥काले न्यायगतं पात्रे विधिना प्रतिपा-
दितम् ॥१४॥ अन्नं नयंति तत्रैते जंतुर्यत्रावतिष्ठते ॥ नामगोत्रं च मंत्रश्च दत्तमन्नं नयंति ते ॥ १५ ॥ अपि योनिशतं प्राप्तांस्तांस्तृप्तिरुपतिष्ठति ॥ तेषां लोकांतरस्थानां विवि
धैर्नामगोत्रकैः ॥१६॥ अपसव्यं क्षितौ दर्भे दत्ता पिंडास्त्रयस्तु वै ॥ यांति तांस्तर्पयंत्येवं प्रेतस्थानस्थितान्पितॄन्॥ १७॥अप्राप्तयातनास्थानं श्रेष्ठा ये भुवि पंचधा॥ नानारूपास्तु
जाता ये तिर्यग्योन्यादिजातिषु॥१८॥यदाहारा भवंत्येते पितरो यत्र योनिषु॥तासुतासु तदाहारः श्राद्धान्नमुपतिष्ठते॥ १९॥यथा गोषु प्रनष्टो वै वत्सो विंदति मातरम्।तथान्नं न
यते विप्र जंतुर्यत्रावतिष्ठते ॥ २० ॥ पितरः श्राद्धसोक्तारो विश्वेदेवैः सदा सह॥एते श्राद्धं सदा भुक्त्वा पितॄन्संतर्पयंत्यतः ॥ २१ ॥ वसुरुद्रादितिसुताः पितरः श्राद्ध-
देवताः ॥ प्रीणयन्ति मनुष्याणां पितॄञ्श्राद्धेषु तर्पिताः ॥ २२ ॥ आत्मानं गुर्विणीगर्भमपि प्रीणाति वै यथा ॥ दोहदेन तथा देवाः श्राद्धैः स्वांश्च पितॄन्नृणाम्॥ २३ ॥
हृष्यंति पितरः श्रुत्वा श्राद्धकालमुपस्थितम् ॥ अन्योन्यं मनसा ध्यात्वा संपतंति मनोजवम् ॥ २४ ॥ ब्राह्मणैः सह चाश्नंति पितरो ह्यंतरिक्षगाः ॥ वायुभूताश्च तिष्ठंति
भुक्त्वा यांति परां गतिम् ॥ २५ ॥ निमंत्रितास्तु ये विप्राः श्राद्धपूर्वदिने खग ॥ प्रविश्य पितरस्तेषु भुक्त्वा यांति स्वमालयम्॥ २६ ॥ श्राद्धकर्तातुयद्येकः श्राद्धे विप्रो
निमंत्रितः॥उदरस्थः पिता तस्य वामपार्श्वे पितामहः ॥ प्रपितामहो दक्षिणतः पृष्ठतः पिंडभक्षकः ॥ २७ ॥ श्राद्धकाले यमः प्रेतान्पितॄंश्चाथ यमालयात् ॥ विसर्जयति
मानुष्ये निरयदोऽपि काश्यप ॥ २८ ॥ क्षुधार्त्ताः कीर्त्तयंतश्च दुष्कृतं च स्वयं कृतम् ॥ कांक्षंते पुत्रपौत्रेभ्यः पायसं मधुसंयुतम्॥तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन
॥ २९ ॥ गरुडस्तुउवाच–स्वामिन्केनापि ते दृष्टा आगताः पितरो द्विजे॥लोकादमुष्मादागत्य भुंजते भुवि मानद॥ ३०॥श्रीभगवानुवाच॥गरुत्मञ्शृणु वक्ष्यामि यथा दृष्टास्तु

सीतया ॥ पितरो विप्रदेहे वै श्वशुराद्यास्त्रयः क्वचित्॥३१॥गृहीत्वा पितुराज्ञां वै रामो वनमुपागमत् ॥ ततः पुष्करयात्रार्थं रामोऽयात्सीतया सह ॥३२॥ तीर्थे चापि समागत्य श्राद्धं प्रारब्धवांस्तु सः ॥ आयाता ऋषयः सर्वे ये रामेण निमंत्रिताः॥३३॥तान्मुनीनागतान्दृष्ट्वा वैदेही जनकात्मजा॥ रामाज्ञयाऽन्नमादाय परिवेष्टुमुपागता ॥ ३४ ॥अपासर्पत्ततो दूरे विप्रमध्ये तु संस्थिता॥गुल्मैराच्छाद्य चात्मानं निगूढं सा स्थिता तदा॥ ३५ ॥ गतेषु द्विजमुख्येषु प्रियां रामोऽब्रवीदिदम् ॥ कथं लतासु लीना त्वं कारणं वद मा चिरम् ॥ ३६ ॥ एवमुक्ता तदा भर्त्रा सीता साऽधोमुखी स्थिता ॥ मुंचंती चाश्रुसंघातं राघवं वाक्यमब्रवीत् ॥ ३७ ॥ पिता तव मया दृष्टो ब्राह्मणाग्रेषु राघवः ॥ सर्वाभरणसंपन्नौ द्वौ चान्यौ च तथाविधौ ॥ ३८ ॥ दृष्ट्वा त्वत्पितरं चाहमपक्रांता तवांतिकात् ॥ इति श्रुत्वा प्रियावाक्यं रामो विस्मितमानसः ॥ ३९ ॥ आश्चर्यमिति तज्ज्ञात्वा तदा स्वस्थानमागमत् ॥ सीतया पितरो दृष्टा यथा तत्ते निवेदितम् ॥ ४० ॥ तस्माच्छ्राद्धं चरेद्भक्त्या शाकैरपि यथाविधि ॥ कुर्वीत समये श्राद्धं कुले कश्चिन्न सीदति ॥ ४१ ॥ ये यजंति पितॄन्देवान् ब्राह्मणांश्च हुताशनम् ॥ सर्वभूतांतरात्मानं मामेव हि यजंति ते ॥ ४२ ॥ स्मार्त्तेन विधिना श्राद्धं कृत्वा स्वविभवोचितम् ॥ ब्रह्मस्थावरपर्य्यंतं जगत्प्रीणाति मानवः ॥ ४३ ॥"

इत्यादि अनेक शास्त्रके वाक्योंसे श्राद्ध करना अत्यावश्यकीय है । श्राद्धके तुल्य कोई उत्तम कर्म नहीं है इसलिये सर्वधर्मात्माओंको श्राद्ध करना चाहिये । और नास्तिक धूर्त हेतुवादियोंसे दूर ही रहना योग्य है । इसीलिये मैंने परमेश्वरकी प्रीति और लोकोपकारके अर्थ यह "गौडीयश्राद्धप्रकाश" नाम महानिबंध संवत् १९५५ में श्रीमान् सेठ खेमराजजीको छापनेके लिये दिया उन्होंने अत्युत्तम छापकर जो प्रकाशित किया वह हाथोंहाथ प्रेमसें हमारे विद्वज्जनगणने उठालिया हमको देश देशांतरके अनेक पंडितमहाशयोंके धन्यवाद पत्र मिले ।जनसे प्रसन्नता और उत्साह बढा उन महाशयोंको हम धन्यवाद देतेहै । अब यह महानिबंध द्वितीयावृत्तिमें पहलेसे भी अत्युत्तम छपाहै सो भूदेव इसको देखकर प्रसन्न होंगे और हमको तथा सेठजीको कृतार्थ करेंगे । और हमारे गौडग्रंथोंकी उन्नति करनेके लिये हमने "चातुर्थीलालभास्कर" नाम महानिबंध बनायाहै जिसके प्रकाश अर्थात् प्रकरण १२ हुये है श्लोकसंख्या ७५००० है जिनमेंसे नीचे लिखे प्रकाश छपके तैयारहै शांतिप्रकाश १, प्रतिष्ठाप्रकाश २, जलाशयोत्सर्गप्रकाश ३, गौडीयश्राद्धप्रकाश ४, अनुष्ठानप्रकाश ५, मुहूर्तप्रकाश ६, संस्कारप्रकाश ७, शेष प्रकाश, समयानुकूल छपते रहैंगे । अन्य ग्रंथ भी हमारे बनाये हुये छपेहै. शूद्रश्राद्धपद्धति १, शूद्रविवाहपद्धति २, शूद्रवास्तुपद्धति ३, तुलसीविवाहपद्धति ४, नित्यकर्मप्रयोगमाला ५, वेदोक्तचातुर्थीलाली विवाह पद्धति ६, पार्वणश्राद्धसटीक ७, अंत्येष्टिकर्मपद्धति सटीक ८, कर्मकांडसमुच्चय ९, इत्यादि छोटे २ ग्रंथ छपेहै चाहिये सो मंगाना ।

आपलोगोंका हितैषी–

पण्डित श्रीचतुर्थीलाल गौड कर्मठरत्न-रत्नगढनिवासी.

# अथ गौडीयश्राद्धप्रकाशस्थविषयाणामनुक्रमणिका ।

## द्वितीयप्रकरणम् ।

## पंचमं प्रकरणम् ।



## षष्ठं प्रकरणम् ।



## शूद्रश्राद्धप्रकरणम ।

इति गौडीयश्राद्धप्रकाशस्थविषयाणामनुक्रमणिका समाप्ता ।

॥ श्रीगणेशाय नमः ॥ अथ श्राद्धप्रकाशः॥ स्वपुरःपिण्डदातॄणांपितॄन्पापप्लुतानपि ॥ समुद्धरंतंकृपयानौमिदेवंगदाधरम्॥१॥ उक्त्वापूर्त्तविधिंकृत्स्नंनत्वोमाधवमाधवौ ॥ पितॄन्मातामहांश्चैवपितॄणांपूर्वजानुजौ ॥ २ ॥ कातीयपारस्करगृह्यसूत्राण्यथोपुराणस्मृतिपद्धतीश्च ॥ सतांचवाक्यानिविचार्यसम्यक्स्वशाखिनांश्राद्धविधिंतनोमि ॥३॥ गौडग्रंथविलोपंतुदृष्ट्वासमयभेदतः ॥ तदुद्धारायकुर्वेहंग्रंथंवैशिष्टसंमतम् ॥ ४ ॥ ग्रंथास्तुबहवःसन्तिदाक्षिणात्याश्चमैथिलाः ॥ तथापिभूमिदेवानांप्रीतिदोयंभविष्यति ॥५॥ ( तत्रतावच्छ्राद्धस्वरूपम् ) देशकालपात्रेषुपित्राद्युद्देशेनविधिहविस्तिलदर्भमंत्रश्रद्धादिभिर्दानंश्राद्धम्॥ तथाच ( पराशरः ) देशेकालेचपात्रेचविधिनाहविषाचयत् ॥ तिलैर्दर्भैश्चमंत्रैश्चश्राद्धंस्याच्छ्रद्धयायुतम् ॥ ( ब्रह्मपुराणेपि ) देशेकालेचपात्रेचश्रद्धयाविधिनाचयत् ॥ पितॄनुद्दिश्यविप्रेभ्योदत्तंश्राद्धमुदाहृतम् ॥ ( मरीचिः ) प्रेतंपितॄंश्चनिर्दिश्यभोज्यंयत्प्रियमात्मनः॥ श्रद्धयादीयतेयत्रतच्छ्राद्धंपरिकीर्त्तितम्॥ इति ॥ तस्मिंश्चकर्मणियागादाविंद्रादीनामिवपित्रादेर्देवतात्वंतदुद्देशेनमंत्रद्वाराद्रव्यत्यागात् ॥ यथाच ॥ यागादौमंत्राहूताइंद्रादयःशक्तिमात्रेणतत्तत्स्थलेआविर्भूतायजमानत्यक्तद्रव्यदर्शनेनतृप्यन्तस्तेषामभीष्टफलंयथासाधयंतितथाश्राद्धेपिमंत्राहूताःपित्रादयःसमागताःपुत्रादित्यक्तद्रव्यभोगेनतृप्यंतोविशिष्टफलप्रदाइत्येवंकल्पनीयमिति ॥ (अथश्राद्धमाहिमा यमस्मृतौ ) आयुःपुत्रान्यशःस्वर्गंकीर्त्तिंपुष्टिंबलंश्रियम् ॥ पशून्सौख्यंधनंधान्यंप्राप्नुयात्पितृपूजनात् ॥ (याज्ञवल्क्योपि) आयुःप्रजांधनंविद्यांस्वर्गंमोक्षंसुखानिच ॥ प्रयच्छन्तितथाराज्यंप्रीतानॄणांपितामहाः ॥ ( सुमंतुरपि ) श्राद्धात्परतरंनान्यच्छ्रेयस्करमुदाहृतम् ॥ तस्मात्सर्वप्रयत्नेनश्राद्धंकुर्याद्विचक्षणः ॥ ( ब्राह्मे ) तस्माच्छ्राद्धंनरोभक्त्याशाकैरपियथाविधि ॥ कुर्वीतश्रद्धयातस्यकुलेकश्चिन्नसीदति॥(वसिष्ठः)पितापितामहश्चैवतथैवप्रपितामहः॥उपासतेसुतंजातंशकुंताइवपिप्पलम् ॥ मधुमांसैश्चशाकैश्चपयसापायसेनच॥ एषनोदास्य

तिश्राद्धंवर्षासुचमघासुच॥इति॥अथश्राद्धाऽकरणेदोषप्रवर्तकानिवाक्यानि॥(तत्रतावदादित्यपुराणे) नसंतिपितरश्चेतिकृत्वामनसियोनरः॥ श्राद्धंनकुरुतेमोहात्तस्यरक्तंपिबंतिते॥ (हेमाद्रौशातातपः) अमावास्याव्यतीपातपौर्णमास्यष्टकासुच॥विद्वाञ्छ्राद्धमकुर्वाणोनरकंप्रतिपद्यते॥ एतन्माध्यादिपरमितिकल्पतरुः॥(ब्रह्मपुराणे) आश्वयुज्यांतुकृष्णायांत्रयोदश्यांमघासुच॥ प्रावृट्तौयमःप्रेतान्पितॄंश्चाथयमालयात्॥ विसर्जयतिभूलोकंकृत्वाशून्यंस्वकंपुरम्॥तेपुत्रादेःप्रकांक्षंतिपायसंमधुसंयुतम्॥ कन्यागतेसवितरिपितरोयांतिवैसुतान्॥ अमावास्यादिनेप्राप्तेगृहद्वारंसमाश्रिताः॥ श्राद्धाभावेस्वभवनंशापंदत्त्वाव्रजंतिते॥अतोमूलैःफलैर्वापितथाप्युदकतर्पणैः॥ पितृतृप्तिंप्रकुर्वीतनैवश्राद्धंविवर्जयेत्॥ (गरुडनागरखंडयोः) अमावास्यादिनेप्राप्तेगृहद्वारंसमास्थिताः॥ वायुभूताःप्रवाञ्छंतिश्राद्धंपितृगणानृणाम्॥ यावदस्तमनंभानोःक्षुत्पिपासासमाकुलाः॥ ततश्चाऽस्तंगतेसूर्येनिराशादुःखसंयुताः॥निःश्वसंतश्चिरंयांतिगर्हयंतःस्ववंशजम्॥ तस्माच्छ्राद्धंप्रयत्नेनअमायांकर्तुमर्हतीति॥ ननुपुण्योत्कर्षवतांस्वर्गलोकंगतानांमनुष्यपितृपितामहादीनाममृताऽऽहाराणांसतांकथंब्राह्मणभोजनविनष्टेनमानुषेणचान्नेनतृप्तिःसंभवति॥ पापीयसांवातिर्यग्योनिगतानांतृणाद्याहाराणांसतांप्रेतादिरूपत्वंगतानांवारुधिराद्याहाराणांसतामिति॥ (अस्याक्षेपस्यसमाधानंहेमाद्रौदेवलेनोक्तम्) देवोयदिपिताजातःशुभकर्मानुयोगतः॥ तस्यान्नममृतंभूत्वादेवत्वेऽप्यनुगच्छति॥ गांधर्वेभोगरूपेणपशुत्वेचतृणंभवेत्॥ श्राद्धान्नंवायुरूपेणनागत्वेप्यनुगच्छति॥ पानंभवतियक्षत्वेराक्षसत्वेतथामिषम्॥ दानवत्वेतथामांसंप्रेतत्वेरुधिरोदकम्॥ मानुषत्वेऽन्नपानादिनानाभोगरसोभवेत्॥ (मार्कण्डेयपुराणे) पितापितामहश्चैवतथैवप्रपितामहः॥पिण्डसंबंधिनोह्येतेविज्ञेयाःपुरुषास्त्रयः॥ लेपसंबंधिनश्चान्येपितामहपितामहात्॥ प्रभृत्युक्तास्त्रयस्तेषांयजमानश्चसप्तमः॥ तथान्येपूर्वजाःस्वर्गेयेचान्येनरकौकसः॥येचतिर्यक्त्वमापन्नायेच

भूतादिसंस्थिताः॥तान्सर्वान्यजमानोवैश्राद्धंकुर्वन्यथाविधि॥ समाप्याययतेतान्सयेनयेनशृणुष्वतत्॥अन्नविक्षेपणंयत्तुमनुष्यैःक्रियतेभुवि ॥ तेनतृप्तिमुपायान्तियेपिशाचत्वमागताः॥ यदंबुस्नानवस्त्रोत्थंभूमौपततिपुत्रक ॥ तेनतेतरुतांप्राप्तास्तेषांतृप्तिःप्रजायते ॥ यास्तुगंधादिकाणिकाः पतंतिधरणीतले ॥ ताभिराप्यायनंतेषांयेदेवत्वंकुलेगताः ॥ उद्धृतेषुचापिंडेषुयाश्चान्नकणिकाभुवि ॥ ताभिराप्यायनंतेषांयेतिर्यक्त्वंकुलेगताः ॥ येचादंताःकुलेबालाःक्रियायोग्यास्त्वसंस्कृताः ॥ विपन्नास्तेतुविकिरसंमार्जनजलाशिनः ॥ भुक्त्वान्नाचमनंयच्चजलंयदङ्घ्रिसेचने ॥ ब्राह्मणानांतथैवान्येतेनतृप्तिंप्रयांतिवै ॥ तेनानेककुलेतत्रतत्तद्योन्यन्तरंगताः॥ प्रयांत्याप्यायनंवत्ससम्यक्छ्राद्धक्रियावताम् ॥ यथागोषुप्रनष्टोवै वत्सोविंदतिमातरम्॥एवंश्राद्धेऽन्नमुद्दिष्टंमंत्रःप्रापयतेपितॄन् ॥ ( मात्स्यपाद्मयोः ) नामगोत्रंपितॄणांतुप्रापकंहव्यकव्ययोः॥श्राद्धस्यमंत्रास्तद्वच्चउपलभ्यानिभक्तितः॥पित्रादिनामादीनिउपलभ्यानिज्ञातव्यानीत्यर्थः॥नन्वचेतनत्वान्नामादीनांकथंहव्यकव्यप्रापकत्वमित्याशंक्योक्तम् ॥ अग्निष्वात्तादयस्तेषामाधिपत्येव्यवस्थिताइति॥अग्निष्वात्तादयःपितृविशेषाणामाधिष्ठातारःप्रापकाइत्यर्थः॥ तत्रैव ॥ नाममंत्रास्तदादेशाभवान्तरगतानपि ॥ प्राणिनःप्रीणयंत्येतेतदाहारत्वमागतान्॥( वायुपुराणेपि ) यथागोषुप्रनष्टोवैवत्सोविंदतिमातरम्॥तथान्नंनयतेमंत्रोविप्रोजंतुर्यत्रावतिष्ठते ॥ नामगोत्रंचमंत्रश्चदत्तमन्नंनयंतिते ॥ अपियोनिशतंप्राप्तांस्तृप्तांस्तानुपतिष्ठति ॥ इति ॥( अथश्राद्धभेदानाहमदनपारिजातेविश्वामित्रः) नित्यंनैमित्तिकंकाम्यंवृद्धिश्राद्धंसपिंडनम् ॥ पार्वणंचेतिविज्ञेयंगोष्ठ्यांशुद्ध्यर्थमष्टमम् ॥ कर्मांगंनवमंप्रोक्तंदैविकंदशमंस्मृतम् ॥

१ पार्वणंचतुर्विधं. त्रिदैवत्यं. षड्दैवत्यं. नवदैवत्यं. द्वादशदैवत्यं च । तत्रत्रिदैवत्यंसाग्निकानांक्षयाहे । निरग्निकानांतुसपिंडने । महालये दौहित्रप्रतिपदिच । षड्दैवत्यंदर्शसंक्रांतित्रयोदश्यादिषु । नवदैवत्यं वृद्धिमहालये अन्वष्टकाग्रयाणिनिमित्तादिश्राद्धेषु । द्वादशदैवत्यं. तीर्थमहालयगयायात्रादिषुचज्ञेयम् । तदुक्तंहेमाद्रौ–त्रिदैवत्यंमृताहेतुषड्दैवत्यंतु दर्शके । वृद्धौतुनवदैवत्यं तीर्थेद्वादशदैवतम् ।

यात्रास्वेकादशंप्रोक्तंपुष्ट्यर्थंद्वादशंस्मृतमिति ॥ ( एषांलक्षणानिभविष्ये ) अहन्यहनियच्छ्राद्धंतन्नित्यमितिकीर्त्तितम् ॥ वैश्वदेवविहीनंतदशक्तावुदकेनतु ॥ एकोद्दिष्टंतुयच्छ्राद्धंतन्नैमित्तिकमुच्यते ॥ तदप्यदैवंकर्त्तव्यमयुग्मान्भोजयेद्द्विजान् ॥ (अत्रषोडशप्रेतश्राद्धान्यपि संगृह्यंतेएकोद्दिष्टरूपत्वात्॥ (तथाचहेमाद्रौगालवः)दाहादारभ्यदातव्यंश्राद्धंनैमित्तिकंबुधैः॥ नियमाद्वत्सरंयावदितिगालवभाषितमिति)कामायविहितंकाम्यमभिप्रेतार्थसिद्धये ॥ वृद्धौयत्क्रियतेश्राद्धंवृद्धिश्राद्धंतदुच्यते ॥ गंधोदकतिलैर्युक्तंकुर्यात्पात्रचतुष्टयम् ॥ अर्घ्यार्थंपितृपात्रेषुप्रेतपात्रंप्रसेचयेत् ॥ येसमानाइतिद्वाभ्यामेतज्ज्ञेयंसपिंडनम् ॥ अमावास्यायांक्रियतेतत्पार्वणमितिस्मृतम् ॥ क्रियतेवापर्वणियत्तत्पार्वणमितिस्थितिः ॥ (पर्वाणिविष्णुपुराणे)चतुर्दश्यष्टमीचैव अमावास्याचपूर्णिमा॥पर्वाण्येतानिराजेंद्ररविसंक्रमणंतथेति॥ गोष्ठ्यांयत्क्रियतेश्राद्धंगोष्ठीश्राद्धंतदुच्यते ॥ बहूनांविदुषांसंपत्सुखार्थंपितृतृप्तये ॥ क्रियतेशुद्धयेयत्तुब्राह्मणानांतुभोजनम् ॥ शुद्ध्यर्थमितितत्प्रोक्तंश्राद्धंपार्वणवत्कृतम् ॥ निषेककालेसोमेचसीमंतोन्नयनेतथा ॥ ज्ञेयंपुंसवनेश्राद्धंकर्मांगंवृद्धिवत्कृतम् ॥ देवानुद्दिश्ययच्छ्राद्धंतत्तुदैविकमुच्यते ॥ गच्छन्देशांतरंयस्तुश्राद्धंकुर्यात्तुसर्पिषा॥यात्रार्थमितितत्प्रोक्तंप्रवेशेचनसंशयः॥(सर्पिषासर्पिःप्रधानेनेन) शरीरोपचयेश्राद्धमर्थोपचयएवच॥ पुष्ट्यर्थमेतद्विज्ञेयमौपचायिकमुच्यतेइति ॥ अत्रनित्यंषड्दैवतमदैवम् ॥ नैमित्तिकमेकोद्दिष्टंच ॥ काम्यम् उपरागादौकामनोपाधिकंपार्वणवत्कृतम् ॥ वृद्धिश्राद्धंपुत्रजन्मविवाहादौक्रियमाणंनवदैवत्यम् ॥ सपिंडनंपार्वणैकोद्दिष्टोभयात्मकम् ॥ पार्वणंप्रतिपर्वक्रियमाणंषड्दैवतम् ॥ गोष्ठीश्राद्धंपार्वणवत् ॥ शुद्ध्यर्थमपिपार्वणवत्स्मृतम्॥कर्मांगंयागादौक्रियमाणंवृद्धिवत्कृतम् ॥ दैविकंनित्यश्राद्धवत् ॥ यात्रार्थंनवदैवतंवृद्धिश्राद्धवत्कृतम् ॥ पुष्ट्य

र्थंचपार्वणवज्ज्ञेयमित्यर्थः॥ (अथश्राद्धाधिकारिणः॥हेमाद्रौसुमंतुः)मातुःपितुःप्रकुर्वीतसंस्थितस्यौरसःसुतः॥पैतृमेधिकसंस्कारंमंत्रपूर्वकमाह तः॥इति मंत्रपूर्वकंद्विजानामेवनतुशूद्राणाम्॥(विष्णुपुराणेगारुडेच)पुत्रःपौत्रःप्रपौत्रोवातद्भ्राताभ्रातृसंततिः॥सपिंडसंततिर्वापिक्रियार्हानृपजाय ते॥तेषामभावेसर्वेषांसमानोदकसंततिः॥कुलद्वयेपिचोच्छिन्नेस्त्रीभिःकार्याःक्रियाः खग॥ (मार्कंडेयपुराणेपि)पुत्राभावेसपिंडास्तुतदभावेसहोद काः॥ मातुःसपिंडायेवास्युर्येवामातुःसहोदकाः॥ कुर्युरेनंविधिंसम्यगपुत्रस्यसुताःस्मृताः॥ कुर्यान्मातामहायैवपुत्रिकातनयस्तथा॥ सर्वाभावे स्त्रियःकुर्युःस्वभर्तॄणाममंत्रकम्॥ तदभावेचनृपतिःकारयेत्तस्यरिक्थतः॥ तज्जातीयैर्नरैःसम्यग्दाहाद्याःसकलाःक्रियाः॥ सर्वेषामेववर्णानांबां धवोनृपतिर्यतः॥इति॥सहोदकाःसमानोदकाइत्यर्थः॥ (सपिण्डनेविशेषोगारुडे) भ्रातावाभ्रातृपुत्रोवासपिंडःशिष्यएववा॥ सपिंडीकरणंकुर्या त्पुत्रहीनेखगेश्वर॥सर्वेषांपुत्रहीनानांपत्नीकुर्यात्सपिंडनम्॥ ऋत्विजंकारयेद्वाथपुरोहितमथापिवा॥ इति॥पूर्वमध्यमोत्तरासुक्रियासुपुत्रादीनांव्य वस्थितमधिकारंदर्शयति (पराशरोविष्णुपुराणे) पूर्वाःक्रियामध्यमाश्चतथैवोत्तरसंज्ञिताः॥ त्रिप्रकाराःक्रियाह्येतास्तासांभेदंशृणुष्वमे॥ आदा हाद्द्वादशाहाच्चमध्येयाःस्युःक्रियामताः॥ ताःपूर्वामध्यमामासिमास्येकोद्दिष्टसंज्ञिताः॥ प्रेतेपितृत्वमापन्नेसपिंडीकरणादनु॥ क्रियंतेयाःक्रिया पित्र्याःप्रोच्यंतेतानृपोत्तराः॥ ( माधवीये ) सपिंडाद्यैरवानिपत्यंते:पूर्वाःक्रियामध्यमाश्चकर्त्तव्याःपुत्राद्यैरेवभ्रातृसंतत्यंतैःदौहित्राद्यैश्चोत्तराःक्रि याःकर्त्तव्याःनसपिंडाद्यैरवानिपत्यंतैरित्यर्थः॥औरसःसुतोऽनुपनीतोऽपिदाहादिकाःक्रियाःकुर्यात् (तदाहसुमंतुः) श्राद्धंकुर्यादवश्यंतुप्रमीतपि तृकोहियः॥ व्रतस्थोवाऽव्रतस्थोवाएकएवभवेद्यदि॥इति॥अव्रतस्थोऽनुपनीतइत्यर्थः॥(स्कांदेपि) पित्रोरनुपनीतोपिविदध्यादौरसःसुतः॥ औ र्ध्वदैहिकमन्येतुसंस्कृताःश्राद्धकारिणः॥ (स्मृतिसंग्रहे) कृतचूडोनुपेतश्चपित्रोःश्राद्धंसमाचरेत्॥उदाहरेत्स्वधाकारंनतुवेदाक्षराण्यसाविति॥

एवंपितृव्यादीनामपिश्राद्धंकुर्यात् ॥ ( यथाहजातूकर्ण्यः ) पितृव्यभ्रातृमातॄणामपुत्राणांतथैवच ॥ मातामहस्याऽपुत्रस्यश्राद्धादिपितृवद्भवे
त् ॥ इति ॥ पितृवदित्यावश्यकत्वार्थंनतुपार्वणविधानार्थं मातृपदंसपत्नमातृपरमित्यर्थः ॥ ( गारुडे ) नवश्राद्धंसपिंडत्वंश्राद्धान्यपिचषो
डश ॥ एकेनैवतुकार्याणिसंविभक्तधनेष्वपि ॥ अथश्राद्धदेशाः । (तत्रमनुः) ॥ शुचिंदेशंविविक्तंचगोमयेनोपलेपयेत् ॥ दक्षिणाप्रवणंचैवप्रय
त्नेनोपपादयेत् ॥ अवकाशेषुचोक्षेषुनदीतीरेषुचैवहि ॥ विविक्तेषुचतुष्यंतिदत्तेनपितरः सदा ॥ इति ॥ चोक्षेषुस्वभावशुचयोऽरण्यादिप्रदेशा
स्तेष्वित्यर्थः ॥ ( विष्णुधर्मोत्तरे ) दक्षिणाप्रवणेदेशेतीर्थादौचगृहेपिवा ॥ भूसंस्कारादिसंयुक्तेश्राद्धंकुर्यात्प्रयत्नतः ॥ भूसंस्कारः गोमयादिनोपले
पइत्यर्थः ॥ ( स्कांदे ) तुलसीकाननच्छायायत्रयत्रभवेद्द्विज ॥ तत्रश्राद्धंप्रदातव्यंपितॄणांतृप्तिहेतवे ॥ (शंखस्मृतौ) गंगायमुनयोस्तीरेपयोष्ण्यमर
कंटके ॥ नर्मदाबाहुदातीरेभृगुलिंगेहिमालये ॥ गंगाद्वारेप्रयागेचनैमिषेपुष्करेतथा ॥ संनिहत्यांगयायांचदत्तमक्षयतांव्रजेत् ॥ अपिजाये
तसोस्माकंकुलेकश्चिन्नरोत्तमः ॥ गयाशीर्षेवटेश्राद्धंयोनोदद्यात्समाहितः ॥ एष्टव्याबहवःपुत्रायद्येकोपिगयांव्रजेत् ॥ यजेतवाश्वमेधेननी
लंवावृषमुत्सृजेत् ॥ (स्मृत्यंतरे) अश्वमेधोगयाश्राद्धंकन्यादानंतथैवच ॥ तथानीलवृषोत्सर्गः सममेतच्चतुष्टयम् ॥ (वायवीये) शमीपत्रप्रमाणेन
पिंडंदद्याद्गयाशिरे ॥ उद्धरेत्सप्तगोत्राणिकुलमेकोत्तरंशतम् ॥ पितामाताचभार्याचभगिनीदुहितातथा ॥ पितृमातृष्वसाचैषांसप्तगोत्राणिवैवि
दुरिति ॥ (स्मृत्यंतरकूर्मपुराणयोः) जीवतोवाक्यकरणात्क्षयाहेभूरिभोजनात् ॥ गयायांपिंडदानाच्चत्रिभिः पुत्रस्यपुत्रता ॥ ( अथनिषिद्धदेशाः
स्कंदपुराणे ) त्रिशंकोर्वर्जयेद्देशंसर्वंद्वादशयोजनम् ॥ उत्तरेणमहानद्यादक्षिणेनतुकीकटात् ॥ देशस्त्रैशंकवोनामश्राद्धकर्मणिवर्जितः ॥
(वायुपुराणे) कारस्कराः कलिंगाश्चसिंधोरुत्तरमेवच ॥ प्रनष्टाश्रमधर्माश्चदेशावर्ज्याः प्रयत्नतः ॥ (दिवोदासीये) म्लेच्छदेशेतथारात्रौसंध्यायांविप्र

वर्जिते ॥ नश्राद्धमाचरेद्विद्वान्नचाऽऽकाशेकथंचन॥ ( यमस्मृतौ ) परकीयप्रदेशेतुपितॄणांनिर्वपेत्तुयः ॥ तद्भूस्वामिपितृभिश्चश्राद्धकर्मविह
न्यते॥अटव्यः पर्वताःपुण्यानद्यस्तीर्थानियानिच ॥ सर्वाण्यस्वामिकान्याहुर्नहितेषुपरिग्रहः॥ रूक्षंकृमिहतंक्लिन्नंसंकीर्णानिष्टगंधिकम् ॥ देशं
त्वनिष्टशब्दंचवर्जयेच्छ्राद्धकर्मणि ॥इति॥ क्लिन्नंसपङ्कम्॥संकीर्णम् अन्यैःसङ्कीर्णमित्यर्थः ॥ (अथ श्राद्धकालानाहयाज्ञवल्क्यः) अमावास्या
ष्टकावृद्धिःकृष्णपक्षोऽयनद्वयम् ॥ द्रव्यंब्राह्मणसम्पत्तिर्विषुवत्सूर्य्यसंक्रमः ॥ व्यतीपातोगजच्छायाग्रहणंचंद्रसूर्य्ययोः ॥ श्राद्धंप्रतिरुचिश्चैव
श्राद्धकालाःप्रकीर्तिताः ॥ अस्यार्थः ॥ यत्रदिनेचंद्रमानदृश्यतेसाअमावास्यातस्यामहर्द्वयव्यापिन्यामपराह्णव्यापिनीग्राह्या ॥ अपराह्णे
पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायामितिकात्यायनसूत्रात् अपराह्णःपितॄणामितिवचनात्॥ अपराह्णश्चपञ्चधाविभक्तेदिनेचतुर्थोभागस्त्रि
मुहूर्त्तः ॥ अष्टकाशब्देनपौषमाघफाल्गुनकृष्णाष्टम्यः ॥ अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका इतिविष्णुस्मरणात् ॥ वृद्धिः--पुत्रजन्मा
दिनिमित्तवक्ष्यमाणकालः ॥ कृष्णपक्षोऽपरपक्षः ॥ अपरपक्षेश्राद्धंकुर्वीत इतिकात्यायनसूत्रात् ॥ अयनद्वयम् दक्षिणायनमुत्तरायणंच ॥
द्रव्यं कृसरतिलव्रीह्यादिकम् ॥ ब्राह्मणः श्रुताऽध्ययनसम्पन्नतयासम्पत्तिर्लाभोयस्मिन्कालेसतथोक्तः ॥ विषुवत् मेषतुलासंक्रान्ती॥ सूर्य्य
संक्रमः सूर्य्यस्यराश्यन्तरप्राप्तिः ॥ व्यतीपातो योगविशेषः ॥ गजच्छाया "यदेन्दुःपितृदैवत्येहंसश्चैवकरेस्थितः ॥ याम्यातिथिर्भवेत्साहिगज
च्छायाप्रकीर्त्तितेतियमेनपरिभाषिता ॥ इंदुश्चंद्रः पितृदैवत्योमघा हंसःसूर्यः करोहस्तः याम्यतिथिस्त्रयोदशीत्यर्थः॥हस्तिच्छायेतिकेचित्सेह
नगृह्यतेकालप्रक्रमात्॥ग्रहणंसोमसूर्य्ययोरुपरागः॥यदाकर्तुःश्राद्धंप्रति रुचिर्भवतितदैवकर्त्तव्यम् ॥ चकारेणाऽन्येपियुगादिप्रभृतयोवक्ष्यमाणाः
श्राद्धकालाःसंगृह्यन्त इत्यर्थः ॥ अथभाद्रपदाऽपरपक्षः ॥ अत्रयद्यप्यपरपक्षेश्राद्धंकुर्वीतशाकेनापिनाऽपरपक्षमतिक्रामेदित्यादिभिर्द्वादशाऽ

परपक्षग्राहकैःसामान्यवचनैः भाद्रपदापरपक्षोऽपिगृहीतएव ॥ तथापितस्यपुण्यतमत्वप्रतिपादनार्थंतदतिक्रमेप्रत्यवायप्रतिपादनार्थंचं स्मृतिपुराणादिषुविशेषतस्तस्याभिधानंकृतम् ॥ ( तथाचविष्णुधर्मोत्तरे ) उत्तरादयनाद्राजञ्छ्रेष्ठंस्याद्दक्षिणायनम् ॥ याम्यायना॰॰॰मासं तत्रसुप्तेतुकेशवे ॥ प्रोष्ठपद्याःपरः पक्षस्तत्रापिचविशेषतः ॥ पंचम्यूर्द्ध्वंतुतत्रापिदशम्यूर्द्ध्वंततोप्यति ॥ मघायुक्तातुतत्रापिशस्ताराजं॰॰॰दशी ति ॥ उत्तरायणाद्दक्षिणायनंश्राद्धकरणेश्रेष्ठं सर्वस्माद्दक्षिणायनादपितन्मध्यवर्त्युपेंद्रनिद्रादिनादाषाढ्याःपौर्णमास्याःप्रभृतिमासचतुष्टयं श्रेष्ठम् ॥ तस्मादपिसर्वस्मात् प्रोष्ठपदस्यमासस्याऽपरपक्षः ॥ तत्राऽपिपञ्चम्या ऊर्द्ध्वंदशदिवसाःतत्राऽपिदशम्याऊर्द्ध्वंपंच ॥ तत्राऽपिमघायु क्तात्रयोदशीत्यर्थः ॥ ( ब्रह्मपुराणेपि ) अश्वयुक्कृष्णपक्षेतुश्राद्धंकार्यंदिनेदिने ॥ त्रिभागहीनंपक्षंवात्रिभागंत्वर्द्धमेववा ॥ ( नागरखंडेपि ) आषाढ्याःपंचमेपक्षेकन्यासंस्थेदिवाकरे ॥ योवैश्राद्धंनरःकुर्यादेकस्मिन्नपिवासरे ॥ तस्यसंवत्सरंयावत्तृप्ताःस्युःपितरोध्रुवम् ॥ ( मार्कंडे यपुराणे ) कन्यागतेसवितरिदिनानिदशपंचच ॥ पार्व्वणेनैवविधिनातत्रश्राद्धंविधीयते ॥ प्रतिपद्धनलाभायद्वितीयाहिप्रजाप्रदा ॥ वरार्थिनीतृ तीयाचचतुर्थीशत्रुनाशिनी ॥ श्रियंप्राप्नोतिपंचम्यांषष्ठ्यांपूज्योभवेन्नरः ॥ गणाधिपत्यंसप्तम्यामष्टम्यांबुद्धिमुत्तमाम् ॥ स्त्रियानवम्यांप्राप्नोति दशम्यांपूर्णकामताम् ॥ वेदांस्तथाप्नुयात्सर्वानेकादश्यांक्रियापरः ॥ द्वादश्यांहेमलाभंचप्राप्नोतिपितृपूजकः ॥ प्रजांमेधांपशुंपुष्टिंस्वातंत्र्यं वृद्धिमुत्तमाम् ॥ दीर्घमायुरथैश्वर्यंकुर्व्वाणस्तुत्रयोदशीम् ॥ युवानःपितरोयस्य मृताःशस्त्रेणवैहताः ॥ तेनकार्यंचतुर्दश्यां तेषांतृप्तिमभीप्स ता ॥ श्राद्धंकुर्वन्नमावास्यामन्नेनपुरुषःशुचिः ॥ सर्व्वान्कामानवाप्नोतिस्वर्गवासंसमश्नुत इति ॥ भाद्रपदशुक्लपूर्णिमाप्रशंसा पुराणसमुच्चये ॥ प्रशस्तापूर्णिमामुख्यास्तिथयःषोडशैवताः ॥ यथातिलानांतैलंचतुल्यंवैश्वेतकृष्णयोः ॥ पूर्णिमायाममायांचसमम्पुण्यफलंद्वयोः ॥ पूर्णपक्षे

नभस्यस्यातिथिःपूर्णाप्रशस्यते ॥ अस्यांदत्तेपितॄणांवैतृप्तिःसांवत्सरीभवेत् ॥ नभस्यकृष्णपक्षेप्रतिपत्प्रभृतिदशपंचदिनानिकृष्णोऽपरपक्षः सवितरिकन्यागतेसतिमहालयइतिप्रोक्तः ॥ तत्रपार्वणेनैव विधिनाश्राद्धंकुर्यात् ॥ ( तदाहवृद्धमनुः ) नभस्यस्यापरःपक्षोयत्र कन्यांव्रजेद्रविः ॥ समहालयसंज्ञःस्याद्गजच्छायाह्वयस्तथा ॥ पार्वणेनैवविधिनाश्राद्धंतत्रविधीयते ॥ ( आदित्यपुराणे ) कन्या गतेसवितरियान्यहानितुषोडश ॥ क्रतुभिस्तानितुल्यानिपितॄणांदत्तमक्षयम् ॥ ( कार्ष्णाजिनिमनुगौतमाः ) आदौमध्येऽवसानेवायत्रक न्यांव्रजेद्रविः ॥ सपक्षःसकलःपूज्यः श्राद्धषोडशकंप्रति ॥ इति ॥ अत्रयद्यपिबहुवचनेषुपंचदशतिथ्यात्मकः पक्षउक्तस्तथापिकदाचित्तिथि वृद्धौषोडशदिनात्मकोभवति ॥ अत्रषोडशत्वमपित्रेधाव्याचख्यौ ॥ तिथिवृद्ध्याप्रथमःपक्षः॥भाद्रपदपूर्णिमासहेतिद्वितीयः ॥ आश्विनशुक्ल प्रतिपदासहेतितृतीयः ॥ अत्रअन्त्यएवतुयुक्तः तस्यापिक्षीणचंद्रत्वाविशेषेणाऽपरपक्षानुप्रवेशसंभवात् ॥ ( तथाचहेमाद्रिमाधवयोर्दे वलः ) ॥ अहःषोडशकंयत्तुशुक्लप्रतिपदासह ॥ चंद्रक्षयाविशेषेणसापिदर्शात्मिकास्मृता ॥ इति ॥ यदिप्रतिपदादिदर्शान्तंश्राद्धंकर्तुमसमर्थ श्चेत्पंचम्यादिदर्शान्तमष्टम्यादिदर्शान्तंवायथाशक्तिश्राद्धंकुर्यात् ॥ ( तथाचहेमाद्रौगौतमः ) ॥ अपरपक्षेश्राद्धंपितृभ्योदद्यात्पंचम्या दिदर्शांतमष्टम्यादिदशम्यादिसर्वस्मिन्वाइति ॥( कात्यायनसूत्रेऽपि ) अपरपक्षेश्राद्धंकुर्वीतऊर्ध्वंचतुर्थ्यायदहःसंपद्यतेसप्तम्याऊर्द्ध्वंयदहःसंप द्यतेऋतेचतुर्दशींशाकेनाप्यपरपक्षंनातिक्रमेत् ॥ ( मनुरपि ) कृष्णपक्षेदशम्यादौवर्जयित्वाचतुर्दशीम् ॥ श्राद्धेप्रशस्तास्तिथयोयथैतानतथे तराः॥ इति ॥ अत्राऽप्यसामर्थ्येएकस्यांतिथौयथासंभवंश्राद्धंकुर्यात्॥(तथाचकात्यायनः)अशक्तःपक्षमध्येतुकरोत्येकदिनेतदा॥निषिद्धेपिदि नेकुर्यात्पिंडदानंयथाविधिइति॥निषिद्धेनंदाभार्गवादिदिनेऽपीत्यर्थः॥ ( अत्रक्षयाहादिनप्रशंसानागरखंडे ) ॥ आषाढ्याःपंचमेपक्षेकन्यासंस्थे

दिवाकरे ॥ मृताहनिपितुर्योवैश्राद्धंदास्यतिमानवः ॥ तस्यसंवत्सरंयावत्संतृप्ताःपितरोध्रुवम् ॥ ( कात्यायनोपि ) यातिथिर्यस्यमासस्य
मृताहेतुप्रवर्त्तते ॥ सातिथिःपितृपक्षेपिपूजनीयाप्रयत्नतः ॥ तिथिच्छेदोनकर्त्तव्योविनाशौचंयदृच्छया ॥ पिंडश्राद्धंचकर्त्तव्यंविच्छित्तिं
नैवकारयेत् ॥ इति ॥ अथत्रयोदशीश्राद्धेविशेषः॥ ( तत्रमनुः ) ॥ यत्किंचिन्मधुनामिश्रंप्रदद्यात्तुत्रयोदशीम् ॥ तदप्यक्षयमेवस्याद्वर्षासुच
मघासुच ॥ ( ब्राह्मे ) ॥ त्रयोदश्यांप्रयत्नेनवर्षासुचमघासुच ॥ नास्मात्परतरःकालःश्राद्धेष्वन्येषुवर्त्तते ॥ यदत्रपितरोदत्तंगृह्णंतिस्मृतमक्ष
यम् ॥ इति ॥ अत्रनिषेधवचनान्यपिकेचित् ( तत्रअंगिरोबृहस्पती ) ॥ कृष्णपक्षेत्रयोदश्यांयःश्राद्धंकुरुतेनरः ॥ पंचत्वंतस्यजानीयाज्ज्ये
ष्ठपुत्रस्यनिश्चितम् ॥ मघासुकुर्वतःश्राद्धंज्येष्ठपुत्रोविनश्यति ( हेमाद्रौषट्त्रिंशन्मते ) गृहीत्रयोदशीश्राद्धंनकुर्यात्पुत्रवानपि ॥ उपवा
संचसंक्रांतौग्रहणेचंद्रसूर्ययोः ॥ इति ॥ अत्रमघात्रयोदश्यांश्राद्धनिषेधःकेवलपितृवर्गविषयः ॥ ( तथाचमाधवीयेकार्ष्णाजिनिः ) श्राद्धं
तुनैकवर्गस्यत्रयोदश्यामुपक्रमेत् ॥ अतृप्तास्तत्रयस्यस्युःप्रजांहिंसंतितत्रते ॥ ( स्मृत्यंतरेपि ) इच्छेत्रयोदशीश्राद्धंपुत्रवान्यःसुतायुषोः ॥
एकस्यैवतुनोदद्यात्पार्वणंतुसमाचरेत् ॥ इति ॥ अस्यार्थः—यःपुत्रवान्सुतायुषोरभिवृद्धिमिच्छेत्सएकस्यैकवर्गस्यैवश्राद्धंनोदद्यात् अपितुमा
तामहवर्गोद्देशेनापिपार्वणंसमाचरेत् तस्मादेकवर्गोद्देशेनैवमघात्रयोदश्यांश्राद्धंनिषेधोनतुपार्वणस्यैवतच्छ्राद्धस्यप्रशस्तत्वादित्यर्थः ॥
अथाऽपरपक्षचतुर्दशीश्राद्धनिर्णयः ॥ ( तत्रयाज्ञवल्क्यः ) प्रतिपत्प्रभृतिष्वेकांवर्जयित्वाचतुर्दशीम् ॥ शस्त्रेणतुहतायेवैतेभ्यस्त
त्रप्रदीयते ॥ ( ब्रह्मपुराणेपि ) युवानःपितरोयस्यमृताःशस्त्रेणवाहताः ॥ तेनकार्यंचतुर्दश्यांतेषांतृप्तिमभीप्सता ॥ इति ॥ एतच्चतुर्द
श्यांश्राद्धनिषेधोऽप्यशस्त्रहतविषयः दुर्म्मरणमृतानांतुचतुर्दश्यामेवश्राद्धंकुर्यात् ॥ ( तदाहहेमाद्रिमाधवश्राद्धतत्त्वेषुमरीचिः ) विषश

स्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम् ॥ चतुर्दश्यांक्रियाकार्याअन्येषांतुविगर्हिता ॥ ( प्रचेताअपि ) वृक्षारोहणलोहादिविद्युज्जलविषादिभिः ॥
नखिदंष्ट्रिविपन्नानामेषांशस्ताचतुर्दशी ॥ इति ॥ अनेनशस्त्रादिहतानामेवचतुर्दशीकालमात्रंनियम्यते ॥ नतुचतुर्दश्यामेवहतानां
किन्तुतेषामन्यस्मिन्नपिकालेभवत्येवश्राद्धम् ॥ इति हेमाद्रिमाधवप्रभृतयः ॥ शस्त्रहतस्यापितुर्महालयेचतुर्दश्यामेकोद्दिष्टमेवनतुपार्वणम् (तदा
हमाधवेसुमंतुः ) समत्वमागतस्यापिपितुःशस्त्रहतस्यतु ॥ एकोद्दिष्टंसुतैःकार्य्यंचतुर्दश्यांमहालये ॥ इति ॥ समत्वमागतस्यसपिंडीकृतस्य
शस्त्रहतस्यपितुश्चतुर्दश्यांमहालयेसुतैरेकोद्दिष्टंकार्य्यमित्यर्थः ॥ दिनान्तरेतुपार्वणंकार्य्यम् ॥ एकोद्दिष्टश्राद्धेनापितामहादितृप्त्यसिद्धेः ( तथा
चहेमाद्रौप्रजापतिः ) संक्रांतावुपरागेचवर्षोत्सवमहालये ॥ निर्वपेद्दत्तपिंडांस्त्रीनितिप्राहप्रजापतिः ॥ इति ॥ चतुर्दश्यांमृतस्याऽपिमहालये
एकोद्दिष्टंकार्य्यंनतुपार्वणम् ( तथाचहेमाद्रिनागरखंडयोर्ब्रह्मणोवाक्यम् ) यःकश्चिन्मानवःश्राद्धंस्वपितृभ्यःप्रदास्यति ॥ पितृपक्षेचतुर्दश्यां
नभस्येमासिसंस्थिते ॥ प्रेतानांराक्षसानांचभूतानांतद्भविष्यति ॥ एतस्मात्कारणाच्छ्राद्धं पार्वणंनैवकारयेत् ॥ पितृपक्षेचतुर्दश्यांकन्यासं
स्थेदिवाकरे ॥ तेनैकोद्दिष्टमेवात्रकर्त्तव्यंनतुपार्वणम् ॥ एतस्मिन्नहनिप्राप्तेव्यर्थंश्राद्धंभवेद्यतः ॥ इति ॥ यस्यतुपितामहोपिशस्त्रादिनाहतस्त
स्यापिमहालयेचतुर्दश्यामेकोद्दिष्टं पित्रादिषुत्रिष्वपिशस्त्रादिनाहतेषु त्रयाणामपिपृथक् पृथक् एकोद्दिष्टंकार्य्यम् दिनान्तरेतुपार्वणविधानेनैव
कार्यमितिविवेकः॥इतिचतुर्दशीश्राद्धनिर्णयः॥अत्रमहालयेश्राद्धं नवदैवत्यंकर्त्तव्यम् ॥ (तथाचहेमाद्रौधर्मः) महालयेगयाश्राद्धे वृद्धौचान्वष्ट
कासुच॥नवदैवत्यमत्रस्याच्छेषंपाट्पौरुषंविदुरिति॥ शेषम्—अमावास्यादिश्राद्धम् त्रिदैवत्यंमृताहेतुषड्दैवत्यंतुदर्शके॥वृद्धौतुनवदैवत्यंतीर्थेप्रो
ष्ठमघासुच॥इतिकाशिकायामुक्तत्वात्॥नवदैवत्यताचात्रैवम्॥एकःपितृवर्गः॥द्वितीयोमातृवर्गः॥तृतीयोमातामहवर्गः॥इति॥ मातामहवर्गेचस्त्री

णांसहैवोद्देशःकर्त्तव्यःनपृथक् ॥ तथाच निर्णयामृतेस्मृत्यर्थसारेच–तत्रमातृश्राद्धंपृथक्कार्य्यंमातामहानांसपत्नीकमेवेति ॥ ( हेमाद्रौकर्मप्रदीपेऽ
पि)॥ नयोषिद्भ्यःपृथग्दद्यादवसानादिनादृते ॥ स्वभर्तृपिंडमात्राभ्यस्तृप्तिस्तासांप्रकीर्त्तिता ॥ (हेमाद्रौ छागलेयः) क्षयाहेकेवलाःकार्यावृद्धावादौ
प्रकीर्त्तिताः॥ सर्व्वत्रैवहिमध्यस्थानान्त्याःकार्य्यास्तुमातरः॥इति॥सर्व्वत्रेतिमहालयेऽन्वष्टकागयाश्राद्धेचमध्यएवनिवेशः॥ (तथाचसत्यव्रतः)
पितॄणांप्रथमंदानंमातॄणांतदनंतरम् ॥ ततोमातामहानांचक्रमश्चैवंप्रकीर्त्यते॥काशिकायांतुचतुःपार्वणमुक्तम्॥ तथाच ( कात्यायनः ) कुर्याद्द्वाद
शदैवत्यंप्रेतपक्षेतुसर्वदा ॥ यथातीर्थेगयायांचएषधर्मःसनातनः ॥ आदौपिताततोमाताततोमातामहस्तथा ॥ मातामह्यस्ततोदद्यात्प्रेतपक्षेतुस
र्वदा ॥ (सुमंतुरपि) पितृभ्यः प्रथमंदद्यान्मातृभ्यस्तदनंतरम् ॥ ततोमातामहेभ्यश्चतत्पत्नीभ्यस्तथैवच ॥ गयायांचतथातीर्थेप्रेतपक्षेविशेषतः॥
कुर्य्याद्द्वादशदैवत्यमेकोद्दिष्टमतःपरम् ॥ इति ॥ अपरार्कमदनपारिजातयोस्तु गयामहालयादौमातृश्राद्धं पृथगत्रासहवास्वभर्तृभिरित्युक्तम् ॥
( तथाचकात्यायनः ) स्वेनभर्त्रासमंश्राद्धंमाताभुंक्तेसुधासमम् ॥ पितामहीचस्वेनैवतथैवप्रपितामही॥( चंद्रिकायां ) क्षयाहंवर्जयित्वैकंस्त्रीणां
नास्तिपृथक्क्रिया ॥ केचिदिच्छन्तिनारीणांपृथक्श्राद्धंमहर्षयः ॥ अत्रवृद्धाचारतोव्यवस्था इति ॥ पितृव्यभ्रातृभगिन्यादीनांमहालयश्राद्ध
मेकोद्दिष्टविधानेनकार्यम् ॥ ( तदुक्तंसुमंतुना ) सपिंडीकरणादूर्ध्वंयत्रयत्रचदीयते ॥ भ्रात्रेभगिन्यैपुत्रायस्वामिनेमातुलायच ॥ पितृव्यगुर
वेश्राद्धमेकोद्दिष्टंनपार्वणम् ॥ ( हेमाद्रावपि ) उपाध्यायगुरुश्वश्रूपितृव्याचार्यमातुलाः ॥ श्वशुरभ्रातृतत्पुत्रपुत्रर्त्विकशिष्यपोषकाः ॥ भगिनी
स्वामिदुहितृजामातृभगिनीसुताः ॥ पितरौपितृपत्नीनांपितुर्मातुश्चयास्वसा॥ सखिद्रव्यदशिष्याश्चास्तीर्थेचैवमहालये ॥ एकोद्दिष्टविधानेन
पूजनीयाः प्रयत्नतः ॥ इति ॥ इतरेषांपित्रादीनांपार्वणमिति (आपस्तंबोपि)अपुत्रायेमृताः केचित्स्त्रियश्चपुरुषाश्चये॥तेषामपिचदेयंस्यादेको

द्दिष्टंनपार्वणम्॥स्त्रियो भगिन्यादयः॥पुरुषा भ्रात्रादयः॥(कात्यायनोपि)संबंधिबांधवादीनामेकोद्दिष्टंतुसर्वदा॥इति॥एतच्च भाद्रपदापरपक्षप्रति
पत्प्रभृतिषुचतुर्दशीवर्ज्यममावास्यापर्यंतासुतिथिषुप्रत्यहमशक्तौतन्मध्यएवयथासंभवंनवदैवत्यंपार्वणविधानेन पितृव्यादीनामन्येषांचैकोद्दि
ष्टविधानेनतंत्रेणपाकं कृत्वा पृथक् पृथगपरपक्षश्राद्धंकर्त्तव्यमितिस्थितम्॥ इतिभाद्रपदाऽपरपक्षश्राद्धकालः॥ (अथयुगादयो भविष्ये) वैशा
खस्यतृतीयायानवमीकार्तिकस्यच॥पौर्णमासीचमाघस्यनभस्यस्यत्रयोदशी ॥ युगादयःस्मृताह्येतादत्तस्याक्षयकारकाः॥(युगांता ब्रह्मपुराणे)
सूर्यस्यासिंहसंक्रांत्यामंतःकृतयुगस्यतु ॥ अथवृश्चिकसंक्रांत्यामंतस्त्रेतायुगस्यतु॥ ज्ञेयस्तुवृषसंक्रांत्यांद्वापरांतश्चसंज्ञया ॥ तथाचकुंभसंक्रांत्या
मंतःकलियुगस्यतु ॥ युगादिषुयुगांतेषुश्राद्धमक्षयमुच्यते ॥ (मन्वंतरादयो मात्स्ये) आश्वयुक्शुक्लनवमीद्वादशीकार्त्तिकस्यच ॥ चैत्रस्यतुतृती
यायातथाभाद्रपदस्यतु ॥ फाल्गुनस्यत्वमावास्या पौषस्यैकादशीतथा ॥ श्रावणस्याष्टमीकृष्णातथाषाढस्यपूर्णिमा ॥ आषाढस्यापिदशमी
माघमासस्य सप्तमी ॥ कार्त्तिकीफाल्गुनीचैत्रीज्येष्ठेपंचदशीतथा ॥ मन्वंतरादयश्चैतादत्तस्याक्षयकारकाः ॥ इति ॥ ( अथ सांवत्सरिककालो
ब्राह्मे ) प्रतिसंवत्सरंकार्य्यं मातापित्रोर्मृताहनि ॥ पितृव्यस्याप्यऽपुत्रस्यभ्रातुर्ज्येष्ठस्यचैवहि ॥ ( प्रभासखण्डे ) मृताहनिपितुर्यस्तुनकुर्य्या
च्छ्राद्धमादरात् ॥ मातुश्चैववरारोहे वत्सरान्तेमृताऽहनि ॥ नाऽहंतस्यमहादेवि पूजांगृह्णामिनोहरिः॥ तस्माद्यत्नेनकर्त्तव्यं वर्षेवर्षेमृताऽहनि ॥
( मनुस्मृतौ ) पूर्वाह्णेदैविकंश्राद्धमपराह्णेतुपार्वणम् ॥ एकोद्दिष्टंतुमध्याह्नेप्रातर्वृद्धिनिमित्तकम्॥(ब्रह्मपुराणेपि)पूर्वाह्णेमातृकंश्राद्धमपराह्णेतुपैतृ
कम् ॥एकोद्दिष्टंतुमध्याह्नेप्रातर्वृद्धिनिमित्तकमितिमातृकाश्राद्धमन्वष्टकाश्राद्धमित्यर्थः(मत्स्यपुराणे)प्रातःकालोमुहूर्तांस्त्रीन्संगवस्तावदेवतु ॥
मध्याह्नस्त्रिमुहूर्तःस्यादपराह्णस्ततः परम्॥सायाह्नस्त्रिमुहूर्त्तःस्याच्छ्राद्धंतत्रनकारयेत्॥राक्षसीनामसावेलागर्हितासर्वकर्मसु॥क्षयाहाऽपरिज्ञानेअ

मावास्यायांश्राद्धम्॥ (तथाचभविष्ये) मृताहंयोनजानातिमानवोविनतात्मज॥तेनकार्यममावास्यांश्राद्धंसांवत्सरंनृप ॥ इति॥अथश्राद्धीयब्राह्म
णाः( तत्रमनुः ) वेदविद्याव्रतस्नाताञ्छ्रोत्रियान्गृहमेधिनः ॥ पूजयेद्धव्यकव्येनविपरीतांश्चवर्जयेत् ॥ गृहमेधिनःगृहस्थाः ॥ (याज्ञवल्क्यः)॥
अग्र्यःसर्वेषुवेदेषु श्रोत्रियोब्रह्मविद्युवा ॥ वेदार्थविज्ज्येष्ठसामात्रिमधुस्त्रिसुपर्णिकः ॥ कर्मनिष्ठास्तपोनिष्ठाःपंचाग्निर्ब्रह्मचारिणः ॥ पितृ
मातृपराश्चैव ब्राह्मणाःश्राद्धसंपदे ॥ ( कात्यायनसूत्रे ) स्नातकानेके यतीन् गृहस्थान् साधून् वा श्रोत्रियान् वृद्धाननवद्यान्स्वकर्मस्था
निति ॥ ( मात्स्ये ) ॥ अथर्वणवेदविद्यज्ञातवंशकुलान्वितः ॥ पुराणवेत्ताब्रह्मण्यः स्वाध्यायजपतत्परः ॥ शिवभक्तः पितृपरःसूर्यभक्तोऽ
थवैष्णवः ॥ ब्रह्मण्योयोगविच्छांतोविजितात्मासुशीलवान् ॥ एतांस्तुभोजयेन्नित्यंदैवेपित्र्येचकर्मणि ॥ ( कात्यायनमनुव्यासाः ) गायत्री
सारमात्रोपिवरंविप्रः सुयंत्रितः ॥ नायंत्रितश्चतुर्वेदीसर्वाशीसर्वविक्रयी ॥ ( हेमाद्रौमात्स्ये ) गायत्रीजाप्यनिरतंहव्यकव्येषुयोजयेत् ॥ पापं
तिष्ठतिनोतस्मिन्नब्बिंदुरिवपुष्करे ॥ अपांबिंदुः अब्बिंदुरित्यर्थः ॥ ( ब्रह्मवैवर्ते ) पत्नीपुत्रसमायुक्ताञ्छ्राद्धकर्मणियोजयेत् ॥ देहस्यार्द्धंस्मृ
तापत्नीनसमग्रोविनातया ॥ नवाऽपुत्रस्यलोकोस्तिश्रुतिरेषासनातनी ॥ ( कौर्मे ) महादेवार्चनरतोमहादेवपरायणः ॥ वैष्णवोवाऽथयोनि
त्यंसविप्रःपंक्तिपावनः इति ॥ ( शुक्लयजुर्वेदीयमाध्यंदिनविप्रप्रशंसा शौलिभाष्ये ) ऋग्वेदीचपितृस्थानेयजुर्वेदीपितामहः ॥
त्रिवेदीप्रपितुःस्थानेविश्वेदेवाश्चथर्ववित् वाजिविप्रविशेषेणश्राद्धकर्मनिरन्तरम् ॥ शुक्ला प्रशस्ता कृष्णातु यजुरुक्तनिषेधतः ॥
तस्मात्कव्यानिहव्यानिदातव्यानिद्विजातये ॥ वाजिनेदत्तमेकंतुनरकोटिगुणितंभवेत् ॥ ( विष्णुधर्मोत्तरे ) देवा ब्राह्मणरूपेणचरं
तिपृथिवीमिमाम् ॥ तस्मात्संप्राप्तमतिथिंप्रयत्नेनतुभोजयेत् ॥ ( अथानुकल्पो याज्ञवल्क्येन दर्शितः ) स्वस्रीयऋत्विग्जामा

तृयाज्यश्वशुरमातुलाः ॥ त्रिणाचिकेतदौहित्रशिष्यसंबंधिबांधवाः ॥ ( मनुरपि ) अनुकल्पस्त्वयंज्ञेयःसदासद्भिरनुष्ठितः॥ मातामहंमातुलंच स्वस्रीयंश्वशुरंगुरुम् ॥ दौहित्रंविट्पतिंबंधुमृत्विग्याज्यौचभोजयेत् ॥ मातामहः मातुः पिता ॥ मातुलोमातुर्भ्रातास्वस्रीयः भगिन्याः पुत्रः ॥ गुरुः उपाध्यायः ॥ विट्पतिः जामाता ॥ ऋत्विक् याजकः ॥ याज्यःयस्यार्त्विज्यं क्रियत इत्यर्थः ॥ अभावेऽपि शिष्यान् स्वाचारानिति कात्यायनसूत्रे ॥ ( ब्रह्मवैवर्त्तेतु ) शिष्याश्चऋत्विजोयाज्याः सुहृदः शत्रवस्तथा ॥ श्राद्धेषुश्वशुराःश्यालानभोज्यामातुलादयः ॥ ( वायु पुराणेपि ) नभोजयदेकगोत्रान्समानप्रवरांस्तथा ॥ एतेभ्योहिहविर्दत्तंभुंजंतेनपितामहाः ॥ अत्रविकल्पेशिष्टाचाराद्व्यवस्था ॥ ( माधवी येतु ) श्राद्धे ऋत्विक्पितृव्यसोदर्यसपिंडा वैश्वदेवस्थाने नियोक्तव्याः नपित्रादिस्थाने इत्युक्तम् ॥ ( अत्रिरपि ) ऋत्विक्पुत्रादयोह्येते सकुल्या ब्राह्मणाद्विजाः ॥ वैश्वदेवेनियोक्तव्यायद्येते गुणवत्तराः ॥ इति ॥ अथवर्जनीयाब्राह्मणाः ॥ ( तत्र याज्ञवल्क्यः ) रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ॥ अवकीर्णीकुंडगोलौ कुनखी श्यावदंतकः ॥ भृतकाध्यापकः क्लीबः कन्यादूष्यभि शस्तकः ॥ मित्रध्रुक्पिशुनः सोमविक्रयी परिविंदकः ॥ मातापित्रोर्गुरुत्यागी कुंडाशीवृषलात्मजः ॥ परपूर्वापतिः स्तेनः कर्म दुष्टश्चनिंदितः ॥ इति ॥ ( अस्यार्थः ) रोगी उन्मादादिरोगवान् ॥ हीनं न्यूनमतिरिक्तमधिकमंगं यस्यासौ हीनातिरिक्ताङ्गः ॥ एकेनाऽ क्ष्णायोनपश्यतिअसौकाणः ॥ द्विरूढा पुनर्भूस्तस्यां जातः पौनर्भवः ॥ अवकीर्णी क्षतव्रतः ॥ कुनखी दुष्टनखः ॥ श्यावदंतकः ॥ स्वाभाविककृष्णदंतः ॥ वेतनंगृहीत्वायोऽध्यापयतिसभृतकाध्यापकः क्लीबःनपुंसकः ॥ असतासतावादोषेणकन्यांदूषयिताकन्यादूषी ॥ महापातकादियुक्तोऽभिशस्तः ॥ मित्रध्रुक मित्रद्रोही ॥ परदोषसंकीर्तनशीलःपिशुनः ॥ सोमविक्रयी यज्ञेसोमस्याविक्रेता ॥ परिविंदकःपरि

वेत्ता ॥ कुंडस्यान्नंयोऽश्नात्यसौकुंडाशी ॥ वृषलोनिर्धर्मस्तत्सुतोवृषलात्मजः ॥ परपूर्वापतिःपुनर्भूपतिः ॥ अदत्तादायीस्तेनः ॥ कर्मदुष्टः शास्त्रविरुद्धकारिणः ॥ एतेश्राद्धेनिंदिताःवर्ज्या इत्यर्थः ॥ (कात्यायनसूत्रे) दुर्नग्न[1]-शुक्ल[2]-विक्लिधि[3]-श्यावदन्त[4]-विद्धप्रजनन[5]-व्याधित[6]-व्यंगि[7]-श्वित्रि[8]-कुष्ठि[9]-कुनखि[10]-वर्ज्यमिति॥ (मनुः) नश्राद्धेभोजयेन्मित्रंधनैःकार्योस्यसंग्रहः ॥ नाऽरिंनमित्रंयंविद्यात्तंश्राद्धेभोजयेद्द्विजम्॥ यस्यमित्रप्रधानानि श्राद्धानिचहवींषिच ॥ तस्यप्रेत्यफलंनास्तिश्राद्धेषुचहविःषुच ॥ (व्यासः) संध्याहीनेव्रतभ्रष्टेविप्रेवेदविवर्जिते ॥ दीयमानंरुदत्यन्नंकिंमयादुष्कृतंकृतम् ॥ (मनुः) नब्राह्मणंपरीक्षेतदैवेकर्मणिधर्मवित् ॥ पित्र्येकर्मणितुप्राप्तेपरीक्षेतप्रयत्नतः ॥ (जातूकर्ण्यः) तस्मात्परीक्ष्ययुञ्जीतश्राद्धेवेदार्थवित्तमान् ॥ आनंत्यंस्वरूपमप्येति श्रद्दत्तंसुपरीक्षितेइति ॥ तीर्थश्राद्धेब्राह्मणपरीक्षानकर्त्तव्या ॥ (तथाच पद्मपुराणे) तीर्थेषुब्राह्मणान्नैवपरीक्षेतकथंचन ॥ अन्नार्थिनमनुप्राप्तंभोजयेन्मनुरशासनात् ॥ (अथपितरःमनुस्मृतौ) वसवःपितरोज्ञेयारुद्राज्ञेयाःपितामहाः ॥ प्रपितामहास्तथादित्याःश्रुतिरेषासनातनी ॥ तत्रैव-सोमपानामविप्राणांक्षत्रियाणांहविर्भुजः ॥ वैश्यानामाज्यपानामशूद्राणांतुसुकालिनः ॥ (अथविश्वेदेवाःहेमाद्रिश्राद्धतत्त्वयोःशंखबृहस्पती) इष्टिश्राद्धेक्रतुर्दक्षौसत्योनांदीमुखेवसुः ॥ नैमित्तिकेकामकालौकाम्येचधूरिलोचनौ ॥ पुरूरवार्द्रवौचैवपार्व्वणेसमुदाहृतौ॥तत्रैव-उत्पत्तिंनामधेयंचतेषांनविदुर्येद्विजातयः॥ अयमुच्चारणीयस्तैःश्लोकः श्रद्धासमन्वितैः ॥ आगच्छंतुमहाभागाविश्वेदेवामहाबलाः॥ येयत्रविहिताःश्राद्धेसावधानाभवंतुते इति ॥(आदित्यपुराणे) विश्वेदेवौक्रतुर्दक्षः सर्वास्विष्टिषुकीर्तितौ॥नित्यंनांदी

टी० १ दुश्चर्मा। २ अतिगौरः। ३ विचर्चिकायुक्तः। ४ जन्मैवकृष्णदंतः। ५ छिन्नमेढ्रचर्मा। ६ महारोगी। ७ हीनांगः। ८ श्वेतकुष्ठी। ९ गलितांगः। १० स्वभावात्कुत्सितनखी।

मुखश्राद्धे वसुसत्यौचपैतृके॥नवान्नालभनेदेवौकामकालौसदैवहि॥अपिकन्यागतेसूर्येश्राद्धेचधुरिलोचनौ ॥ पुरूरवार्द्रवौचैव विश्वेदेवौचपार्वणे इति ॥ कन्यागतेसूर्यइतिकेवलकाम्यबुद्ध्याक्रियमाणे॥ उभयबुद्ध्याकृतेतुपुरूरवार्द्रवावेव॥(तत्रविश्वेषांदेवानामुत्पत्तिर्ब्रह्मांडगरुडहेमाद्रिषु)दक्षस्यदुहितासाक्षाद्विश्वानामेतिविश्रुता॥विधिनासातुधर्म्मज्ञदत्ताधर्मायधीमते॥ तस्याः पुत्रामहात्मानोविश्वेदेवाइतिश्रुतिः॥ विख्यातास्त्रिषुलोकेषुसर्वलोकनमस्कृता इति ॥ अथश्राद्धोपकरणानि ॥(तत्रतावत्कुशाःहारीतस्मृतौ) अथश्वोभूतेदक्षिणांदिशंगत्वादक्षिणप्रणतान्समूलान्दर्भानाहरेत् ॥ (यमस्मृतौ) समूलस्तुभवेद्दर्भःपितृणांश्राद्धकर्मणि ॥ मूलेनलोकाञ्जयतिशक्रस्यतुमहात्मनः ॥ (गोभिलः) कुशमूलेस्थितोब्रह्माकुशमध्येतुकेशवः ॥ कुशाग्रेशंकरंविद्यात्सर्वेदेवाःसमंततः ॥ ( दर्भलक्षणमाहकौशिकः ) सप्तपत्राःशुभादर्भास्तिलक्षेत्रसमुद्भवाः ॥ ते प्रशस्ताद्विजातीनां दैवेपित्र्येचकर्मणि ॥ अप्रसूताःस्मृतादर्भाःप्रसूतास्तुकुशाःस्मृताः ॥ समूलाः कुतपाःप्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः ॥ अप्रसूता अपुष्पिताइत्यर्थः॥ (हारीतः) दर्भाग्रंदैवमित्युक्तं समूलाग्रंतुपैतृकम् ॥ तत्रमूलंविनायत्तुतेकुशाःकुतपाःस्मृताः ॥ अच्छिन्नाग्रान्सपत्रांश्च समूलान्कोमलाञ्शुभान् ॥ पितृदेवजपार्थंचसमादद्यात्कुशान्द्विजः ॥ ( हेमाद्रौयमः ) समूलस्तुभवेद्दर्भःपितृणांश्राद्धकर्मणि ॥ बर्हिर्लूनाः सकृल्लूनाः सर्वत्रपितृकर्म्मणि ॥ बर्हिर्लूनाः उपमूललूनाइत्यर्थः ॥ ( व्यासः ) तर्पणादीनिकार्याणिपितॄणांयानिकानिच ॥ तानिस्युर्द्विगुणैर्दर्भैःसप्तपत्रैर्विशेषतः ॥ ( हेमाद्रौविष्णुपुराणेच ) सपिंडीकरणंयावदृजुदर्भैःपितृक्रिया ॥ सपिंडीकरणादूर्ध्वंद्विगुणैर्विधिवद्भवेत् ॥ (श्राद्धतत्त्वे कात्यायनः ) सपवित्रः सदर्भोवाकर्मांगोपितृकर्मणि ॥ अशून्यंतुकरंकृत्वासर्वत्राचमनंचरेत् ॥ नोच्छिष्टंतत्पवित्रंतुभुक्तोच्छिष्टंतुवर्जयेत् ॥ पवित्रं ग्रंथिमत्पवित्रमित्यर्थः ॥ ( अत्रिरपि ) उभाभ्यामेवपाणिभ्यांविप्रैर्दर्भपवित्रके ॥ धारणीयेप्रयतेनब्रह्मग्रंथिसम

न्विते ॥ ब्रह्मयज्ञेजपेचैवब्रह्मग्रंथिर्विधीयते ॥ भोजनेवर्तुलःप्रोक्तःएवंधर्मोनहीयते ॥ ( एतत्प्रकारस्तुहेमाद्रौ ) ॥ द्विगुणीकृतानांदर्भशिखा
नांपाशःप्रदक्षिणमर्द्धवेष्टनंविधायपश्चाद्भागेनयदाप्रवेश्यतेतदावर्तुलग्रंथिः ॥ यदासएवप्रादक्षिण्येनसमग्रवेष्टनंविधायपुरोभागेनप्रवेश्यते
तदाब्रह्मग्रंथिः ॥ ( तथाचवृद्धगारुडे ) अर्द्धंप्रदक्षिणीकृत्यशिखांपाशंप्रवेशयेत् ॥ वैष्णवेनैवमार्गेणवृत्तग्रंथौपवित्रके ॥ वैष्णवोमार्गःपश्चा
द्भागइत्यर्थः॥( ब्रह्मग्रंथिमत्पवित्रलक्षणमपितत्रैव ) संत्यज्यवैष्णवंमार्गंब्रह्ममार्गविनिःसृतम् ॥ सकृत्प्रदक्षिणीकृत्यपवित्रमभिधीयते॥ तद्ब्रह्म
ग्रंथिमत्प्रोक्तंपवित्रंवेदवादिभिः ॥ पवित्रकर्तुरभिमुखः प्रदेशः ब्रह्ममार्गइत्यर्थः ॥ ( पवित्रलक्षणमाहकात्यायनः ) अनंतर्गर्भिणंसाग्रंकौशं
द्विदलमेवच ॥ प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचित् ॥ एतदेवहिपिञ्जूल्यालक्षणंसमुदाहृतम् ॥ आज्यस्योत्पवनार्थंयत्तदप्येतावदेवतु ॥
( पवित्रकरणप्रकारमाहयोगियाज्ञवल्क्यः) ॥ पवित्रेस्थेतिमंत्रेणद्वेपवित्रेचकारयेत् ॥ नांतर्गर्भेकुशच्छिन्नेकौशेप्रादेशसम्मितेइति ॥ नांतर्गर्भे
शिखारहितेकुशच्छिन्नेकुशेनावेष्ट्यच्छिन्नेकौशेकुशमयेपवित्रेस्थोवैष्णव्यौइतिच्छेदनमंत्र इत्यर्थः ॥ पवित्रदर्भशिखासंख्या ( मार्कंडेयपु
राणे ) चतुर्भिर्दर्भपिंजूलैर्ब्राह्मणस्यपवित्रकम् ॥ एकैकंन्यूनमुद्दिष्टंवर्णेवर्णेयथाक्रमम् ॥ सर्वेषांवाभवेद्द्वाभ्यांपवित्रंग्रंथितंनवा ॥ ( अथवर्ज्या
न्कुशानाहहेमाद्रिश्राद्धतत्त्वयोः हारीतः ) चितौदर्भाःपथिदर्भायेदर्भायज्ञभूमिषु ॥ स्तरणासनपिंडेषुषट्कुशान्परिवर्जयेत् ॥ ब्रह्मयज्ञे
चयेदर्भायेदर्भाःपितृतर्पणे ॥ धृतामूत्रपुरीषाभ्यांतेषांत्यागोविधीयते ॥ ( त्यागापवादमपितत्रैव ) नीवीमध्येतुयेदर्भाब्रह्मसूत्रेचयेकृताः ॥
पवित्रांस्तान्विजानीयाद्यथाकायस्तथैवते ॥ समित्पुष्पकुशादीनिश्रोत्रियःस्वयमाहरेत् ॥ शूद्राहृतैःकुशैर्विप्रःकर्मकुर्वन्व्रजत्यधः ॥ ( कुशा
लाभेप्रतिनिधिमाहशंखः ) कुशाभावेद्विजश्रेष्ठःकाशैःकुर्वीतयत्नतः॥ तर्पणादीनिकर्माणिकाशाःकुशसमाःस्मृताः॥ (स्मृत्यन्तरे) कुशकाश

शरोदूर्वायवगोधूमबल्वजाः ॥ सुवर्णराजतंताम्रंदशदर्भाःप्रकीर्तिता इतिकुशनिरूपणम्॥अथतिलाः॥ ( गारुडेविष्णुवाक्यम् ) ममदेहसमुद्भू
तास्तिलास्तार्क्ष्यपवित्रकाः ॥ असुरादानवादैत्याविद्रवंतितिलैस्तथा ॥ तिलाःश्वेतास्तिलाःकृष्णास्तिलागोमूत्रसन्निभाः॥ (मात्स्ये) विष्णो
र्देहसमुद्भूताःकुशाःकृष्णतिलास्तथा ॥ श्राद्धस्यरक्षणार्थायइतिप्राहुर्महर्षयः ॥ ( आपस्तंबः ) अटव्यांयेसमुत्पन्नाअकृष्टफलितास्तथा ॥
तेवैश्राद्धेपवित्रास्तुतिलास्तेनतिलास्तिलाइति ॥ येअटव्यामुत्पन्नाअकृष्टायांचभूमौफलितास्तेश्राद्धकर्मणिप्रशस्ततमास्तिलाः ॥ येतुग्रा
म्याःकृष्टेक्षेत्रेफलिताःप्रसिद्धास्तिलास्ते नतिलाइतिहेमाद्रिः ॥ ( ब्रह्माण्डे ) यतिस्त्रिदंडीकरणंराजतंपात्रमेवच ॥ दौहित्रःकुतपः
कालश्छागःकृष्णाजिनंतथा ॥ गौराःकृष्णास्तथारण्यास्तथैवविविधास्तिलाः ॥ पितॄणांतृप्तयेसृष्टादर्शैतेब्रह्मणास्वयम् ॥ ( अथरजतं
मात्स्ये ) शिवनेत्रोद्भवंयस्मात्तस्मात्तत्पितृवल्लभम् ॥ अमंगलंचयज्ञेषुदेवकार्येषुवर्जितम् ॥ रजतंदक्षिणामाहुः पितृकार्येषुसर्वदा ॥
( प्रभासखंडे ) रूप्यंपितॄणामतिवल्लभंतद्दत्वानरोवल्लभतामुपैति ॥ सोमस्यलोकेलभतेसताद्धुत्रैनिबद्धाकृपयोहियावत् ॥ ( अथग्रा
ह्याणिधान्यानिमनुस्मृतौ ) तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेनच ॥ दत्तेनमासंप्रीयंते विधिवत्पितरोनृणाम् ॥ ( प्रचेताअपि ) कृष्णमाषा
स्तिलाश्चैवश्रेष्ठाःस्युर्नवशालयः ॥ महायवा व्रीहियवास्तथैवचमधूलिकाः ॥ कृष्णाः श्वेताश्चलोहाश्चग्राह्याः स्युःश्राद्धकर्मणि॥यवाः शितशू
काः॥ शालयः कलमाद्याः॥महायवा व्रीहियवाश्चयवविशेषाः॥मधूलिकाः यावनालधान्यविशेषाः॥कृष्णाः स्थलजाः कृष्णवर्णव्रीहयः॥लो
हारक्तशालयइत्यर्थः ॥ ( ब्रह्मपुराणे ) यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा ॥ संतर्पयेत्पितॄन्मुद्गैःश्यामाकैःसर्षपद्रवैरिति ॥ ( अत्रिर्देवलौ )
अगोधूमंचयच्छ्राद्धंमाषमुद्गविवर्जितम्॥तैलपक्वेनरहितंकृतमप्यकृतंभवेत्॥तैलपक्वेन तिलतैलपक्वेनइत्यर्थः॥(अथवर्ज्यानिधान्यानिमरीचिः)

कुलत्थाश्चणकाःश्राद्धेनदेयाश्चैवकोद्रवाः॥कटुकानिचसर्वाणिविरसानितथैवचेति॥चणकेषुविकल्पोदेशाचारात् ॥ कटुकानिपिप्पल्यादीनि॥
(विष्णुः) राजमाषमसूरपर्युषितकृतलवणानिचवर्जयेत् ॥ पर्युषितं मोदकादिवर्ज्यंकृतलवणंक्षारमृत्तिकयाकृतंलवणमित्यर्थः ॥ ( अथग्राह्य
फलानिब्रह्मपुराणे)आम्रमाम्रातकंबिल्वंदाडिमंबीजपूरकम् ॥ चीणाकंलकुचंजंबूभव्यंभूतंतथारुकम् ॥ प्राचीनामलकंक्षीरंनालिकेरंपरूषकम्॥
नारंगंचसखर्जूरं द्राक्षानीलकपित्थकम् ॥ पटोलंचप्रियालंच कर्कन्धूबदराणिच ॥ एतानिफलजातीनिश्राद्धेदेयानियत्नतः॥ तथा॥कालशा
कंतंडुलीयंवास्तुकंमूलकंतथा ॥ शाकमारण्यकंचैवदद्यात्पुण्यान्यमूनिच ॥ ( शाकादिसंस्कारद्रव्याण्यादित्यपुराणे ) मधुकंरामठंचैवकर्पूरं
मरिचंगुडम् ॥ श्राद्धकर्मणिशस्तानिसैंधवंत्रपुसंतथा ॥ ( अथवर्ज्याः मार्कंडेयपुराणे ) लशुनंगृंजनंचैवपलांडुंपिंडमूलकम् ॥ गंधारि
कामलाबूनिलवणान्यौषराणिच ॥ वर्जयेत्तानिवैश्राद्धेयच्चवाचानशस्यते ॥ गृंजनं गाजरइतिप्रसिद्धम् ॥ पलांडु कांदाइतिप्रसिद्धम् ॥ (कौर्मे)
पिप्पलींरुचकंचैवतथैवचमसूरकम् ॥ कुष्मांडालाबुवार्त्ताकभूस्तृणंसुरसंतथा ॥ राजमाषांस्तथाक्षीरंमाहिषाख्यंविवर्जयेत् ॥ रुचकं सौवर्च
लम् ॥ ( अथग्राह्याणिवर्ज्यानिचक्षीरादीनिकौर्मे ) क्षीरंक्षीरविकारश्चपायसंशर्करामधु ॥ देयंश्राद्धेषुयत्नेनसर्वदापितृतृप्तये ॥ ( पाद्ममात्स्य
योः ) अन्नंचसदाधिक्षीरंगोघृतंशर्करान्वितम् ॥ मासंप्रीणातिवैसर्वान् पितृनित्यब्रवीदजः ॥ (मनुकात्यायनौ) संवत्सरंतुगव्येनपयसापायसे
नच ॥ पितरस्तृप्यन्तीतिशेषः ॥ ( यमः ) अनिर्दशायागोःक्षीरमाजंमाहिषमेवच ॥ आविकंसंधिनीक्षीरमौष्ट्रमैकशफंचयत्॥ वर्जयेद्द्वारवत्सा
याःपयश्चैवान्यवत्सायाः ॥ आरण्यानांतुसर्वेषांवर्जयित्वातुमाहिषम् ॥ आविकादीनिवर्ज्यानिसदास्वायंभुवोऽब्रवीत् ॥ ( शंखः ) सर्वासां
द्विस्तनीनांक्षीरमभोज्यं अजावर्जमिति ॥ ( सुमंतुः ) पयोदधिघृतंचैवगवांश्राद्धेषुपावनम् ॥ माहिषीणांघृतंप्राहुःश्रेष्ठंनतुपयःक्वचित् ॥

( ब्रह्माण्डेमाधवीयेच ) द्विःस्विन्नंपरिदग्धंचतथैवाग्रावलेहितम् ॥ शर्कराकीटपाषाणैः केशैर्यच्चाप्युपद्रुतम् ॥ पिण्याकंमथितंचैवतथा
तिलवणंचयत् ॥ दधिशाकंतथाभक्ष्यमुष्णंचोष्णविवर्जितम् ॥ वर्ज्यंचैतथाचान्यान्सर्वानभिमतानपि ॥ सिद्धाः कृताश्चयेभक्ष्याः प्रत्यक्षल
वणीकृताः॥ वाग्दुष्टाभावदुष्टाश्चदुष्टैश्चोपहतास्तथा ॥ वाससाचोपधूतानिवर्ज्यानिश्राद्धकर्मणि इति ॥ अस्यार्थः-द्विःस्विन्नंवारद्वयंपक्वम् ॥
परिदग्धं द्रवांशसंशोषणात् भांडाग्निनापरिप्लुष्टम् ॥ अग्रावलेहितम् अग्रे उपरिभागे मार्जारादिभिरवलीढं पूर्वमन्येनास्वादितंवा॥ शर्कराश्च
ताश्मजातिविशेषः ॥ कीटाः पिपीलिकादयः ॥ पाषाणः दृषत् ॥ केशः लोम एतैर्दूषितम् ॥ पिण्याकं निःस्नेहतिलचूर्णं खलीइतिख्यातम्॥
मथितं आलोडितं दधि ॥ अतिलवणं अतिमात्रलवणम् ॥ सिद्धाभक्ष्याः आमलकादयः प्रत्यक्षलवणेन मिश्रिताः ॥ वाग्दुष्टाः निंदा
दिरूपया वाचा दूषिताः॥ दुष्टैश्चोपहताः श्वसूकरकाककुक्कुटादिभिर्नग्नपतितपाषण्ड्यादिभिश्चदर्शनस्पर्शनादिनोपसरीकृताश्च ॥ वाससाचोप
धूतानि येषामुपरिमक्षिकाद्यपगमार्थंवस्त्रमवधूयतेतान्यन्नानीत्यर्थः ॥ ( अथवर्ज्यान्युदकानिब्रह्माण्डे ) दुर्गंधिफेनिलंक्षारंपंकिलं पल्वलोदक
म्॥नभवेद्यत्रगोस्तृप्तिर्नक्तंचैवाप्युपाहृतम्॥यन्नसर्वार्थचोत्सृष्टंयच्चाभोज्यानपानिजम्॥ तद्वर्ज्यंसलिलंतातसदैवश्राद्धकर्मणीति॥ अस्यार्थः-क्षारं
कटुकम् ॥ पल्वलोदकंक्षुद्रजलाशयोदकम्॥नक्तंरात्रावुपाहृतम्॥ यत्कूपादिकंतत्कर्तृभिःसर्वप्राण्युपजीवनार्थंनोत्सृष्टंनपरित्यक्तंतत्सलिलंपितृ
कर्मणिवर्ज्यम् ॥ कूपसमुद्धृतपश्वादिपेयोदकधारणार्थोजलाशयः निपानंतज्जंतत्रस्थितमपिवर्जनीयमित्यर्थः॥ (कात्यायनः) आपोनिशिनगृ
ह्णीयान्नपिबेच्चकदाचन॥ (हारीतः) रात्रावेतावरुणंप्रविशंतितस्मान्नरात्रौगृह्णीयात् ॥ (आदित्यपुराणे) चिरंपर्युषितंवापिशूद्रस्पृष्टमथापिवा ॥
वर्जयेदितिशेषः॥ पर्युषितंजाह्नवीभिन्नंरात्र्यंतरितम् ॥ शूद्रस्पृष्टंशौचाचाररहितशूद्रस्पृष्टमित्यर्थः ॥ अथब्राह्मणनिमंत्रणम्॥(तत्रतावत्कालोवि

ष्णुस्मृतौ)अथश्राद्धेप्सुःपूर्वेद्युर्ब्राह्मणानुपनिमंत्रयेदिति॥ श्राद्धेप्सुः श्राद्धकर्तुमिच्छुः श्राद्धकर्त्ता तत्प्रेषितोवा सवर्णः ॥ पूर्वेद्युः पूर्वस्मिन्दिवसे
श्राद्धयोग्यान्ब्राह्मणानुपनिमंत्रयेत् निमंत्रणेनसंयोजयेदित्यर्थः॥ (हेमाद्रिश्राद्धतत्त्वयोर्देवलोपि) श्वःकर्त्तास्मीतिनिश्चित्यदाताविप्रान्निमंत्रये
त्॥निरामिषंसकृद्भुक्त्वासर्वस्मुक्तजनोगृहे॥असंभवेपरेद्युर्वाब्राह्मणांस्तान्निमंत्रयेत् ॥ अज्ञातीनसमानार्षानयुग्मानात्मशक्तितइति ॥ अज्ञातीन्
यजमानभिन्नगोत्रान् ॥ असमानार्षान् भिन्नप्रवरान् अयुग्मान् विषमसंख्याकानित्यर्थः॥ ( मनुस्मृतौ ) पूर्वेद्युरपरेद्युर्वाश्राद्धकर्मण्युपस्थिते ॥
निमंत्रयीतत्र्यवरान् सम्यग्विप्रान्यथोदितान् ॥ पूर्वेद्युःयदहःश्राद्धंकर्तव्यं ततःपूर्वस्मिन्नहनि ॥ अपरेद्युः अशक्तस्तुश्राद्धदिनएवइत्यर्थः ॥
(याज्ञवल्क्योपि) निमंत्रयेतपूर्वेद्युर्ब्राह्मणानात्मवाञ्छुचिः॥ तैश्चापिसंयतैर्भाव्यंमनोवाक्कायकर्मभिरिति ॥ आत्मवान्नियतेन्द्रियः॥ शुचिःप्रय
तश्च ॥ तैरपिनिमंत्रितैर्ब्राह्मणैर्मनोवाक्कायव्यापारैःसंयतैर्नियतैर्भवितव्यमित्यर्थः ॥ (वाराहश्राद्धतत्त्वयोरपि) वस्त्रशौचादिकर्तव्यंश्वःकर्त्तास्मी
तिजानता ॥ स्थानोपलेपनंकृत्वाततोविप्रान्निमंत्रयेत् ॥ दंतकाष्ठंविसृजेद्ब्रह्मचारीशुचिर्भवेत् ॥ ( नागरखंडेऽपि ) पूर्वेद्युः सायमासाद्यश्रा
द्धार्हान्द्विजन्मनाम् ॥ गृहंगत्वाशुचिर्भूत्वासंयतस्तान्निमंत्रयेत् ॥ यतीन्गृहस्थान्साधूंश्चश्रोत्रियान्ब्रह्मचारिण इति ॥ रात्रावपिप्रदोषात्परतो
निमंत्रणंकर्तव्यमितिहेमाद्रिः ॥ तत्रकर्त्तास्वयमेवनिमंत्रणंकुर्यात्॥ दाताविप्रान्निमंत्रयेदितिदेवलवचनात् ॥ असंभवेत्वन्येननिमंत्रणंकारयित
व्यं तच्चसाधुनापुरुषेण ॥ ( तथाचकौर्मे ) गोमयेनोदकैर्भूमिंशोधयित्वाप्रयत्नतः ॥ समामंत्र्यद्विजान्सर्वान्साधुभिःसन्निमंत्रयेत् ॥ सवर्णै
रेवनिमंत्रणंकारयितव्यम् ॥ ( अतएवप्रचेताः स्मृतौ ) सवर्णंप्रेषयेद्दातार्द्विजानामुपमंत्रणे ॥ सवर्णशब्दोऽत्रसजातीयोपलक्षणार्थः ॥
( असवर्णप्रेषणेदोषमाहहेमाद्रौनारायणः ) अभोज्यंब्राह्मणस्यान्नंक्षत्रियाद्यैर्निमंत्रितम् ॥ तथैवक्षत्रियादीनांवृषलेननिमंत्रितम् ॥

वृषलेन शूद्रेण ॥ ( शातातपः ) अभोज्यंब्राह्मणस्यान्नंवृषलेननिमंत्रितम् ॥ तथैववृषलस्यान्नंब्राह्मणेननिमंत्रितमिति ॥ ( अथनिमंत्रणी यब्राह्मणसंख्या तत्रतावदाह कात्यायनः ) दैवेयुग्मानयुग्मान्यथाशक्तिपित्र्यएवइति ॥ अयुग्मान्विषमसंख्याकानित्यर्थः ॥ ( याज्ञव ल्क्योपि)दैवेयुग्मान्यथाशक्तिपित्र्येऽयुग्मांस्तथैवचेति ॥ युग्मान्समसंख्याकान् ॥ ( मनुवसिष्ठौ ) । द्वौदैवेपितृकृत्येत्रीनेकैकमुभयत्रवा ॥ भोजयेत्सुसमृद्धोपिनप्रसज्येतविस्तरे ॥ सत्क्रियां देशकालौचशौचंब्राह्मणसंपदम् ॥ पंचैतान्विस्तरोहंतितस्मान्नेहेतविस्तरम् ॥ ( बृहस्प तिरपि ) एकैकमथवाद्वौत्रीन्दैवेपित्र्येचभोजयेत् ॥ सत्क्रियाकालपात्रादिनसंपद्येतविस्तरात् इति ॥ अतएवयाज्ञवल्क्येनापिसंको चएवपक्षोविहितः ॥ द्वौदैवेप्राक्त्रयः पित्र्येउदगेकैकमेववा ॥ मातामहानामप्येवंतंत्रंवावैश्वदेविकं इति ॥ दैवेवैश्वदेवेद्वौब्राह्मणौ प्राक् प्राङ्मुखौपित्र्येपित्रादिस्थानेत्रयः उदक्उदङ्मुखाउपवेश्याइत्यर्थः ॥ एकैकमेववेतिब्राह्मणाद्यसंभवेवेदितव्यम् मातामहानामप्येवमितिपूर्वो क्तपितृश्राद्धवत्कर्त्तव्यम् उभयत्रवैश्वदेवतंत्रेणवाकर्त्तव्यम् ॥ तंत्रशब्दःसमुदायवाचकइत्यर्थः ॥ यदातुद्वावेवब्राह्मणौलब्धौतदातुवैश्वदेवेपात्रंप्र कल्प्यउभयत्रैकैकंब्राह्मणंनियुंज्यात् ॥ ( यदाहवासिष्ठः ) यद्येकंभोजयेच्छ्राद्धेदैवंतत्रकथंभवेत् ॥ अन्नंपात्रेसमुद्धृत्यसर्वस्यप्रकृतस्यच॥देवता यतनेकृत्वाततः श्राद्धंप्रवर्तयेत् ॥ प्रास्येदन्नंतदग्नौतुदद्याद्वाब्रह्मचारिणइति ॥ अत्राशक्तावेकंब्राह्मणमपि ॥ (यत्तुशंखेनोक्तम्)भोजयेदथवाप्येकं ब्राह्मणं पंक्तिपावनमितितदप्यलाभविषयम् ॥ ( हेमाद्रौदेवलोपि ) एकेनापिहि विप्रेणषट्पिंडंश्राद्धमाचरेत् ॥ षडर्घ्यान्दापयेत्तस्मै षड् भ्योदद्यात्तथासनमिति ॥ ( एकब्राह्मणपक्षे वैश्वदेविकनिर्णयोब्रह्मांडे ) एकएवयदाविप्रो द्वितीयोनोपपद्यते ॥ पितृणांब्राह्मणोयोज्योदैवे त्वग्निंनियोजयेत् ॥ ( विस्तारनिंदा हेमाद्रिब्रह्मपुराणयोः ) देशकालधनालाभादेकैकमुभयत्रवा ॥ शेषान्वित्तानुसारेण भोजयेदन्यवे

श्मनि॥ यस्माद्ब्राह्मणबाहुल्याद्दोषो बहुतरो भवेत् ॥ श्राद्धनाशो मौनेनाशः श्राद्धतंत्रस्य विस्मृतिः॥ उच्छिष्टोच्छिष्टसंस्पर्शो निंदादातुर्न भोक्तृषु ॥
वितंडया परीवादो जल्पाश्चैव पृथग्विधा इति ॥ ब्राह्मणबाहुल्ये यस्मादेते दोषाः संभवंति तस्मादेतद्दोषपरिहारासमर्थो नो भययन्नैकैक एव भोज
नीय इत्यर्थः ॥ ( मनुस्मृतावपि ) एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ॥ पुष्कलं फलमाप्नोति नामंत्रज्ञान्बहूनपीति ॥ ( सर्वथा विप्रालाभे
अनुकल्पांतरमुक्तं हेमाद्रौ देवलेन ) निधाय दर्भान्विधिवदासने सुसमाहितः ॥ प्रैषानुप्रैषसंयुक्तं सर्वं श्राद्धं प्रकल्पयेत् ॥ ( अथ निमंत्रणप्रकारः
भविष्योत्तरे) उपवीती ततो भूत्वा देवतार्थं द्विजोत्तमान् ॥ अपसव्येन पित्र्यर्थं स्वयं शिष्योऽथवा सुतः ॥ (प्रचेताः) दक्षिणं चरणं विप्रः सव्यं वै क्षत्रि
यस्तथा ॥ पादावाद्यौ वैश्यो शूद्रः प्रणतिपूर्वकम् ॥ निमंत्रयीत पूर्वेद्युः श्राद्धकर्ता द्विजोत्तमान् ॥ ( मत्स्यपुराणे ) दक्षिणं जानुमा
लभ्य त्वं मयात्र निमंत्रितः ॥ एवं निमंत्र्य नियमाञ्छ्रावयेत्पितृबांधवः ॥ अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ॥ भवितव्यं भवद्भिश्च मया च
श्राद्धकारिणा ॥ ( अत्रिरपि ) सनियासी विनिर्मुक्तैः कामक्रोधविवर्जितैः ॥ भवितव्यं भवद्भिर्वै श्वोभूते श्राद्धकर्मणीति । पूर्वेद्युः प्रथमेऽह्नी
त्यर्थः ॥ एवं निमंत्रणकर्ता वाक्ये अभिहिते निमंत्रितो ब्राह्मणा अभिधेयमाहुः एव ॥ ततस्तथेत्यविघ्नेन गतेयं रजनी यदि ॥ यथाश्रुतं प्रतीक्षेर
ञ्छ्राद्धकालमतंद्रिता इति॥ ते निमंत्रिता ब्राह्मणा निमंत्रणकर्तारं तथास्तु यथाविघ्नेनेयं रजनी गतेत्युक्त्वा धर्मशास्त्रादौ यथानियमजातं श्रुतं
तथैव तान्नियमजातं प्रतीक्षेरन् प्रतिपालयेयुः श्राद्धकाले स्वादितान्नपरिणामपर्यंतमित्यर्थः ॥ अथ नियमाः ॥ ( तत्र निमंत्रितनियमांस्तावदाह
कात्यायनः ) अनिंदितेनामंत्रितो नापक्रामेदामंत्रितो वान्यदन्नं न प्रतिगृह्णीयात् इति ॥ अनिंदितेन भोज्यान्नेन निमंत्रितो निमंत्र्यमाणः नापक्रा
मेत निमंत्रणं नेच्छेत् किंतु तदभ्युपगच्छेदेव इत्यर्थः ॥ ( माधवीये यमः ) आमंत्रितास्तु ये विप्राः श्राद्धकाल उपस्थिते ॥ वसेयुर्नि

यताहारा ब्रह्मचर्यपरायणाः ॥ अहिंसासत्यमक्रोधोदूरचागमनक्रिया ॥ आभारोद्वहनंचेति श्राद्धस्योपसनावधीति ॥ यस्त्वा
मंत्रणमंगीकृत्य भोजनसमर्थोऽपितत्पात्र्यजतितस्यदोषोऽस्ति ॥ (तथाचमनुः) केतितस्तुयथान्यायं हव्येकव्येद्विजोत्तमः ॥
कथंचिदप्यतिक्रामन्पापः सूकरतांव्रजेत् ॥ केतितः उपनिमंत्रित इत्यर्थः ॥ (यमः) आमंत्रितस्तुयोविप्रोभोक्तुमन्यत्रगच्छति ॥
नरकाणां शतंगत्वाचांडालेष्वभिजायते ॥ (देवलोपि) पूर्वंनिमंत्रितोऽन्येनकुर्यादन्यप्रतिग्रहम् ॥ भुक्ताहारोऽथवाभुंक्तेसुकृतंतस्य
नश्यति ॥ निमंत्रितब्राह्मणपरित्यागेप्रत्यवायोऽस्ति ॥ (तथाचनारायणः) नर्कतनंकारयित्वानिवारयतिदुर्मतिः ॥ ब्रह्महत्यामवाप्नोतिशू
द्रयोनौचजायते ॥ इति ॥ यश्चामंत्रितः कृताह्वानोप्यनागमनेनकुतपादिश्राद्धकालातिक्रमंकरोतितस्यदोषः आदित्यपुराणेदर्शि
तः ॥ "आमंत्रितश्चिरंनैवकुर्याद्विप्रः कदाचन ॥ चिरकारीभवेद्रोगीपच्यतेनरकाग्निना" इति ॥ दातृभोक्त्रोर्ब्रह्मचर्यनियमातिक्रमेदोषोवृ
द्धमनुनोक्तः॥ "ऋतुकालेनियुक्तोपि नैवगच्छेत्स्त्रियंक्वचित् ॥ तत्र गच्छन्समाप्नोति ह्यनिष्टफलमेवतु" ॥ (तत्रैव) आमंत्रितस्तुयः श्राद्धे वृष
स्यासहमोदते ॥ दातुर्यद्दुष्कृतंकिंचित्तत्सर्वं प्रतिपद्यते ॥ (यमः) पुनर्भोजनमध्वानं भाराध्ययनमैथुनम्॥ संध्यां प्रतिग्रहं होमं श्राद्धभुग्व
र्जयेत्सदा ॥ होमंस्वयंनकुर्यात् अन्येनतुकारयेत् ॥ (होतुरन्यस्याऽलाभे आहउशनाः) दशकृत्वः पिबेदापो गायत्र्याश्राद्धभुग्द्विजः ॥ ततः
संध्यामुपासीत जपेच्चजुहुयादपि ॥ (श्राद्धतत्त्वेवायुपुराणे) अध्वनीनोभवेदश्वः पुनर्भोजीचवायसः ॥ होमकृन्नेत्ररोगी स्यात्पाठादायुःप्रही
यते ॥ दानंनिष्फलतामेति प्रतिग्राहीदरिद्रताम् ॥कर्मकृज्जायते दासो मैथुनीसूकरो भवेत् इति ॥ कर्मात्रभारोद्वहनादिकमित्यर्थः ॥ (अथ
श्राद्धकर्तुर्नियमानाह कात्यायनः) तदहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्वमैथुनश्रमस्वाध्यायांश्चवर्जयेदिति ॥ तद

हः श्राद्धदिने ॥ शुचिःस्नानादिभिः शुद्धदेहः॥अक्रोधनः क्रोधवर्जितः ॥ अत्वरितःद्रुतकारित्वहीनः ॥ अप्रमत्तःप्रमादशून्यः ॥ सत्यवादी सत्यवदनशीलः ॥ अध्वानंदूराध्वगमनम् ॥ मैथुनं स्त्रीसंभोगः॥ श्रमः भारोद्वहनादिजनितः क्लेशः॥ स्वाध्यायशब्देन सांगस्यवेदस्याध्ययनमध्यापनं च विवक्षितमित्यर्थः ॥ ( वृद्धमनुरपि ) निमंत्र्यविप्रांस्तदहर्वर्जयेन्मैथुनंक्षुरम् ॥ प्रमत्ततांच स्वाध्यायं क्रोधाऽशौचं तथानृतम्॥क्षुरं क्षुरकर्म ॥ ( हेमाद्रौजाबालिः ) तांबूलं दंतकाष्ठंच स्नेहस्नानमभोजनम्॥रत्यौषधपरान्नानि श्राद्धकर्त्तातुवर्जयेत्॥ (आपस्तंबः) अमैथुनादयःसर्वेनियमाःश्राद्धकारिणा ॥ अप्रमत्तेनकर्त्तव्याःप्रमादे निरयं व्रजेत् ॥ ( वाराहे ) नशक्नोति स्वयंकर्त्तुं यदाह्यनवकाशतः ॥ श्राद्धं शिष्येणपुत्रेण तदान्येनापि कारयेत् ॥ नियमानाचरेत्सोपिविहितांश्चवसुंधरे ( मात्स्येपि ) पुनर्भोजनमध्वानं भारमायासमैथुनम् ॥ श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद्विवर्जयेत् ॥ स्मयंचकलहं चैव दिवास्वापंतथैवच ॥ ( वाराहपुराणे ) ब्रह्मचर्यादिभिर्भूरिनियमैः श्राद्धमक्षयम् ॥ अन्यथाक्रियमाणंतु मोघमेव न संशयः ॥ अथश्राद्धदिनपूर्वाह्णकृत्यम् ॥ श्राद्धकर्त्ता ब्राह्मे मुहूर्त्ते उत्थाय यथोपदेशं शौचविधिं विधायाचामेत् दंतधावनं तु न कुर्यात् ॥ ( अतएव भविष्योत्तरे ) श्राद्धभुक्प्रातरुत्थाय प्रकुर्याद्दंतधावनम् ॥ श्राद्धकर्त्तानकुर्वीत दंतानां धावनं बुध इति ॥ अतःश्राद्धकर्त्तादंतधावनमकृत्वैवशौचाऽऽचमनविधिं निष्पादयेत् ॥ ततोनद्यादौ यथोक्तस्नानं कृत्वा स्नानाङ्गतर्प्पणं विधाय अहते धौते सिते वाससी परिधानाद्बहिःकक्षाबंधमकुर्वन् परिदधीत ॥ ( तथाचहेमाद्रौ गौतमः ) स्नानेदानेजपेहोमेदैवेपित्र्येचकर्माणि ॥ बध्नीयान्नासुरीं कक्षांशेषकालेयथारुचि ॥ अनंतरं संध्यांप्रातर्होमंचकृत्वा पाकभूमिमुपलेपनादिभिःसंस्कुर्यात् ॥ ( यथाह उशनाः ) गोमयोदकैर्भूमिभाजनशौचंकुर्यात् ॥ ( ब्रह्मांडेपि ) भूमिः श्राद्धे पंचगव्यैर्लिप्ता शोध्या तथोल्मुकैः ॥ गौरमृत्तिकयाच्छन्ना प्रकी

र्णतिलसर्षपाइति॥अथैवंसंस्कृतायांभुविशोधितेषुनवेषुच भांडेषुपाकं कर्तुमुपक्रमेत्॥(तथाचदेवलः)तथैव यंत्रितोदाता प्रातःस्नात्वासहांबरः॥
आरभेतनवैःपात्रैरन्नारंभंचबांधवैरिति॥स्नातयापरिहितधावकधौतश्वेतवाससापत्न्यासह शक्तियुतःस्वयमेव समस्तपाकारंभसमाप्तीकुर्यात्॥
अशक्तश्चेत् स्वयमारंभमात्रंकृत्वा अन्वारंभं सुस्नातैर्बांधवैः स्वजनैः कारयेदित्यर्थः ॥ पत्न्या स्वहस्तेनपाकः कर्त्तव्य इत्यत्रार्थे लिंगदर्शनं
हेमाद्रौ चमत्कारखंडे च ॥ "ततश्चश्रपयामासतदर्थंजनकोद्भवा ॥ रामादेशात्स्वयंसाध्वीविनयेनसमन्विता॥"(व्यासोपि)गृहिणीचैवसुस्नाता
पाकं कुर्यात्प्रयत्नतः ॥ निष्पन्नेषुचपाकेषु पुनःस्नानंसमाचरेत् ॥ ( पराशरः ) गृहाग्निशिशुदेवानां ब्रह्मचारितपस्विनाम् ॥ तावन्नदीयते किं
चिद्यावत्पिंडान्ननिर्वपेत् ॥ पाककरणे वर्ज्याः स्त्रियः॥(ब्रह्मपुराणे) रजस्वलांच पाखडां पुंश्चलीं पतितां तथा ॥ त्यजेच्छूद्रां तथावंध्यांविधवां
चान्यगोत्रजाम् ॥ व्यंगकर्णीचतुर्थाहःस्नातामपिरजस्वलाम् ॥ वर्जयेच्छ्राद्धपाकार्थममातृपितृवंशजाम्॥मातृपितृवंशजभिन्नांत्यजेदित्यर्थः॥
गर्भिण्यपिपाकंनकुर्यात् ॥ (पाकपचनभाण्डानिहेमाद्रौ) सौवर्णान्यथरौप्याणिताम्रकांस्योद्भवानिच ॥ पार्तिकान्यपिभव्यानिनूतनानिदृढा
नि च ॥ नकदाचित्पचेदन्नमयःस्थालीषुपैतृकम्॥ अयसोदर्शनादेवपितरोविद्रवंतिहि॥कालायसंविशेषेणनिंदितंपितृकर्म्मणि॥फलानांचैवशा
कानांच्छेदनार्थानियानितु॥महानसेपिशस्त्राणांतेषामेवहिसन्निधिः॥ (आदित्यपुराणे) पचेदन्नानिसुस्नातःपात्रेशुशुचिषुस्वयम्॥स्वर्णादिधातु
जातेषुमृन्मयेष्वपिवाबुधः ॥ अच्छिद्रेषुविलिप्तेषुतथानुपहतेषु च ॥ नायसेषुनभिन्नेषुदूषितेष्वपिकर्हिचित् इति ॥ ( भूभांडसंस्कारानन्तरमुक्तं
देवलस्मृतिकूर्मपुराणयोः ) ततोऽन्नंबहुसंस्कारं नैकव्यञ्जनभक्ष्यवत् ॥ चोष्यपेयसमृद्धंचयथाशक्तिप्रकल्पयेत् ॥ अस्यार्थो हेमाद्रिणाकृतः॥
बहुसंस्कारम् सूपकारशास्त्रोपदिष्टैः समृद्धतरगृहजनप्रतिसिद्धैर्हिङ्गुमरिचैलाकर्पूरादियुक्तिजन्यैरभिज्ञरसनीयैरतिशयविशेषैर्युक्तम् ॥

नैकव्यञ्जनभक्ष्यवत् व्यज्यतेऽनेनान्नस्यरसइति व्यञ्जनं सूपशाकादिकम् ॥ दंतैरवखंडचयद्भुज्यतेतद्भक्ष्यम् ॥ यस्यओष्ठदशनरसना दिभिर्निपीडितस्य सफूत्कारेण मुखमारुतेनरसोनिष्पीयते तच्चोष्यम् यथेक्षुखण्डादिकम् ॥ पेयम् द्रवैकस्वभावं पानकादि ॥ उपल क्षणं चैतद्भोज्यलेह्ययोः॥ यत्त्वनातिकाठिन्यादतिप्रयत्नसत्खंडनानपेक्षं चर्वयित्वैवनिगीर्य्यतेतद्भोज्यम् ॥ यत्तुसान्द्रद्रवस्वभावतयादशनान पेक्षेणरसनाव्यापारेणाश्यते तत् लेह्यम् ॥ यथाशक्ति शक्तिमनतिक्रम्य प्रकल्पयेत् संपादयेदित्यर्थः ॥ ( ब्रह्मपुराणे ) गुडशर्कर मत्स्यंडचोदेयंफाणितमुर्मुरम् ॥ गव्यंपयोदधिघृतंतैलंचतिलसंभवम् ॥ मत्स्यंडी उत्कृष्टः शर्कराभेदः ॥ फाणितम् ईषत्क्वथितस्ये क्षुरसस्य द्रव एव विकारः मुर्मुरः गुडमरिचैलामिश्रोगोधूमस्थूलचूर्णविकारइत्यर्थः ॥तथा॥ पायसंशालिमुद्गाढयं मोदकादींश्चभक्तितः ॥ पूरिकांचरसालांचगोक्षीरञ्चनियोजयेत् ॥ यानि चाभ्यवहार्याणि स्वादुस्निग्धानिभोद्विजाः ॥ ईषदुष्णकटून्येवदेयानिश्राद्धकर्माणि ॥ मोदकः लड्डुकः ॥ पूरिकाः पूरीतिनाम्ना प्रसिद्धाः ॥ रसाला शर्करात्वगेलानागकेशरमधुमरिचमिश्रमनुद्धृतस्नेहभागं वस्त्रेसंघृष्य गालितं गोदधिकृतेत्यर्थः ॥ ( कूर्मपुराणे ) सूपशाकफलानीक्षून्पयोदधि घृतं मधु ॥ अन्नंचैवयथाकामंविविधं भोज्यपे यकम् ॥ यद्यदिष्टंद्विजेंद्राणां तत्तत्सर्वंनिवेदयेत् ॥ ( देवीपुराणे ) सर्वेषामेवचान्नानां परमान्नंचपायसम् ॥ सर्वान्नदः सतुप्रोक्तोयेनदत्तन्तुपायसमिति ॥ अत्रसाग्निकेनवैश्वदेवार्थंपृथक्पाकःकर्तव्यः ॥ एवं समाप्तेचपाके श्राद्धभूमिसंस्कारःकर्त्तव्यः ॥ ( तत्रतावच्छ्राद्धयोग्याभूमिर्विष्णुधर्मोत्तरे ) गोमयेनोपलिप्तेषुश्राद्धंकार्य्यंगृहेषुच ॥ मनोज्ञेषुविचित्रेषु रुचिरेषूत्तमेषुच ॥ उद्यानेषु विचित्रेषु सैकतेषु समेषुच ॥ ( मात्स्ये ) गोमयेनोपलिप्तेतु दक्षिणाप्रवणेस्थले ॥ श्राद्धं समारभेद्भक्त्या गोष्ठेवाजलसन्निधौ ॥

( विष्णुस्मृतौ ) संवृतेचश्राद्धंकुर्य्यात् नरजस्वलांपश्येन्नश्वानंनविड्वराहंनग्राम्यकुक्कुटं प्रयत्नाच्छूद्रमजस्यदर्शयेत् ( ब्रह्मांडे ) ॥ तस्मा त्परिवृतेदद्यात्तिलैश्चान्ववकीरयेत् ॥ राक्षसानां तिलारक्षा शुनां वै संवृतेनचेति ॥ एवंसमाप्तेगृहकर्म्मणि गृहजनकृत्यमाहहारीतः ॥ कृतकर्म्माणः सस्त्रीबालवृद्धाः सुरभिस्नाताः शुचयः शुचिवाससः स्युरिति ॥ सुरभिस्नाताः सुगंधितैलादिद्रव्यस्नाता इत्यर्थः ॥ एतच्चा भ्युदयिकविषयमितिहेमाद्रिः ॥ अथाह्नः सार्द्धप्रहरे व्यतीते निमंत्रितानांब्राह्मणानांनखरोमकल्पनं ( छेदनं ) कारयित्वातेभ्यस्तैलादिकं स्नानसाधनंदंतधावनसाधनंचदद्यात् ॥ ( तथाचकात्यायनस्मृतिभविष्ययोः ) तैलमुद्वर्त्तनंस्नानंदंतधावनमेवच ॥ कृत्तरोमनखेभ्यस्तुदद्या त्तेभ्योऽपरेहनि ॥ अपरेहनिश्राद्धदिनइत्यर्थः॥ यत्तुप्रचेतसोक्तम् ॥ "तैलमुद्वर्त्तनंस्नानंदद्यात्पूर्वाह्णएवतु ॥ श्राद्धभुग्भ्योनखश्मश्रुच्छेदनंनतुका रयेत्" इति ॥ अत्रविकल्पोवृद्धाऽऽचारतोज्ञेयः ॥ अथश्राद्धसंपदः ॥ (तत्रमनुयमहारीताः) ॥ अपराह्णस्तिलादर्भावास्तुसंपादनंतथा॥सृष्टिर्मृ ष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्म्मसुसंपदः ॥ अस्यार्थः ॥ अपराह्णः अपराह्णकालः ॥ तिलादर्भाश्चपूर्वउक्ताः ॥ वास्तुसंपादनम् वास्तु श्राद्धार्थं वे श्म तस्यसंपादनं गोमयादिनासंशोधनम् ॥ सृष्टिः अकार्पण्येनान्नादिविसर्गः ॥ मृष्टिरन्नादेश्चमार्जनंस्वादुतावा ॥ अग्र्याः पंक्तिपावनादय श्चब्राह्मणाः ॥ एतानिवस्तूनिश्राद्धसंपदःश्राद्धार्थद्रव्यसमृद्धयः ॥ श्राद्धार्थिनासर्वाण्येतानिसंपादनीयानीत्यर्थः ॥ ( ब्रह्मपुराणे ) उपमूलंसकृल्लूनान्कुशांस्तत्रोपकल्पयेत् ॥ यवांस्तिलान्बृसीः कांस्यमापः शुद्धैः समाहृताः ॥ पार्णराजतताम्राणिपात्राणिस्युः समिन्मधु ॥ पुष्पधूपसुगंधादिक्षौमसूत्रंचमेक्षणम् ॥ बृसीः व्रतियोग्यानिकुशादिनिर्मितान्यासनानि ॥ कांस्यम् कांस्यमयमग्नौ करणाद्यर्थंभाजनम् ॥ शुद्धैः शौचादिशुद्धैः समाहृताः आनीताः आपः जलानि ॥ क्षौमसूत्रं दुकूलसूत्रम् ॥ मेक्षणम् दर्वी इत्यर्थः ॥

( मनुस्मृतौ ) त्रीणिश्राद्धेपवित्राणिदौहित्रः कुतपस्तिलाः ॥ त्रीणिचात्रप्रशंसंतिशौचमक्रोधमत्वराम् ॥ तत्रैव ॥ व्रतस्थमपिदौहित्रंश्राद्धे यत्नेनभोजयेत् ॥ कुतपं चासनेदद्यात्तिलैश्वविकिरेन्महीमिति ॥ व्रतस्थं ब्रह्मचारिणमपि ॥ दौहित्रं पुत्रिकायाःपुत्रम् ॥ कुतपंनेपालदेशप्रभवं कंबलमित्यर्थः ॥ ( स्मृतिसंग्रहे ) उच्छिष्टंशिवनिर्माल्यंवांतंचमृतकर्पटम् ॥ श्राद्धेसप्तपवित्राणिदौहित्रःकुतपस्तिलाः ॥ इति ॥ उच्छिष्टम् वत्सस्योच्छिष्टंदुग्धम् ॥ शिवनिर्माल्यं गंगोदकम् ॥ वांतं मधु ॥ मृतकर्पटं कौशेयं तसरी पट्टं वा इत्यर्थः ॥ ( प्रभासखंडे ) ब्राह्मणाः कंबलोगावोरूप्याग्न्यतिथयस्तथा ॥ तिलादर्भाश्चकालश्चनवैतेकुनपाःस्मृताः ॥ अथश्राद्धेदेशेवर्ज्यानि ( यमस्मृतौ ) कुक्कुटोविड्वराहश्चकाकश्चाथबिडालकः ॥ वृषलीपतिश्ववृषलःषंढोवीरारजस्वला ॥ एतेतुश्राद्धकालेवैवर्जनीयाःप्रयत्नतः ॥ खंजःकाणःकुणिःश्वित्रीदातुःप्रेष्यकरस्तथा ॥ न्यूनांगोप्यतिरिक्तांगस्तमप्यपनयेत्ततः ॥ ( वायुपुराणे ) अन्नंपश्येयुरेतेतुयदिवैहव्यकव्ययोः ॥ उत्स्रष्टव्यंप्रधानार्थंसंस्कारस्त्वापदिस्मृतइति ॥ कुक्कुटादिभिर्दृष्टमन्नम् उत्स्रष्टव्यम् परित्याज्यम् ॥ प्रधानार्थं अग्नौकरणब्राह्मणभोजनार्थम् ॥ आपदितुनोत्सृष्टव्यंकिंतुतस्यैवपवित्रीकरणंकर्त्तव्यं तदुक्तंजमदग्निना ॥ " शुद्धवत्योथकूष्मांडचः पावमान्यस्तरत्समाः ॥ पूतेनवारिणादर्भैरन्नदोषमुपानुदेदिति ॥ एतोन्विंद्रंस्तवामेत्याद्यास्तिस्रऋचःशुद्धवत्यःऋग्वेदिनाम् ॥ यद्देवादेवहेडनमित्याद्यास्तिस्रःकूष्मांडचः यजुषाम् ॥ यदंतियच्चदूरकइत्याद्याःपावमान्यःसामगानम् ॥ तरत्समंदीधावतीत्याद्यास्तरत्समाअथर्वणामित्यर्थः ॥ (मनुस्मृतौ) चांडालश्चवराहश्चकुक्कुटःश्वातथैवच ॥ रजस्वलाचषंढश्चनेक्षेरन्नश्नतोद्विजान् ॥ होमेप्रदानेभोज्येचयदेभिरभिवीक्ष्यते ॥ दैवेकर्मणिपित्र्येवातद्गच्छत्ययथातथम् ॥ घ्राणेनसूकरोहंतिपक्षवातेनकुक्कुटः ॥ श्वातुदृष्टिनिपातेनस्पर्शेनावरवर्णज इति ॥ अवरवर्णजः शूद्रइत्यर्थः ॥

( पृथ्वीचंद्रोदये ) पादुकोपानहौछत्रंचित्ररक्तांबरंतथा ॥ रक्तपुष्पंचमार्जारंश्राद्धभूमौविवर्जयेत् ॥ ( निर्णयप्रदीपे ) घंटानिनादोहयसन्निधानं
शंबूकशंखंकदलीदलंच ॥ उन्मत्तजात्यर्कहयारिजानिश्राद्धस्यवैगुण्यकराण्यमूनि ॥ घंटानिनादः घंटाशब्दः ॥ हयोऽश्वः ॥ सन्निधानेश्राद्ध
समीपेवर्ज्यः॥शंबूकं शुक्तिका॥उन्मत्तोधत्तूरः॥ जात्यर्कौप्रसिद्धौ ॥ हयारिजंमाहिषीक्षीरादीत्यर्थः॥ अथापराह्णकृत्यम्॥तत्रतावदपराह्णकालः॥
( मत्स्यपुराणे ) ऊर्ध्वंमुहूर्तात्कुतपाद्यन्मुहूर्तंचतुष्टयम् ॥ मुहूर्तपंचकंह्येतत्स्वधाभवनमिष्यते ॥ ( कुतपमाहपराशरः ) अह्नोमुहूर्ताविख्याता
दशपंचचसर्वदा ॥ तत्राष्टमोमुहूर्तोयःसकालःकुतपःस्मृतः ॥ (मात्स्ये) मध्याह्नेसर्वदायस्मान्मंदीभवतिभास्करः॥तस्मादनंतफलदस्तत्रारंभो
विशिष्यते॥ इतिकुतपेआरभ्यतदादिपञ्चमुहूर्तेषुपरिसमापनंश्रेयस्करमित्यर्थः ॥एवमपराह्णमुक्त्वाब्राह्मणाह्वानादिकर्मउच्यते ॥ तत्रश्राद्धक
र्त्तास्नात्वाशुक्लेवाससीपरिदध्यात् ॥ (तथाचमाधवीयेउशनाः) स्नात्वाधिकारीभवतिदैवेपित्र्येचकर्मणीति॥श्राद्धकृच्छुक्लवासाःस्यादितिप्रचेत
सोक्तम्॥ (स्नानानंतरंयत्कर्त्तव्यंतदुक्तंप्रभासखण्डे ) ततोऽपराह्णसमयेश्राद्धकर्त्तासमाहितः॥ स्वयंसमाह्वयेद्विप्रान्सवर्णैर्वासमाप्लुतान्॥ समाप्लु
तान् स्नातान् ॥ ( विष्णुपुराणे ) पादशौचादिनागेहमागतानर्चयेद्द्विजान् ॥ अर्चयेत्सत्कुर्य्यात् ॥ ( मार्कण्डेयोपि ) स्नातः स्नातान्समा
हूतान्स्वागतेनार्चयेत्पृथगिति ॥ स्वागतेनभवतांस्वागतमितिप्रश्नवाक्येन अर्चयेत्संमानयेत् ॥ सुस्वागतमस्माकमितिप्रतिवचनंप्रत्येकंते
ब्रूयुरित्यर्थः ॥ ( यमस्मृतौ ) ततःस्नानान्निवृत्तेभ्यः प्रत्युत्थायकृतांजलिः ॥ पाद्यमाचमनीयंच संप्रयच्छेद्यथाक्रमम् ॥(पादप्रक्षालनेमन्त्रो
भविष्ये ) प्रक्षालयेद्द्विप्रपादाञ्छन्नोदेवीरितित्यृचा ॥ ( ब्रह्मनिरुक्ते ) पाद्यंचैवतथार्घ्यंचदेवआदौप्रदापयेदिति ॥ ( मार्कण्डेयपुराणे ) संपू
ज्यस्वागतेनैतानभ्युपेतान्गृहेद्द्विजान् ॥ पवित्रपाणिराचांतानासनेषूपवेशयेत् ॥ ( कौर्मे ) यथोपविष्टान्सर्वांस्तानलंकुर्याद्विभूषणैः ॥

स्रग्दामभिः शिरोवेष्टैर्धूपदीपाऽनुलेपनैरिति ॥ ततो गृहद्वाराभिमुखस्थिते अंगणप्रदेशे गोमयगोमूत्राभ्यां मंडलद्वयं कुर्यात् ॥ ( तथाच मात्स्ये ) एवमासाद्य तत्सर्वं भवनस्याग्रतो भुवि ॥ गोमयेनानुलिप्तायां गोमूत्रेण तु मण्डले ॥ ( गोमये विशेषमाह जाबालिः ) अमेध्याशनशून्यानां नीरुजानां तथा गवाम् ॥ अव्यंगानां च सद्यस्कं शुचि गोमयमाहरेत् ॥ ( बौधायनः ) उपलिप्ते समे स्थाने शुचौ शुक्लसमन्विते ॥ चतुरस्रं त्रिकोणं तु वर्तुलं चार्द्धचंद्रकम् ॥ कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥ ब्राह्मणादिक्रमाच्चातुर्वर्ण्येष्वित्यर्थः ॥ ( मंडलपरिमाणमाह लौगाक्षिः ) हस्तद्वयमितं कार्य्यं वैश्वदेविकमंडलम् ॥ तद्दक्षिणे चतुर्हस्तं विप्राणामंघ्रिशोधने ॥ ( एतयोर्मंडलयोः क्रमेणाऽक्षतकुशादिभिरर्चनमाह हेमाद्रौ व्याघ्रपादः ) उत्तरेऽक्षतसंयुक्तान्पूर्वाग्रान्विन्यसेत्कुशान् ॥ दक्षिणे दक्षिणाग्रांश्च सतिलान्विन्यसेद्द्विजः ॥ ( शंखलिखितौ ) पाद्यार्घ्याचमनीयोदकानि दत्त्वा ब्राह्मणानुपसंगृह्योपवेशयेदासनमालभ्येति ॥ ( हेमाद्रौ अत्रिः ) ॥ तत्रासनानि देयानि तिलैश्चैव कुशैः सह ॥ पृथक्पृथगासनेषु तिलतैलेन दीपिका इति ॥ तत्र श्राद्धदेशे आसनानि देयानि ॥ कुशैः सहितास्तिलाश्च देयाः श्राद्धभूमौ प्रक्षेपणीयाः ॥ पृथक्पृथगेकैकस्यासनस्य समीपे एकैका तैलदीपिका देया इत्यर्थः ॥ ( श्राद्धतत्त्वब्रह्मपुराणयोः ) पृथक्पृथगासनेषु तिलतैलेन दीपकाः ॥ अविच्छिन्नास्तथा देयास्ते तु रक्षंति वै द्विजा इति ॥ रक्षंति श्राद्धं द्विजा इति संबोधनमित्यर्थः ॥ अपराह्णके श्राद्धे त्वेकएव रक्षादीप इति वृद्धः ॥ ( उपवेशनमाह मनुः ) आसनेषु तु क्लृप्तेषु बर्हिष्मत्सु पृथक्पृथक् ॥ उपस्पृष्टोदकान्सम्यग्विप्रांस्तानुपवेशयेत् ॥ क्लृप्तेषु स्थापितेषु ॥ बर्हिष्मत्सु दर्भोत्तरेषु ॥ उपस्पृष्टोदकान् कृताचमनान् इत्यर्थः ॥ ( याज्ञवल्क्योऽपि ) अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तु तान् ॥ पवित्रपाणिराचांतानासनेषूपवेशयेदिति ॥ अत्र वैश्वदेविकानामादावुपवेशनं कार्य्यं पित्र्याणां तु पश्चात् इति हेमाद्रिः ॥ ( आसनानि स्मृतिसंग्रहे ) क्षौमं दुकूलं नैपालमाविकं दारुजं

तथा ॥ तार्णंपार्णंबृसींचैवविष्टरादिचविन्यसेत् ॥ अग्निदग्धान्यासनानि भग्नानिचविवर्जयेत् इति ॥ क्षौमम् अतसीत्वक्संभवतंतुसंभवम्॥ दुकूलंसूक्ष्मवस्त्रम् ॥ नैपालं नेपालदेशजंकंबलम्॥ आविकम् ऊर्णारचितम्॥दारुजं काष्ठमयं॥कालायसपट्टिकाकीलकादिरहितम् ॥ तार्णं तृणादिरचितम् ॥ पार्णं पर्णात्मकम् ॥ बृसीं कुशासनमित्यर्थः ॥ ( वाराहे ) पवित्रपाणिराचांतानासनेषूपवेशयेत् ॥ ( विष्णुपुराणे ) प्राङ्मुखान्भोजयेद्विप्रान्देवानामुभयात्मकान् ॥ पितृपैतामहादीनांभोजयेच्चाप्युदङ्मुखान् ॥ उभयात्मकान् पित्रादिमातामहादिश्राद्धद्वयार्थे वैश्वदेविकद्वयसंबंधिन इत्यर्थः ॥ ( याज्ञवल्क्योपि ) मातामहानामप्येवमिति ॥ ( मरीचिरपि ) तथामातामहश्राद्धं वैश्वदेवसमन्वितम् ॥ कुर्वीतभक्तिसंपन्नस्तंत्रंवावैश्वदैविकमिति ॥ अत्रद्वयोरपिश्राद्धयोर्वैश्वदैविककर्म्मणः तंत्रावृत्तिविधानादेकप्रयोगविधिप्रयोज्यत्वं भिन्नप्रयोगविधिप्रयोज्यत्वंचप्राप्तमित्यर्थः ॥ ( उपविष्टब्राह्मणनियमानाहसुमंतुः ) पवित्रपाणयः सर्वे तेचमौनव्रतान्विताः ॥ उच्छिष्टोच्छिष्टसंस्पर्शं वर्जयन्तःपरस्परमिति ॥ मौनित्वंच ब्रह्मोद्यकथाव्यतिरिक्तविषयम्॥ (अतएव यमः) ब्रह्मोद्याश्चकथाःकुर्युः पितॄणामेतदीप्सितम्॥ एवमुपविष्टेष्वपि ब्राह्मणेषुयतिब्रह्मचारीवायद्यागच्छतितदासोऽपिश्राद्धे भोजयितव्यः॥(तथाच यमः)भिक्षुकोब्रह्मचारीवा भोजनार्थमुपस्थितः॥उपविष्टेष्वनुप्राप्तःकामंतमपिभोजयेदिति॥ कामं तृप्तिपर्यंतमित्यर्थः॥ अथपृथिवीस्तुत्यादिकृत्यम् ॥ तत्र तावदासनोपविष्टानां ब्राह्मणानांपुरतःकुशोपस्कृतायांभुवियज्ञोपवीती प्राङ्मुखउपविश्याचम्यप्रमादकृताविज्ञाताशुचित्वनिवृत्त्यर्थं शुचित्वाशयार्थंवा प्रथमतः पुंडरीकाक्षस्मरणं कुर्यात् ॥ ( तथाच वायवीये ) शंखचक्रधरं विष्णुंद्विभुजं पीतवाससम्॥प्रारंभेकर्मणांविप्रपुंडरीकंस्मरेद्धरिमिति॥स्मरणं चात्रोच्चारणमित्यर्थः ॥ (गारुडेपि) अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥

यः स्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरः शुचिः ॥ ( प्रोक्षणं ब्रह्माण्डे ) नाप्रोक्षितं स्पृशेत्किंचिद्दैवेपित्र्येचकर्मणीति ॥ नस्पृशेन्नदद्यादित्यर्थः ॥ आचारात्पुंडरीकाक्षःपुनात्वित्युच्चार्य सेक इतितरंगिण्यामुक्तम् ॥ अनंतरंच पृथिवीस्तुतिः कर्त्तव्या ॥ ( तथाच वाराहे ) प्रणम्यशिरसाभूमिंनिवापस्यचधारिणीम् ॥ वैष्णवी काश्यपीचेति अक्षयेतिच नामत इति ॥ अत्र प्रणवादीनि नमोन्तचतुर्थ्यंतानिवैष्णव्यादिनामानि प्रयोज्यानीत्यर्थः ॥ ततः श्राद्धप्रदेशंगयात्मकत्वेन तदेकदेशस्थितंगदाधरंच ध्यात्वातयोश्चनमस्कारं कृत्वोत्तरंकर्मप्रवर्त्तयेत् ॥ ( तथाच ब्रह्माण्डपुराणे) श्राद्धभूमौगयांध्यात्वा ध्यात्वादेवं गदाधरम् ॥ ताभ्यांचैवनमस्कृत्य ततःश्राद्धंप्रवर्त्तयेत् इति ॥ ताभ्यामितिचतुर्थीद्वितीयार्थे ॥ नमस्कारश्चमनोवाक्कायैर्विधेयः॥श्राद्धंप्रवर्त्तयेदिति श्राद्धंकरिष्ये इत्येवमुपविष्टान्ब्राह्मणान्पृच्छेदित्यर्थः ॥ अथ शिष्टाचारप्राप्तं देशकालसंकीर्त्तनं कुर्यात् ॥ ( तथाच भाविष्यपुराणे ) संकल्पेनाविनाराजन् यत्किञ्चित्कुरुतेनरः ॥ फलंचाल्पाल्पकंतस्य धर्म्मस्यार्द्धक्षयो भवेत् ॥ मासपक्षतिथीनांच निमित्तानांचसर्वशः ॥ उल्लेखनमकुर्वाणो नतस्यफलभाग्भवेत् ॥ गृहीत्वौदुम्बरंपात्रं वारिपूर्णंशुणान्वितम् ॥ दर्भत्रयंसाग्रमूलं फलपुष्पतिलान्वितम् ॥ जलाशयारामकूपे सङ्कल्पपूर्वंदिङ्मुखः ॥ साधारणेचोत्तरास्य ऐशान्यांनिक्षिपेत्पय इति ॥ उदुंबरंपात्रंताम्रपात्रमित्यर्थः ॥ गोत्रसम्बंधनामानि यथावत्प्रतिपादयेदितिप्रचेतसोक्तम् ॥ ( पारस्करोऽपि ) गोत्रसम्बंधनामानि पितॄणामनुकीर्त्तयन्निति ॥ ( वृद्धपराशरोऽपि ) सङ्कल्पासनयोरर्घ्ये गंधेऽन्नेचावनेजने ॥ गोत्रसम्बंधनामानिपिण्डेप्रत्यवनेजने ॥ सूत्रेऽक्षय्यप्रतिष्ठार्थे कीर्त्तयेत्प्रयतः सदा ॥ आद्येचान्तिमयोःषष्ठीं सम्बुद्धिमितरेषुचेति ॥ आद्ये प्रतिज्ञासङ्कल्पे ॥ अन्तिमयोरक्षय्येदक्षिणायांचेत्यर्थः ॥ ( हेमाद्रौ नारायणः ) विभक्तिभिस्तुयत्किंचिद्धीयतेपितृदैवते ॥ तत्सर्वंसफलंज्ञेयं विपरीतंनिरर्थकम् ॥ ( तत्रैव व्यासः ) चतुर्थीचासने

नित्यंसंकल्पेचविधीयते ॥ प्रथमातर्पणेप्रोक्तासम्बुद्धिमपरेजगुः ॥ ( मत्स्यपुराणेपि ) नामगोत्रंपितॄणां तु प्रापकंहव्यकव्ययोः ॥
( ब्रह्माण्डे ) उभौहस्तौसमौकृत्वा जानुभ्यामंतरेस्थितौ ॥ सप्रश्रयश्चोपविष्टान्सर्वान्पृच्छेद्द्विजोत्तमान् ॥ सप्रश्रयःविनयान्वित इत्यर्थः ॥
तथा ॥ श्राद्धंकरिष्यइत्येवं पृच्छेद्विप्रान्समाहितः ॥ कुरुष्वेतिसतैरुक्तो दद्याद्दर्भासनंततः ॥ ( कात्यायनोपि ) प्रश्नंतुपङ्क्तिमूर्द्धन्यंपृच्छ
तिसर्वान्वा इति ॥ ( दर्भासनात्पूर्वंगायत्र्यादिजप्यमाह प्रचेताः ) गायत्रींप्रणवंवापिजप्त्वाश्राद्धमुपक्रमेत् ॥ ( ब्रह्मपुराणभविष्योत्तरश्राद्ध
तत्त्वविष्णुधर्मोत्तरेषु ) उपविश्यजपेद्धीमान्गायत्रींतदनुज्ञया ॥ पापापहांपावमानीमश्वमेधफलांतथा ॥ मंत्रंवक्ष्याम्यहंतस्मादमृ
तंब्रह्मसंभवम् ॥ देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच ॥ नमःस्वधायैस्वाहायै नित्यमेवनमोनमः ॥ आद्यावसानेश्राद्धस्यत्रिरा
वृत्तजपेत्सदा ॥ पिंडनिर्वपणेचापिजपेदेतत्समाहित इति ॥ शिष्टास्तु नमःस्वाहायैस्वधायैनित्यमेवनमोनमः ॥ इतिपठंति ॥
( ब्रह्माण्डेपि ) ॥ देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायैनित्यमेवनमोनमः ॥ आदिमध्यावसानेषुत्रिरावृत्तं
जपेद्बुधः ॥ पितरःक्षिप्रमायांति राक्षसाःप्रद्रवंतिचेति ॥ (विष्णुपुराणे) अमूर्त्तानांसमूर्त्तानांपितॄणांदीप्ततेजसाम् ॥ नमस्यामिसदातेषांध्या
यिनांयोगचक्षुषामितिमंत्रोऽप्यादिमध्यावसानेषुपठितव्यः ॥ अत्रावसरेनीवीबंधोविधेयइतिहेमाद्रिप्रभृतयः ॥ शिष्टास्तुविकिरणांतेकुर्वंति ॥
नीवीबंधश्चाऽपसव्येनैवकर्त्तव्यइतिहेमाद्रिः ॥ पितृदैवत्यावैनीविरितिशतपथीयलिंगदर्शनेनापितृदैवत्यंकर्म्मनीवीमताकर्त्तव्यमित्यवगमात् ॥
( आश्वलायनोपि ) नीवीवासोदशान्तेनस्वरक्षार्थंप्रबंधयेत् ॥ ( योगियाज्ञवल्क्यस्तु ) दक्षिणेकटिदेशेतुतिलैः सह कुशत्रयम् ॥ तर्ज्जयं
तीहदैत्यानांयथानॄणांयमस्तथा ॥ ( कात्यायनः ) नीवीकार्यादशागुप्तिर्वामकुक्षौकुशैः सहेति ॥ एतद्वृद्धिश्राद्धे ॥ पितॄणांदक्षिणेपार्श्वेविपरी

तातुदैविके ॥ इतिस्मृत्यंतरात् ॥ पितृणांपितृश्राद्धे ॥ दैविकेनांदीश्राद्धइत्यर्थः ॥ अत्रवामेदक्षिणेवाइत्याचाराद्व्यवस्थाइतिमदनपारिजातः ॥
नीवीबंधनप्रकारोदेवयाज्ञिकभाष्ये ॥ कुशातिलसंयुक्तानांवस्त्रदशानां सव्यभागेपरिहितवस्त्रेणसंवेष्ट्यावगाहनंनीवीकरणमिति ॥ सव्यभागे
वामकुक्षावित्यर्थः ॥ नीवीनामात्रतिलकुशान्वितानांपरिहितवस्त्रोत्तरांचलदशानांवामकटिसंलग्नवस्त्रबहिर्भागेनसंवेष्ट्यगोपनमितिकर्को
पाध्यायः॥(मंत्रस्तुब्रह्माण्डे)॥ निहन्मिसर्वंयदमेध्यवद्भवेद्धताश्चसर्वेऽसुरदानवामया ॥ रक्षांसियक्षाश्चपिशाचगुह्यकाहतामयायातुधानाश्चसर्वे
इति॥अनंतरं दैवप्रदेशेयवान्विकीर्य पैतृकप्रदेशेपरितस्तिलान्गौरसर्षपांश्चविकिरेत्॥ (तथाच ब्रह्मपुराणे)अक्षतैर्दैवतारक्षांचक्रेचक्रगदाधरः ॥
अक्षताश्चयवौषध्यः सर्वदेवास्त्रसंभवाः ॥ रक्षंतिसर्वांस्त्रिदशान्रक्षार्थंनिर्मिताहिते ॥ ( मार्कंडेयपुराणे ) रक्षोघ्नांस्तुपठेन्मंत्रांस्तिलैश्चाविकिरे
न्महीम् ॥ सिद्धार्थकैश्चरक्षार्थंश्राद्धेहिप्रचुरंछलम् ॥ छलंयातुधानादिकृतो विघ्नः ॥ ( ब्राह्मे ) ततस्तिलान्गृहेतस्मिन्विकिरेच्चाप्रदक्षिणम् ॥
नमोनमस्तेगोविन्दपुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेशरक्षतांसर्वतोदिशः ॥ ( द्वारदेशेतिलकुशप्रक्षेपणमंत्रः स्कंदपुराणे ) तिलारक्षं
त्वसुरान्दर्भारक्षंतुराक्षसान् ॥ पङ्क्तिंवैश्रोत्रियोरक्षेदतिथिःसर्वरक्षक इति ॥ ( श्राद्धप्रदेशस्यपरितःप्राच्यादिदिक्षुमध्येचतिलविकिरणमंत्राः ॥
( भविष्यपुराणे ) अग्निष्वात्ताःपितृगणाः प्राचींरक्षन्तुमेदिशम् ॥ तथाबर्हिषदःपांतुयाम्यांयेपितरःस्थिताः ॥ प्रतीचीमाज्यपास्तद्वदुदीचीम
पिसोमपाः ॥ अधोर्ध्वमपिकोणेषु विकोणेषुचसर्वशः ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥ सर्वतश्चाधिपस्तेषांयमोरक्षांकरोतुमे ॥
वायुभूतपितृणांचतृप्तिर्भवतुशाश्वती इति ( ब्रह्माण्डे ) रक्षार्थंपितृसत्रस्य त्रिःकृत्वःसर्वतोदिशम् ॥ तिलांस्तुप्रक्षिपेन्मंत्रमुच्चा
र्यांपहताइति ॥ तिलविकिरणानंतरंप्रमादोपजातस्यप्रमितस्यवा मार्जारादिदृष्टिदोषस्यनिवृत्तये कस्मिंश्चित्पात्रेजलंगृहीत्वादर्भै

रालोड्य कूष्मांडीभिः पाकप्रोक्षणंकृत्वाऽन्यानपिकुशकुसुमादीन्सर्वान्पदार्थान्प्रोक्षयेत् ॥ ( तथाच कात्यायनः ) कूष्मांडीमंत्रसूक्तेन कुर्य्यात्तोयाभिमंत्रणम् ॥ अन्नानिप्रोक्षयेत्तेनतैरेवश्राद्धमाचरेत् ॥ कूष्मांडीसूक्तं यद्देवादेवहेडनमित्यादि कंडिकात्रयम् ॥ ( पराशरोपि ) अप्रोक्षितंचयत्किंचित्पर्युषितंविवर्जयेत् ॥ (हेमाद्रौ वसिष्ठः) शुद्धवतीभिःकूष्मांडीभिःपावमानीभिश्चपाकादिप्रोक्षेत् ॥ शुद्धवतीभिश्छंदोगाः कूष्मांडीभिर्यजुषाः पावमानीभिर्बह्वृचश्च प्रोक्षणंकुर्युरित्यर्थः ॥ ( प्रोक्षणाभावेदोषमाह याज्ञवल्क्यः ) अनभ्युक्ष्यानुपस्पृश्यजुहोतिच ददातिच ॥ नैर्ऋतंभागधेयंस्यात्तस्मात्प्रोक्षणमाचरेत् ॥ ततःप्रोक्षितमन्नंहरयेनिवेद्यश्राद्धंकुर्यात् ॥ ( तथाच विधानपारिजाते ) विष्णोर्निवेदितान्नेनयष्टव्यंदेवतांतरम् ॥ पि यश्चापितद्देयंतदनंत्यायकल्पते ॥ पितृशेषंतुयोदद्याद्धरयेपरमात्मने ॥ रेतोधाःपितरस्तस्यभवंतिक्लेशभागिनः ॥ ( ब्रह्मपुराणेपि ) यःश्राद्धकालेहरिभुक्तशेषंददातिभक्त्यापितृदेवतानाम् ॥ तेनैवपिंडांस्तुलसीविमिश्रानाकल्पकोटिंपितरस्तुतृप्ता इति ॥ केचित्तुवैष्णवपरमितिवदंति ॥ अथदर्भासनादयःपदार्थाः ॥ तेचसर्वस्यदैवपूर्वकत्वात्पूर्वंदेवद्विजेष्वनुष्ठेयास्ततः पैत्र्यद्विजेषु ॥ ( तथाच देवलः ) ॥ यद्यत्तुक्रियतेकर्मपैतृकेब्राह्मणान्प्रति॥तत्सर्व्वमेवकर्त्तव्यंवैश्वदैवत्यपूर्वकमिति॥(आसनादिदानेदिङ्नियममाह शातातपः ) उदङ्मुखस्तुदेवानांपितॄणांदक्षिणामुखः ॥ प्रदद्यात्पार्व्वणश्राद्धेदैवपूर्वंविधानतः ॥ ( जानुनिपातमाहकात्यायनः ) दक्षिणंपातयेज्जानुंदेवान्परिचरन्सदा ॥ पातयेदि रज्जानुपितॄन्परिचरन्नथ ॥ जानुपातनानंतरमासनदानाद्यपूर्वंद्विजहस्तेषुजलंप्रक्षिपेत् ॥ ( तथाच याज्ञवल्क्यः) पाणिप्रक्षालनंदत्त्वाविष्टरार्थान्कुशानपि ॥ ( प्रचेताः ) दर्भांश्चैवासनेदद्यान्नतुपाणौकदाचन॥ पितृदेवमनुष्याणांस्याद्दृष्टिःशाश्वतीतथेति ॥ दृष्टिः कलहः॥ ब्राह्मणहस्तेदेवपितृमनुष्यप्रजापत्यग्नितीर्थानांसद्भावाद्धस्तविन्यस्तेषुदर्भेषुममेदंममेदमितिदेवादीनां

कलहःस्यात्तस्माद्धस्तेनदद्यादित्यर्थः ॥ ( अत्रकुतपाद्यासनोपरिप्रदेयस्यकुशासनस्यप्रदेशविशेषोब्रह्माण्डेदर्शितः ) आसनेचासनं दद्याद्वामेवादक्षिणेऽपिवाइति ॥ वामेतिब्राह्मणस्यआसनावस्थितस्यवामभागावस्थितेआसनप्रदेशे एवंदक्षिणइत्यर्थः ॥ अत्रदक्षिणवैश्वदैविकविषयं वामेतिपैतृकविषयम् ॥ ( तदुक्तं पराशरेण ) पितृकार्येषुवामंतद्दैवेकर्म्मणिदक्षिणमिति ॥ एतच्चासनंदेवानांयवसहितैर्दर्भैर्देयंपितॄणांतुतिलसहितैः ॥ ( तथाच बोधायनः ) देवानांसयवादर्भाः पितॄणांद्विगुणास्तिलैः ॥ सहिता इतिशेषः ॥ द्विगुणाः मध्यभागेन द्विगुणीकृता इत्यर्थः ॥ ( बृहस्पतिरपि ) ऋजून्सव्येनवैकृत्वादैवेदर्भान्प्रदक्षिणम् ॥ द्विगुणानपसव्येनदद्यात्पित्र्येऽपसव्यवत् ॥ ऋजवः द्विगुणरहिताः ॥ अपसव्यवत्अप्रदक्षिणमित्यर्थः॥ वैश्वदैविकंसर्वकर्मप्रदक्षिणकर्म्मणा पैतृकमप्रदक्षिणकर्मणाचकार्यम् ॥ (तथा बोधायनः) प्रदक्षिणंतुदेवानांपितॄणामप्रदक्षिणम् ॥ देवानामृजवोदर्भाःपितॄणांद्विगुणामता इति ॥ आसनदानेविभक्तिविशेषस्तुपूर्वमेवदर्शितः ॥ ( नागरखंडेपि ) विभक्त्यापूर्वयातेषामासनंचप्रदापयेदिति ॥ एवमेवमातामहादिब्राह्मणेभ्योप्यासनानिदद्यात् ॥ पितरोयत्रपूज्यंतेतत्रमातामहाध्रुवमितिवृद्धयाज्ञवल्क्यवचनात् ॥ ( अथावाहनंकालिकापुराणे ) रक्षणायततोदेवान्विश्वाख्यांस्तत्रयोजयेत् ॥ रक्षणायश्राद्धस्येतिशेषः ॥ तत्रयोजयेत्तेषुब्राह्मणेषु आवाहनेनसन्निधापयेदित्यर्थः ॥ ( कात्यायनः ) आसनेषुदर्भानास्तीर्यविश्वान्देवानावाहयिष्यइतिपृच्छत्यावाहयेत्यनुज्ञातइतिपृच्छतियजमानः अनुज्ञातोद्विजैरित्यर्थः ॥ ( कौर्मेपि ) ततस्त्वावाहयेद्देवान्ब्राह्मणानामनुज्ञया ॥ उदङ्मुखोयथान्यायंविश्वेदेवासइत्यृचा ॥ ( याज्ञवल्क्योपि ) पाणिप्रक्षालनंदत्त्वाविष्टरार्थान्कुशानपि ॥ आवाहयेदनुज्ञातोविश्वेदेवासइत्यृचाइति ॥ आवाहनंविप्राङ्गुष्ठंगृहीत्वाकर्त्तव्यम् ॥ ( तदुक्तं ब्राह्मे ) विप्राङ्गुष्ठंगृहीत्वातुविश्वान्देवान्समाह्वयेत् इति ॥

( आवाहनप्रकारस्त्वाह कात्यायनः ) विश्वेदेवासआगतेत्यनयाऽऽवाह्याऽवकीर्य्य विश्वेदेवाः शृणुतेममितिजपित्वेति ॥ ( वृद्धपराशरोपि ) देवानावाहयिष्येहमितिवाचउदीरयेत् ॥ आवाहयेदनुज्ञातो विश्वेदेवासऽआगतः ॥ विश्वेदेवाःशृणुतेममितिमंत्रद्वयंपठेत् ॥ ( उत्पत्तिनामाऽज्ञाते आह बृहस्पतिः ) उत्पत्तिनामचैतेषां नविदुर्योद्विजातयः ॥ अयमुच्चारणीयस्तैःश्लोकःश्रद्धासमन्वितैः ॥ आगच्छंतुमहाभागा विश्वेदेवामहाबलाः ॥ येयत्रविहिताःश्राद्धे सावधानाभवंतुते इति ॥ उत्पत्तिश्चैषां दक्षकन्यायांविश्वायांधर्माज्जाताइत्यादिहेमाद्रौदर्शिता ॥ नामप्रयोगश्च पुरूरवार्द्रवौचैवपार्वणेसमुदाहृतावित्यादि शंखबृहस्पत्युक्तेश्चेत्यर्थः ॥ ( भविष्ये ) आवाहयेद्यवैर्देवानपसव्यांतिलैः पितॄनिति ॥ यवैः यवहस्त इत्यर्थः ॥ ( अथपित्राद्यावाहनमाह याज्ञवल्क्यः ) द्विगुणांस्तुकुशान्दत्त्वाह्युशन्तस्त्वेत्यृचापितॄन् ॥ आवाह्य तदनुज्ञातो जपेदायंतुनस्ततः ॥ ( कूर्मपुराणेपि ) अपसव्यंततःकृत्वा पितॄणांदक्षिणामुखः ॥ आवाहनंततःकुर्यादुशंतस्त्वेत्यृचाबुधः ॥ आवाह्यतदनुज्ञातोजपेदायन्तुन इति ॥ ( कात्यायनोपि ) अथपितॄनावाहयिष्य इतिपृच्छत्यावाहयेत्यनुज्ञात उशन्तस्त्वेत्यनयावाह्यावकीर्य्य आयंतुनः जपतीति ॥ अवकीर्य्यतिलानितिशेषः ॥ अथार्घ्यपात्रासादनादि ॥ ( तत्रतावदर्घ्यपात्राणि ब्रह्माण्डे ) सौवर्णराजतांभोजमणिपात्राण्यथापिवा ॥ अर्घ्यार्थं संस्कारोत्येवशुभंपत्रपुटादिवा इति ॥ अंभोजंताम्रमयम् ॥ पत्रपुटाः पलाशादिपत्रकृतानिपात्राणीत्यर्थः ॥ ( हेमाद्रौ बैजवापः ) राजतानिप्रशस्तानि पित्र्येहैमानिदैविके ॥ अपिवाताम्रपात्राणिदैवेपित्र्येऽर्घ्यकर्मणि ॥ ( कात्यायनसूत्रेपि ) सौवर्णराजतोदुंबरखड्गमणिमयानांपात्राणामन्यतमेषु यानिवाविद्यंतेपत्रपुटेष्विति ॥ उदुंबरं ताम्रम् ॥ खड्गं गंडकशृङ्गोद्भवमित्यर्थः ॥ राजतंतुपित्र्येकर्मण्येवनतुदैवे ॥ ( तथाच मत्स्यपुराणे ) शिवनेत्रोद्भवंयस्मातस्मात्तत्पितृवल्लभम् ॥ अमंगलंतद्यत्नेनदेवकार्य्येषुव

र्जितम् ॥ शिवनेत्रोद्भवं रुद्राश्रुसंभवमित्यर्थः ॥ ( तैत्तिरीयश्रुतिरपि ) यदश्रु अशीर्यत्तद्रजतं हिरण्यमभवदिति ॥ अश्रुप्रभवत्वादेवा
मङ्गलम् ॥ ( पात्रपूरणविधिमाह याज्ञवल्क्यः ) यवैरन्ववकीर्य्याथ भाजनेसपवित्रके ॥ शन्नोदेव्यापयःक्षिप्त्वायवोसीतियवांस्तथा ॥
यादिव्याइतिमंत्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ॥ ( कात्यायनोपि ) पत्रपुटेष्वेकैकस्यैकैकेनदद्दाति सपवित्रेषुहस्तेषु यादिव्याइति॥ (नागरखं
डेपि) शन्नोदेवीतिमंत्रेण अर्घ्यपात्रेविनिक्षिपेत्॥यवोऽसियवयास्मेति अक्षतांस्तत्रनिर्वपेत्॥अक्षतान् यवान्॥पात्रयुग्मंपात्रमात्स्ययोरुक्तम्॥
विश्वेदेवान्यवैः पुष्पैरभ्यर्च्यासनपूर्वकम्॥पूरयेत्पात्रयुग्मंतु स्थाप्यदर्भपवित्रके॥शन्नोदेवीत्यपोदद्याद्यवोसीतियवानपि ॥ ( हेमाद्रौ मात्स्येपि )
शन्नोदेवीत्यपो दद्याद्यवोसीतियवानपि ॥ गंधपुष्पैस्तु संपूज्य वैश्वदेवं प्रतिन्यसेदितिवैश्वदेवंप्रति ॥ वैश्वदैविकब्राह्मणानां पुरतः ब्राह्मण
द्वयपक्षेपात्रयुग्मं ब्राह्मणैकपक्षेपात्रमेकंच न्यसेत् ॥ अर्घ्यपात्रं स्थापयेदित्यर्थः ॥ पात्रेषुगंधादिदानंतूष्णीम् ॥ तूष्णींपुष्पाणिचंदनमिति
योगियाज्ञवल्क्यवाक्यात् ॥ ( पराशरोपि ) यवोसीतियवांस्तत्रतूष्णींपुष्पाणिचंदनमिति ॥ ( अत्रार्घ्यपात्रसंपत्तिरस्त्वितिप्रश्नपूर्वकंवाक्य
माहहेमाद्रौजातूकर्ण्यः ) ततोर्घ्यपात्रसंपत्तिंवाचयित्वाद्विजोत्तमान् ॥ तदग्रेचार्घ्यपात्रंतुस्वाहार्घ्याइतिविन्यसेत् इति ॥ अनंतरंपात्रस्थं
पवित्रंविप्रकरेदत्त्वापादप्रभृतिमूर्द्धांतंपूजयेत् ॥ ( तथाचहेमाद्रौ गार्ग्यः ) दत्त्वाहस्तेपवित्रंतुकृत्वापूजांचपादतः॥यादिव्याइतिमंत्रेणहस्तेष्वर्घ्यं
विनिक्षिपेदिति॥पादतःपादप्रभृतिमूर्द्धान्तमित्यर्थः॥(तथाचप्रचेताः) पादप्रभृतिमूर्द्धान्तं देवानांपुष्पपूजनम् इति॥ अर्घ्यदानेस्वाहांतःशब्दःप्र
योक्तव्यः ॥ ( तदुक्तंहेमाद्रिमाधवयोर्गार्ग्येण ) स्वधेतिचैवमंत्रांतेपितॄणांवचनंयथा॥ स्वाहेतिचैवदेवानांहोमकर्मण्युदाहरेत् इति ॥ होमशब्दो
त्रत्यागप्रक्षेपरूपत्वादर्घ्येपिवर्त्तते ॥ स्वाहांते नमःशब्दोपिप्रयोज्यः ॥ नमोदेवानामितिश्रुतेः ॥ एतच्चसर्वं वैश्वदेविकानुष्ठानार्हम् ॥

( अथपित्राद्यर्घ्यदानप्रकारमाह याज्ञवल्क्यः ) यवार्थस्तुतिलैः कार्य्यः कुर्य्यादर्घ्यादिपूर्ववत् ॥ पूर्ववत् वैश्वदेविकार्घ्यादिवत् ॥ आदि शब्देनगंधपुष्पादिदानंगृह्यते ॥ ( छंदोगपरिशिष्टे कात्यायनः ) अपसव्यंतदासिंचेत्पितृपात्रेषुपूर्ववत् ॥ ततस्तिलांस्तिलोसीतिगंधपुष्पाणिचैवहि॥पूर्ववत् शन्नोदेवीरित्यनेनेत्यर्थः ॥ ( गंधदानंतर्जन्याएककार्यं तदुक्तं ब्रह्मपुराणे ) पितॄणामर्पयेद्गंधंतर्जन्याचसदैवहीति ॥ ( अथ प्रतिपात्रंसमंत्रकंतिलावापमाहहेमाद्रौ कात्यायनः ) यज्ञियवृक्षचमसेषुपवित्रांतर्हितेष्वेकैकस्मिन्नपआसिंचति शन्नोदेवीरित्येकैकस्मिन्नेवतिलानावपति॥तिलोऽसिसोमदेवत्योगोसवेदेवनिर्मितः॥प्रत्नमद्भिःप्रत्तःस्वधयापितॄल्लोकान्प्रीणाहिनः स्वधानमइति ॥ ( माधवीये शौनकोपि ) पात्रेषुदर्भान्तरितेष्वपःप्रदायशन्नोदेवीरभिष्टयइत्यनुमंत्रितासुतिलानावपति ॥ तिलोसिसोमदेवत्योगोसवेदेवनिर्मितः ॥ प्रत्नमद्भिःप्रत्तःस्वधया पितॄनिमाँल्लोकान्प्रीणयाहिनः स्वधानमइति॥एवमेवहेमाद्रिस्थगोभिलआश्वलायनसूत्रेषुअग्निपुराणादावपि दृश्यते॥ मैथिलास्तु स्वाहांतंपठंतिस्वपरंपराव्यवहारासिद्धत्वात् ॥ युक्तंतुस्वधांतमेवपैतृकत्वात् ॥ ( तथाच गार्ग्यः ) स्वधेतिचैवमंत्रांतेपितॄणां वचनंयथाइति ॥ ( पित्रादिनामगोत्रोच्चारणपूर्वकत्वमुक्तंमात्स्ये ) एवंपात्राणिसंकल्प्ययथालाभंविमत्सरः ॥ यादिव्येतिपितृनामगोत्रैर्दर्भकरेन्यसेत् ॥पित्रादीनांनामगोत्रोच्चार्यदर्भयुक्तेब्राह्मणदक्षिणकरेऽर्घ्यंन्यसेदित्यर्थः ॥ (व्यासोपि) गोत्रसंबंधनामानिपितॄणामनुकीर्त्तयन् ॥ एकैकस्यतु विप्रस्य अर्घ्यपात्रंविनिक्षिपेत् ॥ एकैकस्यविप्रस्यदक्षिणकरे अर्घ्यपात्रं अर्घ्यपात्रस्थजलंविनिक्षिपेत् दद्यादित्यर्थः॥(ब्रह्मपुराणे विशेषः) ततोवामेनहस्तेनगृहीत्वाचमसान्क्रमात् ॥ पितृतीर्थेनतत्तोयं दक्षिणेनचपाणिना ॥ दत्तदर्भोदकेहस्ते विप्राणां च पृथक्पृथक् ॥ दद्यान्मंत्रंजपंश्चाथ यादिव्या आप इत्यपि ॥ अमुकामुकगोत्रैतत्तुभ्यमस्तुतिलोदकम् ॥ तिलोदकमित्युच्चारणंप्रायेणसाग्निकविषयक

मितिहेमाद्रिः॥असावेषतेऽर्घ इतिकात्यायेननानुपूर्वीविशेषोपादानात् ॥ एषवोहस्तार्घःस्वाहानमः ॥ एषतेहस्तार्घः स्वधानम इतिसिद्धम् ॥ अथसंस्रवविनियोगादि ॥ तत्रकात्यायनसूत्रे ॥ एकस्मिन्संस्रवान्समवनीयपुत्रकामोमुखमनक्तीति ॥ अस्यार्थः--एकस्मिन्प्रथमपितृपात्रे संस्रवान्पितामहाद्यर्घ्यपात्रस्थिताञ्जलशेषान् ॥ ( तथाच शतपथश्रुतिः ) संस्रवोह्येवखलु परिशिष्टोभवतीति ॥ केचित्तुहस्तगलिताम्बुवद न्ति तत्तुमतान्तरे ॥ समवनीय एकत्रसंभृत्य पुत्रकामोयजमानः मुखम् अनक्ति स्वमुखमंज्यात् मार्जयेदित्यर्थः॥ (शातातपोपि) प्रथमेपितृ पात्रेतु सर्वान्संभृत्यसंस्रवान् ॥ अनक्तिवदनंपश्चात्पुत्रकामोभवेद्यदीति ॥ वदनंमुखमित्यर्थः ॥ ( नागरखंडेतु ) आयुष्कामस्यसंस्रवजलेन लोचनावसेचनमुक्तम् ॥ पितृपात्रे समादाय अर्घ्यपात्राणि कृत्स्नशः ॥ आयुष्कामस्तु तत्तोयं लोचनाभ्यांपरिक्षिपेदिति ॥ पितृपात्रे पितुर र्घ्यपात्रे ॥ अर्घ्यपात्राणि पात्रस्थिताजलशेषाः ॥ समाधाय निक्षिप्य लोचनाभ्यांपरिक्षिपेत् ॥ नेत्रावसेचनं कुर्यादित्यर्थः ॥ ( हेमाद्रौ वाज सनेयिनांतु प्रथमपात्रसम्भृतं संस्रवोदकं हस्तेगृहीत्वा आपःशिवा इतिमंत्रेणप्राङ्मुखोपविष्टस्ययजमानस्यान्येनाभिषेकः क्रियत इत्यु क्तम् ॥ एतानिचमुखाञ्जनादीनिकाम्यानिकर्माणियज्ञोपवीतिनायजमानेनकार्याणि ॥ अनन्तरंविमोकादि॥(तत्रतावद्देवपात्रस्योत्तानंस्थापनं बृहद्गारुडे ) ततः पात्रंदक्षिणेतुदेवेभ्यःस्थानमस्यथ ॥ उत्तानंस्थापयेद्देव नोद्धरेन्नचचालयेत् ॥ दक्षिणेदेवविप्रदक्षिण इत्यर्थः ॥ ततोऽपस व्येनपितृपात्रस्यन्युब्जीकरणम् ॥ (तथाच अत्रिः) अपसव्यं ततः कृत्वा पितृपात्रेसमाहितः ॥ क्षिप्त्वादर्भपवित्राणिमोचयेत्संस्रवांस्ततः ॥ ( कात्यायनः ) प्रथमेपात्रे संस्रवान्समवनीयापितृभ्यःस्थानमसीतिन्युब्जंपात्रंकरोतीति ॥ प्रथमेपात्रे पितृपात्रे संस्रवान्पितामहाद्यर्घ्य पात्रस्थजलादीन् समवनीय निधाय पितृभ्यः स्थानमसीतिमंत्रेण न्युब्जमधोमुखं करोति स्थापयेदित्यर्थः ॥ ( नागरखंडे ) अधोमुखं

चतत्पात्रं विजनेस्थापयेत्तत इति ॥ विजनेश्राद्धीयद्रव्याऽऽनयनापयनपरिवेषणादिकर्तृकजनसंचरणदोषरहितेप्रदेश इत्यर्थः ॥ शिष्टास्तु पितृविप्रवामप्रदेशेऽवस्थापनंकुर्वंति ॥ (हेमाद्रौ प्रचेताअपि) न्युब्जमुत्तरतोन्यसेत् इति ॥ उत्तरशब्दो वामपर्यायवाचकइत्यर्थः ॥ विप्रवामे इति हलायुधः॥ ( याज्ञवल्क्यः ) दत्त्वाऽर्घ्यंसंस्रवांस्तेषांपात्रेकृत्वाविधानतः ॥ पितृभ्यः स्थानमसीतिन्युब्जंपात्रंकरोत्यधः ॥ अधःभूमावेव नतुपीठबृस्यादिषु ॥ ( कूर्मपुराणेपि ) संस्रवांश्चततःसर्वान्पात्रेकुर्यात्समाहितः ॥ पितृभ्यः स्थानमसीतिन्युब्जंपात्रंनिधापयेदिति ॥ पितृ पात्रन्युब्जानंतरंपितामहप्रपितामहपात्रेअपितदुपरिन्यसेत् ॥ ( तथाच हेमाद्रौ यमकात्यायनौ ) पैतृकंप्रथमंपात्रं तस्मिन्पैतामहंन्यसेत् ॥ प्रपितामहंततोन्यस्य नोद्धरेन्नचचालयेदिति ॥ पैतृकंपितृपात्रंन्यस्य न्युब्जीकृत्य तस्मिंस्तदुपरि पैतामहं पितामहपात्रं तदुपरिप्र पितामहपात्रंचन्यसेत्स्थापयेत् ॥ ब्राह्मणविसर्जनपूर्वकालात्पूर्वंचनोद्धरणीयमित्यर्थः ॥ एवमेवमैथिलश्रीदत्तादीनांव्यवहारः ॥ अत्रमिलित पात्रत्रयन्युब्जकरणेरुद्रधरलिखनंप्रमाणशून्यम् ॥ मातामहादेः संस्रवानपिपितृकार्यवद्गृहीत्वान्युब्जीकुर्यादितिशूलपाणिः ॥ एतच्चपात्रंविस र्जनादिकालात्पूर्वंनोद्धरणीयमित्याह—( यमः ) नोद्धरेत्प्रथमंपात्रंपितृणामर्घ्यपातितम् ॥ आवृतास्तत्रतिष्ठंति यावद्विप्रविसर्जनमिति ॥ प्रथमविप्रविसर्जनात्पूर्वं विप्रविसर्जनपूर्वकालात्पूर्ववा पितृणामर्घ्यपातितं पितृणामर्घ्यकर्म्माणि न्युब्जीकृतपात्रं नोद्धरेदितिहेमाद्रिः ॥ विप्रविसर्जनपूर्वकालात्पूर्वकालः दक्षिणादानपर्यंतमित्यर्थः ॥ ( पराशरः ) आश्रित्यप्रथमंपात्रंतिष्ठंतिपितरोनृणाम् ॥ श्राद्धेतस्मान्नत द्विद्वानुद्धरेत्प्रथमंसुधीरिति॥प्रथमंपितुःपात्रमित्यर्थः॥( उद्घाटनेदोषमाहतुर्यमापस्तंबौ ) उद्धरेत्तुयदापात्रं विवृतंवायदाभवेत् ॥ अभोज्यंत द्भवेच्छ्राद्धं दैवैःपितृगणैःसह ॥ विवृतम् उद्घाटितम् ॥ ( कात्यायनः ) स्पृष्टमुद्धृतमन्यत्रनीतमुद्घाटितंतथा ॥ पात्रंदृष्ट्वा व्रजंत्याशु पितरः

प्रतपन्तिचेति ॥ स्पृष्टंहस्तादिनासंयोजितम् उद्धृतम् उत्क्षिप्तम् ॥ अन्यत्रनीतं स्थानान्तरंप्राप्तम् ॥ उद्घाटितम् अपनीतपिधानम् ॥ पात्रं अर्घ्यपात्रम् ॥ दृष्ट्वापितरः व्रजंति श्राद्धदेशंत्यजन्ति शपंतिच यजमानंप्रतित्वमसुतोऽनायुरधनोभव इत्यादिप्रकारामनिष्टफलांवाचमुत्सृ जंति ॥ तस्माज्जनसंचाररहितेप्रदेशेस्थापनंकुर्यादित्यर्थः ॥ अथगंधादिदानम् ॥ ( तत्र कात्यायनः ) अत्रगंधपुष्पधूपदीपतांबूलवाससां चप्रदानमिति ॥ ( विष्णुधर्मोत्तरे ) आदौसमर्चयेद्विप्रान्वैश्वदेवनिवेशितान् ॥ निवेशितांश्चपित्रर्थेंततःपश्चात्समर्चयेत् ॥ ( हेमाद्रौ पैठी नसिरपि ) नामगोत्रेसमुच्चार्यदद्याच्छ्रद्धासमन्वितः ॥ पितॄनुद्दिश्यविप्रेभ्योगंधादीन्देवपूर्वकम् इति ॥ ( मात्स्येपि ) यादि व्येत्यर्घ्यमुत्सृज्य दद्याद्गंधादिकंततः ॥ वस्त्रोत्तरंगंधपूर्ववाक्यंकृत्वायथाविधि ॥ इति वस्त्रोत्तरमित्यादिनासमुदायदानवाक्यंगंधस्य पूर्वमुच्चारणं वस्त्रस्यांतेउच्चारणमन्येषांमध्येउच्चारणमितिसूचितमित्यर्थः ॥ तत्रप्रदत्तस्यगंधस्यब्राह्मणोपलेपनोपयोज्यत्वमुक्तम् ॥ ( ब्रह्मपुरा णे)श्वेतचंदनकर्पूरकुंकुमानिशुभानितु॥विलेपनार्थंदद्यात्तुयच्चान्यत्पितृवल्लभमिति ॥ विलेपनंचद्विजानांश्राद्धकर्त्ताकुर्यात् ॥ तएववाकुर्युरित्य र्थः॥अत्रवर्त्तुलंतिलकंनकार्यमितिहेमाद्रिः॥ (गंधानाह मार्कंडेयः)चंदनागरुकर्पूरकुंकुमानिप्रदापयेत् ॥ (वृद्धपराशरोपि)गंधाश्चविविधादेयाः कर्पूरागुरुमिश्रिताः ॥ वर्ज्यागंधाः ब्रह्मपुराणे ) पूतिकंमृगनाभिंचरोचनांरक्तचंदनम् ॥ कालीयकंजोङ्गकञ्चतुरुष्कञ्चापिवर्जयेत् ॥ पूतिकं सुगंधितृणविशेषः ॥मृगनाभिः कस्तूरी॥ रोचना गोरोचनम्॥रक्तचंदनं प्रसिद्धम् ॥ कालीयकजोङ्गके गंधद्रव्यविशेषौ ॥ तुरुष्कः सिह्लक इ त्यर्थः ॥ अथपुष्पाणि वायुपुराणे ) शुक्लाःसुमनसःश्रेष्ठास्तथापद्मोत्पलानिच ॥ गंधवर्णोपपन्नानियानिचान्यानिकृत्स्नशः॥ अत्रपद्मोत्पला निशुक्लेतराण्यपिदेयानि ॥ ( अत्र विष्णुः ) जलजानिरक्तान्यपिदद्यात् ॥ ( मार्कंडेयपुराणे ) जात्यश्चसर्वादातव्यामाल्लिकाश्वेतयूथिका ॥

जलोद्भवानिसर्वाणिकुसुमानिचचंपकम् ॥ जात्यः मालत्यः ॥ मल्लिका मुद्गराख्यानिपुष्पाणि ॥ श्वेतयूथिकाहेमकुसुमानि ॥ ( अथवर्ज्यानि मात्स्ये ) पद्मबिल्वार्कधत्तूरपारिभद्राटरूषकाः ॥ नदेयाःपितृकार्येषु पयश्चैवाविकंतथा ॥ पद्मपत्रंस्थलजंप्रतिषिध्यतेजलजस्यविहितत्वात् ॥ पारिभद्रोमंदारः ॥ आटरूषो वासकः ॥ ( हेमाद्रौ शंखः ) उग्रगंधीन्यगन्धीनिचैत्यवृक्षोद्भवानिच ॥ पुष्पाणिवर्जनीयानिरक्तवर्णानियानिच ॥ जलोद्भवानिदेयानिसर्वस्मिञ्छ्राद्धकर्मणि ॥ रक्तान्यपिविशेषतः ॥ उग्रगंधीनि अहृद्यगंधीनि ॥ चैत्यवृक्षः श्मशानवृक्षः ॥ धूपद्रव्याणि विष्णुधर्मोत्तरे ) धूपस्तुगुग्गुलुर्देयस्तथाचंदनसारजः ॥ अगरुश्चसकर्पूरस्तुरुष्कस्त्वक्तथैवच ॥ तुरुष्कः सल्लकीवृक्षः ॥ त्वक्लवंगम् ॥ ( हेमाद्रौ विष्णुः ) घृतमधुयुक्तंगुग्गुलंश्रीखंडदेवदारुसरलादिदद्यात् ॥ ( ब्रह्मपुराणे ) चंदनागुरुणीचोभेतथैवोशीरपद्मकम् ॥ तुरुष्कंगुग्गुलुश्चैवघृताक्तंयुगपद्दहेत् इति ॥ ( वर्ज्यधूपानाहदेवलः ) ॥ येहिप्राण्यङ्गजाधूपाहस्तवाताहताश्चये ॥ नतेश्राद्धेनियोक्तव्यायेचकेचोग्रगंधयः ॥ घृतंनकेवलंदद्याद्दुष्टंवातृणगुग्गुलम् ॥ प्राण्यङ्गजाः कस्तूर्यादयः ॥ तृणगुग्गुलं राल इतिप्रसिद्धम् ॥ ( दीपस्नेहमाह विष्णुः ) घृतेनदीपोदातव्यस्तिलतैलेनवापुनः ॥ वसामेदोद्भवंदीपंप्रयत्नेनविवर्जयेदिति ॥ वसा पाकात्समुद्धृतोमांसस्नेहः ॥ मेदस्तुहृदयकमलाच्छादकोमांसविशेषइत्यर्थः ॥ ( वस्त्राणि ब्रह्मपुराणे ) कौशेयंक्षौमकार्पासंदुकूलमहतंतथा ॥ श्राद्धेष्वेतानियोदद्यात्कामानाप्नोतिचोत्तमान् ॥ ( अहतलक्षणमाह कात्यायनः ) ईषद्धौतंनवंश्वेतंसदशंयन्नधारितम् ॥ अहतंतद्विजनीयात्सर्वकर्मसुपावनम् ॥ ईषद्धौतम् अकारुधौतम् ॥ स्त्रीश्राद्धेस्त्रीणांवस्त्रादीनिदेयानि ॥ ( तथाच विष्णुधर्मोत्तरे ) स्त्रीणांश्राद्धेतुसिंदूरंदद्युश्चंडातकानिच ॥ निमंत्रिताभ्यःस्त्रीभ्योयेतेस्युःसौभाग्यसंयुताः ॥ चंडातकानिस्त्रीपरिधानोचितान्यंशुकानि ॥

( ब्रह्मवैवर्त्ते ) यज्ञोपवीतंदातव्यंवस्त्राभावेविजानता ॥ पितॄणांवस्त्रदानस्यफलंतेनाश्नुतेखिलम् ॥ ( आदित्यपुराणे ) यज्ञोपवीतदानेनविना श्राद्धंतुनिष्फलम् ॥ तस्माद्यज्ञोपवीतस्यदानमावश्यकंस्मृतम् ॥ ( भविष्ये ) श्राद्धेषुभक्तिसंयुक्तोजलपूर्णंकमंडलुम् ॥ दद्यादभिनवंरम्यं द्विजेभ्यःपितृतृप्तये ॥ ( ब्रह्मपुराणे ) आसनानिचरम्याणिपितृभ्योयःप्रयच्छति ॥ सआस्तेसुचिरंकालंत्रिदशैरपिपूजितः ॥ ( नृसिंहपुराणे ) उपानच्छत्रवस्त्राणिभुक्तंपात्रंकमंडलुम् ॥ शयनासनयानानिदर्पणव्यजनानिच ॥ अन्यत्प्रियतरंगंधंतांबूलंदीपचामरम् ॥ पितृभ्योयःप्रयच्छेत्तुविष्णुलोकंसगच्छति इति ॥ गंधादिदानवाक्यान्युच्चारणीयानि तानिचब्रह्मपुराणेदर्शितानि ॥ इदंवःपाद्यमर्घ्यंचपुष्पधूपविलेपनम् ॥ अयंदीपप्रकाशश्चविश्वेदेवाःसमर्प्यते ॥ अयंवोगंधइत्युक्त्वागंधंदद्यात्सुशोभनम् ॥ इदंवःपुष्पमित्युक्त्वापुष्पाणिचनिवेदयेत् ॥ अयंवोधूपइत्युक्त्वा तदग्रेतुदहेत्ततः ॥ अयंवोदीपइत्युक्त्वादीपंदद्यान्निवेदयेत् ॥ अनङ्कलग्नंसदृढंत्रंभवेद्यत्तद्युगंशुभम् ॥ इदंवोवस्त्रमित्युक्त्वात्रितयंवानिवेदयेत् ॥ इदंवोमाल्यमित्युक्त्वादद्यान्माल्यंसुशोभनामिति ॥ माल्यं ग्रथितपुष्पाणि ॥ स्वीकारकाले-स्वासनम् ॥ सुगंधः ॥ सुपुष्पाणि ॥ सुधूपः ॥ सुदीपः ॥ स्वाच्छादनमितिप्रतिवचनंब्राह्मणाब्रूयुरितिहेमाद्रिप्रभृतयः ॥ शिष्टाचारश्चापि ॥ एवंगंधादिदानंपदार्थानुसमयेनवाकाण्डानुसमयेनानिर्वर्त्य श्राद्धभूमिशोधनादिकंकुर्यात् ॥ अत्रपदार्थानुसमयएवमुख्यः कात्यायनेनदेवावाहनानन्तरंपित्र्यावाहनोक्तेः ॥ एकैकस्मिन्नपआसिंचतीतिचसर्वपात्रेषुजलप्रक्षेपावगमात् शिष्टाचाराच्च ॥ ( भूम्यादिशुद्धिः कालिकापुराणे ) निर्वर्त्त्यंब्राह्मणादेशात् क्रियामेवंयथाविधि ॥ पुनर्भूमिंतुसंशोध्यपंक्तेरन्तरमाचरेत् ॥ भाजनानिततोदद्याद्धस्तशौचंपुनःक्रमात् ॥ अस्यार्थः ॥ एवमनेनप्रकारेणब्राह्मणादेशात् ब्राह्मणा

नुज्ञया गंधादिदानांतांक्रियां निष्पाद्यार्चनप्रसङ्गपतितकुशकुसुमादिद्रव्ययुक्तामर्चकपदपातोपहतां भूमिंपतितकुशाद्यपनयने करप
रिमार्जनेन संशोध्य शुचीकृत्य पंक्तेरनन्तरं भोजनपात्रस्थापनपर्य्यान्तदेशं परितोभस्मादिरेखाविरचितमंडलैरन्योन्यव्यवधानं कुर्यात् ॥
भाजनानि भोजनपात्राणि दद्यात् यथोक्तमण्डलेस्थापयेत् ॥ ततो ब्राह्मणहस्तक्षालनायजलंदत्त्वापात्रक्षालनंकुर्यादित्यर्थः ॥
मर्य्यादाहस्तप्रक्षालनयोः पौर्वापर्यविपर्य्यये दोषोमत्स्यपुराणेऽभिहितः ॥ अकृत्वाभस्ममर्य्यादांयःकुर्यात्पाणिशोधनम् ॥ आसुरं
तद्भवेच्छ्राद्धं पितॄणांनोपतिष्ठते ॥ मर्यादाशब्देनात्रपङ्क्त्यंतरमेवोच्यते ॥ ( तथाच ब्राह्मे ) मंडलानिचकार्य्याणिनैवारैश्चूर्णकैः शुभैः ॥
गौरमृत्तिकयावापिप्रणीतेनाथभस्मना ॥ पाषाणचूर्णसंकीर्णमाहतश्चविवर्जयेत् ॥ ( भृगुणाश्राद्धतत्त्वेविशेषोक्तम् ) ॥ भस्मनावा
रिणावापिकारयेन्मण्डलंततः ॥ चतुष्कोणंद्विजाग्र्यस्यत्रिकोणंक्षत्रियस्यतु ॥ मंडलाकृतिर्वैश्यस्य शूद्रस्याभ्युक्षणंस्मृतम् ॥ मण्ड
लाकृति वर्तुलाकारम् ॥ अथाग्नौकरणनिर्णयः ॥ तत्राग्नौकरणहोमः किं सव्येनकार्य्योऽपसव्येनवा इतिसन्देहेचिन्त्यते ॥ तत्रस्वाहादि
दैविकधर्मयुक्तेनयज्ञोपवीतिनाकार्य्यः स्वधादिपैतृकधर्मयुक्तेनप्राचीनावीतिनावाकार्य्यइतिमन्यन्ते ॥ तथाहि-( कात्यायनः ) अग्नौकरण
होमश्चकर्त्तव्यउपवीतिना ॥ प्राङ्मुखेनैवदेवेभ्योजुहोतीतिश्रुतिश्रुतेः ॥ अपसव्येनवाकार्योदक्षिणाभिमुखेनच इति ॥ ( कर्कभाष्येपि )
सव्यंकृत्वाप्राङ्मुखउपविश्यदक्षिणंजान्वाच्य मेक्षणेन द्वेआहुती देवेभ्योजुहोति अग्नयेकव्यवाहनायस्वाहा सोमायपितृमते स्वाहा इति ॥
( शौनकोपि ) स्वाहाकारेणहोमेतुभवेद्यज्ञोपवीतवान् ॥ तत्रप्रागग्नयेहुत्वापश्चात्सोमायहूयते इति ॥ अग्नौकरणंचप्राचीनावीत्युपवीतीवाकु
र्य्यादितिमाधवः॥(याज्ञवल्क्यः) अग्नौकरिष्यन्नादायपृच्छत्यन्नंघृतप्लुतम् ॥ कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौपितृयज्ञवत् ॥ अस्यार्थः-अग्नौकरि

ष्यन्घृतक्षुतं घृताक्तमन्नमादाय ब्राह्मणान्पृच्छेदग्नौकरिष्य इति ततस्तैः कुरुष्वेत्यनुज्ञातः प्राचीनावीत्यग्निमुपसमाधाय मेक्षणेनावदाय जुहुयात्॥ अग्नयेकव्यवाहनायस्वाहा ॥ सोमायपितृमतेस्वाहा ॥ इतिपिंडपितृयज्ञकल्पेनाग्नौहुत्वाहुतशेषंपित्रादिभाजनेषुदद्यादित्यर्थः ॥ अयंहोमस्तु साग्निकानाम् ॥ निरग्निकानांतुदैवधर्मयुक्तोदेवविप्रकरे पैतृकधर्मयुक्तः पितृविप्रकरेवाहोमंकुर्यात् ॥ ( तथाच हेमाद्रौ ) अग्निरभावेन ग्निस्तुद्विजपाणौतथाप्सुवा ॥ कुर्यादग्नौक्रियांनित्यंलौकिकेनेतिनिश्चितम् ॥ ( मनुस्मृतावपि ) अग्न्यभावेतुविप्रस्यपाणावे वोपपादयेत् ॥ योह्यग्निःसद्विजोविप्रैर्मन्त्रदर्शिभिरुच्यते ॥ ( हेमाद्रौ ) यैर्दैविककर्मधर्मेणयज्ञोपवीतेनस्वाहाकारेणचायंहोमः क्रियते तैर्दैविकविप्रपाणौकर्त्तव्यः ॥ यैश्चपैतृककर्मधर्मेणप्राचीनावीतेनस्वधाशब्देनक्रियतेतैस्तु पैतृकविप्रदक्षिणकरेकार्यः ॥ तत्राऽ स्माकंयजुर्वेदीयगौडानां तु प्राचीनावीतेनएव ॥ तथाच ( योगियाज्ञवल्क्यः ) छंदोगाजुहुयुःसव्येनापसव्येनयाजुषा इति ॥ छंदोगाःसाम गा इत्यर्थः ॥ (यजुर्वेदीयश्राद्धतत्त्वेपि पिण्डपितृयज्ञेशतपथश्रुतिः) ॥ पातितवामजानुनासजघनेनप्राचीनावीतीभूत्वादक्षिणामुख आसी नइत्युपक्रम्य द्वेआहुतीजुहोति ॥ ॐ अग्नयेकव्यवाहनायस्वाहा ॥ ॐ सोमायपितृमतेस्वाहा इति ॥ एवमेवहरिहरहलायुधकर्कवासुदेव हरिशर्मशूलपाणिरायमुकुटाचार्यचूडामणिप्रभृतयः ॥ एवंचपितृभक्तौसव्येन इतिलिखनंप्रमाणशून्यमितिरघुनंदनः ॥ तत्रसव्यपक्षेप्रथ मोपविष्टस्यदेवविप्रस्यपाणौहोमः ॥ ( तदुक्तं वायुपुराणे ) वैश्वदेवेयदेकस्मिन् भवेयुर्बहवोद्विजाः ॥ तदेकपाणौहोतव्यंस्याद्विधिर्विहितस्त थाइति ॥ अपसव्यपक्षेपैतृकपंक्त्युपविष्टस्यप्रथमस्यपाणावेव ॥ तथाच ( कात्यायनः ) पैत्र्येयःपङ्क्तिमूर्द्धन्यस्तस्यपाणावनग्निकः ॥ हुत्वामंत्रवदन्येषांतूष्णींपात्रेषुनिक्षिपेत् ॥ इति पात्रेषुपितामहादिपात्रेष्वित्यर्थः ॥ यत्रदैवविप्रकरेहोमस्तदापितृमातामहश्राद्धद्वयार्थमपि

सकृद्देवानुष्ठेयः ॥ यदापित्र्यविप्रकरे होममश्चिकीर्षेत् तदापितृपंक्त्युपविष्टमुख्यद्विजकरेहुत्वामातामहस्यसंबंधी यो ब्राह्मणस्तस्यापि करे पृथग्होमंकुर्य्यादिति हेमाद्रिमाधवौ ॥ एतत्तुसाग्निकपरम् ॥ ( तदुक्तं तत्रैव कात्यायनेन ) मातामहस्यभेदेपिकुर्यात्तंत्रेणसाग्निकइति ॥ हस्तेग्नौकरणंकुर्यादग्नौवासाग्निकोद्विजः ॥ इतिपराशरस्मरणात् ॥ निरग्निकस्तुसकृदेवकुर्यात् ॥ एवमेवापितृभक्तौश्रीदत्तः ॥ तत्रावाहनातिल विकिरणाऽग्नौकरणजपाऽन्नविकिरणादिकंसकृदेवानुष्ठेयमिति ॥ शिष्टाअप्येवमेवकुर्वंति ॥ पात्राभावे ब्राह्मणस्थानेदर्भबटुनिवेशेजलादी नामवकाशः कार्यः॥ ( तथाच मात्स्ये ) अग्न्यभावेतुविप्रस्यपाणौवाथजलेपिवा ॥ अजकर्णेऽश्वकर्णेवागोष्ठेवाथशिवालये इति ॥ अग्न्यभावे विप्रपाणौ विप्राभावेजलादिष्वित्यर्थः ( हेमाद्रौ शंखः ) अजस्यदक्षिणेकर्णे पाणौविप्रस्यदक्षिणे ॥ अप्सुचैवकुशस्तंबे अग्निंकात्यायनोऽ ब्रवीत् ॥ रजतेचसुवर्णेचनित्यंवसतिपावक इति ॥ अयंजलादौहोमः सव्येनाऽपसव्येनवाकुर्यात् ॥ अत्राऽन्नेव्यंजनयोगोनकर्त्तव्यः ॥ ( तथाच विष्णुपुराणे ) जुहुयाद्व्यंजनक्षारवर्ज्जमन्नंततोऽनले इति ॥ व्यंजनंशाकादि ॥ क्षाराणिलवणरसवंतिद्रव्याणीत्यर्थः ॥ अथ हुताव शिष्टप्रतिपत्तिः याज्ञवल्क्याऽऽह ॥ हुतशेषंप्रदद्यात्तु भाजनेषुसमाहितः ॥ यथालाभोपपन्नेषुरौप्येषुतुविशेषतः ॥ अत्रपितृप्रियोरौप्य इति वचनात् पैतृकविप्रभाजनेष्वितिगम्यते ॥ ( हेमाद्रौ वसिष्ठः ) पित्र्येविप्रकरे हुत्वा शेषंपात्रेषुनिक्षिपेत् ॥ पिंडेभ्यः शेषयेत्किंचिन्नदद्याद्वैश्व देविके ॥ ( श्राद्धतत्त्वे यमोपि ) अग्नौकरणशेषंतु पित्र्येषुप्रतिपादयेत् ॥ प्रतिपाद्यपितॄणांतुनदद्याद्वैश्वदेविके ॥ ( ब्रह्मांडेपि ) अग्नौकरणशे षंतुनदद्याद्वैश्वदेविके ॥ नहिस्मृताः शेषभाजोविश्वेदेवाः पुराणगैरिति ॥ अयंपक्षःसाग्निकानां पितृविप्रकरेजुह्वतांच ॥ निरग्निरपि दैविक ब्राह्मणपाणौहोमंकृत्वाशेषंपित्र्यब्राह्मणपात्रेष्वेवनिक्षिपेत् ॥ ( तथाच वायुपुराणे ) हुत्वादैवकरेऽग्नौ शेषंपित्र्येनिवेदयेत् ॥ नाद्वि

स्मृता शेषभाजोविश्वेदेवाः पुराणगैः ॥ ( हेमाद्रौ यमोपि ) दैवविप्रकरेऽनग्निः कृत्वाग्नौकरणंद्विजः ॥ शेषयेत्पितृविप्रेभ्यः पिंडार्थं चावशेषयेत् ॥ ( पाणितलेहुतशेषान्नस्यविनियोगमाह गृह्यपरिशिष्टे कात्यायनः ) यच्चपाणितलेदत्तंयच्चान्यदुपकल्पितम् ॥ एकीभावेनभोक्तव्यंपृथग्भावोनविद्यते ॥ अन्नंपाणितलेदत्तंपूर्वमश्नंत्यबुद्धयः ॥ पितरस्तेनतृप्यंतिशेषान्न नलभंतिते इति ॥ इयं व्यवस्थासपात्रकेज्ञेया ॥ पात्राऽभावेजलहुतशेषान्नंसव्येनदेवपात्रद्वये अपसव्येन पितृपात्रेषुदद्यात् ॥ अनाहिताग्नेर्विप्रस्ययदग्नौकरणंहुतम ॥ वैश्वदेवायदातव्यं पश्चात्पित्रेनिवेदयेदिति श्राद्धतत्त्वेसमुद्रकरधृतवचनात् ॥ एवमेवमैथिलश्रीदत्तरुद्रधरप्रभृतीनांव्यवहारः ॥ इत्यग्नौकरणादि ॥ अत्रपरकीयगृहेश्राद्धकरणेभूस्वामिपितृभ्योऽन्नदानम् ॥ ( तथाच ब्रह्मपुराणश्राद्धतत्त्वयोः ) परकीयगृहेयस्तु स्वान्पितॄंस्तर्पयेज्जडः ॥ तद्भूमिस्वामिनस्तस्यहरन्तिपितरोबलात् ॥ ( यमोपि ) परकीयप्रदेशेषुपितॄणांनिर्वपेत्तुयः ॥ तद्भूमिस्वामिपितृभिःश्राद्धकर्मविहन्यते ॥ अग्रभागंततस्तेभ्योदद्यान्मूल्यंचजीवतामिति ॥ भूस्वामिपितृभ्योऽन्नंप्रथमतोदेयम् ॥ पार्वणादौप्राचीनावीतित्वादिनांदीसुखेउपवीतित्वादिना इतिश्राद्धतत्त्वादयः ॥ स्वगृहकरणेभूस्वाम्यन्नदानाभावएव ॥ (अथपरिवेषणमाह प्रचेताः) हुतशेषंपितृभ्यस्तुदत्त्वान्नंपरिवेषयेत् ॥ हविष्यंमधुमांसानिपायसापूपमेवच ॥ मांसंकलौनदेयं नकलौपलपैतृकामितिश्रीमद्भागवतवाक्यात् ॥(शौनकः) पाकंसर्वमुपानीय संवेद्यच पृथक्पृथक् ॥ विधिनादेवपूर्वंतुपरिवेषणमाचरेत् ॥ ( तत्रप्रकारमाह मनुः ) पाणिभ्यामुपसंगृह्य स्वयमन्नस्यवर्द्धितम् ॥ विप्रांतिके पितॄन्ध्यायञ्छनकैरुपनिक्षिपेत् ॥अस्यार्थः॥ अन्नस्यवर्द्धितम् अन्नेनपूर्णभाजनम् अन्नस्येतितृतीयार्थेषष्ठी ॥ रसवत्पाकागाराद्धाभ्यांकराभ्यांस्वयंगृहीत्वातत्रत्यमन्नं विप्रांतिके भोजनार्थपात्रे शनकैः यथाभाण्डभेदः शब्दोवानोत्पद्यतेतथा निक्षिपेत् परिवेषयेत् ॥ स्वय

मितिवचनात्स्वयंपरिवेषणंमुख्यम् ॥ ( अतएव वायुपुराणे ) फलस्यानंतताप्रोक्तास्वयंचपरिवेषणे ॥ स्वयमितियजमानेन ॥ ( यत्तुभ
विष्योत्तरे ) भार्य्ययाश्राद्धकालेतुप्रशस्तंपरिवेषणम् ॥ ( वायुपुराणे परिवेषणंप्रशस्तंस्यात्पितृकर्मणिभार्यया ॥ पितृदेवमनुष्याणां
स्त्रीसहायोयतःस्मृत इति ॥ भार्य्ययापिसवर्णयैवकर्त्तव्यंनान्यवर्णया इत्यर्थः ॥ इतिहेतुवन्निगदान्मुख्यतयायजमानकर्तृकएवपरिवेषणं
भार्यायाः सहकारिमात्रत्वं नतुमुख्यत्वमितिगम्यते ॥ ( मात्स्ये ) उभाभ्यामथहस्ताभ्यामाहृत्यपरिवेषयेत् ॥ प्रशांतचित्तः
सतिलदर्भपाणिर्विशेषतः ॥ ( ब्रह्माण्डे ) नापवित्रेणनैकेनहस्तेननविनाकुशम् ॥ नायसेनैवपात्रेणश्राद्धेतुपरिवेषयेत् ॥ आयसेन लोह
पात्रेण ॥( ब्राह्मणसर्वस्वे वसिष्ठोपि ) आयसेनतुपात्रेणयदन्नंसंप्रदीयते॥भोक्ताविष्ठासमंभुंक्ते दाताचनरकं व्रजेत् इति॥केचित्आयसंमृन्मय
मितिवदंति तन्न ॥ सीसकायसरीतिपात्राण्ययज्ञियानीतिपैठीनसिस्मरणात् ॥ ( हेमाद्रौ कार्ष्णाजिनिः ) ॥ दर्व्यादेयंशृतान्नंचसमस्तंव्यंज
नानिच ॥ उदकंयच्चपक्वान्नंनोदर्व्यातुकदाचन इति ॥ शृतान्नंपायसौदनादि ॥ पक्वान्नं मोदकादि ॥ उदकादिदानेदर्वीनिषेधात्॥ पात्रान्तरेण
दानंकर्त्तव्यमित्यर्थः ॥ ( शातातपः ) हस्तदत्तास्तुयेस्नेहा लवणं व्यंजनादयः ॥ पितणांनोपतिष्ठन्तिभोक्ताभुंजीतकिल्बिषम् ॥
हस्तदत्ता हस्तेनदत्ताः ॥ स्नेहाः घृतादयः ॥ ( वसिष्ठः ) तस्मादंतरितं देयंपर्णेनाथतृणेनवा ॥ प्रदद्यान्नतुहस्तेननायसेनकदा
चन ॥ ( संग्रहे ) अपक्वंतैलपक्वंचहस्तेनैवप्रदीयते ॥ ( मत्स्यपुराणे ) यत्किंचिन्मधुनायुक्तं गोक्षीरघृतपायसम् ॥ दत्त
मक्षय्यमित्याहुःपितरःपूर्वदेवताः ॥ ( स्मृत्यन्तरे ) अन्नंमध्येप्रतिष्ठाप्यदक्षिणेघृतपायसम् ॥ शाकादिपुरतः स्थाप्य भक्ष्यं
भोज्यञ्चवामतः ॥ उक्तंचमुनिभिःश्राद्धेविधिर्वाजसनेयिनाम् ॥ परिवेषणंभूमावेवस्थितेषुपात्रेषुकर्त्तव्यम् ॥ नतुदारुशिलादिपा

परिप्रचुरतिलान्निक्षिपेदितिमैथिलरुद्रधरलिखनंप्रमाणशून्यम् ॥ सर्वदाचतिलाग्राह्याः पितृकृत्येविशेषतः ॥ भोज्यपात्रेतिलान्दृष्ट्वानिरा
शाःपितरोगताइतिपृथ्वीचंद्रोदयेपराशरस्मरणात् ॥ अतोभोजनपात्रपरितोविकिरेदितिसमीचीनम् ॥ अथान्नसंकल्पः ॥ ( तथाच प्रभा
सखण्डे ) द्विजपात्रेषुदत्त्वान्नंकृत्स्नंसंकल्पमाचरेत् ॥ दर्व्यादिस्थेननोतेषांसंबंधोदृश्यतेयतः ॥ ( अत्रिः ) ॥ अकृतेत्वन्नसंकल्पे यःपात्रं
चोद्धरेद्द्विजः ॥ वृथाभवतितच्छ्राद्धं दाताचनरकंव्रजेत् ॥ ( धर्मप्रदीपे ) सिद्धान्नस्यतुसंकल्पोभूमावेवप्रदीयते ॥ हस्तेषुदीयमानंयत्पितॄणां
नोपतिष्ठति ॥ ( ब्राह्मे ) पितृकर्मणिवामेनदैवेदद्यात्तुदक्षिणे ॥ संकल्पोदकदानंस्यान्नित्यश्राद्धेयथारुचि ॥ ( हेमाद्रावत्रिः ) संबंधनामगो
त्राणि इदमन्नंततः स्वधा ॥ ( ब्राह्मेपि ) अमुकामुकगोत्रैतत्तुभ्यमन्नंस्वधानमः ॥ अथसावित्रीजपादि ॥ (तत्र पारस्करः ) संकल्प्यपितृदेवे
भ्यः सावित्रीमधुमज्जपः ॥ श्राद्धंनिवेद्यापोशानं जुषप्रैषोऽथभोजनम् ॥ अस्यार्थः—देवेभ्यःपितृभ्यश्चान्नंसंकल्प्य यथोक्तविधिनात्यक्त्वा
सावित्रीं सवितृदैवत्यांगायत्रींमधुमतींचजप्त्वाश्राद्धंचनिवेद्य दर्शयिष्यमाणेनप्रकारेण श्राद्धस्याच्छिद्रवाचनंकृत्वाऽऽपोशानजलंचद्विज
करेदत्त्वा जुषध्वमितिप्रैषेण भोजयेदित्यर्थः ॥ मधुसेचनादिकमच्छिद्रवाचनप्रकारंचाह—( यमः ) अन्नंमधुमयंकृत्वामधुवातेतिमंत्रितम् ॥
अन्नहीनंक्रियाहीनं मंत्रहीनंचयद्भवेत् ॥ सर्वमच्छिद्रमित्युक्त्वा ततोयत्नेनभोजयेत् ॥ एतच्चापोशानदानात्पूर्वमेवकर्त्तव्यंपश्चात्करणेहिभ
चेतसा दोषस्योक्तत्वात् ॥ आपोशानकराग्राणामच्छिद्रस्यतुभाषणात् ॥ निराशाःपितरोयांति देवैःसहनसंशयः ॥ ( पारस्करः ) गाय
त्रींत्रिःसकृद्वापिजपेद्व्याहृतिपूर्विकाम् ॥ मधुवाताइतित्र्यृचंमध्वित्येतत्त्रिकंजपेत् ॥ ( याज्ञवल्क्योपि ) सव्याहृतिकांगायत्रींमधुवाताइति
त्र्यृचम् ॥ जप्त्वायथासुखंवाच्यंभुंजीरंस्तेतिवाग्यताः ॥ अस्यार्थोमिताक्षरायाम् ॥ अनंतरं विश्वेभ्योदेवेभ्य इदमन्नंपरिविष्टंपरिवेक्ष्यमाणं

चातृप्तेरितियवोदकेनदैवेनिवेद्य तथापित्रेअमुकगोत्रायामुकशर्मणे इदमन्नंपरिविष्टंपरिवेक्ष्यमाणंचातृप्तेरितितिलोदकप्रदानेनपित्रेनिवेद्य एवं पितामहादिभ्यश्चनिवेद्यानंतरमापोशानंदत्त्वापूर्वोक्ताभिर्व्याहृतिभिः सहितां गायत्रीं मधुवाता इति त्र्यृचंमधुमधुमध्वितित्रिवारंजप्त्वा यथासुखंजुषध्वमितिब्रूयात्॥ तेपिब्राह्मणावाग्यतामौनिनोभुंजीरन्नित्यर्थः॥(जपविशेषमाह कात्यायनः)अश्नत्सुजपेत्व्याहृतिपूर्वांगायत्रींत्रिः सकृद्वारक्षोघ्नीःपितृमंत्रान् पुरुषसूक्तमप्रतिरथमन्यानिचपवित्राणीति ॥ अस्यार्थः ॥ अश्नत्सुभुंजानेषुप्रणवव्याहृतियुक्तांगायत्रीं त्रिः वारत्रयं वा सकृत् वारैकंजपेत् पठेत् रक्षोघ्नीः कृणुष्वपाजइत्याद्याः पंचर्चः ॥ पितृमंत्रान्उदीरतामवर इत्यादि त्रयोदशर्चः ॥ पुरुषसूक्तं सहस्रशीर्षेत्यादिषोडशर्चः ॥ अप्रतिरथम् आशुःशिशानइत्याद्यादशर्चः ॥ अन्यानिपवित्राणि सप्तव्याधाइत्यादीनिपितृरुचिस्तुत्यादिबोधकानिश्रुतिपुराणादिप्रतिपाद्यानीत्यर्थः ॥ (विष्णुपुराणे) रक्षोघ्नमंत्रपठनं भूमेरास्तरणंतिलैः ॥ कृत्वाध्येयाश्चपितरस्तएवद्विजसत्तमाः ॥ (मनुस्मृतौ) स्वाध्यायंश्रावयेत्पित्र्ये धर्मशास्त्राणिचैवहि ॥ आख्यानानीतिहासांश्च पुराणानिखिलानिचेति ॥ स्वाधायः वेदः ॥ धर्मशास्त्राणिमन्वादिप्रणीतग्रंथाः ॥ आख्यानानिसौपर्णमैत्रावरुणादीनिपौराणानिसप्तव्याधाख्यानप्रभृतीनि॥इतिहासाःमहाभारतादयः ॥ पुराणानि ब्रह्मपुराणादीनि ॥ खिलानिश्रीसूक्तमहानाम्निका शिवसंकल्पादीनि ॥ एतानिभुंजानान्ब्राह्मणाञ्श्रावयेदित्यर्थः ॥ (मात्स्येपि) स्वाध्यायंश्रावयेत्पैत्र्येपुराणानिखिलानिच ॥ ब्रह्मविष्ण्वर्करुद्राणांस्तोत्राणिविविधानिच ॥ (शंखलिखितौ) पवित्रपाणिर्दर्भेष्वासीनो मधुवाताइतिजपेत् ॥ पवित्रपाणिःदर्भहस्तः ॥ दर्भेष्वासीनःदर्भोपर्युपविष्टःमधुवाताऋतायतइति तिस्रःऋचोजपेदित्यर्थः॥ अत्रगायत्रीमधुवाताइतिजपःप्राचीनावीतिनैवकार्यइतिहेमाद्रिः ॥ (ब्रह्मपुराणे) वीणावंशध्वनिंवाथविप्रेभ्यःसन्निवेदयेदिति ॥ अन्यान्यपिसमाचारात्

पवित्राणिजप्यानीतिहेमाद्रिः ॥ अयंचसर्वोऽपिजपः उपवीतिनाकार्यः ॥ ( तथाच हेमाद्रिब्रह्माण्डपुराणयोः ) कुशपाणिःकुशासीनउपवीती
जपेत्ततः ॥ वेदोक्तानिपवित्राणिपुराणानिखिलानिचेति ॥ ( हेमाद्रिमाधवयोर्जमदग्निरपि ) अपसव्येनकर्त्तव्यंसर्वंश्राद्धंयथाविधि ॥ सूक्त
स्तोत्रजपंमुक्त्वाविप्राणांचविसर्जनम् ॥ ( तत्रैववृद्धशातातपोऽपि ) कृतापसव्यःकुर्वीतमुक्त्वायस्त्वश्नताञ्जपः ॥ अस्यार्थोहेमाद्रिणाकृतः ॥
अश्नतामित्यश्नत्सुब्राह्मणेषुयजमानेनक्रियमाणोजप इत्यर्थः ॥ अश्नतामितिग्रहणात् ब्राह्मणभोजनकालादन्यत्रयोजपस्तत्रप्राचीनावीतमेव
कर्त्तव्यमित्यर्थः ॥ मैथिलास्त्वपसव्येनैवकुर्वीतेतितत्प्रमाणाऽभावादयुक्तम् ॥ ब्राह्मणद्वाराकारितेतुप्राचीनोपवीतएवयुक्तइतिविवेकः ॥ अथ
विकिरादिः ॥ ( तत्र कात्यायनः ) तृप्ताञ्ज्ञात्वाऽन्नंप्रकीर्य्यसकृत्सकृदपोदत्त्वापूर्ववद्गायत्रींजप्त्वामधुमतीमधुमध्विति चतृप्ताःस्थेतिपृच्छति
तृप्ताःस्मेत्यनुज्ञातः ॥ शेषमन्नमनुज्ञाप्येति ॥ अस्यार्थः—तृप्तान्ब्राह्मणाननुमानेनविज्ञायप्रकृतसर्वजातीयमन्नमेकस्मिन्पात्रेगृहीत्वावक्ष्यमाण
संस्कारयुक्तायांभुविप्रकीर्य्याऽऽचम्यविरलंप्रक्षिप्यपात्रमौनोभयविमोचनार्थंसकृत्सकृदपःप्रदाय त्रिः सकृद्वागायत्रींमधुवातेत्यादिऋक्त्रयञ्च
जप्त्वामधुशब्दंचत्रिरुक्त्वातृप्ताःस्थेतिविप्रान्यजमानःपृच्छेत् ॥ तैश्चतृप्ताःस्मइत्युक्ते शेषमन्नंकिंक्रियताम् इत्यन्नशेषविनियोगानुज्ञाभ्यर्थने
कृतेविप्रैःश्रेष्ठैःसहभुज्यतामित्युक्तेसतिपिंडान्दद्यादित्युत्तरेणसंबंधइत्यर्थः ॥ ( पाद्ममात्स्ययोः ) तृप्तान्ज्ञात्वाततःकुर्य्याद्विकिरंसार्ववर्णिकम् ॥
सोदकंचान्नमुद्धृत्यसतिलंप्रक्षिपेद्भुवि ॥ ( मनुरपि ) ॥ सार्ववर्णिकमन्नाद्यंसन्नीयाप्लाव्यवारिणा ॥ समुत्सृजेद्भुक्तवतामग्रतोविकिरन्भुवि ॥
अस्यार्थः ॥ वर्णशब्दः प्रकारवाची ॥ सर्वप्रकारकमन्नादिकंव्यंजनादिभिरेकीकृत्यउदकेनाप्लावयित्वाकृतभोजनानांब्राह्मणानांपुरतोभूमौ
दर्भेषुनिक्षिपेदित्यर्थः ॥ ( तत्रैव ) असंस्कृतप्रमीतानांत्यागिनांकुलयोषिताम् ॥ उच्छिष्टंभागधेयंस्याद्दर्भेषुविकिरश्चयः ॥ ( श्राद्धतत्त्वे

श्राद्धेच ) उच्छिष्टेसतिलान्दर्भान्दक्षिणाग्रान्निधापयेत् ॥ यद्वाग्निर्वेदितंकिंचित्पितृभ्यश्चाथतत्रच ॥ तस्मात्तस्माच्चभागंतुगृहीत्वाचमसेशुभे ॥ दत्त्वामृताभिधानंतुविप्रेभ्यश्चसकृत्सकृदिति ॥ उच्छिष्टइत्युच्छिष्टसंनिधावित्यर्थः ॥ सापिंड्यादौक्षयाहेचएकोद्दिष्टेचपार्वणे ॥ विकिरेण विनाकुर्यात्तंवृथामनुरब्रवीत् ॥ ( विकिरमंत्रमाहहेमाद्रौबृहस्पतिः ) उपसृष्टोदकानांचब्राह्मणानांतथाग्रतः ॥ सोदकंविकिरेदन्नंमंत्रंचेममुदाहरेत् ॥ अनग्निदग्धायेजीवायेऽग्निदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यन्तुतृप्तायांतुपरांगतिम् ॥ ( मात्स्येपि ) समुत्सृजेद्भुक्तवतामग्रतोविकिरन्भुवि ॥ अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यंतुतृप्तायान्तुपरांगतिम् ॥ येषांनमातानपितानबंधुर्नचान्नसिद्धिर्नतथान्नमस्ति ॥ तत्तृप्तयेन्नंभुविदत्तमेतत्प्रयांतुलोकायसुखायतेतु ॥ ( प्राचीनपद्धतिश्राद्धतत्त्वयोरपि ) अग्निदग्धाश्चयेजीवायेऽप्यदग्धाः कुलेमम ॥ भूमौदत्तेनतृप्यन्तुतृप्तायांतुपरांगतिमित्युक्तम् ॥ एवमेवापितृभक्तौश्रीदत्तैरुक्तम् ॥ ( विकिरप्रक्षेपादनंतरं करणीयमुक्तं ब्रह्मपुराणश्राद्धतत्त्वयोः ) ततःप्रक्षाल्यहस्तौच त्रिराचम्य हरिंस्मरेत् ॥ सव्याहृतिकांसप्रणवांगायत्रींचपठेत्तथा ॥ पठेन्मधुमतीःपुण्यास्तथाचमधुमध्विति ॥ ( मरीचिः ) श्राद्धेषुविकिरंदत्त्वा योनाचामेन्मतिभ्रमात् ॥ पितरस्तस्यषण्मासं भवंत्युच्छिष्टभोजिनइति ॥ अनंतरं गंडूषार्थमुदकं ब्राह्मणेभ्यः प्रत्येकंदद्यात् ॥ ( तथाच मार्कंडेयपुराणे ) ततस्त्वाचमनार्थायदद्याच्चापःसकृत्सकृदिति ॥ पितृब्राह्मणपूर्वकंदद्यादितिहेमाद्रिमाधवौ ॥ ( विष्णुरपि ) उदङ्मुखेष्वाचमनमादौ दद्यात्ततः प्राङ्मुखेष्विति उदङ्मुखेषु पित्र्यब्राह्मणेष्वित्यर्थः ॥ ( पितृभक्तौ श्रीदत्तोपि ) ब्राह्मणान्भोजनोत्तरमाचमनंविसर्जनंचापितृपूर्वकमिति ॥ ततः कात्यायनेनविकिरोत्तरं गाव्ययादिजपस्तृप्तिप्रश्नश्चउक्तः तत्तुपूर्वमेवसूत्रव्याख्यातम् ॥ अथपिंडदानम् ॥ ( तत्रकात्यायनः ) सर्वमन्नमेकतउद्धृत्योच्छिष्टसमीपेदर्भेषुत्रींस्त्रीन्पिंडानवनेज्यदद्यादाचांते

ष्वित्येके इति ॥ सर्वमन्नमेकस्मिन् पात्रेउद्धरेत् ॥ सर्वशब्दःप्रकृतान्नजातिसर्वत्वार्थः ॥ अतः पायसौदनापूपसूपादिजातीयेभ्यः प्रकृत श्राद्धप्रयोगार्थसाधितेभ्यःसर्वेभ्योऽन्नेभ्यःकिंचित्किंचिदादाय पिंडपर्याप्तपरिमाणमन्नसमुदायमेकस्मिन्पात्रे संभृत्येत्येतदुक्तंभवति ॥ उच्छिष्टसमीप इत्युच्छिष्टप्रदेशात् ॥ व्यामव्यरत्निमात्राद्व्यवहितेदेशेइत्यर्थः ॥ त्रींस्त्रीनिति वीप्सा मातामहादिपिंडत्रयमपेक्ष्य पिंडान्दद्या दितिव्याख्याकाराः ॥ ( याज्ञवल्क्योपि ) सर्वमन्नमुपादायसतिलंदक्षिणामुखः ॥ उच्छिष्टसन्निधौपिंडान् दद्याद्वैपितृयज्ञवदिति ॥ श्राद्ध णार्थं कृतमन्नंसर्वमुपादायसतिलं तिलमिश्रंदक्षिणामुखउच्छिष्टसन्निधौपिंडापितृयज्ञकल्पेनापिंडान् दद्यादित्यर्थः ॥ केचिद्ब्राह्मणभोजनात् पूर्वमर्चनानन्तरमग्नौकरणानन्तरंवापिंडनिर्वपणंकुर्वन्ति ॥ तत्तुमतान्तरम् ॥ ( तत्रतावत्पिंडदानस्थानमाह—व्यासः ) अरत्निमात्रमुत्सृज्य पिंडांस्तत्रप्रदापयेत् ॥ यत्रोपस्पृशतांवापि प्राप्नुवन्तिनबिंदव इति ॥ तत्र तस्मिन् श्राद्धप्रयोगे उच्छिष्टप्रदेशादरत्निपरिमितंप्रदेशं परित्यज्ययोदेशोऽवतिष्ठते तत्रपिंडान् प्रदद्यात् ॥ सकनिष्ठिकः करः अरत्निरित्यर्थः ॥ ( हेमाद्रौ देवलः ) उपलिप्तेशुचौदेशे स्थानंकुर्वीत सैकतम् ॥मंडलंचतुरस्रंवादक्षिणावनतंमहत् इति॥उपलिप्ते गोमयगोमूत्राभ्यामुपलिप्ते सैकतं सिकतामयं स्थानंमंडलं वृत्ताकारमित्यर्थः ॥ ( ब्रह्मपुराणेपि ) हस्तमात्रातथाभूमिश्चतुरंगुलमुच्छ्रिता ॥ पिंडनिर्वापणार्थायरमणीयाविशेषतः ॥ ( अथउल्लेखनादि ब्राह्मे ) सव्योत्तराभ्यां पाणिभ्यांकुर्यादुल्लेखनंबुधः॥ दर्भैरितिशेषः॥उल्लेखनंतुसकृदेव ॥ ( तदुक्तं शतपथीये ) सकृदुल्लिखतितद्धेदिभाजनमिति ॥ वेदिभाजनं वेदि स्थानीयम् ॥ ( ब्रह्मांडेपि ) खंडणंपेषणंचैव तथैवोल्लेखनक्रिया॥सकृदेवपितॄणांस्याद्देवानांतुत्रिरुच्यतेइति॥खंडनं बर्हिरादेश्छेदनम् ॥ पेषणं भूमिघर्षणादिकम् ॥उल्लेखनाक्रिया रेखाकरणं पितॄणां पितृकार्ये सकृदेव स्यादित्यर्थः ॥ रेखाकरणेमंत्रोऽपहता इत्यादि ॥ दक्षिणेनोल्लिख

॥

त्यपहता इति कात्यायनसूत्रात् ॥ ( उल्लेखनानंतरं पश्चादुल्मुकनिधानमाह कात्यायनः ) उल्मुकंपरस्तात्करोतियेरूपाणीतिरेखायाःपरस्ताद्दक्षिणप्रदेशेउल्मुकंनिदधातीत्यर्थः ॥ ( स्कंदपुराणेऽपि ) येरूपाणीतिमंत्रेणन्यसेदुल्मुकमन्तिके ॥ अंतिकेदक्षिणाशायामित्यर्थः ॥ उल्मुकभ्रामणंवामावर्त्तेनकर्त्तव्यम् ॥ ( ततः छिन्नमूलकुशानामास्तरणमाह हेमाद्रौदेवलः ) तस्मिन्स्थानेततोदर्भानेकमूलाञ्छिवान्बहून् ॥ दक्षिणाग्रानुदक्पादान्सर्वांस्तान्स्तृणुयात्समम् ॥ अस्यार्थः तस्मिन्निति ॥ यत्रपिंडाःप्रदातव्याः ततइत्युल्लेखनाद्यनन्तरं दर्भान् कुशान् ॥ तदभावे काशादीन् ॥ एकमूलसंलग्नबहुशिखान् ॥ शिवान् साग्रान् ॥ बहून् एककस्मिन्पिंडेत्रित्वात्प्रभृतियथेच्छं यथासंभवंच ॥ दक्षिणतोऽग्रंयेषांतेदक्षिणाग्राः ॥ उदक्पादाः उदङ्मूलाः ॥ स्तृणुयात् विस्तारयेत् ॥ समंसमस्थलतया इत्यर्थः ॥ ( कात्यायनोऽपि ) उपमूलंसकृदाच्छिन्नानिलेखायांकृत्वायथावनिक्तं पिंडान् ददात्यसावेतत्तइति ॥ ( अस्यार्थोदेवयाज्ञिकभाष्ये ) ततोमूलसमीपेएकेनैवप्रयत्नेनच्छिन्नानि दर्भतृणानिदक्षिणाग्राणिरेखायामास्तीर्ययथावनिक्तं यत्रयत्रावनेजनंयस्ययस्यदत्तंतत्रतत्रपिंडान्ददाति असावित्यस्यस्थानेऽमुकगोत्राऽमुकशर्मन्नित्यर्थः ॥ (उपमूलेलूनानांसकृदाच्छिन्नत्वमुक्तं शतपथे) अथसकृदाच्छिन्नान्युपमूलंदितानिभवंति अग्रमिववैदेवानांमध्यमिवमनुष्याणांमूलमिवपितॄणांतस्मादुपमूलंदितानिभवन्तिसकृदाच्छिन्नानिभवन्ति इति॥ दितानिखंडितानीत्यर्थः ॥ ( तैत्तिरीयश्रुतावपि ) सकृदाच्छिन्नंबर्हिर्भवतिसकृदिवहिपितरइति॥ बर्हिः कुशाः॥(मात्स्ये) निधायदर्भान्विधिवद्दक्षिणाग्रान्समाहितः॥ त्रींस्त्रीन्पिंडानथोदद्यात्सर्वानेवतिलैर्युतान् ॥ ( ब्रह्मपुराणे ) सपिञ्जूलाश्चहरिताः स्निग्धाःपुष्टाः समाहिताः ॥ गोकर्णदीर्घाश्चकुशाः सकृच्छिन्नसमूलकाः ॥ सपिंजूला अपृथक्कृतदलाः॥ हरिता हरिद्वर्णाः॥स्निग्धाः अरूक्षाः॥गोकर्णदीर्घाःअनामिकांगुष्ठविस्तृतप्रमाणा इत्यर्थः॥ (स्मृत्यंतरे) पिंडनिर्वपणंकार्यं

कुशाभावेविचक्षणैः॥काशेषुराजदूर्वासुपवित्रेपरमेहिते ॥ राजदूर्वा अतिदीर्घदूर्वा इत्यर्थः॥दर्भास्तरणानंतरम् अवनेजनमुक्तं हेमाद्रौभविष्यत्पुरा
णेसुमंतुना ) असाववनेनिक्ष्वेतिपुरुषंपुरुषंप्रति ॥ तिलमिश्रकेनहस्तेनविदधीतावनेजनम् ॥इति॥ असावित्यत्रगोत्रसंबंधनामानिसंबुद्ध्यंतानि
क्रमेणोच्चार्यावनेनिक्ष्वेत्यभिधायावनेजनायपितॄणांकरशोधनायोदकंदद्यादित्यर्थः ॥ ( कात्यायनसूत्रेपि ) ॥ उदपात्रेणावनेजयत्यपसव्यं
सव्येनवोद्धरणसामर्थ्यादसाववनेनिक्ष्वेतियजमानस्यपितृप्रभृतिंस्त्रीनुपमूलं सकृदाच्छिन्नानिलेखायांकृत्वायथावनिक्तंपिंडान्ददात्यसावे
तत्तइति ॥ ( अस्यार्थो देवयाज्ञिकभाष्ये ) उदकस्यपात्रमुदपात्रं तेनाध्वर्युः यजमानस्यपितृप्रभृतिपितुरारभ्यत्रीन्पूर्वान् पितृपि
तामहप्रपितामहान् अपसव्यंयथास्याद्धस्तस्यसव्यप्रदेशाद्दक्षिणप्रदेशेनउदकानिनयनं यथास्यात्तथांगुष्ठप्रदेशिन्योरन्तरालेन अवनेजय
तिअवनिक्तान् शुचीन्करोतिपिंडदानार्थंअसावितिसंबुद्ध्यंतगोत्रनामादेशपूर्वकम् अमुकसगोत्रयजमानस्यपितरमुकशर्मन् अवनेनिक्ष्वे
खायामूलमध्याग्रप्रदेशेषुदक्षिणसंस्थमवनेजनंकार्यमित्यर्थः ॥ ( शतपथेपि ) अथोदपात्रमादायावनेजयत्यसाववनेनिक्ष्वेतियजमानस्य
पितरमसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेतिप्रपितामहमसाववनेनिक्ष्वेतीति॥ (स्मृत्यंतरे) गंधपुष्पाढ्यसलिलैश्छिन्नमूले क्रमेणवै ॥
दद्यादत्रावनंसम्यक्प्रतिदाने जलंस्पृशेत् ॥: जलंस्पृशेत्संकल्पंकुर्यादित्यर्थः ॥ अत्रकात्यायनेनबर्हिःस्तरणात्पूर्वमवनेजनमुक्तम् ॥ तथासुमं
तुप्रभृतिभिस्तुदर्भास्तरणानन्तरंचोक्तमतोऽवनेजनबर्हिस्तरणयोः पौर्वापर्येविकल्पः ॥ यद्यपिविकल्पोदृश्यते तथापिब्रह्मपुराणादौदर्भो
पर्य्येवावनेजनोक्तत्वात् ॥ भविष्यत्पुराणेसुमंतुनाविशेषोपादानात् ॥ हेमाद्रिमाधवपितृभक्तिमदनरत्नश्राद्धमयूखादिमहानिबंध
कारैः शिष्टैश्चाङ्गीकृतत्वाच्च सकृदाच्छिन्नदर्भेष्वेवावनेजनंकार्यमितिविवेकः ॥ ( अथपिंडानाह मनुः ) त्रींस्तुतस्माद्धविःशेषात्

पिंडान्कृत्वासमाहितः ॥ औदकेनैवविधिनानिर्वपेद्दक्षिणामुखइति ॥ तस्माद्धविःशेषात् इत्यग्नौकरणहविःशेषात् ॥ उदकमित्ययमौदकोविधिरित्यर्थः ( याज्ञिकदेवभाष्ये ) आर्द्रामलकमात्रः प्रथमः पिंडः तदपेक्षयाद्वितीयः स्थूलः तृतीयः स्थूलतरः ॥ ( देवलः ) अभ्यज्यमधुसर्पिर्भ्यांतान्वपेत्कुशसंचये ॥ वपेत् निदध्यात् ॥ ( बृहस्पतिः ) सर्वस्मात्प्रकृतादन्नात् पिण्डान्मधुतिलान्वितान् ॥ पितृमातामहादीनांदद्याद्गृह्यविधानतः ॥ पिंडदानंचसव्यंजान्वाच्यकर्त्तव्यम् ॥ ( तदुक्तं वायुपुराणे ) मधुसर्पिस्तिलयुतांस्त्रीन्पिंडान्निर्वपेद्बुधः ॥ जानुकृत्वा तथासव्यं भूमौपितृपरायणः ( विठ्ठलीये कात्यायनः ) शाल्योदनंगवांक्षीरंमाषान्नंतिलमिश्रितम् ॥ पिंडंदद्यात्प्रयत्नेन यजुषांचविशेषत इति ॥ पिंडदानंवामान्वारब्धेनहस्तेनकार्यम् ॥ ( तदुक्तं शंखलिखिताभ्याम् ) पिंडंनिदध्यात्सव्येनपाणिना दक्षिणपाणिपुरःसरेणइति ॥ ( पिंडपरिमाणमाहमरीचिः ) आर्द्रामलकमात्रांस्तुपिंडान्कुर्वीतपार्वणे ॥ एकोद्दिष्टेबिल्वमात्रं पिंडमेकंतुनिर्वपेत् ॥ नवश्राद्धेस्थूलतरं तस्मात्पिंडंतुनिर्वपेत् ॥ तस्मादपिस्थूलतरमाशौचेप्रतिवासरम् इति ॥ नवश्राद्धम् आशौचमध्येप्रथमतृतीयादिदिनेष्वेकादशेचदिनेविहितंश्राद्धम् ॥ प्रतिवासरं प्रतिदिवसंदशगात्रोत्पत्त्यर्थं नवश्राद्धपिंडादपिस्थूलतरंपिंडंदद्यादित्यर्थः ॥ ( पिंडदानेसंकल्पामाहपारस्करः ) अर्घ्यदानेचसंकल्पेपिंडदानेतथाऽक्षये ॥ गोत्रसंबंधनामानियथावत्प्रतिपादयेत् इति ॥ संकल्पशब्देनात्रद्विजभोजनस्यत्यागोऽभिधीयते इत्यर्थः ॥ गोत्राज्ञानेकाश्यपंगोत्रं कर्त्तव्यम् ॥ ( तथाच शतपथश्रुतिः ) तस्मादाहुःसर्वाःप्रजाःकाश्यप्यइति ॥ गोत्रनाशेतुकाश्यपइतिव्याघ्रपात् ॥ अथहस्तोन्मार्जनम् ॥ (तथाच मनुयमौ) न्युप्यपिंडांस्ततस्तांस्तुप्रयतोविधिपूर्वकम् ॥ तेषुदर्भेषुतंहस्तंनिमृज्याल्लेपभागिनाम्॥इतिन्युप्यपिंडान्दत्त्वादर्भमूलेहस्तंनिर्लेपंकुर्यादित्यर्थः ॥ ( लेपभागिनो मनुस्मृतिमत्स्यपुराणयोः

दर्शिताः ) लेपभाजश्चतुर्थाद्याःपित्राद्याः पिंडभागिनः ॥ पिंडदःसप्तमस्तेषांसापिंड्यंसाप्तपौरुषम् इति ॥ चतुर्थाद्याः वृद्धप्रपितामहप्रभृतयः॥तान्वृद्धप्रपितामहादींस्त्रीनुद्दिश्यतेषामयंभागोऽस्तिइत्यभिधानः॥ प्रथमपिंडाधारभूतदर्भमूलेषु हस्तंनिमृज्यात् ॥ निमार्जनंचहस्तलग्नस्यान्नस्योदकस्यवापरेचनाय दर्भेषु संश्लेषणंकरावघर्षणमित्यर्थः ॥ करलेपाभावेपिकरंनिमृज्यादेवेतिमेधातिथिहरिहरप्रभृतयः ॥ हस्तमार्जनानन्तरमाचमनंकुर्य्यात् ॥ एतच्चाचमनंहस्तप्रक्षालनपूर्वकंत्रिश्चकर्त्तव्यम् ॥ ( तथाच ब्रह्मपुराणे ) ततोदर्भेषुविधिवत् संमार्ज्यचकरौ ततः ॥ प्रक्षाल्यचजलेनाथत्रिराचम्यहरिंस्मरेत् ॥ आचमनादिकंच यज्ञोपवीतिनाकर्त्तव्यम् ॥ अत्रत्रिराचम्येत्यभिधानात्॥ चुलकत्रयात्मकस्याचमनपदार्थस्यत्रिरित्यनेनान्वयात् ॥ चुलकनवतयाऽऽचमनंमन्यन्तेशिष्टाः ततोऽत्रपितरइत्याद्यनुष्ठानम् ॥ ( पिंडपितृयज्ञेआहकात्यायनः ) अत्रपितरइत्युक्त्वोदङ्ङास्तआतमनादावृत्त्यामीमदन्ततेतिजपतिइति ॥ आतमनात् प्राणायामोत्थवायुपीडावधिउदङ्मुखआसीत॥ततोऽनुच्छ्वसन्नेवपर्यावृत्त्यामीमदन्ततेतिमनसाजपित्वोच्छ्वसेदित्यर्थः ॥ अमंत्रंप्राणान्निरुध्येतिकर्काद्याः॥ (अत्रविशेषः कर्मप्रदीपे ) वामेनावर्त्तनंकेचिदुदगंतंप्रचक्षते ॥ आवृत्यप्राणमायम्यपितॄन्ध्यायन्यथार्हतः ॥ जपंस्तेनैवचावृत्यततःप्राणान्प्रमोचयेत् इति ॥ जपन् अमीमदन्ततेतिमंत्रमितिविशेषः ॥ तेनैववामेनैवमार्गेणप्राणान् प्रमोचयेत् ॥ उच्छ्वसेदित्यर्थः ॥ ( विष्णुनाप्युक्तम् ) दत्त्वाचपिंडान्निवृतानन्नुमंत्रयेताऽत्रपितरोमादयध्वंयथाभागमावृषायध्वमिति ॥ ( स्मृत्यन्तरे ) श्वासस्यधारणंपूर्वं ततःप्रत्यवनेजनम् ॥ इतिक्रमविशेषस्तुज्ञेयोवाजसनेयिनाम् ॥ ( ब्रह्मपुराणे ) दत्त्वात्रपितरश्चेतिपठंश्चोदङ्मुखःस्थितः ॥ संचिंतयन्पितॄंस्तुष्टान्सर्वान्भास्वरमूर्त्तिकान् ॥ अमीमदन्तपितरइतिपश्चात्त्यजन्पठेदिति ॥ ( प्रत्यवनेजनमाह कात्यायनः ) अवनेज्य पूर्ववदिति ॥ पूर्ववदित्यने

नपूर्वावनेजनेतिकर्त्तव्यतातिदिश्यतेसाचोदपात्रादिरूपादर्शितैवपूर्वमित्यर्थः ॥ ( स्मृत्यंतरेपि ) अवनेजनावशिष्टैस्तुजलैर्माध्यंदिनी यकः ॥ अनंतरम् ॥ ( कात्यानसूत्रे ) ॥ नीवींविस्रंस्यनमोवइत्यंजलिंकरोतिइति ॥ नीवींविस्रंस्येतिवामकुक्षावंतरीयवस्त्रदशा संगोपनंनीविःतांविस्रंस्यउन्मुच्यविस्रंसनविधानादितःपूर्वंतस्याःधारणंकर्त्तव्यमित्यगवम्यते॥नमोवइत्यंजलिंकरोतीतिसूत्रम् ॥ नमोवःपित रोरसायेत्यादिभिःषड्भिर्मंत्रैःप्रतिनमस्कारमंजलिंकरोति॥अंजलिः करसंपुटः॥अंजलिमाबध्यपिंडाभिमुखःपितृभ्योनमइतिनमस्कारान्कु र्य्यादित्यर्थः॥तेचमंत्राः वाजसनेयिभिःपठ्यंतेइतिहेमाद्रिः॥(शतपथेपि) अथनीवीमुद्धृत्यनमस्करोतिनमोवःपितरइति॥ततः पिंडेषुसूत्राणि दद्यात्॥ (तथाचपिंडपितृयज्ञे कात्यायनः) ॥ एतद्वइत्युपास्यतिसूत्राणिप्रतिपिंडमूर्णादशावावयस्युत्तरेयजमानलोमानिवाइति ॥ अस्यार्थो भाष्ये ॥ प्रतिपिंडंबहुवचनात्त्रीणि सूत्राणि उपास्यति पिंडानामुपरिनिदधाति ॥ ऊर्णामेषरोमाणि तन्निर्मितवस्त्रदशावा दशाः वस्त्रांचल सूत्राणि ॥ बहुत्वविशिष्टाः प्रतिपिंडमेतद्वः पितरो वास इत्युपास्यति ॥ अथवा यजमानस्य पंचाशत्तमवर्षादूर्ध्वं यजमानलोमानिपलिता नि हृदयस्थानि सूत्रस्थानेप्रतिपिंडंप्रास्यतीति ॥ (पाराशरेपि)पंचाशद्वार्षिकोयस्तुदद्याल्लोमस्वयंशुक्रमिति ॥ एतच्च सूत्रादिवस्त्राभावे वस्त्र स्थाने दातव्यं सतितु वस्त्रे वस्त्रमेव ॥ वस्त्रार्थे सूत्रमेववा इतिवायुपुराणात् ॥ ( ब्रह्मपुराणेपि ) दद्यात्क्रमेणवासांसि दशांवाश्वेतवस्त्रजाम् ॥ एतद्वःपितरोवासस्त्वितिजल्पन्पृथक्पृथक् ॥ अमुकामुकगोत्रैतत्तुभ्यं वासः पठेत्ततः ॥ ( काशिकायाम् ) सर्वाभावेकुशान्यसोदिति ॥ ततस्तूष्णींगंधादिदानम्॥ ( तथाच छंदोगपरिशिष्टे ) गंधादीनि क्षिपेत्तूष्णींतत आचामयेद्द्विजान् ॥ ( मात्स्येपि ) गंधधूपादिकंदद्यात्कृ त्वाप्रत्यवनेजनम् ॥ दीपप्रज्वालनंतद्वत्कुर्यात्पुष्पार्च्चनंबुधः ॥ ( याज्ञवल्क्यः ) तुलसींभृंगराजंचअपामार्गंशमींतथा ॥ पितृमूर्द्ध

नियोदद्यात्सयातिपरमांगतिम् ॥ शमी शमीपत्राणि ॥ पितृमूर्द्धनि पिंडोपरि इत्यर्थः ॥ ( पद्मपुराणेपि ) तुलसीगंधमाघ्रायपितरस्तु
ष्टमानसाः ॥ प्रयांति गरुडारूढास्तत्पदं चक्रपाणिनः ॥ ( हेमाद्रौदेवलः ) दक्षिणांसर्वभोगांश्चप्रतिपिंडंप्रदापयेत् ॥ भक्ष्या
न्पूपानिक्षूंश्चव्यंजनान्यशनानिच ॥ दक्षिणाशब्देनवस्त्ररजतादि ॥ ( तत्रैव शंखः ) ॥ यत्किंचित्पच्यतेगेहे भक्ष्यंभोज्यंविगर्हितम् ॥
अनिवेद्यनभोक्तव्यंपिंडमूलेकथंचन इति ॥ एवंपिंडेभ्योगंधपुष्पादि दत्त्वा वारिदानंपुनर्ब्राह्मणहस्तेषु शिवा आपः संत्वित्या
दिभिमंत्रैःकर्त्तव्यम् ॥ ( तथाचमात्स्ये ) आचांतेषुपुनर्दद्याज्जलपुष्पाक्षतोदकम् ॥ ( मार्कंडेयोपि ) गंधमाल्यादिसंयुक्तं
दद्यादाचमनंततः ॥ ( कात्यायनोपि ) आचांतेषुसोदकपुष्पाक्षतान् अक्षय्योदकंचदद्यादिति ॥ इदमंबुपुष्पाक्षतदानंदैवेषुतुस
व्येन पित्र्येत्वपसव्येनकार्य्यमितिकर्कभाष्ये ॥ ( छंदोगपरिशिष्टे वृद्धिश्राद्धप्रकरणे कात्यायनः ) शिवा आपःसंत्विति चसंत्वित्युक्ते
पुनश्चतैः॥सौमनस्यमस्त्वितिचपुष्पदानमतःपरम् ॥ अक्षतंचारिष्टमस्त्वित्यक्षतान् प्रतिपादयेदिति ॥ अक्षतान् यवानित्यर्थः ॥ अक्षतशब्दे
नयवाउच्यंते इतिहेमाद्रिः ॥ अत्र अक्षतान् तंडुलानितिमैथिलरुद्रधरलेखनमयुक्तमेव ॥ अक्षतास्तुयवाःप्रोक्ता भृष्टाधानाभवंतिते इति
कात्यायनवाक्यात् ॥ (ब्रह्मपुराणेपि) आचांतेषूदकंदद्यात्पुष्पाणिसयवानिच ॥ यवोसीतिपठेन्मंत्रं श्रद्धाभक्तिसमन्वित इति॥ यवदानंचवै
श्वदेविकद्विजहस्तेष्वेव ॥ पित्र्यहस्तेषुतुतिलदानमेवकार्य्यम् ( तथाचहेमाद्रौ ब्राह्मे ) सतिलांबुपितृष्वादौदत्त्वादैवेषुसाक्षतमिति ॥
( अत्रोदकादिदानेमंत्रानाहहेमाद्रौश्राद्धतत्त्वेच शातातपः ) अपांमध्येस्थितादेवाः सर्वमप्सुप्रतिष्ठितम् ॥ ब्राह्मणस्यकरेन्यस्ताः शिवाआपो
भवंतुनः ॥ लक्ष्मीर्वसतिपुष्पेषुलक्ष्मीर्वसतिपुष्करे ॥ लक्ष्मीर्वसेत्सदासोमे सौमनस्यंसदास्तुमे ॥ अक्षतंचास्तुमेपुण्यं शांतिःपुष्टिर्धृति

श्रमे॥यद्यच्छ्रेयस्करं लोके तत्तदस्तुसदा मम इति ॥ हस्तदत्तानांचांबुपुष्पाक्षतानां कस्मिंश्चिच्छुचौदेशेविप्राः प्रक्षेपंकुर्युरितिहेमाद्रिः ॥ ( मात्स्ये ) दत्त्वाशीःप्रतिगृह्णीयाद्द्विजेभ्यः प्राङ्मुखोबुधः ॥ अघोराःपितरःसंतु संत्वित्युक्तेपुनर्द्विजैः ॥ गोत्रं तथावर्द्धतांनस्तथेत्युक्तः सतैःपुनः ॥ दातारोनोभिवर्द्धंतामन्नंचैवेत्युदीरयेत् ॥ एताः सत्याशिषः संतु संत्वित्युक्तश्चतैः पुनः इति ॥ दत्त्वा अक्षय्योदकं दत्त्वा इत्यर्थः॥ ( कात्यायनसूत्रेपि) अघोराः पितरः संतु संत्वित्युक्ते गोत्रंनोवर्द्धतांवर्द्धतामित्युक्ते दातारोऽभिवर्द्धंतां वेदाःसंततिरेवच॥ श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्त्वित्याशिषः प्रतिगृह्येति ॥ ( मनुपराशरयाज्ञवल्क्याः ) दातारो नोभिवर्द्धंतां वेदाः संततिरेवच ॥ श्रद्धाचनोमाव्यगमद्बहुदेयं चनोस्त्विति इति ॥ अस्यार्थः ॥ दातारोहिरण्यादेःनोऽस्माकंकुलेऽभिवर्धंतां बहवोभवंतु वेदाश्चवर्द्धंताम् अध्ययनाध्यापनतदर्थज्ञानानुष्ठान द्वारेण संततिश्चपुत्रपौत्रादिपरंपरयाश्रद्धाच पित्र्ये कर्मण्यास्थानोऽस्माकं माव्यगमत् मागच्छतु देयं च हिरण्यादि बहु अपरिमितमस्माकं भवत्वितिजपेदित्यर्थः ॥ ( गारुडस्कांदयोः ) अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनः संतु मा चयाचिष्मकंचन॥एतेषामाशिषः सर्वागृह्णीयात्प्रतिभाषितामिति ॥ एताआशिषःप्राङ्मुखउपवीती एवगृह्णीयात् ॥ ( तथाच हेमाद्रौ मरीचिः) प्रदक्षिणंशिवाआपोजपाशीःस्व स्तिवाचनम् ॥ विप्रेषुदक्षिणादानंषट्सव्यानिप्रचक्षते इति ॥ अस्यार्थो हेमाद्रिणाकृतः ॥ प्रदक्षिणं विसर्जनानंतरं बहिर्निर्गत्यमंडलोपर्य्यव स्थितानां ब्राह्मणानांप्रदक्षिणीकरणम् ॥ शिवाआपः संत्वित्यादिमंत्रैः क्रियमाणं कर्म ॥ जपःपुरुषसूक्तादि आशीश्च ॥ दातारोनोभिवर्द्धंतामि त्यादिकाभिप्रेता ॥ स्वस्तिवाचनं स्वस्तिभवंतो ब्रुवंत्वितिवाचनम् ॥ विप्रेषुदक्षिणादानं यद्विप्रोद्देशेन दक्षिणादानंक्रियतेतदत्राभि मतम् ॥ नतुयत्पित्राद्युद्देशेन विप्ररूपाधिष्ठानंक्रियते इति ॥ एतानिषट्कर्माणिसव्यानि सव्यधर्मकाणि इत्यर्थः ॥ मनुविष्णुभ्यांतु विसर्ज

५

नानंतरं दक्षिणामुखेनपितृभ्यश्चकार्य्यमित्युक्तं तत्तु साग्निकानाम् ॥ ( तथाच मात्स्ये ) विसृज्यब्राह्मणांस्तांस्तुतेषांकृत्वाप्रदक्षिणम् ॥ दक्षिणांदिशमाकांक्षन् पितॄन्याचेतसाग्निक इति ॥ अत्रयदाप्राङ्मुखोवरयाचनग्रहणं कुर्य्यात्तदायज्ञोपवीत्येव इतिहेमाद्रिः ॥ ( अनंतरमाह कात्यायनः ) आशिषः प्रतिगृह्यस्वधावाचनीयान् सपवित्रान्कुशानास्तीर्य स्वधांवाचयिष्य इतिपृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यःपितामहेभ्यः प्रपितामहेभ्योमातामहेभ्यः प्रमातामहेभ्योवृद्धप्रमातामहेभ्यश्चस्वधोच्यतामित्यस्तुस्वधेत्युच्यमानेस्वधावाचनीयेष्वपोनिषिंचति ऊर्ज्जमिति ॥ अस्यार्थः ॥ ( अत्रसांप्रदायिका व्याचक्षते ) ॥ स्वधावाचनार्थमुपकल्पिताः कुशाः स्वधावाचनीयाः पवित्राण्यास्तीर्य्य पिंडानामुपरि दक्षिणाग्रान् तेषु पिंडावनेजनपात्रस्थितमुदकं दक्षिणकरे गृहीत्वा ऊर्जं वहंतीरित्यादिकं मंत्रमुच्चार्य पितृतीर्थेन निषेचनीयमित्यर्थः ॥ ( पराशरोपि ) ऊर्ज्जंवहंतीरुच्चार्य्य जलं पिंडेषुदापयेदिति ॥ ( अनंतरमर्घपात्रोत्तानीकरणंदक्षिणादानंचाह कात्यायनः ) उत्तानपात्रंकृत्वा यथाशक्तिदक्षिणांदद्यात् इति ॥ ( पराशरोपि ) न्युब्जपिंडार्घपात्राणि कृत्वोत्तानानिसंस्रवान् ॥ दक्षिणांदद्यादित्यर्थः ॥ ( नागरखंडेपि ) उत्तानमर्घ्यपात्रंतुकृत्वादद्याच्चदक्षिणाम् ॥ हिरण्यं देवतानांचपितॄणांरजतंतथा इति ॥ ( पात्रचालनेविशेषमाहजातूकर्ण्यः ) पात्राणिचालयेच्छ्राद्धेस्वयंशिष्योथवासुतः ॥ नस्त्रीभिर्नचबालेननासज्जात्याकथंचन ॥ ( प्रचेतास्तु ) श्राद्धेभोजनपात्राणिस्वयमेवप्रचालयेदितिवदति ॥ ( दक्षिणादानेविशेषमाहबृहस्पतिः ) तस्मात्पणंकाकिणींवाफलंपुष्पमथापिवा ॥ प्रदद्याद्दक्षिणांश्राद्धेतयासस्फलोभवेत् इति ॥ ( दक्षिणादानेसव्यापसव्ययोर्विकल्पमाह हेमाद्रौजमदग्निः ) सर्वंकर्मापसव्येनदक्षिणादानवर्जितमिति ॥ अनेनदक्षिणायांसव्यमुक्तम्॥ ( अपसव्यपक्षोपितत्रैवतेनोक्तः ) अपसव्यंतुतत्राहमत्स्यो

हिमगवान्मनोः इति ॥ अनयोःपक्षयोर्द्वितीयःपक्षोयुक्तः पैतृकत्वात् ॥ पितॄणामपसव्येनदद्यात्क्षौप्यंतुदक्षिणामितिस्मृत्यंतरवाक्यात् ॥ अप सव्यंतुतत्राहमत्स्योहिमगवान्मनोः इतिविशेषवाक्याच्च ॥ ( माधवीयेपि ) पित्रुद्देशेनदक्षिणादानंप्राचीनावीतिनाकार्यमिति ॥ अथदक्षिणा दानानंतरमप्याह ( पिंडपितृयज्ञेकात्यायनः ) अवघायावजिघ्रतियजमानः उल्मुकसकृदाच्छिन्नान्यग्नाविति॥ (अस्यार्थो भाष्ये) पिंडानध्व र्युःस्थाल्यांप्रत्यवधायततोयजमानः सव्यंकृत्वा पिंडान्स्थालीस्थानवजिघ्रति अवघ्राणंकरोति पूर्वंसकृदाच्छिन्नानि यानिरेखायामास्तृता न्यभूवन् तान्यग्नौप्रक्षिप्य उल्मुकंचतत्रैवप्रक्षिपति इत्यर्थः ॥ ( अथविसर्जनमाह कात्यायनः ) विश्वेदेवाः प्रीयंतामितिदैवेजपित्वावाजे वाज इति विसृज्येति ॥ ( याज्ञवल्क्योपि ) वाजेवाजइतिप्रीतः पितृपूर्वंविसर्जयेत् ॥ ( प्रचेताः ) विसृजेद्भक्तिसंयुक्तःसीमांतंचाप्यनुव्र जेदिति॥सीमांतंस्वगृहसीमापर्यंतमित्यर्थः ॥ ( कात्यायनसूत्रेपि ) आमावाजस्येत्यनुव्रज्यप्रदक्षिणीकृत्योपविशेत् ॥ ( विष्णुधर्मोत्तरेपि ) पश्चाद्विसर्जयेद्देवान्पूर्वंपैतामहान्द्विजान् ॥ मातामहानामप्येवं सहदेवैःक्रमःस्मृत इति ॥ एतद्विसर्जनंतुजमदग्निनासव्येनोक्तम् ॥ युक्तमपिस व्येनैव ॥ परंचशिष्टानाचरंतिपूर्वमपसव्येनावाहनविधानात् अपसव्येनैवविसर्जनंकुर्वंति॥अत्रशिष्टाचारएवप्रामाणिक इति ॥ अनंतरंदेवता भ्य इतित्रिर्जपः कर्त्तव्यः ॥ (तथाच ब्राह्मे) देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच॥नमःस्वाहायैस्वधायैनित्यमेवनमोनमः ॥ आद्यावसाने श्राद्धस्यत्रिरावृत्त्याजपेत्सदा ॥ पिंडनिर्वपणेचापिजपेदेतत्समाहित इति॥ पिंडनिर्वपणेपिंडदानात्पूर्वमित्यर्थः ॥ ततोदीपनिर्वापणम्॥(तदु क्तंदेवलेन ) निर्वृत्तेपितृमेधेतुदीपंप्रच्छाद्यपाणिना ॥ आचम्यपाणीप्रक्षाल्यज्ञातीञ्छेषेणभोजयेदिति ॥ प्रच्छाद्यनिर्वाप्यइत्यर्थः॥अपसव्येन दीपंनिर्वापयेद्दक्षिणामुख इतिश्राद्धकल्पकारः ॥ ( स्मृत्यंतरेपि ) दीपंहस्तेननिर्वाप्य पवित्रत्यागपूर्वकम् ॥ पादशुद्धिर्द्विराचामेदु

च्छिष्टोद्वासनंततः ॥ तथा ॥ अपसव्यंततः कृत्वा दीपनिर्वापणंचरेत् ॥ ततः सव्येन हस्तादिप्रक्षाल्याचम्य यत
तः ॥ न्यूनादिदोषशांत्यैतु सांगकर्मप्रपूर्त्तये ॥ स्मृत्वा संप्रार्थयेद्विष्णुं यथाश्रुतिनिदर्शनम् ॥ ततःश्राद्धीयवस्तूनि
ब्राह्मणायनिवेदयेत् ॥ पिंडादिकंजलादौतु प्रक्षिपेदिष्टसिद्धये इति ॥ अथ पिंडप्रतिपत्तयः ॥ (तत्रहेमाद्रौ देवलः) ततःकर्माणि
निर्वृत्तेतान्पिंडांस्तदनंतरम् ॥ ब्राह्मणोग्निरजोगौर्वाभक्षयेदप्सुवाक्षिपेत् ॥ (याज्ञवल्क्योपि) पिंडांस्तुगोजविप्रेभ्योदद्यादग्नौ
जलेपिवा ॥ प्रक्षिपेत्सत्सुविप्रेषुद्विजोच्छिष्टंनमार्जयेत् इति ॥ जले अगाधे जले प्रक्षिपेदित्यर्थः ॥ सत्सुविप्रेषुभोजनदेशावस्थितेषुद्वि
जोच्छिष्टंनमार्जयेत् ॥ नोद्वासयेदित्यर्थः ॥ (मनुस्मृतावपि) गांविप्रमजमग्निंवाप्राशयेदप्सुवाक्षिपेत् ॥ वयोभिःखादयन्त्यन्ये प्रक्षिपंत्यन
लेप्सुवा ॥ (मात्स्येपि) पिंडांस्तुगोजविप्रेभ्योदद्यादग्नौजलेपिवा ॥ विप्रांतेवाथविकिरेद्वयोभिरथवाशयेदिति ॥ पुत्रार्थीमध्यमपिंडं
पत्न्यैदद्यात् ॥ (तथाच वायुपुराणे) पत्न्यैप्रजार्थीदद्यात्तुमध्यमंमंत्रपूर्वकमिति ॥ (मंत्रस्तुमत्स्येनदर्शितः) आधत्तपितरोगर्भमंत्रःसंतान
वर्द्धन इति॥कात्यायनसूत्रेआधत्तेतिमध्यमपिंडंपत्नीप्राश्नातिपुत्रकामा इति ॥अस्यार्थोभाष्ये॥ गर्भग्रहणयोग्याऋतुस्नातापत्नीमध्यमपिंडंप्रा
श्नाति । पत्नीबहुत्वेपिंडविभागोमंत्रावृत्तिश्चेतिधूर्तस्वामी॥ (पाराशरः)॥पिंडानांमध्यमंपिंडं पितॄन्ध्यायन्समाहिता ॥ प्राशयेत्पुत्रकामातुभा
र्यांतंश्राद्धदस्य च ॥ स्नुषावापिसगोत्रावापुत्रकामाद्विजाज्ञया ॥ आधत्तपितरोगर्भंव्याहरेयुर्द्विजातयः॥ महारोगगृहीतावातद्रोगोपशमायच ॥
घ्नंतुमेपितरोरोगमित्युक्त्वाप्राशयेच्चतान् ॥ अन्नान्यप्सुहुताशेवाक्षिपेद्गवेद्विजायवाअजायवाप्रदद्याच्चपश्चाद्विप्रविसर्जनम् ॥ (मनुस्मृतौ)
पतिव्रताधर्मपत्नीपितृपूजनतत्परा ॥ मध्यमंतुततःपिंडमद्यात्सम्यक्सुतार्थिनी ॥ आयुष्मंतंसुतंविंदेद्यशोमेधासमन्वितम् ॥ धनवंतंप्र

जावंतंधार्मिकंसात्त्विकंतथा इति ॥ रोगाभितत्तेनप्रथमोऽन्नाद्यकामेनतुचरमः पिंडोभक्षणीयः ॥ ( तथाच हारीतः )
आयुर्दःप्रथमः पिंडो द्वितीयःपुत्रदः स्मृतः ॥ ऋद्धिदस्तुतृतीयोवै तस्मान्मध्यममाशयेत् ॥ पुत्रकामायजमानपत्नीतिशेषः ॥ ( ब्रह्मांड
पुराणे ) पिंडमग्नौसदादद्याद्भोगार्थीप्रथमंनरः ॥ पत्न्यैप्रजार्थीदद्याद्वैमध्यमंमंत्रपूर्वकम् ॥ उत्तमांगतिमन्विच्छन् गोभ्योनित्यंप्रयच्छति ॥
आज्ञांप्रज्ञांयशःकीर्तिमप्सुपिंडंप्रवेशयेत् ॥ प्रार्थयन्दीर्घमायुश्च वायसेभ्यःप्रयच्छति ॥ आकाशंगमयेदप्सु स्थितोवादक्षिणामुखः ॥ पि
तृणांस्थानमाकाशं दक्षिणादिक्तथैवच इति ॥ मध्यमपिंडप्राशनंचकेवलंकाम्यमेव नानित्यमितिद्वैतनिर्णये ॥ (पिंडोपघातेहेमाद्रौ देवलः)
श्वसृगालखरैःपिंडः स्पृष्टोभिन्नःप्रमादतः ॥ मार्जारमूषकैः स्पृष्टश्चांडालपतितादिभिः ॥ कर्तुरायुष्यनाशःस्यात्प्रेतस्तंनोपसर्पति ॥ (तद्दो
षनिवृत्तिमाह जातूकर्ण्यः ) तद्दोषपरिहारार्थंप्राजापत्यंप्रकल्पयेत् ॥ पुनःस्नात्वातदाकर्तापिंडंकुर्याद्यथाविधि इति ॥ पाकांतरेणतेनपा
केनवापिंडदानमात्रंपुनःकार्यंनसर्वश्राद्धावृत्तिरितिसर्वसंमतमितिकमलाकरप्रभृतयः ॥ ( अथवैश्वदेवादि ) तत्रतावद्वैश्वदेवकालनिर्णयः ॥
( हेमाद्रौ ब्रह्माण्डे ) वैश्वदेवाहुतीरग्नावर्वाग्ब्राह्मणभोजनात् ॥ जुहुयाद्भूतयज्ञादि श्राद्धंकृत्वातुतत्स्मृतम् इति ॥ अर्वाग्ब्राह्मणभोज
जनात् इत्यनेनाग्नौकरणानंतरंवैश्वदेवाहुतिंजुहुयादित्यर्थः ॥ श्राद्धंकृत्वाभूतयज्ञादिस्मृतम् इत्यनेनभूतयज्ञस्यैवश्राद्धांतेकर्तव्यतेतिकृतार्था
द्वैश्वदेवाहुत्यनंतरमेवबलिहरणंकार्यमितिदर्शितमितिस्मृतिचंद्रिकाकारः ॥ अयमेकोऽनग्निकवैश्वदेवस्यकालः ॥ द्वितीयोऽपि ( भवि
ष्यपुराणे ) पितॄन्संतर्प्यविधिवद्बलिंदद्याद्विधानतः ॥ वैश्वदेवंततः कुर्यात्पश्चाद्ब्राह्मणवाचनम् ॥ बलिशब्दोपितत्रैवव्याख्यातः ॥ येअग्निद
ग्धातुमंत्रेण भूमौयान्निक्षिपेद्बुधः॥जानीहितंबलिंवीरश्राद्धकर्मणिसर्वदेति ॥ अनेनविकिरसंज्ञकबलिप्रदानानंतरं स्वास्तिवाचनात्पूर्वं वैश्वदेवं

कुर्य्यादित्युक्तंभवति ॥ अयंद्वितीयः कालः ॥ अथ तृतीयोपि स्मृतिपुराणादावुक्तः ॥ ( तत्राह मनुः ) उच्छेषणंतुतत्तिष्ठेद्यावद्विप्राविस
र्जिताः ॥ ततोगृहबलिंकुर्यादितिधर्मोव्यवस्थितः ॥ ( अस्यार्थोमेधातिथिनाकृतः ) भुंजानेषु द्विजेषु यद्भुज्यपिकरणपात्रलग्नंभूमौ
चपतितमन्नंतस्माद्देशात्तावन्नमार्ष्टव्यंयावद्ब्राह्मणाननिष्क्रांताः ॥ ततोनिष्पन्नेश्राद्धकर्मणि अनंतरंवैश्वदेवहोमान्बहिःकाकातिथ्यादि
भोजनं च कर्त्तव्यमित्यर्थः ॥ ( अयमेवार्थोमत्स्यपुराणे ) उच्छेषणंतुतत्तिष्ठेद्यावद्विप्राविसर्ज्जिताः ॥ वैश्वदेवंततःकुर्यान्निवृत्ते
पितृकर्मणि ॥ ( माधवीये पैठीनसिः ) ॥ श्राद्धंनिर्वर्त्यविधिवद्वैश्वदेवादिकंततः ॥ कुर्याद्भिक्षांततोदद्याद्धंतकारादिकंतथा इति ॥
निरग्निकानांकातीयानांतुश्राद्धांतएववैश्वदेवोतिकाशिनाथप्रभृतयः ॥ सर्वेषांश्राद्धांतएवेतिमेधातिथिस्मृतिरत्नावल्यादयोबहवः ॥
( श्राद्धतत्त्वे भविष्यपुराणमपि ) कृत्वाश्राद्धंमहाबाहोब्राह्मणांश्चविसृज्यच ॥वैश्वदेवादिकंकर्मततःकुर्यान्नराधिप इति ॥ अतोऽनग्निकर्तृक
स्य वैश्वदेवस्त्रयःकालाः ॥ एकोऽग्नौकरणानंतरम् अन्योविकिरादुपरि तृतीयो ब्राह्मणविसर्जनात्पश्चादिति ॥ एतत्सर्वंतुसपात्रकविष
यम् ॥ अपात्रकेतुश्राद्धांते ब्राह्मणभोजनात् प्रागेव ॥ साग्निकानांतुसर्वत्रश्राद्धात् पूर्वमेव वैश्वदेवः ॥ इति वैश्वदेवकालनिर्णयः ॥ ( अथ
वैश्वदेवकरणप्रकारो मार्कंडेयपुराणे ) स्नाहांतास्ताजलेवाग्नौकुर्यात्पंचाहुतीःक्रमात् ॥ ब्रह्मप्रजापतिर्गृह्याःकश्यपोनुमतिस्तथा ॥ १ ॥
चतुर्थ्यंतैर्जलंक्षिप्त्वा वैश्वदेवबलिंचरेत् ॥ पर्जन्यआपःपृथिवी धातापिचविपूर्वगः ॥२॥ चतुर्वायुःप्राच्यवाची प्रतीचीचाप्युदीच्यपि ॥ ब्रह्मान्त
रिक्षसूर्याश्चविश्वेदेवास्ततः परम् ॥ ३ ॥ विश्वेभूताउषाश्चापि भूतानांचपतिस्तथा ॥ अपसव्येनसतिलं पितृभ्यश्चस्वधानमः ॥ ४ ॥
सनकादिसत्तमत्र्येभ्योहंतकंठोपवीतवान् ॥ यक्ष्मैतत्तेचसव्येनजलंनिर्णेजनंनमः ॥ ५ ॥ दद्यात्काकाश्चचांडालाः पतिताःपापसंगिनः ॥

ततःकीटपतंगाश्च गावःश्वानौततःपरम् ॥ ६ ॥ चतुर्थ्यंतानुपादाय नमोंतान्क्रमतःपठेत् इति ॥ उच्छिष्टमार्जनानंतरं वैश्वदेवंकृत्वा शेषमन्नं बांधवैःसह भुंजीत ॥ (तथाच मत्स्यपुराणे) ततस्तुवैश्वदेवांते सभृत्यसुतबांधवः ॥ भुंजीतातिथिसंयुक्तः सर्वंपितृनिषेवितमिति ॥ (ब्रह्मपुराणे एवंसम्यग्गृहस्थेन देवताः पितरस्तथा ॥ संपूज्याहव्यकव्याभ्यामन्नेनातिथिबांधवाः ॥ भूतानिभृत्याविकलाः पशुपक्षिपिपीलिकाः ॥ भिक्षवोयाचमानाश्चयेचान्येयाचकागृहे इति ॥ विकलाः अंधबधिरमूकादय इत्यर्थः ॥ (हेमाद्रौ) वंदिमागधसूताश्च तौर्यत्रिकविदस्तथा ॥ अलब्धलाभाः श्राद्धेषु नाशयंति मनुष्यशः ॥ तस्मात्तेपि विभक्तव्याः सकलंसंविभज्यच इति ॥ तौर्यत्रिकं नृत्यगीतवाद्यानि॥अलब्धलाभाः अप्राप्ताना इत्यर्थः॥एतत्क्षयाहश्राद्धपरमिति वृद्धाः॥क्षयाहे भूरिभोजनमितिकौर्मात् ॥ (शेषभोजनाकृते दोषमाह देवलः) श्राद्धंकृत्वातुयोमर्त्योनभुंक्तेऽधकदाचन ॥ देवाहव्यंनगृह्णंति कव्यानिपितरस्तथा इति ॥ (अतएवश्राद्धदिनेउपवासनिषेधमाह व्यासः) आदित्येऽहनिसंक्रांतावसितैकादशीग्रहे ॥ व्यतीपातेकृतेश्राद्धेपुत्रीनोपवसेद्गृही ॥ (कात्यायनव्यासौ) उपवासोयदानित्यः श्राद्धंनैमित्तिकंभवेत् ॥ उपवासंतदाकुर्यादाघ्रायपितृसेवितम् इति ॥ (श्राद्धशेषान्नभोजनस्य कचिन्निषेधमाह मार्कंडेयः) पित्रादीनामथान्येषां श्राद्धशेषान्नभोजनम् ॥ व्रतिनांविधवानांच यतीनांचविगर्हितम् ॥ (अथभोजनानंतरं दातृभोक्तृनियममाह बृहस्पतिः) तांनिशां ब्रह्मचारीस्याच्छ्राद्धकृच्छ्राद्धभुक्तथा॥ अन्यथावर्त्तमानौतौस्यातांनिरयगामिनौ ॥ (मात्स्येऽपि) पुनर्भोजनमध्वानंयानमायासमैथुनम् ॥ श्राद्धकृच्छ्राद्धभोक्ताचसर्वमेतद्विवर्जयेत् ॥ (जाबालिः) तांबूलंदंतकाष्ठंचस्नेहस्नानमभोजनम् ॥ रत्यौषधिपरान्नंचश्राद्धकर्त्ताविवर्जयेत ॥ (मात्स्ये) एतच्चानुपनीतोऽपिकुर्यात्सर्वेषुपर्वसु ॥ श्राद्धंसाधारणंनामसर्वकामफलप्रदम् ॥ भार्याविरहितोऽप्येतत्प्रवासस्थोपिभक्तिमान् ॥

शूद्रोप्यमंत्रवत्कुर्यादनेनविधिनानृप ॥ इति गौडीयश्राद्धप्रकाशे पार्वणश्राद्धप्रयोगनिर्णयः ॥ ॥ अथैकोद्दिष्टप्रयोगः ॥ ( तत्र कात्यायनः ) अथैकोद्दिष्टमेकंपात्रमेकोऽर्घ्यएकंपिंडंनावाहनं नाग्नौकरणं नात्रविश्वेदेवाः स्वदितमितितृप्तिप्रश्नः सुस्वदितमित्यनुज्ञानोपतिष्ठतामित्यक्षय्यस्थानेअभिरम्यतामितिविसर्गे इति ॥ ( याज्ञवल्क्योपि ) एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ॥ आवाहनाग्नौकरणरहितंह्यपसव्यवत् ॥ उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने अभिरम्यतामितिवदेयुस्तेभिरताःस्मह ॥ अस्यार्थः—एकोद्दिष्टम् एकउद्दिष्टोयस्मिन् ॥ श्राद्धेतदेकोद्दिष्टमितिकर्मनामधेयं दैवरहितं विश्वेदेवरहितं एकार्घ्यपात्रमेकदर्भपवित्रकं च आवाहनाग्नौकरणहोमेनचरहितम् अपसव्यवत् प्राचीनावीतब्रह्मसूत्रवत् तत्राक्षय्यस्थाने उपतिष्ठतामितिवदेत् ॥ विप्रविसर्जने कर्तव्येवाजेवाज इतिजपानंतरं अभिरम्यतामितिब्रूयात् तेचाभिरताः स्मेति ब्रूयुः ॥ शेषंपार्वणवदित्यर्थः ॥ इत्येकोद्दिष्टम् ॥

अथ पार्वणविकृतिरूपवृद्धिश्राद्धनिर्णयः ॥ तत्रतावद्वृद्धिर्नामपुत्रजन्मादिनिमित्तोपलक्षितः कालः ॥ ( तथाचहेमाद्रौ वसिष्ठः ) पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् ॥ ( श्राद्धतत्त्वेमात्स्येच ) अन्नप्राशेचसीमंते पुत्रोत्पत्तिनिमित्तके ॥ पुंसवेचनिषेके च नववेश्मप्रवेशने ॥ देवव्रतजलादीनांप्रतिष्ठानांतथैवच ॥ तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितम् ॥ ( ब्रह्मपुराणेपि ) जन्मन्यथोपनयने विवाहेपुत्रकस्यच ॥ पितृन्नांदीमुखान्नामतर्पयेद्विधिपूर्वकम् ॥ देवव्रतेषुचाधानयज्ञपुंसवनेषुच ॥ नवान्नभोजनेस्नाने ऊढायाःप्रथमार्तवे ॥ देवारामतडागादिप्रतिष्ठासूत्सवेषुच ॥ राज्याभिषेकेबालान्नभोजने वृद्धिसंज्ञकान् ॥ वनस्थाद्याश्रमंगच्छन् पूर्वेद्युःसत्यएववा ॥ पितृन्पूर्वोक्तविधिनातर्पयेत्कर्मसिद्धये ॥ ( हेमाद्रौ जाबालिः ) यज्ञोद्वाहप्रतिष्ठासु मेखलाबंधमोक्षयोः ॥ पुत्र

जन्मवृषोत्सर्गे वृद्धिश्राद्धंसमाचरेदिति ॥ इदंचावश्यकम् ॥ वृद्धौनतर्पितायेवै पितरोगृहमेधिभिः ॥ तद्धीनमफलंज्ञेयमासुरोविधिरेवसः ॥
इतिशातातपोक्तेः ॥ ( अत्रश्राद्धत्रयंसएवआह ) मातृश्राद्धंतुपूर्वंस्यात्पितॄणांतदनंतरम् ॥ ततोमातामहानांचवृद्धौश्राद्धत्रयंस्मृतम् ॥
( तत्कालमाहपृथ्वीचंद्रोदये गार्ग्यः ) मातृश्राद्धंतुपूर्वेद्युः कर्माहनितुपैतृकम् ॥ मातामहं चोत्तरेद्युर्वृद्धौश्राद्धत्रयंस्मृतम् ॥ ( अत्राप्य
शक्तौसएव ) ॥ पृथग्दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे ॥ श्राद्धत्रयंप्रकुर्वीतवैश्वदेवंतुतांत्रिकम् ॥ ( वृद्धमनुरपि ) ॥ अलाभेभिन्नकाला
नां नांदीश्राद्धत्रयंबुधः ॥ पूर्वेद्युर्वैप्रकुर्वीत पूर्वाह्णे मातृपूर्वकमिति ॥ पूर्वाह्णोत्रसार्द्धप्रहरपरः ॥ एतच्छ्राद्धंतुमातृपूजापूर्वकंकार्यमित्यर्थः ॥
( कूर्मपुराणेपि ) पूर्वंतुमातरः पूज्याभक्त्यावैसगणेश्वराः ॥ ( कात्यायनोपि ) कर्मादिषुतुसर्वेषु मातरःसगणाधिपाः ॥ पूजनीयाः प्रयत्ने
न पूजिताःपूजयंतिताः ॥ प्रतिमासुचशुभ्रासु लिखितासुपटादिषु ॥ अपिवाक्षतपुंजेषुनैवेद्यैश्चपृथग्विधैः ॥ कुड्यलग्नांवसोर्धारांसप्तधारां
घृतेनतु ॥ कारयेत्पंचधारांवानातिनीचांनचोच्छ्रिताम् ॥ आयुष्याणिचशांत्यर्थंजप्त्वातत्रसमाहितइति ॥ आयुष्याणि आयुष्यंवर्चस्य
मित्यादिमंत्रत्रयम् ॥ ( एतन्मातृपूजनस्याकरणे भविष्यपुराणे दोषोदर्शितः ) ॥ अकृत्वामातृयज्ञंतुयःश्राद्धंपरिवेषयेत् ॥ तास्तस्यक्रोध
संपन्नाहिंसांकुर्वंतिदारुणाम् ॥ ( तासां नामान्याह कर्मप्रदीपेकात्यायनः ) ॥ गौरीपद्माशचीमेधासावित्री विजयाजया॥देवसेनास्वधास्वाहा
मातरोलोकमातरः ॥ धृतिःपुष्टिस्तथातुष्टिरात्मदेवतयासह ॥ विनायकेनसहिताः पूजनीयाःप्रयत्नत इति ॥ ( श्राद्धानुक्रमो मत्स्य
पुराणे ) उत्सवानंदसंताने यज्ञोद्वाहादिमंगले ॥ मातरः प्रथमं पूज्याः पितरस्तदनंतरम् ॥ ततोमातामहाः पूज्या विश्वेदेवास्तथैवच ॥
( शातातपवसिष्ठावपि ) मातृभ्यःकल्पयेत्पूर्वं पितृभ्यस्तदनंतरम् ॥ ततोमातामहानांच कुर्याच्छ्राद्धंक्रमेणवै इति ॥ कात्यानेनतु

अयंश्राद्धः षट्पुरुषात्मकः कथितः ॥ तत्तुछंदोगानामेव नतु सर्वेषाम् इति ॥ केचित् मातामह्यादित्रिदैवत्यंचतुर्थमपिश्राद्धमाचक्षते ॥ तत्तु शाखान्तरविषयम् ॥ ( ब्राह्मणसंख्या मार्कंडेयपुराणे ) युग्माश्चात्रद्विजाः कार्य्यास्तेपूज्याश्चप्रदक्षिणम् ॥ ( वृद्धशातातपोपि ) त्रिष्वप्येते षुयुग्मांस्तु ब्राह्मणान्नियतः शुचिरिति ॥ त्रिषुमातृपितृमातामहश्राद्धेष्वित्यर्थः ॥ ( विष्णुपुराणे ) युग्मांस्तुप्राङ्मुखान्विप्रान् भोजये न्मनुजेश्वरः ॥ ( हेमाद्रौ छागलेयः ) एकैकस्यतुवर्गस्य द्वौद्वौविप्रौसमर्चयेत् ॥ वैश्वदेवेतथाद्वौच नप्रसज्येतविस्तरे इति ॥ एवं चात्राष्टौ ब्राह्मणाःसंपद्यंते यःकश्चिदतिथिरागच्छेत् सनवमोपितत्र भोजनीय इति हेमाद्रिप्रभृतयः ॥ ( अत्रविशेषः कात्यायनेनदर्शितः ) आभ्युदयिके प्रदक्षिणार्थमुपचारः ॥ पूर्वाह्णे पित्र्यमंत्रवर्ज्यंजपऋजवोदर्भायवैस्तिलार्थाः संपन्नमितितृप्तिप्रश्नः सुसंपन्नमितीतरे ब्रूयु र्दधिबदराक्षतमिश्राः पिंडा नांदीमुखान् पितृनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो नांदीमुखाः पितरः प्रीयंतामित्यक्षय्यस्थाने नांदीमुखान्पितृन् वाचयिष्य इतिपृच्छति वाच्यतामित्यनुज्ञातोनांदीमुखाःपितरो मातामहाश्च प्रीयंतामितिनस्वधांप्रयुंजीतयुग्मानाशये दत्र इति ॥ ( हेमाद्रौ शातातपः ) कर्त्तव्यंचाभ्युदयिकंश्राद्धमभ्युदयार्थिना ॥ सव्येनचोपवीतेनऋजुदर्भैश्चधीमता ॥ पितृणांरूपमास्थायदेवा अन्नंसमश्नुते ॥ तस्मात्सव्येनदातव्यंवृद्धिश्राद्धेतुनित्यशः ॥ यथैवोपचरेद्देवांस्तथावृद्धौपितॄनपि ॥ ( कात्यायनोऽपि ) सदापरिचरेद्भक्त्या पितॄनप्यत्रदेववत् ॥ निपातोनहिसव्यस्यजानुनोविद्यतेक्वचित् ॥ नात्रापसव्यकरणंनपित्र्यंतीर्थमिष्यते ॥ मधुमाध्वितियस्तत्रत्रिर्जपः श्रेय इच्छता ॥ गायत्र्यनंतरःसोऽत्रमधुमंत्रविवर्जितः ॥ नचाश्नत्सुजपेदत्रकदाचित्पितृसंहिताम् ॥ अन्यएवजपः कार्य्यःसोमसामादिकःशुभः ॥ यस्तस्याविकिरोऽन्नस्य तिलवान्यववांस्तथा ॥ उच्छिष्टसन्निधौसोऽत्रतृप्तेषुविपरीतक इति ॥ वैश्वदेविकः यववान् पित्र्यः तिलवान्

विपरीतकः सर्वोपियवन्नानित्यर्थः ॥ अनेनवैश्वदेविके येधर्मास्तेसर्वेप्यत्रकर्त्तव्यानपित्र्यश्राद्धधर्माइत्युक्तंभवति ॥ ( ब्रह्मपुराणे ) स्वाहा शब्दंप्रयुंजीतस्वधास्थानेचबुद्धिमान् ॥ वृद्धिश्राद्धे सदासव्यं यज्ञसूत्रंचकारयेत् ॥ कुशस्थानेचदूर्वाःस्युर्मंगलस्याभिवृद्धये ॥ ( हेमाद्रौ श्वेताः ) नजपेत्पैतृकंजप्यंनमांसंतत्रदापयेत् इति ॥ अत्रजप्यशब्दात् योभुंजानेषुद्विजेषुपितृलिंगकानांमंत्राणांजपःसएवनिषिद्ध्यते नतूशंतस्त्वेत्यादिपदार्थानुष्ठानकरणीभूतानामपि॥(अतएव जातूकर्ण्यः ) पितृलिंगेन मंत्रेण यत्कर्मसुनिभिः स्मृतम् ॥ तेनैवतद्विधातव्यममंत्रमकृतंयतः ॥ (कात्यायनः) अतःपरंप्रवक्ष्यामि विशेषइहयोभवेत् ॥ प्रातरामंत्रितान्विप्रान् युग्मानुभयतस्तथा ॥ उपवेश्य कुशान्दद्यादृजूनेवहिपातितान् इति ॥ उभयतः दैवेपित्र्येच इत्यर्थः ॥ ( ब्रह्मपुराणे ) विप्रान्प्रदक्षिणावर्त्तंप्राङ्मुखानुपवेशयेत् ॥ ( छागलेयोपि ) सर्वानेवतुतान्विप्रान्प्राङ्मुखानुपवेशयेत् ॥ प्राङ्मुखानुदङ्मुखान्वेतिहेमाद्रिः ॥ ( आवाहनप्रकारश्चब्राह्मेदर्शितः ) नांदीमुखान्पितृन्भक्त्या सांजलिश्चसमाह्वयेत् ॥ पठेत्पवित्रंमंत्रंतुविश्वेदेवासआगतइति ॥ अत्रार्घ्यदानंचद्वयोर्द्वयोर्विप्रयोर्हस्तौमेलयित्वादद्यात् (तथाच पद्मपुराणे) दद्यादर्घ्यंद्वयोर्द्वयोरिति ॥ अर्घ्यदानानंतरं गंधपुष्पादिकंदेयमितिहेमाद्रौ ॥ अत्राग्नौकरणंसव्येनएवदैविकवत्धर्मत्वात् ॥ ( पिंडदानेविशेषो भविष्ये ) एवंभुक्तेषुविप्रेषु दद्यात्पिंडान्समाहितः॥दध्यक्षतैर्विमिश्रांस्तुबदरैश्चखगाधिप ॥ ( विष्णुपुराणेपि ) दध्यक्षतैः सबदरैः प्राङ्मुखोदङ्मुखोपिवा ॥ देवतीर्थेनवैपिंडान् दद्यात्कामेनवैनृप इति ॥ कामेन इच्छया इच्छाभावेतुनदद्यात् ॥ ( पिंडदानकरणाकरणयोर्व्यवस्था उक्ता भविष्यपुराणे ) पिंडनिर्वपणंकुर्यान्नवकुर्यान्नराधिप ॥ वृद्धिश्राद्धेमहाबाहो कुलधर्मंभवेक्ष्यवै ॥ अनेनयेषांकुलेवृद्धपरंपरयावृद्धिश्राद्धेपिंडदानमनुष्ठीयते तैः कर्त्तव्यं येषांकुलेनानुष्ठीयते तैर्नकर्त्तव्यमिति व्यवस्थादर्शिता ॥ इयंचव्यवस्था निरग्निकानामेव ॥ साग्निकैस्तु

सर्वदाकर्त्तव्यमिति ॥ तथाच ब्रह्मपुराणे ) योऽग्नौतुविद्यमानेपि वृद्धौपिंडान्ननिर्वपेत् ॥ पतंतिपितरस्तस्य नरकेसतुपच्यते इति ॥ ( अत्रपिंडदानायप्रदेशविशेषमाह शातातपः ) प्रदद्यात्प्राङ्मुखःपिंडान्वृद्धौनाम्नासबाह्यतइति ॥ सः श्राद्धकर्त्ता ॥ बाह्यतः भोजनशाला या बहिः॥ नतूच्छिष्टसमीप इत्यर्थः ॥ ( हेमाद्रौ ) शेषमन्नमनुज्ञाप्य वैश्वदेवक्रियांततः ॥ श्राद्धाहिश्राद्धशेषेण वैश्वदेवंसमाचरेत् इति ॥ अत्र प्रागुक्तविशेषातिरिक्तंधर्मजातंपार्वणवत् कर्त्तव्यम् ॥ ( तथाच विष्णुधर्मोत्तरे ) वृद्धौसमर्चयेद्विद्वान्नित्यंनांदीमुखान्पितॄन् ॥ संपादितोविशेषस्तु शेषंपार्वणवद्भवेत् ॥ ( पद्मपुराणे ) एवंशूद्रोपिसामान्यं वृद्धिश्राद्धंतुसर्वदा ॥ नमस्कारेणमंत्रेण कुर्यादामादिवैबुधः ॥ इतिवृद्धिश्राद्धप्रयोगः ॥ ॥ अथनित्यश्राद्धप्रयोगः॥ ( तत्र याज्ञवल्क्यः ) कुर्यादहरहःश्राद्धमन्नाद्येनोदकेनवा ॥ तृप्त्यर्थंवैपितॄणांतु आत्मनःश्रेय इच्छता ॥ ( कूर्मपुराणे ) एकंतुभोजयेद्विप्रं पितॄनुद्दिश्यसत्तम ॥ नित्यश्राद्धंतदुद्दिश्यपितृयज्ञोगतिप्रदः ॥ ( कात्यायनोपि ) एकमप्याशयेद्विप्रं पितृयज्ञार्थसिद्धये ॥ ( मनुस्मृतावपि ) दद्यादहरहःश्राद्धमन्नाद्येनोदकेनवा ॥ पयोमूलफलैर्वापि पितृभ्यस्तृप्तिमाहरन् ॥ कुर्यादहरहःश्राद्धमन्नाद्येनोदकेनवा ॥ पितॄनुद्दिश्यविप्रांस्तु भोजयेद्विप्रमेववा इति ॥ एकस्यापिविप्रस्य सन्निहितालाभे भोजनपर्याप्तान्नासंभवविषयेच कात्यायनेनोक्तम् ॥ अदैवंनास्तिचेदन्योभोक्ताभोज्यमथापिवा ॥ अप्युद्धृत्ययथाशक्त्याकिंचिदन्नंयथाविधि ॥ पितृभ्यइदमित्युक्त्वा स्वधाकारमुदाहरेत् ॥ एतच्चान्नं ब्राह्मणस्थानंगत्वातस्मैदद्यात् ॥ यत्रपात्रंततोगतिरितिवचनात् ॥ सर्वथाविप्रालाभेतुतदन्नमग्नावप्सुवाक्षिपेत् गवेवादद्यात् ॥ ( तदाहदेवलः ) पात्राभावेक्षिपेदग्नौगवेदद्यात्तथाप्सुवाइति ॥ एतच्चश्राद्धंषड्दैवत्यंकर्त्तव्यम् ॥ ( तथाच व्यासः ) तत्तुषट्पुरुषंज्ञेयंदाक्षिणापिंडवर्जितमिति ॥ दक्षिणायांविकल्पः ॥ किंचिद्दत्त्वाविसर्जयेदितिप्रचेतसोक्तेः॥ ( हेमाद्रौ व्यासोऽपि॥नित्यश्राद्धंदेवपूजास

र्व्वमेवसदक्षिणम् ॥ ( मत्स्यपुराणे ) नित्यंतावत्प्रवक्ष्यामि अर्घ्यावाहनवर्जितम् ॥ अदैवंतद्विजानीयात् पार्वणंपर्वसुस्मृतम् ॥ ( भविष्यो त्तरेपि ) आवाहनंस्वधाकारः पिंडाग्नौकरणादिकम् ॥ ब्रह्मचर्यादिनियमो विश्वेदेवास्तथैव च ॥ नित्यश्राद्धेत्यजेदेतान् भोज्यमन्नंप्रकल्पयेत् इति ॥ भोज्यमन्नंनामयत्स्वयंयजमानोभुंक्ते इत्यर्थः ( हेमाद्रौ प्रचेताः ) नावाहनाग्नौकरणंनपिंडानविसर्जनम् ॥ अनुब्रह्मदक्षिणाश्चत्रिभ्य श्चातिथिकल्पनम् ॥ अनुब्रह्मप्रतिब्राह्मणंदक्षिणाश्चदद्यादित्यर्थः ॥ एतास्वत्यशक्तौपित्र्यबलिनैवनित्यश्राद्धसिद्धिः ॥ तथाच (छंदोगपरिशिष्टे) श्राद्धंवापितृयज्ञःस्यात्पित्र्योबलिरथापिवा ॥ इतिनित्यश्राद्धप्रयोगः ॥ ॥ अथतीर्थश्राद्धप्रयोगः ॥ ( तावद्ब्राह्मणानुज्ञानमुक्तंहेमाद्रौप्रभास खंडे ) तीर्थेविप्रवचोग्राह्यंस्नानश्राद्धार्चनादिषु ॥ ( पद्मपुराणेपि ) तीर्थेषुब्राह्मणंनैवपरीक्षेतकथंचन ॥ अन्नार्थिनमनुप्राप्तंभोजयेन्मनुशास नात् इति ॥ तीर्थश्राद्धे कुतपादिकालंनप्रतीक्षेत ॥ ( तथाच हारीतः ) तीर्थंद्रव्योपपत्तौचनकालमवधारयेत् ॥ पात्रंचब्राह्मणंप्राप्यसद्यः श्राद्धंविधीयते इति ॥ तीर्थंगयादि द्रव्यम् अन्नादिश्रोत्रियत्वादिविशेषेणविशिष्टंचब्राह्मणंप्राप्यनकालान्तरंप्रतीक्षेत ॥ किन्तुतस्मिन्नेवका लेश्राद्धंकुर्यात् ॥ अत्रचसद्यइतिवचनादावश्यकत्वंप्रतीयते इत्यर्थः ॥ ( प्रभासखंडे ) यात्रागतैर्नरैर्देवितत्रक्षेत्रनिवासिनः ॥ ब्राह्मणाःप्रथमं पूज्या दैवेपित्र्येचकर्मणि ॥ येषुतीर्थेषुयेविप्रायेदेवायाश्चमातृकाः ॥ तेषुतान्नावमन्येतयदीच्छेज्जीवितंचिरम् ॥ इति ॥ तीर्थेश्राद्धंपित्रादि नवदैवत्यंकार्यम् ॥ तथाच ( विष्णुधर्मोत्तरे ) महालयेगयाश्राद्धेवृद्धौचान्वष्टकासुच॥नवदैवत्यमत्रेष्टंशेषंपाट्पौरुषंविदुः॥इति॥ अन्वष्टकायां वृद्धौ चगयायां चमृताहनि॥पितामह्यादिभिःसार्द्धं मातुःश्राद्धंसमाचरेत् इतिशातातपोक्तेः ॥ मात्रादीनामप्युद्देश्यता तेननवदैवत्यमिति ॥ ( द्वैतनिर्णये ) निगमेतुद्वादशदैवत्यमुक्तम् ॥ महालयेगयाश्राद्धेवृद्धौचान्वष्टकासुच ॥ ज्ञेयंद्वादशदैवत्यंतीर्थेप्रौष्ठमघासुच इति ॥ अत्रतीर्थे

इतिविशेषवाक्यात् तीर्थश्राद्धंद्वादशदैवत्यंगम्यते ॥ ( अग्निपुराणेतु ) पित्रादिनवदैवंवातथाद्वादशदैवतमिति ॥ अत्र वाश्रवणात् विकल्पएवगम्यते सचदेशभेदादिनाव्यवस्थितः ॥ पितृव्यादीनांतुएकोद्दिष्टमेव ॥ तदशक्तौपिंडदानमात्रंकार्य्यम् ॥ तत्पत्नीनामपिपृथगेवैकोद्दिष्टादिकार्य्यमिति ॥ ( तीर्थश्राद्धेवर्ज्जनीयानि हेमाद्रौपद्मपुराणे ) श्राद्धंतत्रतुकर्त्तव्यमर्घ्यावाहनवर्जितम् ॥ श्वध्वांक्षगृध्रकाकाद्याश्च तिदृष्टानतत्क्रिया इति ॥ क्रियाःश्राद्धपिंडदानादिरूपाः श्वादयः सर्वेप्यशस्ताःनघ्नंतिनदूषयंतीत्यर्थः ॥ ( तत्रैव ) अर्घ्यमावाहनंचैवद्विजाङ्गुष्ठनिवेशनम् ॥ विकिरंतृप्तिप्रश्नश्चतीर्थश्राद्धेविवर्जयेत् ॥ ( पितृभक्तौ स्मृत्यन्तरे ) आसनंपिंडदानंचपुनःप्रत्यवनेजनम् ॥ अर्चनंदक्षिणांचान्नंदद्यात्तीर्थेष्वयंविधिः ॥ ( वायुपुराणेपि ) नावाहनंनदिग्बंधोनदोषोदृष्टिसंभवः ॥ सकारुण्येनकर्त्तव्यंतीर्थश्राद्धंविचक्षणैः ॥ पिंडासनंपिंडदानंपुनः प्रत्यवनेजनम् ॥ दक्षिणाचान्नसंकल्पस्तीर्थश्राद्धेष्वयंविधिः ॥ ( तत्रैव ) अन्यत्रावाहिताःकाले पितरोयांत्यमुंप्रति ॥ अत्रागतंसुतंदृष्ट्वास्वयमायांतिसर्वथा इति ॥ ( पिंडद्रव्याण्युक्तानि देवीपुराणे ) सक्तुभिःपिंडदानंस्यात् संयावैःपायसेनवा ॥ पिण्याकेनतिलानांवाभक्तिमाद्भिर्नरैःसदा ॥ ( अग्निपुराणेपि ) पायसेनाज्ययुक्तेनसक्तुनाचरुणातथा ॥ पिंडदानंतंडुलैश्चगोधूमैस्तिलमिश्रितैः ॥ ( विष्णुधर्मोत्तरे ) तीर्थश्राद्धेसदापिंडान्क्षिपेत्तीर्थेसमाहितः ॥ दक्षिणाभिमुखोभूत्वापित्र्यादिगृयाप्रकीर्तिता इति ॥ ( अथगयामधिकृत्यहेमाद्रौब्रह्मवैवर्त्ते ) उद्यतस्तुगयांगंतुंश्राद्धंकृत्वाविधानतः ॥ विधायकार्पटीवेषंग्रामस्यापिप्रदक्षिणम् ॥ ततोग्रामान्तरंगत्वाश्राद्धशेषस्यभोजनम् ॥ कृत्वाप्रतिदिनंगच्छेत्प्रतिग्रहविवर्जित इति ॥ श्राद्धंमातृपूर्वंनवदैवतं कार्पटीवेषंकाषायादिवस्त्रपरिधानरूपमित्यर्थः ॥ (श्राद्धतत्त्वे गौतमोपि) तीर्थयात्रासमारंभेतीर्थात्प्रत्यागमेपिच॥ वृद्धिश्राद्धंप्रकुर्वीतबहुसर्पिःसमन्वितम्॥वृद्धिश्राद्धं नांदीश्राद्धमित्यर्थः॥ (महाभारते) केशश्मश्रुनखा

दीनांवपनंचनशस्यते ॥ अतोनकार्य्यंवपनंमयाश्राद्धार्थिनासदा ॥ ( वायुपुराणेपि ) मुंडनंचोपवासश्चसर्वतीर्थेष्वयंविधिः ॥ वर्जयित्वाकुरुक्षेत्रं विशालंविरजांगयाम् ॥ ( तत्रैव ) पायसेनाथचरुणासक्तुनापिष्टकेनवा ॥ तंडुलैःफलमूलाद्यैर्गयायांपिंडपातनम् इति ॥ सक्तुर्य वपिष्टंपिष्टकंतंडुलपिष्टंतंडुलाअखंडाएवपायसादीनांपूर्वपूर्वाभावेउत्तरोउत्तरंग्राह्यमित्यर्थः ॥ अन्यदपितत्रैव ॥ तिलकल्केनखंडेन गुडेनसघृ तेनवा ॥ कवलैर्नवदध्नावा ऊर्षेनमधुनापिवा ॥ पिण्याकंसघृतंखंडंपितृभ्योऽक्षय्यमित्युत ॥ मुष्टिमात्रप्रमाणेनचार्द्रामलकमात्रकम् ॥ शमी पत्रप्रमाणेनपिंडंदद्याद्गयाशिरे ॥ उद्धरेत्सप्तगोत्राणिकुलमेकोत्तरंशतम् ॥ पितामाताचभार्याचभगिनीदुहितुःपतिः ॥ पितृष्वसामातृष्वसा सप्तगोत्रांश्चतारयेत् ॥ चतुर्विंशश्चविंशश्चषोडशद्वादशैवहि ॥ रुद्रादशवसुश्चैवकुलमेकोत्तरंशतमिति ॥ अथ गयाश्राद्धाधिकारिणः ॥ तत्र पुत्रपौत्रप्रपौत्राएवप्रधानाधिकारिणः तद्भिन्नाः सर्वेपिगौणाधिकारिणः॥( तथाच वायुपुराणे ) आत्मजोवान्यजोवापिगयाकूपेयदातदा ॥ यन्ना म्नापातयेत्पिंडंतंनयेद्ब्रह्मशाश्वतम् ॥ ( स्मृतिरत्नावल्याम् ) सवर्णाज्ञातयोमित्रबांधवाःसुहृदस्तथा ॥ तेपिभूयोगयांगत्वापिण्डंदद्युर्विधानतः॥ ( वह्निपुराणेपि )पुत्रोवाबन्धुपुत्रोवामित्रंवास्वजनोपिवा॥ऋणिकोवाथवादद्याद् द्वयोः स्वर्गस्तदातयोः॥जीवत्पितृकोजीवन्मातृकश्चगयाश्राद्धे सर्वथानाधिकारी॥ जीवत्पितृकोमृतमातृकस्तुयदिप्रसंगेनगयांप्राप्नोतितदा त्रिदैवत्य अन्वष्टकाश्राद्धमिवमातृश्राद्धमेवकुर्यात् ॥ (तदुक्तंत्रिस्थ लीसेतौ)गयांप्रसंगतोगत्वामातृश्राद्धंसमाचरेदिति॥तेनजीवत्पितृकस्यगयामुद्दिश्यगमनेनमातृश्राद्धंकरणम्॥आन्वष्टक्यंगयाप्राप्तौसत्यांयच्च क्षयाऽहनि ॥ मातुःश्राद्धंसुतःकुर्यात्पितर्यपिचजीवतीति मैत्रायणीयपरिशिष्टवाक्यात् ॥ अत्रप्राप्तावित्युक्त्याप्रासङ्गिकगमनंसूचितम्॥ ( गया श्राद्धकालोवायुपुराणे ) मीनेमेषेस्थितेसूर्ये कन्यायांकार्मुकेघटे ॥ दुर्लभंत्रिषुलोकेषुगयायांपिंडपातनम् ॥ मकरेवर्त्तमानेच ग्रहणेचंद्रसूर्य

योः ॥ दुर्लभंत्रिषुलोकेषु गयायांपिंडपातनम् ॥ गयायांसर्व्वकालेषु पिंडंदद्याद्विचक्षणः ॥ अधिमासेजन्मदिने अस्तेचगुरुशुक्रयोः ॥ नत्यक्तव्यंगयाश्राद्धं सिंहस्थेचबृहस्पतौ ॥ (वह्निपुराणे) गयाश्राद्धंप्रकुर्वीत संक्रांत्यादौविशेषतः॥कालेवाऽपरपक्षेवाचतुर्थ्यादितिथिष्वपीति॥ अपरपक्षे कृष्णपक्षे इत्यर्थः ॥ ( गयामहिमा ब्रह्मवैवर्त्ते ) फल्गुतीर्थेनरःस्नात्वा देवंदृष्ट्वागदाधरम् ॥ गयाशिरःपरिक्रम्य मुच्यतेब्रह्महत्यया॥ ( वायुपुराणे ) गयायांपिंडदानेनं यत्फलंलभतेनरः॥ नतच्छक्यंमयावक्तुं कल्पकोटिशतैरपि ॥ ( आदित्यपुराणे ) प्रत्यागतश्चाथगृहंपुनस्तु देवान्पितॄन्ब्राह्मणान् पूजयेच्च ॥ एवंकुर्वंस्तस्यतीर्थाद्यदुक्तंफलंतस्याभावत्रसंदेहोस्ति ॥ इतिश्रीगौडीयश्राद्धप्रकाशे पूर्वखंडे मुख्यश्राद्ध कल्पेपार्वणादिप्रयोगनिर्णयः ॥ ॥ अथानुकल्पिकाः पार्वणादिश्राद्धप्रयोगाः ॥ तत्रतावन्मुख्यकल्पाशक्तौ चानुकल्पानुष्ठानेमुख्यफला वाप्तिमाह—( शातातपः ) यथाकथंचिन्नित्यानिकुर्यादिन्दुक्षयादिषु ॥ पात्रद्रव्याद्यसंपत्तौ सोतिमुख्यफलंलभेदिति ॥ अस्यार्थः ॥ यथाक थंचित् ॥ कियदङ्गहान्या नित्यानि यावज्जीवमनुष्ठेयतया विहितानि दर्शपूर्णमासापिंडपितृयज्ञश्राद्धादीनि ॥ इंदुक्षयादिषु अमावास्या दिकालेषु पात्राणि पूर्वोक्तलक्षणाब्राह्मणाः द्रव्यंमधुपायसोदनापूपसूपशाकादि इत्यर्थः ॥ ( भविष्योत्तरे ) श्राद्धानुकल्पंयः कुर्यात् जात्यवस्थाद्यपेक्षया ॥ श्रद्धावान्सोऽप्यवाप्नोति मुख्यश्राद्धफलंनर इति ॥ जात्यपेक्षया यथाशूद्रः स्वकीयां शूद्रतामपेक्ष्य मंत्ररूपाङ्गहीनं पक्वान्नहीनं चानुकल्परूपंश्राद्धं करोति यथावा स्त्रीमंत्रहीनं अवस्थापेक्षया यथाऽनुपनीतोमंत्रहीनमपत्नीकः प्रवासी चाऽऽ महेमश्राद्धयोरन्यतरत् ॥ आदिशब्देनपात्रद्रव्याद्यसंपत्त्यपेक्षादि संगृह्यते इत्यर्थः ॥ मुख्यानुष्ठानशक्तिमांस्त्वनुकल्पमनुतिष्ठन् कर्मफलंनप्राप्नोतीत्याह ( हेमाद्रौ व्यासः ) शक्तःप्रथमकल्पस्य योऽनुकल्पेनवर्त्तते ॥ सनाप्नोतिफलंतस्य परत्रेतिसुनिश्चितम् ॥ इति ॥

अत्रानेकब्राह्मणसंपत्त्यभावे अनेकब्राह्मणभोजनपर्याप्तान्नासंभवेचैकेनैवब्राह्मणेनषड्दैवत्यंषट्पिंडात्मकंश्राद्धंकुर्यात् ॥ ( तथाच प्रभास खंडे ) ॥ द्रव्याभावेद्विजालाभे विधिंवक्ष्यामितत्त्वतः ॥ एकेनापिहिविप्रेण षट्पिंडंश्राद्धमाचरेत् ॥ षड्दर्भान् दापयेत्तस्मै षड्भ्योदद्यात्तथासनम्॥ षडर्घ्यावाहयेत्तत्र षड्भ्योदद्यात्तथाहविरिति॥द्विजालाभे इत्यनेकद्विजालाभे यदाचषड्दैवत्यमेकेनैवविप्रेण कुर्यात्तदा सर्वगुणसंपन्नंविप्रंनिमंत्रयेदित्यर्थः ॥ एकविप्रपक्षेवैश्वदेविकानुष्ठानप्रकारंकथंकार्यं तदाह ( वसिष्ठः ) यद्येकंभोजयेच्छ्राद्धे दैवंतत्रकथंभवेत् ॥ अन्नंपात्रेसमुद्धृत्य सर्वस्यप्रकृतस्यच ॥ देवतायतनेकृत्वा ततःश्राद्धंप्रवर्त्तयेत् ॥ प्रास्येदग्नौतदन्नंतु दद्याद्वाब्रह्मचारिणे इति ॥ अस्यार्थोहेमाद्रिणाकृतः ॥ प्रकृतश्राद्धार्थंसंपादितस्यतत्तज्जातीयस्यान्नस्य प्रत्येकमेकदेशं समुद्धृत्य देवतायतने वैश्वदेविकद्विजोपवेशनोचितेस्थाने पात्रमासाद्य तत्रपरिवेष्य तत्रत्यासनेच विश्वान्देवानावाह्य तान् पुरोवर्त्तिन इवानुध्याय पृथिवीतेपात्रमित्यादिकंजपित्वा पुरूरवार्द्रवसंज्ञकेभ्योविश्वेभ्योदेवेभ्यइदमन्नंस्वाहा ॐतत्सदित्युक्त्वाश्राद्धं पितृकर्म प्रवर्त्तयेदित्यर्थः ॥ ( ब्रह्माण्डपुराणेतु ) वैश्वदेविकस्थाने अग्निस्थापनमुक्तम् ॥ एकएवयदाविप्रो द्वितीयोनोपपद्यते ॥ पितॄणांब्राह्मणो योज्यो दैवेत्वग्निंनियोजयेत् ॥ अत्रैकस्मिन् ब्राह्मणे अनेकेषांपितॄणां तृप्तिप्रकारमाह ( शातातपः ) ॥ एकस्तुब्राह्मणःश्राद्धे स्वल्पंचप्रकृतंभवेत् ॥ त्रयश्चपितरःप्रोक्ताः कथंतृप्यंतुतेत्रयः ॥ उरस्यश्नंतिपितरो वामपार्श्वेपितामहाः ॥ प्रपितामहादक्षिणतः पृष्ठतस्त्वनुयायिनः ॥ अनुयायिनः पितृपत्नीप्रभृतय इत्यर्थः ॥ ( देवलस्मृतौतु ) पितामुंक्तेद्विजकरे मुखेभुंक्तेपितामहः ॥ प्रपितामहस्तुतालुस्थः कंठेमातामहःस्मृतः ॥ प्रमातामहस्तुहृदये वृद्धो

नाभौतु संस्थित इति ॥ वृद्धः वृद्धप्रमातामह इत्यर्थः॥ (अत्रैकस्यापि ब्राह्मणस्यालाभेऽनुकल्पोत्तरमुक्तं हेमाद्रौप्रभासखंडे) अलाभे ब्राह्मणस्यैव कौशःकार्य्योबटुःप्रिये ॥ एवमप्याचरेच्छ्राद्धं षड्दैवत्यं समाहितः ॥ विभक्तिंकारयेद्यस्तु पितृहासप्रजायते इति ॥ कौशः कुशमयः बटुः लघुमनुष्यप्रतिकृतिः ॥ तंबटुं ब्राह्मणत्वेनपरिकल्पय्य सर्वं श्राद्धमाचरेत् ॥ विभक्तिः कर्मणश्छेदो लोप इतियावत् तन्नकुर्यादित्यर्थः ॥ दर्भबटुषुश्राद्धप्रकारमाह ( श्राद्धतत्त्वेदेवलः ) ॥ निधायवादर्भबटूनासनेषुसमाहितः ॥ प्रैषानुप्रैषसंयुक्तं विधानंप्रतिपादयेत् इति ॥ आसनेषु ब्राह्मणोपवेशनोचितेषु स्वागतं भवताम् श्राद्धं करिष्ये श्राद्धे क्षणः क्रियताम् देवान् पितॄनावाहयिष्ये अग्नौ करणं करिष्ये इत्यादयः प्रश्नाः प्रैषाः ॥ एषामुत्तराणि अनुप्रैषाः ॥ तदुभयसंयुक्तंविधानं श्राद्धेतिकर्त्तव्यताकांडंस्वयमेवकुर्यात् इत्यर्थः ॥ तत्रसंकल्पितस्यान्नस्य यत् कर्त्तव्यं तदपि स एव आह ॥ पात्राभावेपरंकृत्वा पितृयज्ञविधिंनरः ॥ निर्दिश्याप्यन्नमुद्धृत्य यत्रपात्रंततोगतिः ॥ पात्राभावेक्षिपेदग्नौ गवेदद्यात्तथाप्सुवा ॥ नतुप्राशस्यलोकोऽस्ति पैतृकस्याविशेषत इति ॥ ब्राह्मणानामसंपत्तौ कृत्वादर्भमयान्द्विजान् ॥ श्राद्धंकृत्वाविधानेन पश्चाद्विप्रेषुदापयेदितिश्राद्धतत्त्वेसमुद्रकरधृतवचनात् ॥ मुख्यद्रव्यासंभवेचान्येप्यनुकल्पाः तत्रामश्राद्धाख्याः ॥ ( पराशरस्मृतिविष्णुपुराणयोः ) असमर्थोऽन्नदानस्य धान्यमामंस्वशक्तितः ॥ प्रदद्यात्तुद्विजातिभ्यः स्वल्पामपिचदक्षिणाम् ॥ अस्यार्थः— पक्वान्नाभावेश्राद्धयोग्यान्नप्रकृतिभूतं यवगोधूमतंडुलादि धान्यमेवविश्वान्देवान् पितॄंश्चोद्दिश्य पक्वान्नवत्त्यक्त्वा निमंत्रितद्विजेभ्यः समर्पयेदित्यर्थः ॥ अत्रप्रदेयधान्यपरिमाणमितिकर्त्तव्यतांचाह ( हेमाद्रौ व्यासः ) आमंदद्यात्तुकौंतेय दद्यादन्नंचतुर्गुणम् ॥ सिद्धान्नेतुविधिर्यः स्यादामश्राद्धेप्यसौविधिः ॥ आवाहनादिसर्वस्यात्पिंडदानंचभारत ॥ दद्याद्यच्चद्विजातिभ्यः शृतंवाऽशृतमेववा ॥ तेनाग्नौकरणंकुर्यात्

पिंडांस्तेनैवनिर्वपेत् इति ॥ चतुर्गुणाशक्तापेक्षांतरमपिक्षेनैवोक्तम् ॥ आमं दद्याद्द्विकौंतेय तद्दानंद्विगुणंभवेत् ॥ त्रिगुणंचतुर्गुणंवापि न त्वेकगुणमर्पयेत् इति षट्त्रिंशन्मतेपिंडदानेपक्षान्तरमुक्तम् ॥ आमश्राद्धंयदाकुर्यात् पिंडदानंकथंभवेत् ॥ गृहपाकात्समुद्धृत्य सक्तुभिःपा यसेनवा॥पिंडान्दद्याद्यथालाभं तिलैःसहविमत्सर इति ॥ विकिरादिकमप्यामद्रव्येणैवकर्त्तव्यम् ॥ ( तथाच प्रचेताः ) आमश्राद्धप्रदःपिंडां स्तथाग्नौकरणंचयत् ॥ तद्दद्यात्तन्नतेनैव यत्किंचिच्छ्राद्धादिकंभवेत् ॥ यत्किंचिद्यदन्यदपिविकिरादितदपितेनैवआमेनैवकर्त्तव्यमित्यर्थः ॥ शूद्रस्तु आमान्नेनैवश्राद्धंकुर्यान्नतुपक्वान्नेन ॥ ( तथाच सुमंतुः ) सदाचैवतुशूद्राणामामश्राद्धंविधीयते ॥ ( मात्स्येपि ) एवंशूद्रोपिसामान्यं वृद्धिश्राद्धंचसर्वदा ॥ नमस्कारेणमंत्रेण कुर्यादामान्नवत्सदा ॥ ( पराशरोपि ) आमान्नेनतुशूद्रस्य तूष्णींतुद्विज पूजनम् ॥ आमंशूद्रस्यपक्वान्नं पक्वमुच्छिष्टमुच्यते ॥ ( कूर्मपुराणेपि ) आमश्राद्धंद्विजःकुर्याद्वृषलस्तुसदैवहि ॥ ( सुमंतुप्रचेतसौ ) स्त्रीशूद्रः श्वपचश्चैव जातकर्मणिचाप्यथ ॥ आमश्राद्धंसदाकुर्याद्विधिनापार्वणेनतु ॥ श्वपचः स्त्रीरहित इत्यर्थः ॥ ( विष्णूशनसौ ) नपक्वंभोजयेद्विद्वान्सच्छूद्रोपिकदाचन ॥ भोजयन्प्रत्यवायीस्यान्नचतस्यफलंभवेत् ॥ ( मनुस्मृतौ ) नाद्याच्छूद्रस्यपक्वान्नंविद्वा नश्राद्धिनोद्विज इति ॥ सच्छूद्रा याज्ञवल्क्येनोक्ताः ॥ शूद्रेषुदासगोपालकुलमित्रार्द्धसीरिणः ॥ भोज्यान्नानापितश्चैवयश्चात्मानंनिवेदयेत् ॥ ( देवलस्तु ) स्वदासोनापितोगोपः कुंभकारःकृषीवलः ॥ ब्राह्मणैरपिभोज्यान्नाः पंचैतेशूद्रयोनय इति ॥ अत्रान्नशब्द आमान्नपरः नतुपक्वा न्नपर इत्यर्थः ॥ आमंशूद्रस्यपक्वान्नंपक्वमुच्छिष्टमुच्यते इतिशातातपीयात् ॥ ( तदनुष्ठानप्रकारस्तु भविष्योत्तरेदर्शितः ) धर्मेप्सवश्चधर्मज्ञा यदिशूद्राःप्रकुर्वते ॥ अग्नौकरणमंत्रश्चनमस्कारोविधीयते ॥ आवाहनादिकर्त्तव्यं यथाशूद्रेणतच्छृणु ॥ देवानांदेवनाम्नातुपितॄणांनामगो

त्रतः ॥ पिंडादीन्निर्वपेद्वीर नामतोगोत्रतस्तथा इति ॥ नमस्कारः नमइतिशब्दः ॥ अग्नयेकव्यवाहनायनमः सोमायपितृमतेनमः ॥ अग्नौक रणमित्युपलक्षणम् इत्यर्थः ॥ ( शूद्रस्यमंत्रांतरनिवृत्तिर्मत्स्यपुराणेऽभिहिता ) सर्वंश्राद्धंचकर्त्तव्यं शूद्रेणाप्येवमेवतु ॥ मंत्रवर्जंहिशूद्रस्य सर्वमेवविधीयते ॥ एवमेवपार्वणश्राद्धविधिनैवइत्यर्थः॥( ब्रह्मपुराणेपि ) अयमेवविधिःप्रोक्तः शूद्राणांमंत्रवर्जितः ॥ अमंत्रस्यतुशूद्रस्य विप्रोमं त्रेणगृह्यते इति ॥ शूद्राणांगोत्रस्याऽविद्यमानत्वात् काश्यपगोत्रम् ॥ ( तथाच श्रुतिः ) ॥ तस्मादाहुःसर्वाःप्रजाः काश्यप्य इति ॥ ( हेमाद्रौ व्याघ्रपादोपि ) गोत्रनाशेतुकाश्यप इति ॥ स्त्रीशूद्रकर्तृकेऽस्मिन्श्राद्धेस्वधास्थाने नमःपदप्रयोगः कर्त्तव्यः ॥ ( तथाच व्यासः ) शूद्रोवर्ण श्चतुर्थोपिवर्णत्वाद्धर्ममर्हति ॥ वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विना इति ॥ अयंसर्वोपिश्राद्धविधिः शूद्राणामामान्नेनाऽमंत्रकः कार्य इति विवेकः ॥ आमश्राद्धंशूद्रैरपराह्णेकर्त्तव्यम् ॥ तेषांमाध्यंदिनीयशाखयाकर्म ॥ ( तथाच श्राद्धतत्त्वेदक्षः ) शूद्रावाजसनेयिन इति ॥ आमान्न स्याप्यसंभवे हेमश्राद्धंकर्त्तव्यम् ॥ ( तथाच मरीचिः ) आमान्नस्याप्यभावेतु श्राद्धंकुर्वीतबुद्धिमान् ॥ धान्याच्चतुर्गुणेनैवहिरण्येनसुरोचिषा इति ॥ ( हेमाद्रौ धर्मः ) आमंतुद्विगुणंप्रोक्तं हेमतद्वच्चतुर्गुणम् ॥ अन्नाभावेद्विजातीनां ब्राह्मणस्याविशेषत इति ॥ एकैकब्राह्मणतृप्तिपर्याप्ता न्नसमर्थं धान्यंयावताल्भ्यते तावतश्चतुर्गुणंहेमएकैकस्मै ब्राह्मणाय इत्यर्थः॥( तत्रैव व्यासः ) द्रव्याभावेद्विजाभावे प्रवासेपुत्रजन्मनि ॥ हेम श्राद्धंप्रकुर्वीत यस्यभार्य्यारजस्वला इति ॥ हेमश्राद्धस्यक्वचिदपवादः ( षट्त्रिंशन्मते ) अन्नाभावेद्विजाभावे प्रवासेपुत्रजन्मनि ॥ हेम श्राद्धंप्रकुर्वीतवर्जयित्वाक्षयेऽहनि ॥ ( हेमाद्रौ संवर्तः ) पुत्रजन्मनिकुर्वीत श्राद्धंहेम्नैवबुद्धिमान् ॥ नपक्वेननचामेन कल्याणान्यभिकाम यन् ॥ पिंडदानप्रकारोऽप्यत्र हेमाद्रिभविष्योत्तरएवदर्शितः॥गृहपाकात्समुद्धृत्य सक्तुभिः पायसेनवा ॥ पिंडदानंप्रकुर्वीतहेमश्राद्धेकृतेसदा॥

शूद्रस्तुगृहपाकेन तत्पिंडान्निर्वपेत्तथा ॥ सक्तुमूलंफलंतस्य पायसंवाभवेत्स्मृतम् ॥ पिंडनिर्वपणार्थमितिशेषः ॥ ( तत्रैवषट्त्रिंशन्मते ) नामंत्रणाग्नौकरणं विकिरोनैवदीयते ॥ तृप्तिप्रश्नोऽपिनैवात्र कर्त्तव्यःकेनचिद्भवेत् इति ॥ इतिहेमश्राद्धप्रकारः॥यस्तुपिंडप्रदानादिबहुविधान युक्तंश्राद्धमनुष्ठातुमशक्तः ससांकल्पंश्राद्धंकुर्यात् ॥ ( तथाच हेमाद्रौ संवर्तः ) समग्रंयस्तुशक्नोति कर्तुंनैवेहपार्वणम् ॥ अपिसं कल्पविधिना कालेतस्यविधीयते ॥ पात्रभोज्यस्यचान्नस्य त्यागःसंकल्पउच्यते ॥ तत्प्रयुक्तोविधिर्यस्तु सतेनव्यपादिश्यते ॥ तावन्मात्रेणसंबद्धं श्राद्धंसांकल्पमुच्यते ॥ ( अत्रविशेषमाह व्यासः ) सांकल्पंतुयदाकुर्यान्नकुर्यात्पात्रपूरणम् ॥ नावाहनं नाग्नौकरणं पिंडांश्चैवनदापयेदिति ॥ ( हेमाद्रौ षट्त्रिंशन्मते ) अनग्निकोयदाविप्रः उत्सन्नाग्निस्तथैवच ॥ तदावृद्धिषुसर्वासु संक ल्प्यश्राद्धमाचरेत् इति ॥ साग्निकस्तु संकल्पविधिनाबदरादिमिश्रपिंडप्रदानयुक्तं वा वृद्धिश्राद्धंकुर्यादित्यर्थादिहगम्यते इति ॥ ( श्राद्धयोग्यद्विजद्रव्यालाभेचानुकल्पमाह देवलः ) पिंडमात्रंप्रदातव्यमलाभेद्रव्यविप्रयोः ॥ श्राद्धेऽहनितुसंप्राप्ते भवेन्निर शनोऽपिवा ॥ ( अत्राप्यसामर्थ्येकर्त्तव्यतामाह वृद्धवसिष्ठः ) किंचिद्दद्यादशक्तस्तु उदकुंभादिकंद्विजे ॥ तृणानिवागवेदद्यात्पिंडान्वाप्यथनिर्व पेत् ॥ तिलदर्भैःपितॄन्वापि तर्पयेत्स्नानपूर्वकम् ॥ ( हेमाद्रौ देवलः ) यदेवतर्पयत्यद्भिराहिताग्निर्दिनेदिने ॥ पित्र्यंतेनैवप्राप्नोतिवार्षिका दिक्रियाफलम् ॥ ( वाराहे ) यतः कुतश्चित्संप्राप्यागोभ्योवापिगवाह्निकम् ॥ पितॄनुद्दिश्यविप्रेभ्योदद्याच्छ्रद्धासमन्वितः ॥ ( हेमाद्रौ पुरा णान्तरे ) पराधीनःप्रवासीचनिर्धनोवापिमानवः ॥ मनसाभावयुक्तेनश्राद्धंकुर्यात्तिलोदकम् इति ॥ इत्यनुकल्पपार्वणादिश्राद्धप्रयोग निर्णयः॥ अथदौहित्रप्रतिपच्छ्राद्धप्रयोगः॥तच्चाश्विनशुक्लप्रतिपद्येवकर्त्तव्यम्॥(तथाच हेमाद्रौ संग्रहेच ) जातमात्रोऽपिदौहित्रोविद्यमानेपिमातु

ले॥कुर्यान्मातामहश्राद्धंप्रतिपद्याश्विनेसिते इति॥ ननु दर्शश्राद्धंगयाश्राद्धंश्राद्धंचापरपक्षिकम् ॥ नजीवत्पितृकः कुर्य्यात्तिलैस्तर्प्पणमेवच॥ इतिजीवत्पितृकस्यापरपक्षश्राद्धनिषेधात्कथमितिचेत् ॥ शिष्टाचारादितिचेद्ब्रूमः ॥ यद्यपरपक्षनिमित्तकं दौहित्रस्यश्राद्धंनिषिद्धंतर्हि प्रतिपद्यपिक्रियमाणं तन्निषिद्धमितिउच्यते ॥ कन्यागतेसवितरिपितरोयांतिवैसुतान् ॥ शून्याप्रेतपुरीसर्वायावद्वृश्चिकदर्शनमिति ॥ अत्र कन्यागतस्यापिश्राद्धनिमित्तत्वाद्दौहित्रैस्तन्निमित्तमेवश्राद्धंकर्त्तव्यंनापरपक्षनिमित्तमिति ॥ एतच्चत्रिदैवत्यपार्वणविधानेनकर्त्तव्यम् ॥ तथाच ॥ प्रतिपद्याश्विनेशुक्ले दौहित्रस्त्वेकपार्वणम् ॥ श्राद्धंमातामहंकुर्यात्सपितासंगवेसदा ॥ संगवे संगवकाले इत्यर्थः ॥ जातमात्रोपिदौहित्रोजीवत्यपिचमातुले॥प्रातःसंगवयोर्मध्ये आर्यस्यप्रतिपद्भवेत् इति॥ इदंचसपिंडकंकार्यमितिकेचित्॥पिंडरहितंजीवत्पितृकस्य इत्यपरे॥तत्र मुंडनंपिंडदानंचप्रेतकर्मचसर्वशः॥ नजीवत्पितृकःकुर्याद्गुर्विणीपतिरेवच॥इतिदक्षेणपिंडनिषेधात् पिंडरहितंजीवत्पितृकस्ययुक्तं इति॥अथ अष्टकान्वष्टकाश्राद्धम्॥ अष्टकाशब्देनपौषमाघफाल्गुनकृष्णाष्टम्यः॥ अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका इतिविष्णुस्मरणात्॥अष्टकानामनुपश्चाद्भवंतीत्यन्वष्टकाः अष्टकानामुपरितनानवम्यइत्यर्थः॥(पारस्करगृह्येपि)ऊर्द्ध्वमाग्रहायण्यास्तिस्रोऽष्टका इति॥ अस्यार्थः—ऊर्द्ध्वमुपरि आग्रहायण्याः मार्गशीर्ष्याः पूर्णिमायास्तिस्रअष्टकाः त्रीण्यष्टकानिकर्माणिभवंतीत्यर्थः॥(हेमाद्रौकूर्मपुराणेपि)अमावास्यष्टकास्तिस्रः पौषमासादिषुत्रिषु॥तिस्रश्चान्वष्टकाःपुण्या माघीपंचदशीतथा इति॥ (विष्णुधर्मोत्तरेपि) आग्रहायण्यतिक्रांतौकृष्णास्तिस्रोष्टकास्तथा ॥ इति केषांचिन्मते चतस्रएवअष्टकाः॥ हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाएकस्यांवाइतिशौनकाश्वलायनस्मरणात् ॥ पौषमासकृष्णाष्टमीमारभ्यतिस्रोऽष्टकाइत्येतन्मतपरिग्रहेचतुर्थीभाद्रपदाऽपरपक्षाष्टमीसन्निहितादर्शिता ॥ प्रौष्ठपद्यष्टकाभूयः पितृलोकेभ

विष्यति ॥ आयुरारोग्यदानित्यं सर्व्वकामफलप्रदा ॥ इत्यादि हेमाद्रौ पद्मपुराणीयेतिहासात् ॥ एतासुचापूपमांसशाका
निक्रमेणश्राद्धद्रव्याणि ॥ तत्रापूपस्याऽन्नरूपतयातस्यैवतृप्तिक्षमतयामुख्यत्वम् ॥ मांसशाकयोस्तु उपकरणत्वेनान्वयोयथासंख्यमष्टकाद्ये
मुख्यद्रव्यमोदनादिकमेव ॥ अत्रपारस्करगृह्यसूत्रम् ॥ ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टकाऐन्द्रीवैश्वदेवीप्राजापत्यापित्र्यापूपमां
७७ सशाकैर्यथासंख्यमिति ॥ अस्यार्थो हरिहरभाष्ये ॥ एवमष्टकाकर्माणिकर्त्तव्यत्वेनविधाय तत्र द्रव्यदेवतापेक्षायांद्रव्याणिदे
वताश्चाभिधत्ते ॥ तत्रप्रथमा ऐन्द्री इंद्रोदेवतायस्याइतिऐन्द्री इंद्रदैवत्येत्यर्थः ॥ द्वितीयावैश्वदेवी विश्वेदेवादेवतायस्या इतिवैश्वदेवी विश्वे
देवदैवत्येत्यर्थः ॥ तृतीयाप्राजापत्या प्रजापतिर्देवता यस्याइतिप्राजापत्या प्रजापतिदैवत्येतियावत् ॥ चतुर्थी पित्र्या पितरोदेवताय
स्याइति पित्र्यापितृदैवत्येत्यर्थः ॥ अपूपंचमांसंचशाकश्च अपूपमांसशाकास्तः अपूपमांसशाकैः यथासंख्यया यस्याः यथासंख्या॥ तामन
तिक्रम्ययथासंख्यंयजेतेत्यध्याहारः ॥ तदुक्तंभवतिप्रथमायामपूपेनइंद्रंयजेत् ॥ द्वितीयायांमांसेनविश्वान्देवान् ॥ तृतीयायांशाकेनप्रजा
पतिम्॥अत्रातिसृषुयथासंख्यंपित्र्यापीत्यनेनचतुर्थीअष्टकाविधीयतेतत्रापिशाकमुपकरणम्॥(तथाच ब्रह्मपुराणे) ॥वर्षासुमध्येशाकैश्चचतुर्थ्यामे
वसर्व्वदा इति ॥ वर्षासुमध्येऽपरपक्षस्यभाद्रकृष्णपक्षत्वात्तदष्टम्यतंवर्षामध्यत्वम्॥शाकैरितितस्यांब्रह्मपुराणेनशाकोपकरणविधानात् ॥ अत्र
चतसृष्वपिशाकमांसापूपशब्दाः श्राद्धेविहितस्यसर्व्वस्यापिभोज्यस्यतत्तद्द्रव्यप्रधानत्वप्रतिपादनपराः ॥ नतुद्रव्यान्तरनिवृत्तिपरा इति
हेमाद्रिप्रभृतयः ॥ एतच्चभाद्रपदाऽपरपक्षेमहालयाख्ये सप्तम्यादिषु त्रिष्वहःसु अष्टकावत्सर्वंकुर्यादितिवृत्तिकृत् ॥ अशक्तश्चेदेकस्यामष्ट
म्यामेवकार्यमिति हरदत्तः ॥ अत्रसप्तमीश्राद्धमाश्वलायनशाखिनाम् अष्टमीसाग्निकानांकालः अष्टकाश्राद्धविधानेसाग्निककर्तृकत्वलिंगदर्श

नादिति ॥ नवमीतुसाग्निनिरग्निसाधारणाऽवश्यकश्राद्धकालोज्ञातव्यइति ॥ अत्रश्राद्धंनवदैवत्यंकार्यम् ॥ ( तथाच कात्यायनः ) अन्वष्टकासुनवभिः पिंडैःश्राद्धमुदाहृतम् ॥ पित्रादिमातृमध्यंच ततोमातामहांतकम् ॥ ( हेमाद्रौ ब्रह्मांडेपि ) पितॄणांप्रथमंदद्यान्मातॄणांतदनंतरम् ॥ ततोमातामहानांच आन्वष्टक्येक्रमःस्मृतः ॥ ( तत्रैव छागलेयः ) केवलास्तुक्षयेकार्यावृद्धावादौप्रकीर्त्तिताः॥अन्वष्टकासुमध्यस्थानांत्याःकार्यास्तुमातर इति ॥ काशिकायांतुद्वादशदैवत्यमुक्तम् ॥ ॥ (तत्रैव पुराणसमुच्चये)॥ तामिस्रपक्षेनवमी यापुण्यातुनभस्यके॥चत्वारः पार्वणाःकार्याः पितृपूर्वामनीषिभिः॥पितॄणांतुत्रयःपिंडा मातृपूर्वास्तथात्रयः ॥ मातामहानामप्येवं त्रयोमातामहीषुच ॥ एवंकुर्वंस्ततःश्राद्धं मातॄणांचनदोषभाक् ॥ भवत्येवनरोविप्रा इतिब्रह्मानुशासनामिति ॥ इदं तु प्रेतपक्षनवमीपरंज्ञेयमिति ॥ केचिन्मातृश्राद्धमादौकार्यमिति पठंतितत्तुशाखान्तरविषयम् ॥ इदंचजीवत्पितृकेणापिकार्यम्॥(तदुक्तं निर्णयामृते) आन्वष्टक्यंगयाप्राप्तौसत्यांयच्चमृतेऽहनि॥मातुःश्राद्धंसुतःकुर्यात्पितर्यपिजीवति इति॥यद्यपिजीवत्पितृकस्यचतुष्टयान्वष्टकाआवश्यंकर्त्तव्या तथाप्यशक्तस्येयमावश्यकी ॥ सर्वासामेवमातॄणांश्राद्धंकन्यागतेरवौ ॥ नवम्यांहिप्रदातव्यंब्रह्मलग्नवरायतः॥पितृमातृकुलेनार्योयाःकाश्चित्प्रमृताः स्त्रियः॥ श्राद्धार्हामातरोज्ञेयास्तासांश्राद्धंप्रदापयेत् वृद्धौतुमातृपूर्वंहिश्राद्धंकुर्वीतबुद्धिमान् ॥ अन्वष्टकासुसर्वासुपितृपूर्वंसमाचरेत् इतिसुतेनावश्यकत्वोक्तेः ॥ अत्रसर्वासामित्युक्तेः स्वमातरि जीवंत्यामपिसपत्नमातृभ्योदद्यादिति ॥ केचित्भर्तृमरणोत्तरंपूर्वमृतमातृश्राद्धंनकार्यमितिवदंति तदयुक्तम्॥ श्राद्धंनवम्यांकुर्यात्तन्मृतेभर्तरि लुप्यते ॥ इतिस्मृत्यन्तरोक्तत्वात् ॥ अन्वष्टकासुवृद्धौचगयायांचमृतेऽहनि ॥ अत्रमातुःपृथक्श्राद्धम् न्यत्रपतिनासह इति ॥ हेमाद्रावग्निपुराणोक्तत्वाच्च ॥ इदंचजीवत्पितृकेणापिसपिंडंत्रिदैव्यंपार्वणंकार्यम् ॥ ( तथाचहेमाद्रौ विष्णुधर्मोत्तरे ) अन्वष्टकासुचस्त्रीणांश्राद्धं

कार्यंतथैवच ॥ इत्युपक्रम्य ॥ पिंडनिर्वपणंकार्यंतस्यामपिनृसत्तम इति ॥ अत्र सुवासिन्योपिभोजनीयाः ॥ ( तथाच मार्कण्डेयपुराणे )
भर्तुरग्रेमृतानारीसहवातेनयामृता ॥ तस्याःस्थानेनियुंजीतविप्रैःसहसुवासिनी इति इदंचनित्यम्॥ अष्टकान्वष्टकास्तिस्रस्तथैवचनृपोत्तम ॥
एतानिश्राद्धकालानिनित्यान्याहप्रजापतिः ॥ श्राद्धमेतेष्वकुर्वाणोनरकंप्रतिपद्यत इति हेमाद्रौविष्णुधर्मोत्तरात् ॥ ( कूर्मपुराणेपि ) यस्य
तेप्रतिगच्छेयुरष्टकारभिपूजिताः॥ मोघास्तस्यभवंत्याशाःपरत्रैवचसर्वश इति ॥ एतदकरणेप्रायश्चित्तम् ऋग्विधाने ॥ एभिर्द्युभिर्जपेन्मंत्रंशत
वारंतुतद्दिने ॥ अन्वष्टक्यंयदाशून्यंसंपूर्णंयातिसर्वदा इति ॥ इदंशूद्रानुपेताभ्यामपिकार्यमितिश्राद्धमयूखे ॥ अत्राष्टम्यपराह्णव्यापिनीग्राह्या॥
श्राद्धंपार्वणवद्भवेत् इत्याश्वलायनोक्तेपराह्णकालत्वाच्चपार्वणस्य ॥ अत्रकामकालौविश्वेदेवौ ॥ इष्टिश्राद्धेक्रतुदक्षावष्टम्यांकामकालकौ इति
सायणीये शंखोक्तेः॥ इत्यष्टकाऽन्वष्टकाश्राद्धम् ॥ ॥अथग्रहणनिमित्तकश्राद्धम्॥(तत्र ऋष्यशृङ्गः) चंद्रसूर्य्यग्रहेयस्तुश्राद्धंविधिवदाचरेत्॥
तेनैवसकलापृथ्वीदत्ताविप्रस्यवैकरे ॥ ( महाभारतेपि ) सर्वस्वेनापिकर्त्तव्यंश्राद्धंवैराहुदर्शने ॥ अकुर्वाणस्तुनास्तिक्यात्पङ्केगौरिवसी
दति ॥ ( विष्णुः ) राहुदर्शनदत्तंहिश्राद्धमाचंद्रतारकम् इति ॥ एतच्चश्राद्धंस्पर्शकालेआमान्नेनहेम्नावाकार्यं नत्वन्नेन ॥ ( तथाच पारिजाते
वृद्धवसिष्ठः ) त्रिदशाःस्पर्शसमयेतृप्यन्तिपितरस्तथा ॥ मनुष्यामध्यकालेतुमोक्षकालेतुराक्षसाः इत्युक्तत्वात्स्पर्शकालेकरणीयम् ॥
( हेमाद्रौ शातातपः ) आपद्यनग्नौतीर्थेचचंद्रसूर्यग्रहेतथा ॥ आमश्राद्धंप्रकुर्वीतहेमश्राद्धमथापिवा इति ॥ अस्यार्थः ॥ आपदीति आत्म
नोदेशकालादीनांचोपप्लवावस्थाकथिता तेनस्वाशक्तौदेशकालोपप्लवेपाकक्रिययाश्राद्धासंभावनयाऽऽमश्राद्धंकर्त्तव्यम् ॥ अनग्नाविति पाक
योग्याऽग्निरहितः नत्वनग्नौश्रौतस्मार्ताग्निरहितः ॥ तीर्थे इति पाकाऽसामर्थ्येसति चंद्रसूर्य्यग्रहे भोक्तुरभावे इत्यर्थः ॥ आशौचमध्येपिस्नान

श्राद्धादि कार्यम् ॥ ( तथाच वृद्धवसिष्ठः ) सूतकेमृतकेचैव नदोषोराहुदर्शने ॥ तावदेवभवेच्छुद्धिर्यावन्मुक्तिर्नदृश्यते इति ॥ ग्रहणदिने वार्षिकश्राद्धप्राप्तावपि आमान्नेनैवकुर्यात् ॥ ( तथाच निर्णयसिंधौप्रयोगपारिजाते गोभिलः ) दर्शेरविग्रहेपित्रोःप्रत्याब्दिकमुपस्थितम् ॥ अन्नेनासंभवेहेम्नाकुर्यादामेनवासुत इति ॥ ननु आमश्राद्धंग्रकुर्वीतमाससंवत्सरादृते इति ॥ अन्नेनैवाब्दिकं कुर्याद्धेम्नावामेन न क्वचिदिति मरीचिलौगाक्षिभ्यांनिषेधात् ॥ कथमामान्नेनश्राद्धमितिचेन्मरीचिलौगाक्ष्यादिवचनानि ग्रहणदिनातिरिक्तविषयाणीति हेमाद्रिप्रभृतिनिबंधेषूक्तत्वादितिचेद्ब्रूमः ॥ आमहेमश्राद्धे पिंडादिविचारः पूर्वमेवोक्तः ॥ एतच्चामश्राद्धंहेमश्राद्धंचपार्वणाधिकारिणापार्वणवद्देवकर्त्तव्यमितिमदनपारिजातः ॥ अत्रकेषुचिन्मंत्रेषूहोभवति ॥ ( अतएवतत्रैव मरीचिः ) आवाहनेस्वधाकारे मंत्राऊह्याविसर्जने ॥ अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिःस्मृत इति ॥ अस्यार्थः ॥ आवाहने आवाहनमंत्रे उशन्तस्त्वा उशन्त आवहपितॄन्हविषे अत्तवे इतिपदस्थानेस्वीकर्त्तव्ये इति पदस्योहःकर्त्तव्यः॥ स्वधाकारेनमोवः पितरइषे इत्यादिमंत्रे इषेइतिपदस्थाने आमद्रव्यायेतिपदस्योहः ॥ विसर्जने वाजेवाजे इति मंत्रे तृप्ता यातपथिभिर्देवयानैरित्यत्रतृप्ताइतिपदस्थानेतृप्यत इत्यूहः कार्य इत्यर्थः ॥ अथपिंडदानेनिषिद्धकालाः ॥ ( तत्राह हेमाद्रौपुलस्त्यः ) अयनद्वितयेश्राद्धं विषुवद्वितयेतथा॥युगादिषुचसर्वासु पिंडनिर्वपणादृते इति ॥ एतेषुकालेषुश्राद्धं पिंडनिर्वपणादृते पिंडदानंविनाकर्त्तव्यमित्यर्थः ॥ ( ब्रह्मपुराणे ) सर्वास्वपिसंक्रांतिषु पिंडनिर्वपणंविनाश्राद्धमुक्तम् ॥ अयनद्वितयेश्राद्धं विषुवद्वितयेतथा ॥ संक्रांतिषुचसर्वासु पिंडनिर्वपणादृते इति॥ एतत्कालनिमित्तकएवश्राद्धे पिंडनिर्वपणप्रतिषेधोयंनमृताहादिनिमित्तकेप्रसंगादयनादिषुपतिते इत्यर्थः ॥ ( बृहत्पाराशरः ) युगादिषुमघायांचविषुवत्ययनेतथा ॥ भरणीषुचकुर्वीत पिंडनिर्वपणंनहि इति ॥ ॥ इति श्रीबीकानेरराज्यान्तर्गत

श्रीरत्नगढनगरनिवासिनाश्रीवसिष्ठकुलोद्भवेनश्रीरामकृष्णाऽमरचंद्रपौत्रेणश्रीकस्तूरीचंद्रसूनुनाश्रीमहादेवभक्तवाजसनेयिना पण्डितगौड
श्रीचतुर्थीलालशर्मणाप्रणीतेगौडीयश्राद्धप्रकाशेपूर्वखंडेमुख्यकल्पानुकल्पपार्वणादिप्रयोगनिर्णयकथनंनामप्रथमंप्रकरणम् ॥ १ ॥

श्रीगणेशायनमः ॥ ॥ अथप्रेततृप्तिकरश्राद्धनिर्णयविधायकं द्वितीयप्रकरणम् ॥ तत्रतावदंत्येष्टिफलमाह ( गारुडे विष्णुः ) किंदत्तैर्बहुभि र्दानैः पित्रोरंत्येष्टिमाचरेत् ॥ तेनाग्निष्टोमसदृशं पुत्रःफलमवाप्नुयात् ॥ (तत्रैव) आत्मावैपुत्रनामास्तिपुत्रस्त्रातायमालयात् ॥ तारयेत्पितरंघो रात्तेनपुत्रःप्रचक्षते ॥ अतोदेयंचपुत्रेणश्राद्धमाजीवितावधि ॥ अतिवाहस्तदाप्रेतोभोगान्वैलभतेसदा ॥ तत्रैव ॥ धृत्वास्कंधेस्त्रपितरं यः श्मशानायगच्छति ॥ सोश्वमेधफलंपुत्रो लभतेचपदेपदे ॥ ( दिवोदासीये ) दृष्ट्वास्थानस्थमासन्नमर्धोन्मीलितलोचनम् ॥ भूमिस्थंपितरंपुत्रो यद्विदानंप्रदापयेत् ॥ तद्विशिष्टगयाश्राद्धादश्वमेधशतादपीति ॥ दानं मोक्षधेनुऋणधेनुपापधेन्वादि इत्यर्थः ॥ ( तथाच व्यासः ) आसन्नमृ त्युनादेयागौःसवत्सातुपूर्ववत् ॥ तदभावेतुगौरेवनरकोत्तारणायवै ॥ तदायदिनशक्नोतिदातुंवैतरणींतुगाम् ॥ शक्तोऽन्योऽरुक्तदादत्त्वादद्या च्छ्रेयोमृतस्यच ॥ ( मदनरत्नेजातूकर्ण्यः ) उत्क्रांत्यादीनिदानानिदशदद्यान्मृतस्यतु ॥ गोभूतिलहिरण्याज्यवासोधान्यगुडानिच ॥ रौप्यं लवणमित्याहुर्दशदानान्यनुक्रमात् ॥ एतानिदशदानानिनराणांमृत्युजन्मनोः ॥ कुर्यादभ्युदयार्थंतुप्रेतेपिहिपरत्रवै इति ॥ ( अष्टौदानानि गारुडे ) तिलालोहंहिरण्यंच कार्पासंलवणंतथा ॥ सप्तधान्यंक्षितिर्गाव एकैकंपावनंस्मृतम् ॥ एतान्यष्टौमहादानान्युत्तमानिद्विजातये ॥ आतुरेणतुदेयानि शय्यादानंतथैवच ॥ ( ब्रह्मपुराणे ) उत्क्रांतवैतरण्यौचदशदानानिचैवहि ॥ प्रेतेपिकृत्वातंप्रेतंशवधर्मेणदाहयेत् ॥

( अथदाहादिकर्म ॥ तत्र तावन्म्रियमाणस्य कृत्यं ( बृहद्गारुडे ) ॥ आसन्नमरणंज्ञात्वा पुरुषंस्नापयेत्ततः ॥ गोमूत्रगोमयसुमृत्तीर्थोदक

कुशोदकैः ॥ वाससीपरिधाप्याथधौतेतुशुचिनीशुभे ॥ दर्भानादौसमास्तीर्य्य दक्षिणाग्रान्विकीर्य्यच ॥ तिलान्गोमयलिप्तायांभूमौतत्र निवेशयेत् ॥ प्रागुदक्शिरसंवापिमुखेस्वर्णविनिक्षिपेत् ॥ शालग्रामशिलातत्र तुलसीचखगेश्वर ॥ विधेयंसंनिधौसर्पिर्दीपस्यज्वलनंपुनः ॥ नमोभगवतेवासुदेवायेतिजपस्तथा ॥ समभ्यर्च्यहृषीकेशंपुष्पधूपादिभिस्ततः ॥ प्रणिपातैःस्तवैःपुण्यैर्ध्यानयोगेनपूजयेत् ॥ दत्त्वादानंचविप्रेभ्योदीनानाथेभ्यएवच ॥ पुत्रेमित्रेकलत्रेचक्षेत्रधान्यधनादिषु ॥ निवर्त्तयेन्ममत्वंचविष्णोःपादौहृदिस्मरन् ॥ उच्चैःपुरुषसूक्तंचयदिश्रेष्ठापदस्तथा ॥ पुत्राद्याःप्रपठेयुस्तेम्रियमाणेनिजेजने ॥ ( छंदोगपरिशिष्टेतु ) दुर्बलंस्नापयित्वातुशुद्धचैलाभिसंवृतम् ॥ दक्षिणाशिरसंभूमौबर्हिष्मत्यांनिवेशयेत् ॥ घृतेनाभ्यक्तमाप्लाव्यसवस्त्रमुपवीतिनम् ॥ चंदनोक्षितसर्वांगंसुमनोभिर्विभूषितम् ॥ हिरण्यशकलान्यस्यक्षिप्त्वाच्छिद्रेषुसप्तसु ॥ मुखेवस्त्रंपिधायैनंनिर्हरेयुःसुतादयः ॥ इति ॥ अत्रदक्षिणाशिरसंसामगपरं सामगग्रंथेषूक्तत्वात् सामगेतरेषामुत्तरशिरस्त्वमितिश्राद्धतत्त्वोक्तेश्च ॥ चितायांदाहकालेतु दक्षिणाशिरसमुत्तानत्वंचकार्यम् ॥ ( तथाच कात्यायनस्मृतौ ) अथपुत्रादिराप्लुत्यकुर्याद्दारुचयंमहत् ॥ भूप्रदेशेशुचौदेशेपश्चाच्चित्यादिलक्षणे ॥ तत्रोत्तानंनिपात्यैनंदक्षिणाशिरसंमुखे इति ॥ ( तत्रैव ) अद्धमादहनंकार्यमासीनोदक्षिणामुखः ॥ सव्यंजान्वाच्यशनकैः सतिलं,पडदानवत् ॥ इत्यन्यत्रोक्तम् ॥ केचित् उत्तानत्वंसाग्निपरमितिवदंतितन्न ॥ सदग्धव्यउपेतश्चेदाहिताग्निर्यथार्थवदिति ॥ स्मृतिकौमुद्यांमदनपालेननिरग्नेरप्याहिताग्निवद्दाहोक्तेस्तस्यचकात्यायनेन तत्रोत्तानंनिपात्यैनंदक्षिणाशिरसंमुखे इत्युत्तानत्वोक्तेर्निरग्नेरपितदेवेति ॥ श्राद्धतत्त्वेतु दक्षिणाशिरसंसामगमधोमुखंपुमांसंन्यसेत् नार्यास्तूत्तानदेहत्वं सामगेतरेषांदक्षिणाशिरसमुत्तानत्वंच इत्युक्तंसामगेतरेषां यजुर्वेदिनामित्यर्थः ॥ तत्राऽस्माकयजुर्वेदीयगौडानांतु दक्षिणाशिरसमुत्तानत्वंच पूर्वोक्तकात्यायनवाक्यात् परंपरासिद्धत्वा

ल्लोकगर्हाभयाच्चेतिसिद्धांतः॥ (मरणसमयेसंन्याससमुक्तंगारुडे विष्णुना) आसन्नमरणेकुर्यात्संन्यासंचेद्विधानतः॥आवर्तेतपुनर्नासौब्रह्मभूयाय कल्पते ॥ आसन्नमरणोमर्त्यश्चेत्तीर्थंप्रतिनीयते ॥ तीर्थप्राप्तौभवेन्मुक्तिर्म्रियतेयदिमार्गगः॥ पदेपदेक्रतुसमंभवेत्तस्यनसंशयः ॥ अथमरणोत्तर कर्म्म॥तत्रतावत्पुत्रादीनांवपनमाह(मदनरत्ने गालवः) प्रथमेहनिकर्त्तव्यंवपनंचानुभाविनाम् ॥ प्रेतस्यकेशश्मश्रादिवापयित्वाथदाहयेत् इति॥ अनुभाविनःपुत्राःकनिष्ठभ्रातरश्च इत्यर्थः॥देवलोपि॥क्रियांचकुरुतेयस्तुतद्दिनेतस्यमुंडनमिति॥ (तदनंतरं बृहद्गारुडे) गतप्राणंततोज्ञात्वास्ना त्वापुत्रादिराश्रुतम्॥ शवंजलेनशुद्धेनक्षालयेदविचारयन् ॥ परिधाप्याऽहतेवस्त्रे चंदनैः प्रोक्षयेत्तनुम् ॥ ततोमृतस्यस्थानेवैएकोद्दिष्टंसमाचरेत् ॥ एकोद्दिष्टंपिंडदानमात्रमित्यर्थः॥ ( तत्रैव ) मृतस्योत्क्रांतिसमयेषट्पिंडान्क्रमशोददेत् ॥ मृतिस्थानेतथाद्वारिचत्वरेताक्ष्र्यकारणात् ॥ विश्रामे काष्ठचयनेतथासंचयनेचषट् ॥ काष्ठचयने चितायाम् संचयने अस्थिसंचयने इत्यर्थः ॥ मृतिस्थानेशवोनामभूमिस्तुष्यातिदेवता ॥ पांथो द्वारिभवेत्तेनप्रीतास्याद्वास्तुदेवता ॥ चत्वरेखेचरस्तेनतुष्येद्भूताधिदेवता ॥ विश्रामेभूतसंज्ञोयंतुष्टास्तेनादिशोदश ॥ चितायांसाधक इतिसंचितौप्रेतउच्यते इति ॥ अत्रदाल्भ्येनतुचत्वरेपिंडनोक्तंतत्स्थानेकुक्षिपिंडमुक्तं अत्रविकल्पोवृद्धाचारतः परिहार्यः ॥ ( अनंतरमपि गारुडे ) तिलदर्भघृतैर्घासिंगृहीत्वातुसुतादयः ॥ गाथांयमस्यसूक्तंवाप्यधीयानाव्रजंतिहि ॥ अहरहर्नीयमानोगामश्वंपुरुषंवृषम् ॥ वैवस्व तोनतृप्येतसुरयाइवदुर्म्मतिः ॥ इमांगाथामुपेतेतिसूक्तंवापथिसंपठेत् ॥ दक्षिणस्यांदिश्यरण्यंव्रजेयुःसर्व्वबांधवाः ॥ ततःशनैर्भूतलेवै दक्षिणाशिरसंशवम् ॥ स्थापयित्वाचिताभूमौ पूर्वोक्तंश्राद्धमाचरेत् ॥ तृणकाष्ठतिलाज्यादि स्वयंनिन्युःसुतादयः ॥ शूद्रानीतैःकृतंकर्म्म सर्व्वंभवतिनिष्फलम् ॥ प्राचीनावीतिनाभाव्यं दक्षिणाभिमुखेनच ॥ वेदीतत्रप्रकर्त्तव्या यथाशास्त्रमथांडज ॥ संमृज्यचोपलिप्याथ उ

ल्लिख्योद्धृत्यवेदिकाम् ॥ अभ्युक्ष्योपसमाधायवह्निंतत्रविधानतः ॥ पुष्पाक्षतैश्चसंपूज्यदेवंक्रव्यादसंज्ञकम् ॥ लोमभ्यस्त्वनुवाकेनहोमं
कुर्याद्यथाविधि ॥ त्वंभूतकृज्जगद्योनिस्त्वंलोकपरिपालकः ॥ उपसंहरतस्मात्त्वमेनंस्वर्गंनयामृतम् ॥ इतिक्रव्यादमभ्यर्च्य चितांतत्र
कारयेत ॥ श्रीखंडतुलसीकाष्ठैः पलाशाश्वत्थदारुभिः ॥ चितामारोप्यतंप्रेतं पिंडंतत्रप्रदापयेत् इति ॥ अग्निदानेमंत्रो वाराहपुराणे )
त्वातुदुष्करंकर्म्मजानतावाप्यजानता ॥ मृत्युकालवशंप्राप्यनरंपंचत्वमागतम् ॥ धर्माधर्मसमायुक्तं लोभमोहसमावृतम् ॥ दहेयंसर्वगात्रा
णिदिव्याँल्लोकान्सगच्छतु ॥ ज्वलमानंमहावह्निंशिरःस्थानेप्रदापयेत ॥ चतुर्वर्णेषुसंस्थानमेवंभवतिपुत्रिके ॥ ( गारुडे ) अर्द्धेदग्धे
तथादेहेदद्यादाज्याहुतिंततः ॥ अस्मात्त्वमधिजातोसि त्वदयंजायतांपुनः ॥ असौस्वर्गायलोकाय स्वाहाज्वलतुपावकः ॥ एवमाज्याहुतिं
दत्त्वातिलमिश्रांसमंत्रकाम् ॥ रोदितव्यंततोगाढमेवंतस्यसुखंभवेत् इति ॥ ( दाहानंतरकर्त्तव्यतापि तत्रैव ) ततःप्रदक्षिणंकृत्वाचिता
प्रस्थानवेक्षकाः ॥ कनिष्ठपूर्वाःस्नानार्थं गच्छेयुःसूक्तजापकाः ॥ ततोजलसमीपेतु गत्वाप्रक्षाल्यचांशुकम् ॥ प्राचीनावीतिनः सर्वेविशेयु
र्मौनिनोजलम् ॥ अपनःशोशुचदघमनेनपितृदिङ्मुखाः ॥ जलावघटनंचैवनकुर्युःस्नानकारकाः ॥ ततस्तटेसमागत्य शिखांबद्ध्वाकु
कुशान् ॥ दक्षिणाग्रान्हस्तयोस्तु कृत्वाथसतिलंजलम् ॥ आदायांजलिनायाम्यां दुःखीपैतृकतीर्थतः ॥ एकवारंत्रिवारंवादशवारमथापि
वा ॥ भूमावश्मनिवासर्वे क्षिपेयुर्वाग्यताःस्वगं ॥ तृप्यंतुतृप्यतांवापि तर्पयाम्युपतिष्ठताम् ॥ प्रेतैतदमुकगोत्रेत्युक्त्वैकंसमु
च्चरेत् ॥ ( कात्यायनोपि ) ॥ अथानवेक्षमेत्यापः सर्व्वएव शवस्पृशः ॥ स्नात्वा सचैलमाचम्य दद्युरस्योदकंस्थले ॥ गोत्र
नामपदांतेच तर्पयामीत्यनंतरम् ॥ दक्षिणाग्रान्कुशान्कृत्वा सतिलंतुपृथक्सकृत् इति ॥ ( पैठीनसिरपि ) प्रेतंमनसाध्यायन्दक्षिणामुखः

स्त्रीनुदकांजलीन्त्रिनयेत् इति ॥ एतत्तिलोदकदानंचायुग्मादिनेषुकार्यम् ॥ प्रथमतृतीयपंचमसप्तमनवमेषूदकक्रिया इतिगौतमस्मरणात् ॥ प्रेतोपकारविशेषापेक्षयातुयावंत्याशौचदिनानि तावदुदकदानावृत्तिः कार्या ॥ ( तथाच प्रचेताः ) दिनेदिनेंजलिपूर्णान्प्रदद्यात्प्रेतकारणात् ॥ तावद्वृद्धिश्चकर्त्तव्यायावत्पिंडःसमाप्यते ॥ इति यावद्दशमः पिंडः समाप्यते तावदंजलिवृद्धिःकार्येत्यर्थः ॥ अज्ञातिभिरपि क्वचिदुदकदानंकर्त्तव्यम् ॥ ( तदाह याज्ञवल्क्यः ) एवंमातामहाचार्यप्रेतानामुदकक्रिया ॥ कामोदकंसखिप्रत्तास्वस्त्रीयश्वशुरर्त्विजाम् ॥ इति ॥ प्रत्ता परिणीतादुहितृभगिन्यादिः स्वस्त्रीयो भागिनेयः ॥ अत्रप्रेतानांमातामहादीनांसपिंडवदुदकदानं नित्यं कार्यम्॥सख्यादीनांतुकामतः नानित्यतया अकरणेप्रत्यवायाभावादित्यर्थः ॥ क्लीबभर्तृगर्भद्रुहस्त्रीपतितैरुदकंनकार्यम् ॥ ( तथाच मनुः ) क्लीबाद्यानोदकंकुर्युःस्तेनाव्रात्याविधर्मिणः ॥ गर्भभर्तृद्रुहश्चैवसुराप्यश्चैवयोषितः ॥ उदकदानानंतरंपिंडदानमपिकर्त्तव्यम् ॥ ( तथा विष्णुः ) प्रेतस्योदकंनिर्वपणंकृत्वा एकंपिंडंकुशेषुदद्युरिति ॥ ( अनंतरं गारुडे ) ततउत्तीर्यौदकाद्वस्त्राणिपरिधायच ॥ स्नानवस्त्रंसकृत्पीड्यविशेयुःशुचिभूतले ॥ अश्रुपातंनकुर्वीतदत्त्वादाहजलांजलिम् ॥ श्लेष्माश्रुबांधवैर्मुक्तंप्रेतोभुंक्तेयतोवशः ॥ अतोनरोदितव्यंहिक्रियाःकार्याःस्वशक्तित इति ॥ पिंडोदकदानानंतरंबांधवैरातुराश्वासनंकार्यम् ॥ (तथाच याज्ञवल्क्यः) कृतोदकान्समुत्तीर्णान्मृदुशाद्वलसंस्थितान् ॥ स्नातानपवदेयुस्तानितिहासैःपुरातनैः इति ॥ इतिहासस्तुतेनैवदर्शितः ॥ मानुष्येकदलीस्तंभेनिःसारेसारमार्गणम् ॥ करोतियःससंमूढोजलबुद्बुदसन्निभे ॥ पंचधासंभृतःकायोयदिपंचत्वमागतः ॥ कर्मभिःस्वशरीरोत्थैस्तत्रकापरिदेवना ॥ गंत्रीवसुमतीनाशमुदधिर्दैवतानिच ॥ फेनप्रख्यःकथंनाशंमर्त्यलोकोनयास्यति इति ॥ ( कात्यायनोपि ) माशोकंकुरुतानित्येसर्वस्मिन्प्राणधर्मणि ॥

धर्मंकुरुतयत्नेनयोवः सहगमिष्यति ॥ ( याज्ञवल्क्यगरुडपुराणयोः ) एवंसंश्रावयेत्तत्रमृदुशाद्वलसंस्थितान् ॥ तेऽपिसंश्रुत्यगच्छेयुर्गृहंबाल
पुरःसराः ॥ विदश्यनिंबपत्राणिनियताद्वारिवेश्मनः ॥ आचम्यवह्निंसलिलंगोमयंगौरसर्षपान् ॥ दूर्वाप्रवालंवृषभमन्यदप्यथमंगलम् ॥ प्रवि
शेयुः समालभ्यकृत्वाश्मनिपदंशनैः ॥ तेप्रविश्यगृहंसर्वेसुताद्याश्चसपिंडका इति ॥ अथाशौचनियमाः ॥ ( तथाच गारुडे ) क्रीतलब्धा
शनाःसर्वे स्वपेयुस्तेपृथक्पृथक् ॥ अक्षारलवणान्नाःस्युर्निमज्जेयुश्चतेन्वहम् ॥ अमांसभोजनाश्चाधःशयीरन्ब्रह्मचारिणः ॥ परस्परंनसंस्पृ
ष्टादानाध्ययनवर्जिताः ॥ मलिनाधोमुखादीनाः सर्वभोगविवर्जिताः ॥ अंगसंवाहनंकेशमार्जनंवर्ज्जयंतिते ॥ मृन्मयेपत्रजेवापिभुंजीरंस्तेच
भाजने ॥ उपवासंतुतेकुर्युरेकाहमथवात्र्यहम् ॥ ( मरीचिः ) प्रथमेह्नितृतीयेचसप्तमेदशमेतथा ॥ ज्ञातिभिःसहभोक्तव्यमेतत्प्रेतेषुदुर्ल
भम् ॥ भोजनंचादिवैव ॥ क्रीत्वालब्ध्वावादिवान्नमश्नीयुरितिपारस्करोक्तेः ॥ ( शंखः ) दानंप्रतिग्रहोहोमः स्वाध्यायःपितृकर्मच ॥ प्रेत
पिंडक्रियावर्ज्यमाशौचेविनिवर्तते ॥ इतिदाहप्रयोगः ॥ प्रथमेहनिएकाहंत्र्यहंवाप्रेतमुद्दिश्यजलंक्षीरंचाकाशेशिक्यादौमृन्मयेपात्रेस्थापनी
यम् ॥ ( तदाह याज्ञवल्क्यः ) जलमेकाहमाकाशेस्थाप्यंक्षीरंचमृन्मये इति ॥ ( गरुडपुराणेपि ) सूर्येस्तमागतेतार्क्ष्यश्मशानेवाचतुष्पथे ॥
दुग्धंचमृण्मयेपात्रेतोयंदद्याद्दिनत्रयम् ॥ अपक्वंमृण्मयंपात्रंक्षीरनीरप्रपूरितम् ॥ काष्ठत्रयंगुणैर्बद्धंधृत्वामंत्रंपठेदिमम् ॥ श्मशानाऽनलदग्धोसि
परित्यक्तोसिबांधवैः ॥ इदंनीरमिदंक्षीरमत्रस्नाहिपिबेदंपिब इति ॥ अथास्थिसंचयनम् ॥ तच्चप्रथमतृतीयसप्तमनवमदिवसानामन्यतमेस्मि
न्कार्यम् ॥ ( तथाचपराशरमाधवे संवर्त्तः ) प्रथमेऽह्नितृतीयेवासप्तमेनवमेपिवा ॥ अस्थिसंचयनंकार्यंदिनेतद्गोत्रजैःसह ॥ तदूर्ध्वमंगसंस्पर्शः
सपिंडानांविधीयते ॥इति॥ तत्रविप्राणांविशेषतश्चतुर्थेऽह्नि ॥ राज्ञांपंचमे ॥ विशांनवमे शूद्राणांदशमेदिनेकार्यम्॥ (तथाचब्रह्मपुराणे) चतुर्थे

ब्राह्मणानांतुपंचमेहनिभूभुजाम् ॥ नवमेवैश्यजातीनांशूद्राणांदशमात्परम् ॥ कर्त्तव्यंतुनरैःश्राद्धंदेशकालाऽविरोधतः ॥ इति ॥ ( माधवे विष्णुरपि ) चतुर्थेदिवसेऽस्थिसंचयनंकुर्युः तेषांगंगांभसिप्रक्षेपः ॥ इति ॥ ब्राह्मणादीनांचतुर्थादिदिनेष्वसंभवेसंवर्त्तोक्तप्रथमादिदिवसेष्व स्थिसंचयःकर्त्तव्यः ॥ त्र्यहाशौचेतुतृतीयेह्निसर्वेषांसद्यःशौचेदाहानंतरमेवकर्त्तव्यः ॥ ( तथाच ब्रह्मपुराणमदनरत्नाऽपरार्केषु ) सद्यःशौचेतथै काहेसद्यःसंचयनंभवेत् ॥ त्र्यहाशौचेतृतीयेह्निकर्त्तव्यस्त्वास्थिसंचय इति ॥ ( अस्थिसंचयनेतिथिवारनक्षत्रनिषेधोयमेनोक्तः ) भौ मार्कमंदवारेषुतिथियुग्मेविवर्जयेत् ॥ वर्ज्जयेदेकपादर्क्षेद्विपादर्क्षेऽस्थिसंचयम् ॥ प्रदातृजन्मनक्षत्रेत्रिपादर्क्षेविशेषतः ॥ ( माधवीये वृद्धम नुः ) वस्वंतार्द्धादितः पंचनक्षत्रेषुत्रिजन्मसु ॥ द्वित्रिपादर्क्षयोश्चैवनंदायांचाविशेषतः इति ॥ ( तत्प्रकारस्तु ब्रह्मपुराणे ) श्मशा नदेवतायागं चतुर्थेदिवसेचरेत् ॥ मृन्मयेषुचभांडेषु कुंभेषुरुचकेषुवा ॥ सपक्वैर्भक्ष्यभोज्यैश्चपायसैःपानकैस्तथा ॥ फलैर्मूलैर्वनोत्थै श्चपूज्याःक्रव्याददेवताः ॥ धूपोदीपस्तथामाल्यमर्घ्यंदेयंत्वरान्वितैः ॥ तत्रपात्राणिपूर्णानिश्मशानाग्रेःसमंततः ॥ निवेदयाद्विवक्तव्यंतैःसर्वैरनहं कृतैः ॥ नमःक्रव्यादमुख्येभ्योदेवेभ्यइतिसर्वदा ॥ येश्मशानेदेवाःस्युर्भगवंतःसनातनाः ॥ तेऽस्मत्सकाशाद्गृह्णन्तुबलिमष्टांगमक्षयम् ॥ प्रेतस्या स्यशुभाँल्लोकान्प्रयच्छंतुचशाश्वतान् ॥ अस्माकमायुरारोग्यंसुखंचददताचिरम् ॥ एवंकृत्वाबलीन्सर्वान् क्षीरेणाभ्युक्ष्यवाग्यतः ॥ एवंदत्त्वा बलिंचैवदद्यात्पिंडत्रयंबुधः ॥ एकंश्मशानवासिभ्यःप्रेतायैवतुमध्यमम् ॥ तृतीयंतत्सखिभ्यश्चदक्षिणासंस्थमादरात् ॥ ततोयज्ञियवृक्षात्तथां शाखामादायवाग्यतः ॥ प्रेतस्यास्थीनिगृह्णातिप्रधानाङ्गोद्भवानिच ॥ शिरसोवक्षसःपाण्योः पार्श्वाभ्यांचैवपादतः ॥ पंचगव्येनसंस्नाप्य क्षौ मवस्त्रेणवेष्टयच ॥ प्रक्षिप्य मृन्मयेभांडेनवेसाच्छादनेशुभे ॥ अरण्येवृक्षमूलेवाशुद्धेसंस्थापयत्यपि ॥ गृहीत्वास्थीनितद्भस्म नीत्वातोयेत्रि

निक्षिपेत् ॥ तोये गंगादिके ततःसंमार्ज्जनंभूमेः कर्त्तव्यंगोमयांबुभिः ॥ पूजांचपुष्पधूपाद्यैर्बलिभिःपूर्ववत्क्रमात् इति ॥ ( अथतीर्थेऽ
स्थिक्षेपविधिरपि ब्राह्मे ) तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीजले ॥ कश्चित्क्षिपतितत्पुत्रोदौहित्रो वासहोदरः ॥ मातृकुलंपितृकुलंव
र्ज्जयित्वानराधमः ॥ अस्थीन्यन्यकुलोत्थानिनीत्वाचांद्रायणंचरेत् इति ॥ एतच्च द्रव्यादिलोभेन नयतः न श्रेयोर्थिन इति हरिहरः ॥
( गंगादिषुप्रक्षेपप्रकारो ब्रह्माण्डपुराणे ) स्नात्वाततः पंचगव्येनसिक्त्वाहिरण्यमध्वाज्यतिलैश्चयोज्य " ततस्तुमृत्पिंडपुटेनिधायपश्यन्दिशंप्रे
तगणोपरूढाम् ॥ नमोस्तुधर्मायवदेत्प्रविश्यजलंसमेप्रीतइतिक्षिपेच्च ॥ उत्थायभास्वंतमवेक्ष्यसूर्यं सदक्षिणांविप्रमुखायदद्यात् ॥ एवंकृते
प्रेतपुरस्थितस्य स्वर्गेगतिःस्यात्तु महेंद्रतुल्या ॥ क्षीणेषुपुण्येषुपतन्दिविस्थो नैवंविदोस्यच्यवनंद्युलोकात् ॥ ( यमस्मृतौ ) गंगातोयेषुयस्या
स्थि क्षिप्यतेशुभकर्मणः ॥ नतस्यपुनरावृत्तिर्ब्रह्मलोकात्सनातनात् ॥ ( गारुडेपि ) यावदस्थिमनुष्यस्य गंगातोये निमज्जति ॥ तावद्वर्ष
सहस्राणिस्वर्गलोकेमहीयते इति ॥ इदमधिमासशुक्रास्तादौनकार्यं दशाहमध्येतुनदोषः॥ (तथाच मदनरत्नेवृद्धमनुः) दशाहस्यान्तरेयस्य
गंगातोयेऽस्थिमज्जति ॥ गंगायांमरणंयादृक्तादृक्फलमवाप्नुयात् इति ॥ अथप्रेतपिंडप्रयोगः॥ पिंडोदकदानंच यावदाशौचंकार्यम् ॥ तथाच
(विष्णुः) यावदाशौचंतावत्प्रेतस्योदकंपिंडंचदद्युः॥(पारस्करोपि)प्रेतेभ्यःसर्ववर्णेभ्यःपिंडान्दद्याद्दशैवतु ॥(हेमाद्रौ ब्रह्माण्डे) प्रेतीभूतस्यसततं
भुविपिंडजलंतथा ॥ सतिलंसकुशं दद्याद्बहिर्जलसमीपतः ॥ इति ॥ उदकदानपिंडदानंनसर्वैः कर्त्तव्यमपितुपुत्रेणैव तदभावेसन्निहितेन
सपिंडेन तदभावेमातृसपिंडादिना ॥ ( तथाह गौतमः ) पुत्राभावेसपिंडाः मातृसपिंडाः शिष्याश्चदद्युःतदभावेऋत्विगाचार्यौ इति ॥ पुत्रे
ष्वपिज्येष्ठएवपिंडंदद्यात् ॥ ( तथाच मरीचिः ) सर्वैरनुमतिंकृत्वाज्येष्ठेनैवतुयत्कृतम् ॥ द्रव्येणवाऽविभक्तेनसर्वैरेवकृतंभवेत् इति ॥ यदा

पुत्राऽसन्निधानादिनाऽन्यःपिंडदानंकरोति तदादशाहमध्येपुत्रसान्निध्येपिसएवदशाहंपिंडंदद्यात ( तदुक्तं गृह्यपरिशिष्टे ) असगोत्रःसगोत्रो वायदिस्त्रीयदिवापुमान् ॥ प्रथमेऽहनियोदद्यात्सदशाहंसमापयेत् ॥ ( शुद्धितत्त्वेवायुपुराणेपि ) असगोत्रःसगोत्रोवा यदिस्त्रीयदिवापुमान्॥ यश्चाग्निदाताप्रेतस्य पिंडंदद्यात्सएवहि ॥ ( श्राद्धदेशाः भविष्योत्तरे ) गृहद्वारेश्मशानेच तीर्थेदेवगृहेतथा ॥ यत्राद्योदीयतेपिंडस्तत्र सर्वंसमापयेत् ॥ ( आदित्यपुराणे ) शुचौदेशेतुनद्यांवाजीर्णंतोयेप्रवाहयेत् ॥ ( ब्रह्मपुराणे ) ग्रामाद्बहिश्चकर्त्तव्यंजलाशयसमीपतः ॥ पिंडदानंदशाहानिप्रेतारण्यसमाश्रितैः ॥ अरण्येपिंडदानंतुमोहान्नक्रियतेयदि ॥ तदारौरवमायाति प्रमीतः प्रथमेऽहनि ॥ द्रव्य नियमो गरुडपुराणे ) शालिनासक्तुभिर्वापिशाकैर्वाप्यथनिर्वपेत् ॥ प्रथमेऽहनियद्द्रव्यंतदेवस्यादृशाह्निकम् ॥ ( भविष्योत्तरे ) ओदना मिषसक्तूनांशाकमूलफलादिषु ॥ प्रथमेऽहनियद्द्यात्तद्द्यादुत्तरेऽहनि ॥ ( तद्विधिरादित्यपुराणे ) पितृशब्दंस्वधांचैवनप्रयुंजीतकर्हिचित् ॥ उपतिष्ठतामयंपिंडः प्रेतायेति समुच्चरेत् ॥ तूष्णींधूपंप्रसेकंच दीपंपुष्पंतथैवच ॥ अशुद्धास्त्रिषुवर्णेषु इदंदद्यान्नसंशयः ॥ ( ब्रह्मपुराणेपि ) मृन्मयंभांडमादाय नवंस्नातःसुसंयतः ॥ लगुडंसर्वदुष्टघ्नं गृहीत्वातोयमानयेत् ॥ ततश्चोत्तरपूर्वस्यामग्निंप्रज्वालयेद्दिशि ॥ तंडुलप्रसृतिंतत्र त्रिःप्रक्षाल्यपचेत्स्वयम् ॥ सपवित्रैस्तिलैर्मिश्रं कृमिकेशविवर्जितम् ॥ द्वारोपांतेततःक्षिप्त्वा सुशुद्धांगौरमृत्तिकाम् ॥ तत्पृ ष्ठेप्रस्तरेद्दर्भान्याम्याग्रान्देशसंभवान् ॥ ततोऽवनेजनंदद्यात्संस्मरन्गोत्रनामनी ॥ तिलसर्पिर्मधुक्षीरैः संसिक्तंतमेवहि ॥ दद्या त्प्रेतायपिंडंतु दक्षिणाभिमुखःस्थितः ॥ फलमूलगुडक्षीरतिलैर्मिश्रंतुकुत्रचित् ॥ अर्घ्यैःपुष्पैस्तथाधूपैर्दीपैस्तोयैश्चशीतलैः ॥ ऊर्णातंतुमयैःशुद्धैर्वासोभिःपिंडमर्चयेत् ॥ प्रयातियावदाकाशंपिंडाद्बाष्पमयीशिखा ॥ तावत्तत्संमुखंतिष्ठेत्पिंडंतोयेक्षिपेत्ततः ॥ एकतोया

अंजलिश्चैवपात्रमेकंचदीयते ॥ द्वितीयेद्वौतृतीयेत्रीन्चतुर्थेचतुरस्तथा ॥ पंचमेपंचषष्ठेषट्सप्तमेसप्तएवच ॥ अष्टमेष्टौचनवमेनवैवदशमेदश ॥ येनस्युःपंचपंचाशत्तोयस्यांजलयःक्रमात् ॥ तोयपात्राणितावंतिसंयुक्तानितिलादिभिः इति ॥ ( तत्रदशपिंडनिष्पाद्यावयवाःहेमाद्रिब्रह्मगारुडेषु ) शिरस्त्वाद्येनपिंडेन प्रेतस्यक्रियतेसदा ॥ द्वितीयेनतुकर्णाक्षिनासिकाश्चसमासतः ॥ गलांसभुजवक्षांसि तृतीयेनयथाक्रमम् ॥ चतुर्थेनतुपिंडेन नाभिलिंगगुदानिच ॥ जानुजंघेतथापादौ पंचमेनतुसर्वदा ॥ सर्वमर्माणिषष्ठेन सप्तमेनचनाडयः ॥ दंतलोमान्यष्टमेन वीर्यंतुनवमेनच ॥ दशमेनतुपूर्णत्वं तृप्तताक्षुद्विपर्ययः इति ॥ ( त्र्यहाशौचे दशपिंडदानप्रकारमाह पारस्करः ) प्रथमेदिवसेदेयास्त्रयःपिंडाःसमाहितैः ॥ द्वितीयेचतुरोदद्यादस्थिसंचयनंतथा ॥ त्रींस्तुदद्यात्तृतीयेह्निवस्त्रादिक्षालनंतथा इति ॥ सद्यःशौचविषयेतुयुगपद्दशपिंडदानमितिहेमाद्रौ ॥ ( त्र्यहाशौचे अंजलीनाह गारुडेविष्णुः ) यथाहित्र्यहमाशौचंतदावांजलयोदश ॥ त्रयोंजलयएवंतु प्रथमेऽहनिवैतदा ॥ चतुरस्तुद्वितीयेऽह्नितृतीयेस्युस्त्रयस्तथा ॥ यदाशतांजलिंपक्षिण्याद्येत्रिंशत्तदाहनि ॥ चत्वारिंशद्वितीयेऽह्नि त्रिंशदह्नितृतीयके इति ॥ अथनवश्राद्धं तच्चविषमादिनेषुप्रथमतृतीयपंचमसप्तमनवमैकादशेषुकार्यम् ॥ ( तथाच गरुडपुराणे ) प्रथमेऽह्निद्वितीयेच पंचमेसप्तमेतथा ॥ नवमैकादशेचैव नवश्राद्धंप्रकीर्तितम् ॥ ( बोधायनोपि ) मरणाद्विषमेषुदिनेष्वेकैकंनवश्राद्धंकुर्यात् इति ॥ एवन्नवश्राद्धं केचित्कुर्वंतितत्राधिकफलंभवति ॥ अकरणेप्रत्यवायोनास्ति ॥ इच्छाचेत्कर्तव्यमितिबृहदत्येष्टिपद्धतौ ॥ अथप्रेतश्राद्धेषुकेषांचित्पदार्थानामनुष्ठानम् ॥ प्रेतश्राद्धंतुयावत्सापिंडनंतावत् ॥ सापिंडीकरणान्तातुज्ञेयाप्रेतक्रियाबुधैरितिशातातपस्मरणात् तत्रतावत्प्रेतक्रियाऋजुदर्भैरेवकार्या ॥ ( तथाच हेमाद्रौ विष्णुपुराणे ) सपिंडीकरणंयावदृजुदर्भैःपितृक्रियाः ॥ सापिंडीकरणादूर्ध्वंद्विगुणैर्विधिवद्भवेत् ॥ द्विगुणैर्मोटकरूपैरि

त्यर्थः ॥ हेमाद्रिकारिका गारुडेषु ॥ आशिषोद्विगुणादर्भा जपाशीःस्वस्तिवाचनम् ॥ पितृशब्दःस्वसम्बन्धः शर्मशब्दस्तथैवच ॥ पात्रालंभावगाहश्च उल्मुकोल्लेखनादिकम् ॥ तृप्तिप्रश्नश्चविकिरःशेष प्रश्नःस्तथैवच ॥ प्रदक्षिणविसर्गश्च सीमांतगमनंतथा ॥ अष्टादशपदार्थांश्चप्रेतश्राद्धेविवर्ज्जयेत् इति ॥ अस्यार्थः ॥ आशिषः गोत्रंनोवर्द्धतामित्यादिकाभिप्रेताः ॥ द्विगुणादर्भा द्विगुणभुग्नकृताःमोटकरूपाः ॥ जपः पैतृकःपुरुषसूक्तम् उदीरतामवरइत्यादि ॥ नपैतृकोजपःकार्य इतिप्रचेतःस्मरणात्॥स्वस्तिवाचनं स्वस्तिभवंतोब्रुवंत्वितिवाचनम् ॥ पितृशब्दः स्वसंबंधश्चेति॥अस्मत्पितःअस्मन्मातरित्यादि ॥पितृशब्दंनकुर्वीतपितृहाचोपजायते इतिहेमाद्रावुक्तत्वात्॥ प्रेतायइत्यनेनप्रेतशब्दोऽत्रप्रयोक्तव्यो नतु पितृशब्दइत्युक्तंभवति ॥ शर्मशब्दः अस्मत्पितरमुकशर्मन्नित्यादि ॥ पात्रालंभः न्युब्जाभ्यांव्यस्ताभ्यांपाणिभ्यांपृथिवीतेपात्रमित्यादिनाकृतंकर्म ॥ अवगाहः विष्णोकव्यंरक्ष इत्यादि ॥ अंगुष्ठभ्रामणंनिवेशनंच ॥ उल्मुकोल्लेखनादिकम् उल्मुकं येरूपाणीतिज्वलदुल्मुकमंगारभ्रामणम् ॥ उल्लेखनं अपहताअसुराइति सकृद्रेखाकरणम्॥आदिशब्देन सकृदाच्छिन्नकुशास्तरणंज्ञेयम् ॥नसकृदाच्छिन्नकुशाः किंतुसमूलाःकुशाइतिहेमाद्रौभृगुस्मरणात् ॥ तृप्तिप्रश्नः स्वदितं सुस्वदितमितिकर्म ॥ स्वदितंचनोदाहरेदितिहेमाद्रौप्रचेतस्स्मरणात् ॥ विकिरः अग्निदग्धाइतिमंत्रेणाऽन्नोत्सर्जनम् ॥ विकिरंनस्वधाकारमितिवायुपुराणात् ॥ प्रेतश्राद्धेनाविकिर इतिस्मृतिरत्नावल्युक्तत्वाच्च ॥ शेषप्रश्नः शेषमन्नंकिंक्रियतामिष्टैःसहभुज्यतामित्यादि ॥ ( तथाचाङ्गिराः ) नवश्राद्धेषुयच्छिष्टंगृहेपर्युषितंचयत् ॥ दंपत्योर्भुक्तमुच्छिष्टंतन्नभुंजीतकर्हिचित् ॥ ( हेमाद्रौ देवलोपि ) एकोद्दिष्टेषुशेषंतुब्राह्मणेभ्यः समर्पयेत् ॥ ततःकामंतुभुंजीत स्वयंमंगलभोजने इति ॥ प्रेतश्राद्धसंज्ञकेष्वेकोद्दिष्टेषुशेषंश्राद्धभोक्तृभ्योब्राह्मणेभ्यः समर्पयेत्॥तदनुज्ञयाजलादौवाप्रक्षिपेत्॥नतुस्वयंभुंजीतनचान्यंकमपिभोजयेत् ॥

ततः तदनंतरंक्रियमाणे मंगलभोजनेसांवत्सरिकादौशेषं ज्ञात्यादीन् भोजयेत ॥ स्वयंचयजमानोभुंजीत॥श्राद्धशेषादन्येनान्नेनतुज्ञातिदीनानाथादयो भोजनीया इत्यर्थः ॥ ( अज्ञातिनातुभुक्तेऽस्मिन्नन्नेप्रायश्चित्तमुक्तं ब्रह्मपुराणे ) द्वाभ्यांतुतप्तकृच्छ्राभ्यां शुद्धिःस्यात्तुविवेकिनामिति ॥ प्रदक्षिणविसर्गः प्रदक्षिणं विसर्जनानंतरं ब्राह्मणानांप्रदक्षिणीकरणम् विसर्गःअभिरम्यतामितिविप्रविसर्जनम् ॥ सीमांतगमनं विसर्जनानंतरंब्राह्मणानुगमनम् ॥ एतान् अष्टादशपदार्थान् प्रेतश्राद्धेषुवर्जयेदित्यर्थः॥ अथाशौचान्तदिनकर्म॥ (तत्र ब्रह्मपुराणम्) यस्ययस्यतुवर्णस्य यद्यत्स्यात्पाश्चिमंत्वहः ॥ सतत्रवस्त्रशुद्धिंच गृहशुद्धिंकरोत्यपि॥समाप्यदशमांपिंडं प्रेतस्पृष्टेतुवाससि ॥ अन्त्यानामाश्रितानांच त्यक्त्वास्नानंकरोतिच॥श्मश्रुलोमनखानांच यत्त्याज्यंतज्जहात्यपि॥गौरसर्षपकल्केन तिलकल्केनसंयुतम्॥शिरःस्नानंततः कृत्वा तोयेनाचम्यवाग्यतः॥वृषभंगांसुवर्णंच स्पृष्ट्वाशुद्धोभवेन्नरः॥ (देवलोपि) दशमेऽहनिसंप्राप्ते स्नानंग्रामाद्बहिश्चरेत् ॥ तत्रत्याज्यानिवासांसि केशश्मश्रुनखानिच इति ॥ ( दशमेऽहनिवपनमाह अपरार्केव्यासः) आशौचांत्यदिनेक्षौरं जनन्यांचगुरौमृते इति ॥ वापनंचप्रेतात्पवयसाम्॥(तथाच माधवीये आपस्तंबः ) अनुभाविनांपरिवापनमिति ॥ अनु पश्चाद्भवंति जायंते इति पुत्राः कनिष्ठभ्रातरश्च अथवा अनुभाविनाम् इतिपुत्राएवाभिर्दिश्यन्ते ॥ गंगायांभास्करक्षेत्रे मातापित्रोर्गुरौमृते॥आधानकालेसोमेच वपनंसप्तसुस्मृतम् ॥ इत्यत्रमातापित्रोर्मृतौ इतिविशेषणोपादानात् ॥ अत्रगुरुर्मंत्रोपदेष्टाविद्योपदेष्टाच इति ॥ अनुभाविनः कनिष्ठा इतिमिताक्षरारत्नाकरादयः ॥ आशौचमनुभवतांसर्वेषांवपनमितिशुद्धितत्त्वादयः ॥ अत्रदेशाचारतोव्यवस्था ॥ अथैकादशाहः ॥ ( तत्र मनुः ) विप्रःशुध्यत्यपःस्पृष्ट्वा क्षत्रियोवाहनायुधैः ॥ वैश्यःप्रतोदरश्मीन्वा

१ श्राद्धविवेके रुद्रधरेण प्रेतश्राद्धेषु एतदष्टादशपदार्थलिखनम् अस्थिसंचयनेसमंत्रकश्राद्धप्रयोगलिखनंचप्रमाणशून्यम् ।

यश्चिंशूद्रः कृतक्रियः ॥ ( हेमाद्रौ कौर्मे ) एकादशेऽह्निकुर्वीत प्रेतमुद्दिश्यभावतः ॥ एकंपवित्रमेकोऽर्घ्यः पिंडपात्रंतथैवच ॥ एवंमृताऽह्निकर्त्तव्यं प्रतिमासंतुवत्सरम् ॥ ( तत्रैव पाद्मे ) ततस्त्वेकादशाहेतु द्विजानेकादशैवतु ॥ गोत्रादिसूतकान्तेच भोजयेदयुजोद्विजान् ॥ आवाहनाग्नौकरणं दैवहीनंविधानतः ॥ एकंपवित्रमेकोऽर्घ्य एकापिंडोविधीयते ॥ उपातिष्ठतांतइति देयंपश्चात्तिलोदकम् ॥ स्वदितंद्विकरेब्रूयाद्विसर्गेचाभिरम्यताम् ॥ शेषंपूर्ववदत्रापि कार्यंवेदविदोविदुः ॥ ( गरुडपुराणे ) अमंत्रंकारयेच्छ्राद्धं दशाहंनामगोत्रतः ॥ एकादशेऽह्निप्रेतस्य दद्यात्पिंडंसमंत्रकम् ॥ ( माधवेमरीचिः ) ॥ आशाचान्तेततःसम्यक् पिंडदानंसमाप्यते ॥ ततः श्राद्धंप्रदातव्यं सर्ववर्णेष्वयंविधिरितिश्राद्धमेकोद्दिष्टम् ॥ श्वोभूते एकोद्दिष्टंकुर्यादितिहारीतस्मरणात् ॥ एतच्छ्राद्धंनकेवलं ब्राह्मणस्यैकादशेऽह्नि अपितुक्षत्रियादेरप्यस्याद्यश्राद्धस्यायमेवकालः ॥ (तथाचहेमाद्रिमाधवयोः पैठीनसिः) एकादशेऽह्नियच्छ्राद्धं तत्सामान्यमुदाहृतम् ॥ चतुर्णामपिवर्णानांसूतकंतुपृथक्पृथक् इति ॥ नचक्षत्रियादेरशुचित्वेन तत्रश्राद्धाऽनधिकार इत्याशंकनीयम्॥अशुद्धस्याऽप्ययंवाचनिकोऽधिकारः॥(तथाच तत्रैवशंखः)आद्यंश्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ॥ कर्त्तुस्तात्कालिकीशुद्धिरशुद्धिःपुनरेवसा इति ॥ आद्यमितिसर्वैकोद्दिष्टप्रकृतिभूतमेकादशाहाख्यमित्यर्थः ॥ एतच्छ्राद्धानंतरंस्नात्वाभुंजीतेति ॥ ( भविष्योत्तरे ) एकादशाहेयच्छ्राद्धं तत्सामान्यमुदाहृतम् ॥ एकादशभ्योविप्रेभ्यो दद्यादेकादशेऽहनि ॥ भोजनंतत्रचैकस्मै ब्राह्मणायमहात्मने॥वस्त्रालंकारशय्याढ्यं पितुर्यद्वाहनादिकम् ॥ गोगृहासनदासीश्च दद्यात्संपूज्यभक्तितः इति ॥ क्रिया निबंधेस्मृत्यंतरे ) सूतकेमृतकेचैव द्वितीयंमृतकंयदि ॥ पिंडदानंप्रकुर्वीत वृषोत्सर्गंतथैवच ॥ नहन्यात्सूतकेकर्म द्वादशैकादशाहिकम् ॥ शुद्धोवायदिवाऽशुद्धः कुर्यादेवाविचारयन् इति ॥ अथ वृषोत्सर्गः ॥ तत्रतावदस्यविधिकालदेशाः ॥ इहचैकादशेऽहनिप्रमीतमनु

ष्योद्देशेनवृषोत्सर्गःकार्य्यइत्युक्तम् ॥ ( हेमाद्रौपद्मत्रिंशन्मतेगारुडेच ) एकादशाहेप्रेतस्य यस्यनोत्सृज्यतेवृषः ॥ पिशाचत्वंस्थिरंतस्य दत्तैःश्राद्धशतैरपि ॥ ( बृहद्गारुडेऽपि ) एकादशेह्निसंप्राप्ते वृषाभावोभवेद्यदि ॥ दर्भैःपिष्टैस्तुसंपाद्य तंवृषंमोचयेद्बुधः इति ॥ भविष्योत्तरेतुद्वादशेह्निवृषोत्सर्गोविहितः ॥ कार्त्तिक्यथवामावास्यामयनेवायुधिष्ठिर ॥ चैत्र्यांवापितृतीयायां वैशाख्यांद्वादशेह्निवा इति ॥ एतदेकादशाहेऽसंभवेज्ञेयम् ॥ ( विष्णुधर्मोत्तरेतु ) यस्मिन्कस्मिंश्चिन्मृताहेऽपि वृषोत्सर्गोविहितः ॥ अश्वयुक्शुक्लपक्षस्य पंचदश्यांनराधिप ॥ कार्त्तिकेऽप्यथवामासि वृषोत्सर्गंतुकारयेत् ॥ ग्रहणेद्वेमहामुख्ये तथाचैवायनद्वये ॥ विषुवद्वितयेचैव मृताहेबांधवस्य च ॥ उत्सृजेन्नीलकंठंवै कौमुदीसमुपागता इति॥नीलकंठःनीलवृषः॥कौमुदी आश्विनकार्तिकयोः पौर्णमासी इत्यर्थः॥ (पित्राद्युद्देशेनवृषोत्सर्गमकुर्वाणस्य निंदा हेमाद्रौमात्स्ये)नकरोतिवृषोत्सर्गं सुतीर्थेवाजलांजलिम् ॥ नददातिसुतोयस्तु पितुरुच्चारएवसः ॥ उच्चारः पुरीषोत्सर्गः ॥ वृषोत्सर्गप्रदेशाः ॥ ( तत्रदेवीपुराणम् ) सत्वरण्येभवेत्तीर्थे उत्सर्गोगोकुलेपिवा॥(ब्रह्मपुराणे)प्रागुदक्प्रवणेदेशेमनोज्ञेनिर्जनेवने ॥ वृषोत्सर्गःकार्य्यइतिशेषः॥(कालिकापुराणे)अरण्येचत्वरेवापि गोष्ठेवामोचयेद्वृषम्॥नगृहेमोचयेद्विद्वान्कामयन्पुष्कलंफलम्॥ (अथोत्सर्जनीयवृषलक्षणं हेमाद्रौ ब्रह्मपुराणे ):वृषभः कृष्णसारस्तु प्रत्यग्रस्तुत्रिहायनः॥मनोज्ञोदर्शनीयश्च सर्वलक्षणसंयुतः॥ (हरिहरभाष्ये ) पृथुकर्णोमहास्कंधःसूक्ष्मरोमाचयोभवेत्॥रक्ताक्षःकपिलोयश्च रक्तशृंगगलोभवेत् ॥ श्वेतोदरःकृष्णपृष्ठोब्राह्मणस्यप्रशस्यते ॥ स्निग्धवर्णेनरक्तेन क्षत्रियस्यप्रचक्षते ॥ कांचनाभेनवैश्यस्य कृष्णःशूद्रस्यशस्यते॥यस्यप्रागायतेशृंगे स्वमुखाभिमुखेसदा ॥ सर्वेषामेववर्णानां सचसर्वार्थसाधकः॥(अथसर्वोत्तमनीलवृषस्यलक्षणं प्रशंसाच ब्रह्माण्डे) लोहितोयस्तुवर्णेन मुखेपुच्छेचपांडुरः ॥ श्वेतःखुरविषाणाभ्यां सनीलोवृषउच्यते ॥ (हेमाद्रौमात्स्येपि)

चरणाश्चमुखंपुच्छं यस्यश्वेतानिगोपतेः ॥ लाक्षारससवर्णस्य तन्नीलमितिनिर्दिशेत्॥वृषएवसमोक्तव्योनसधार्य्योगृहेभवेत् ॥ तदर्थमेषाचरति लोकेगाथापुरातनी ॥ एष्टव्याबहवःपुत्रा यद्येकोपिगयांव्रजेत् ॥ गौरींवाप्युद्वहेद्भार्य्यां नीलंवावृषमुत्सृजेत् इति॥गौरीमष्टवार्षिकांकन्याम् ॥ अष्टवर्षाभवेद्गौरीति गर्गस्मरणात् ॥ इति ॥ (गारुडे) पितापितामहश्चैव तथैवप्रपितामहः ॥ आशासतेसुतंजातं वृषोत्सर्गंकरिष्यति इति ॥ ( वर्ज्जनीयावृषा हरिहरभाष्ये ) कृष्णताल्वोष्ठदशना रूक्षशृंगशफाश्चये ॥ अशक्तदंताह्रस्वाश्च व्याघ्रभस्मनिभाश्चये ॥ ध्वांक्षगृध्रसवर्णाश्च तथामूषकसन्निभाः ॥ कुब्जाःकाणाश्चखञ्जाश्चकेकराक्षास्तथैवच ॥ अत्यंतश्वेतपादाश्च उद्भ्रांतनयनास्तथा ॥ नैतेवृषाःप्रमोक्तव्या गृहेधार्याःकथंचन इति ॥ ( अथवृषोत्सर्गविधिप्रवर्त्तकानि कात्यायनपारस्करसूत्राणि ) कार्त्तिक्यांपौर्णमास्या ँ रेवत्यांवाश्वयुजस्यमध्येगवाꣳ सुसमिद्धमग्निंकृत्वाज्यꣳ संस्कृत्येहरतिरितिषड्जुहोतिप्रतिमंत्रं पूषागाऽअन्वेतुनःपूषारक्षत्वर्व्वतः ॥ पूषावाजंसनोतुनःस्वाहेतिपौष्णस्यजुहोतिरुद्रांजपित्वैकवर्णवायोवायूथंछादयतियंवायूथंछादयेद्रौहितोवैवस्यात्सर्वांगैरुपेतोजीववत्सायाः ॥ पयस्विन्याःपुत्रोयूथेचरूपस्वित्तमः स्यात्तमलंकृत्ययूथेमुख्याश्चतस्रोवत्सतर्य्यस्ताश्चालंकृत्यैनंयुवानंपतिंवोददामि तेनक्रीडंतीश्चरथप्रियेणमानः साप्तजनुषासुभगारायस्पोषेण समिषामदेमेत्येतयैवोत्सृजेरन्नस्यस्थमभिमंत्रयतेमयोभूरित्यनुवाकशेषेणसर्वासांपयसिपायसꣳ श्रपयित्वाब्राह्मणान्भोजयेदिति ॥ ( हेमाद्रौभविष्योत्तरे विशेषः ) पांडंनीलंशंखपादं सपौंड्रंश्वेतपुच्छकम् ॥ गोभिश्चतुर्भिःसहितमुत्सृजेत्तांविधिंशृणु ॥ मातरःस्थापयित्वाच पूजयेत्कुसुमाक्षतैः ॥ मातृश्राद्धंततःकुर्य्यात्सदाभ्युदयकारकम् ॥ अर्कमूलेतुकलशमश्वत्थदलशोभितम् ॥ तत्ररुद्राञ्जपित्वातु स्थापयेद्रुद्रदैवतम् ॥ रुद्रान्रुद्राध्यायंजप्त्वारुद्रदैवतंकलशंस्थापयेदित्यर्थः ॥ सुसमिद्धंततःकृत्वा वह्निंमंत्रपुरःसरम् ॥

आज्येनजुहुयात्षड्भिः पृथगाहुतिसंस्कृतैः ॥ पौष्ण्यमंत्रैस्ततःपश्चाद्धुत्वावह्निंयथाविधि ॥ एकवर्णंद्विवर्णंवा लोहितंश्वेतमे
ववा ॥ जीवद्वत्सपयस्विन्याः पुत्रंसर्वाङ्गसुंदरम् ॥ चतस्रोवत्सतर्य्यश्च ताभिःसार्द्धमलंकृतम् ॥ तासांकर्णंजपेद्विप्रः पतिंवोब
लिनंशुभम् ॥ ददामितेनसहिताःक्रीडध्वंहृष्टमानसाः ॥ ततोवामेत्रिशूलंच दक्षिणेचक्रमालिखेत् ॥ अंकितंशूलचक्राभ्यां चर्चितं
कुंकुमादिना ॥ पुष्पमालावृतग्रीवं श्वेतवस्त्रैश्चच्छादितम् ॥ विमुंचेद्वत्सिकाभिश्च तिसृभिर्बलिनंवृषम् ॥ देवालयेगोकुलेवा नदीनांसंगमे
तथा ॥ इत्युक्तंगर्गमुनिना विधानंवृषमोक्षणे इति ॥ अत्रमातृश्राद्धंमातृपूजापूर्वकाभ्युदयिकं श्राद्धंकर्तव्यमितिगम्यते ॥ एतच्छ्राद्धंसंवत्स
रानंतरं कार्त्तिक्यादौक्रियमाणवृषोत्सर्गविषयकं सपिंडनंविना काम्याभ्युदयिकयोर्निषेधात् ॥ ( तथाच स्मृतिः ) वत्सराभ्यंतरेपित्रोर्वृषस्यो
त्सर्गकर्मणि ॥ वृद्धिश्राद्धंनकुर्वीत तदन्यत्रसमाचरेत् इति ॥ वत्सतरीचतुष्टयाभावेद्वाभ्यामेकयावा सहविवाहयेत्॥ (तथाच बृहद्गारुडे) चतसृ
भिर्वत्सिकाभिर्द्वाभ्यांवैकयाथवा ॥ विवाह्यमंगलद्रव्यैर्मंत्रवत्तंसमुत्सृजेत् ॥ इहरतीतिषड्ऋग्भिर्होमंकुर्याद्विभावसाविति ॥ ( कलशे
रुद्रजपानंतरंपुरुषसूक्तादिजपोप्युक्तो हेमाद्रौविष्णुधर्मोत्तरे ) तत्ररुद्रंजपित्वातु स्थापयेद्रुद्रदैवतम् ॥ तथैव पौरुषंसूक्तं कूष्मांडानितथैवच ॥
इति ॥ रुद्रं नमस्तेरुद्रमन्यव इत्यादिरध्यायोयजुर्वेदेप्रसिद्धः॥ पुरुषसूक्तं सहस्रशीर्षेत्यादिषोडशर्चं ॥ यद्देवादेवहेडनमित्याद्या ऋचः कूष्मा
डसंज्ञकाइत्यर्थः ॥ ( जपानंतरं होमःकार्यः विष्णुधर्मोत्तरे ) सुसमिद्धंगवांमध्ये सुविस्तीर्य्यहुताशनम् ॥ पयसाश्रपयेद्विद्वांश्चरुंपौष्णं
समाहित इति ॥ अस्यार्थोहेमाद्रिणाकृतः ॥ अत्रायंक्रमेणहोमोऽभिधीयते ॥ गवांमध्येरुद्रकलशस्यपश्चाद्भागेपरिसमूहनादिपंचभूसंस्कारान्
विधायाग्निमुपसमाधाय दक्षिणतोब्रह्माणमुपवेश्य उत्तरेकर्मोपयुक्तंसर्वमासाद्य आज्यमधिश्रित्यपयसासहतंडुलान् प्रक्षिप्यपायसंश्रप

यित्वा सोदकतंडुलपिष्टंस्थाल्यांप्रक्षिप्य पौष्णंचरुंश्रपयित्वा आज्योद्वासनादिकर्मसमाप्य दक्षिणंजान्वाच्यप्रथममन्वारब्धे इहरतिरितिष
डाज्याहुतयोहोतव्याः ॥ तत आघारावाज्यभागौघृतेनहुत्वा तदनंतरमन्वारब्धेपायसेन गोयज्ञोक्तदेवताभ्योहोमः ॥ ततः पौष्णचरोःपूषागा
अन्वेतुनइत्येकाहुतिः ॥ ततः पौष्णपायसाभ्यांस्विष्टकृद्धोमः ॥ आज्येनमहाव्याहृतिहोमं त्वन्नोऽअग्नेइत्यादि सर्वप्रायश्चित्तहोमंप्राजाप
त्यंचजुहुयात् ॥ ततःसंस्रवप्राशनं मार्जनं पवित्रप्रतिपत्तिः दक्षिणादानमित्यर्थः ॥ एवंहोमंपरिसमाप्य वृषस्याङ्कनादिकंकुर्यात् ॥ ( तथाच
विष्णुः ) गवांमध्येसुसमिद्धमग्निंपरिस्तीर्य्य पौष्णंचरुंश्रपयित्वा पूषागाअन्वेतु इहरतिचहुत्वावृषभमानीयायस्करमाह्वयेत् ॥ अयस्करः
लोहकारः ॥ ( हेमाद्रौसौरपुराणे ) कुंकुमेनांकयित्वादौ ब्राह्मणःसुसमाहितः ॥ ततस्तेनधातुनापश्चादयस्काराङ्कयेद्वृषम् इति ॥ अत्रवृषांकने
विचारः ॥ तत्रतावत् ( हेमाद्रौसौरपुराणे ) ततोवृषभमानीय अग्नेरुत्तरतःस्थितम् ॥ सव्यास्फिचिलिखेच्चक्रं शूलंबाहौतुदक्षिणे इति॥ सव्य
स्फिचिवामकटिभागे इत्यर्थः॥ (बृहद्गारुडेऽपि) दक्षिणांसेत्रिशूलाङ्कं वामोरौचक्रचिह्नितम् ॥ (देवीपुराणेऽपि) ततस्तेनवामतश्चक्रं पार्श्वेशूलंसमा
लिखेत् ॥ धातुनाहेमताम्रेण आयसेनाथवांकयेत् इति ॥ हेम सुवर्णं तारं रूप्यम् आयसं लोहमित्यर्थः इत्येकंमतम् ॥ ( द्वितीयप्रकारमाह
हेमाद्रौ विष्णुः ) एकस्मिन्पार्श्वेचक्रेणपरस्मिन्द् शूलेनाङ्कितंचहिरण्यवर्णांतिचतसृभिः शन्नोदेवीरितिचस्नापयेत् इति ॥ एकस्मिन् पार्श्वेद
क्षिणपार्श्वेचक्रेणाङ्कयेत् ॥ परस्मिन्वामपार्श्वे त्रिशूलेनेत्यर्थः ॥ ( तथाच विष्णुधर्मोत्तरे ) ततोवामेत्रिशूलंचदक्षिणेचक्रमालिखेत् इति ॥
एवमेवहरिहरप्रभृतयः ॥ ( विश्वनाथीयान्त्येष्टिपद्धतिगारुडयोस्तु ) त्रिशूलंदक्षिणेपार्श्वे वामेचक्रंतुविन्यसेत् इत्युक्तम् ॥ अत्रविकल्पोदेश
कुलाचारतः परिहार्य इति ॥ ( विष्णुधर्मोत्तरे ) अंकितंस्नापयेत्पश्चात्स्नानेतस्यतथापठेत् ॥ हिरण्यवर्णांतिन्ऋचश्चतस्रोमनुजेश्वर ॥ आपोहि

थतितिसश्च शन्नोदेवीतिचाप्यथ इति॥हिरण्यवर्णाःशुचयःपावकाइत्याद्याश्चतस्रोभिषेचनीयाःऋचस्तैत्तिरीयेप्रसिद्धाः(तत्रैव)वत्सतर्यश्चतस्रश्च
तंवृषंचनराधिप॥अलंकुर्यात्ततःपश्चाद्गंधमाल्यैश्चशक्तितः॥किंकिणीभिश्चरम्याभिस्तथाचीनांशुकैःशुभैः॥(आदित्यपुराणे)घंटांलोहकृतांदद्या
च्छृंगेचपटलंशुभम् ॥ पटलं सुवर्णादिनिर्मितकोशः॥(हेमाद्रौ विष्णुः) स्नातालंकृतं स्नाताभिश्चतसृभिर्वत्सतरीभिः सार्द्धमानीयरुद्रान्पुरुष
सूक्तं कूष्मांडीश्चजपेत् ॥ पितावत्सेतिचमंत्रंवृषभस्यदक्षिणकर्णेजपेदिति ॥ पितावत्सेतिमंत्रोऽथर्ववेदेप्रसिद्धः ॥ (तत्रैव पारस्करोपि ) अथा
लंकृत्यतान्सर्वान्रुद्राध्यायंसमाहितः ॥ श्रावयेत्पौरुषंसूक्तं तथाऽप्रतिरथानिच ॥ ( विष्णुधर्मोत्तरे ) ततोंकितेजपेन्मंत्रमिमंप्र
यतमानसः ॥ वृषोसिभगवान्धर्मश्चतुष्पादःप्रकीर्त्तितः ॥ वृणोमितमहंभक्त्या समांरक्षतुसर्वतः ॥ इतिप्रार्थ्यवृषेंद्रंतं गृहीतकुसुमांजलिः ॥
त्रिःप्रदक्षिणमावृत्य नमस्कुर्याद्यथाविधि ॥ प्रत्यङ्मुखानांतुगवामेतावान्विधिरिष्यते ॥ अथैशान्यभिमुखतः कुर्य्याद्गावोवृषंतथा ॥
गावोवृषस्योभयतो वृषंमध्येनिवेश्यच ॥ सर्वेषांकंठवस्त्राणि श्लेषयेत्तुपरस्परम् ॥ अयंहिवोमयादत्तः सर्वासांपतिरुत्तमः ॥ तुभ्यंचैता
मयादत्ताः पत्न्यःसर्वामनोरमाः ॥ संयोज्येतिवृषंताभिः पितृभ्यस्तंनिवेदयेत् ॥ सव्येनपाणिनापुच्छं समालभ्यवृषस्यतु ॥ दक्षिणेना
पआदाय सतिलाःसकुशास्ततः ॥ ततोगोत्रंसमुच्चार्य्य अमुकस्माइतिब्रुवन् ॥ एषएवमयादत्तः तंतारयतुसर्वदा ॥ सहेमसतिलंभूमावि
त्युच्चार्य्यविनिक्षिपेत् इति ॥ इदंतुपारस्करेणैकप्रमीतोद्देशेनवृषोत्सर्गवाक्यमुक्तम् ॥ अनेकप्रमीतोद्देशेनतुनीलोत्सर्गे मंत्रउक्तः ॥ ( वाराह
पुराणे ) नराये चात्रतिष्ठंति पतिताः पितृबांधवाः ॥ तेषांभवत्वयंत्राता नीलोमुक्तोयथाविधि ॥ गृहीत्वोदुंबरंपात्रं कृत्वाकृष्णतिलोदकम् ॥
करेणपुच्छमादाय पितृणांमुच्यतेवृषम् ॥ उदुंबरं ताम्रम् ॥ ( ब्रह्मपुराणेपि ) स्वपितृभ्योथमातृभ्यो बंधुभ्यश्चापितृप्तये ॥ मातृपक्षाश्चयेके

स्याश्राद्धकारिशूद्रविषयमिति हेमाद्रिः ॥ ( अपरार्ककल्पतरुप्रभृतयः ) वचनबलादाशौचमध्यएवश्राद्धकरणम् इति ॥ यदा संवत्सरपूर्त्तेः प्रागेवैकादशाहादिषुषोडशश्राद्धानिकृत्वासपिंडीकरणं क्रियते तदा पुनरपिस्वस्वकालेमासिकादीन्यावर्त्तनीयानि ॥ (तदाह माधवेगोभिलः) यस्यसंवत्सरादर्वाग्विहितातुसपिंडता ॥ विधिवत्तानिकुर्वीत पुनःश्राद्धानिषोडश इति ॥ विधिवदेकोद्दिष्टविधिना इत्यर्थः ॥ ( गारुडेपि ) सपिंडीकरणादूर्ध्वं यानिश्राद्धानिषोडश॥एकोद्दिष्टविधानेन चरेद्धापार्वणादृते इति॥ ( माधवीयेगालवः)अर्वाक्संवत्सराद्यस्य सपिंडीकरणं कृतम् ॥ षोडशानांद्विरावृत्तिं कुर्यादित्याहगौतमः॥ (मदनरत्ने अंगिराः) यस्यसंवत्सरादर्वाक्सपिंडीकरणंकृतम् ॥ मासिकंचोदकुंभंच देयं तस्यापिवत्सरमिति ॥ ( ऊनषाण्मासिकादीनांकालमाह माधवेगालवः ) ऊनषाण्मासिकंषष्ठे मासार्द्धेह्यूनमासिकम् ॥ त्रैप क्षिकंत्रिप क्षेस्यादूनाब्दंद्वादशेतथा ॥( तत्रैवगौतमोपि ) एकद्वित्रिदिनैरूने त्रिभागेनोनएववा ॥ श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याहगौतम इति ॥ ऊनमासिकोनषाण्मासिकोनाब्दिकानामेकदिनेनोनपक्षेपंचम्यांमृतस्यतृतीयायां द्वाभ्यामूनत्वपक्षेद्वितीयायांत्रिभिन्र्यूनेप्रतिपदायामनुष्ठान मित्यर्थः ॥( ऊनानांवर्ज्यकालमाह हेमाद्रिमाधवयोर्गार्ग्यः ) नंदायांभार्गवदिने चतुर्दश्यांत्रिपुष्करे ॥ ऊनश्राद्धंनकुर्वीत गृहीपुत्रधनक्षयात् इति ॥ प्रतिपत्षष्ठ्येकादशीच नंदा । भार्गवदिनंशुक्रवारः । त्रिपुष्करं तिथिवारनक्षत्रविशेषाणां मेलनं द्वयोर्मेलनंद्विपुष्करमित्यर्थः ॥(तत्रैवमरीचिरपि ) द्विपुष्करेचनंदासुसिनीवाल्यांभृगोर्दिने ॥ चतुर्दश्यांचनोनानि कृत्तिकासुत्रिपुष्करे इति ॥ सिनीवाली चतुर्दशीयुक्ता अमावास्या इत्यर्थः ॥ ( त्रिपुष्करयोगमाह वसिष्ठः ) रविरविजभौमवारे भद्रायांविषमपादमृक्षंचेत् ॥ त्रैपुष्कराख्ययोगस्त्रिगुणफलोयमलमेद्विगुण इति ॥ भद्रा द्वितीयासप्तमीद्वादश्यो भद्रातिथयः ॥ भानुभौमशनैश्चरवाराः पुनर्वसूत्तरफाल्गुनीविशाखोत्तराषाढापूर्वाभाद्रपदानक्ष

त्राणि विषमपादऋक्षाणीत्यर्थः ॥ ( वाराहपुराणेविशेषः ) चतुर्थींष्टमगेचंद्रे द्वादशेचविवर्जयेत् ॥ प्रेतकृत्यंव्यतीपाते वैधृतौपरिघेतथा ॥ करणेविष्टिसंज्ञेच शनैश्चरदिनेषुच ॥ त्रयोदश्यांविशेषेण जन्मताराव्रयेतथा इति॥ सपिंडीकरणादूर्ध्वमावर्त्तनीयानामूनमासिकादीनांवृद्धिप्रा तौपुनरपकर्षः ॥ ( तदाह माधवीयेसांख्यायनिः ) सपिंडीकरणादर्वागपकृष्यकृतान्यपि ॥ पुनरप्यपकर्ष्यन्ते वृद्ध्युत्तरनिषेधनात् इति ॥ ( निषेधश्चतत्रैवकात्यायनेनोक्तः ) निर्वर्त्यवृद्धितंत्रंतु मासिकानिनतंत्रयेदिति ॥ एवंवृद्धिनिमित्तेनमासिकापकर्षेउदकुंभश्राद्धानामप्यप कर्षः प्रेतश्राद्धत्वात् ॥ प्रतिमासंसान्नोदकुंभदानाऽशक्तेनाऽप्येकस्मिन्नादिने तावद्भिरामान्नैरुदकुंभैश्चतावदामान्नोदकुंभनिष्क्रयेण वाऽपकृष्योदकुंभश्राद्धानिकार्याणि ॥ ( तथाच गारुडे ) द्वादशाहेचषाण्मासे त्रिपक्षेवाथवत्सरे ॥ उदकुंभाः प्रदातव्या मार्गेतस्य सुखायवै इति ॥ ( वृद्धिंविनामासिकापकर्षेतुदोषमाह उशनाः ) वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानियस्त्यजेत् ॥ सश्राद्धीनरकेघोरे पितृभिः सहमज्जति इति ॥ चतुःपुरुषसपिंडस्याधानादिप्राप्तिनिमित्तोप्यपकर्ष इति ॥ ( अथसपिंडीकरणप्रकारमाह याज्ञवल्क्यः ) गंधोदकतिलै र्युक्तं कुर्यात्पात्रचतुष्टयम् ॥ अर्घ्यार्थंपितृपात्रेषु प्रेतपात्रंप्रसिंचयेत् ॥ येसमानाइतिद्वाभ्यां शेषंपूर्ववदाचरेत् ॥ एतत्सपिंडीकरणमेको दिष्टंस्त्रियाअपि इति ॥ ( अस्यार्थो हेमाद्रिणा कृतः ) ॥ गंधैश्चंदनादिभिरुदकेनातिलैश्चयुक्तं पात्रचतुष्टयं प्रेतादिभ्योऽर्घ्यपात्रंकुर्यात् ॥ तत्र प्रेतायार्घ्यंदत्त्वाशेषंतत्पात्रस्थं जलंपितामहादिपात्रेषु येसमाना इति द्वाभ्यां मंत्राभ्यां यथाक्रमंपितृदैवत्याभ्यांप्रसिंचेत् ॥ शेषंतुकर्मब्राह्मण निमंत्रणादिपार्वणवदाचरेत् ॥ एतदुक्तप्रकारंपितामहदैवत्यंपार्वणं प्रेतदैवत्यंचैकोद्दिष्टश्राद्धंसपिंडीकरणसंज्ञकंवेदितव्यम्॥ स्त्रियाऽपिचैतत्क र्यंनपुनःपुरुषस्यैव इत्यर्थः ॥ ( कात्याय सूत्रेपि ) ततः संवत्सरेपूर्णेचत्वारिपात्राणि सतिलगंधोदकानि पूरयित्वा त्रीणिपितॄणामेकंप्र

तस्यपात्रंपितृपात्रेष्वासिंचति येसमाना इति द्वाभ्यामेतेन पिंडोव्याख्यात इति॥ अत्रपात्रमेलने विचारः॥ अर्घ्यदानात्प्राक् पात्रमेलनंकार्यं पश्चाद्वा इति संदेहेचिन्त्यते ॥ ( तत्रतावत्प्राग्विधायकं हेमाद्रौब्रह्मपुराणम् ) चतुर्भ्यश्चार्घ्यपात्रेभ्य एकंवामेनपाणिना ॥ गृहीत्वादक्षिणेनैव पाणिनाचतिलोदकम्॥प्रेतस्यविप्रहस्तेतु चतुर्भागंजलंक्षिपेत् ॥ततःपितामहादिभ्यस्तन्मंत्रश्चपृथक्पृथक्॥ येसमाना इति द्वाभ्यां तज्जलंतु समर्पयेत् ॥ अर्घ्यंतेनैवविधिना प्रेतपात्राच्चपूर्ववत् ॥ तेभ्यश्चार्घ्यंनिवेद्यैव पश्चाच्चस्वयमाचमेत्॥अथतेनैवविधिना दर्भमूलेऽवनेजनम्॥ पितुर्दत्त्वातुपिंडंतु दद्याद्भक्त्यातुपूर्ववत् ॥ सुवर्णरूप्यदर्भैस्तु तस्मिन्पिंडंततस्त्रिधा ॥ कृत्वापितामहादिभ्यः पितृभ्यःप्रेतमर्पयेत् ॥ येसमाना इति द्वाभ्यां पितृभ्यःप्रेतमर्पयेत् ॥ सुवतुलांस्ततस्तांस्त्रीन्पिंडान्कृत्वाप्रपूजयेत् ॥ अर्घ्यपुष्पैस्तथाधूपैर्दीपमाल्यानुलेपनैरिति ॥ एवमेव हेमाद्रिविज्ञानेश्वरनीलकंठकमलाकरविश्वनाथप्रभृतयोवदन्ति ॥ इत्येकंमतम् ॥ पश्चाद्विधायिका पितृभक्तौव्यवस्था ॥ मेलकस्तुदानानन्तरंकर्त्तव्यो न प्रथमं दानबाधापत्तेः॥ ( उक्तंच वृद्धशातातपेन )निरूप्यचतुरःपिंडाञ्छ्राद्धदःप्रेतनामतः ॥ येसमानाइतिद्वाभ्यामाद्यंतुविभजेत्त्रिधा ॥ एषएवविधिःपूर्वमर्घपात्रचतुष्टये इति ॥ निरूप्यदत्त्वा आद्यंप्रथमदत्तंप्रेतपिंडंतेनप्रेतपूर्वमनुष्ठानम् इति सिध्यति ॥ एष एवविधिरित्यतिदेशात् ॥ अर्घेऽपिदानानंतरमवशिष्टजलमेलक इति ॥ एवमेवाधुनिकारुद्रधरप्रभृतयोमैथिलाः इत्यपरम् ॥ अत्रपक्षद्वयस्यापिस्मृतिसदाचारमूलकत्वात् प्राचीनमहानिबंधकारैरङ्गीकृतत्वाच्चवृद्धाचारतो व्यवस्थाज्ञेया ॥ अस्माकंतुप्रथमःपक्षएवपद्धतिस्तद्वयमेव पुरतोवक्ष्यामि इति ॥ ( अत्रद्वादशघटदानं बृहद्गारुडे )॥ द्वादशाहेविशेषेणघटान् द्वादशसंख्यकान् ॥ एकापिवर्द्धनीतत्र पक्वान्नजलपूरिता ॥ विष्णुमुद्दिश्यदातव्या संकल्प्यब्राह्मणायवै इति ॥ अथव्युत्क्रममृतौसपिंडनविचारः ॥ यदापिताम्रियतेपितामहस्तिष्ठति तदाप्र

पितामहादिभिः सहपितुः सापिंडयम् ॥ ( तदुक्तं माधवीये ब्रह्मांडपुराणे ) मृतेपितरियस्याथ विद्यतेचपितामहः ॥ तेनदेयास्त्रयःपिंडाः प्रपितामहपूर्वकाः ॥ तेभ्यश्चपैतृकःपिंडो नियोक्तव्यश्चपूर्ववत् इति ॥ ( तत्रैव ) मातर्य्यथमृतायान्तु विद्यतेचपितामही ॥ प्रपितामहीतः सर्वः कार्य्यस्तत्राप्ययंविधिरिति ॥ एवंप्रपितामहजीवने ॥ तत्पित्रादिभिः कार्यः ॥ यदातु पितुःसपिंडनात्प्राक् पितामहोमृतस्तदा पितामहसपिंडनंकृत्वापितामहादिभिः सहपितृसपिंडनंकार्यमिति ॥ ( अथ स्त्रीसपिंडीकरणे केनसहसपिंडनंकर्त्तव्यमितिसंशयपूर्वकत्वमाहतुर्हेमाद्रिमाधवयोः शातातपशंखौ ) मातुःसपिंडीकरणं कथंकार्य्यंभवेत्सुतैः ॥ पितामह्यादिभिःसार्द्ध सपिंडीकरणं स्मृतमिति ॥ पितामहीप्रपितामहीवृद्धप्रपितामहीभिः सहेत्यर्थः ॥ ( गारुडेपि ) पितामह्यासमंमातुः पितामहैःसमंपितुः ॥ सपिंडीकरणंकुर्यादितितार्क्ष्यमतंमम ॥ भर्त्रादिभिस्त्रिभिःकार्य्यं सपिंडीकरणंस्त्रियाः ॥ नैतन्ममतंतार्क्ष्य पत्यासापिंड्यमर्हतीति ॥ ( प्रमीतपितृकस्यविकल्पमाह पराशरमाधवे यमः ) जीवत्पितापितामह्या मातुःकुर्य्यात्सपिंडताम् ॥ प्रमीतपितृकः पित्रापितामह्याथवासुतः—इति ॥ ( हेमाद्रौ ब्रह्माण्डेपि ) मातुःसपिंडीकरणं कार्य्यंसंवत्सरेसुतैः ॥ पितामह्यासहैवास्याः पितायदितुजीवति इति ॥ तदेवंकेषुचिद्वचनेषुमातुः पितामह्यादिभिः सहसपिंडीकरणंकर्त्तव्यमुक्तम् ॥ केषुचिच्चपत्यासहेति ॥ तत्रपत्यासहसपिंडनंतुभर्त्रासहान्वारूढामातृविषयम् ॥ ( तथाच हेमाद्रौ शातातपः ) मृतायानुगतानाथं सातेनसह पिंडताम् ॥ अर्हतिस्वर्गवासंच यावदाभूतसंप्लवमिति ॥ एवंचसतिपितरिजीवति पितामह्यादिभिरेवसहसपिंडीकरणं कार्य्यम् ॥ प्रमीतेतुपितर्य्यन्वारूढायां मातरि पित्रैवसहसपिंडीकरणम् ॥ अनन्वारूढायामपिपितामह्यादिभिः सहेतिव्यवस्थाप्रतिपादिताभवति ॥ यदित्वनन्वारूढायामपि मातरि

पित्रैवसह सपिंडनंस्यात् तदान्वारूढाविषयंवचनमनर्थकंभवेत् तस्मादन्वारूढाभर्त्रैवसहसापिंडनीया नतु अनन्वारूढा इतिस्थितम् ॥ पुत्रिकासुतस्तुमातृसपिंडनंमातामहादिभिः सह कुर्यात् ॥ ( तथाच माधवेबोधायनः ) आदिशेत्प्रथमेपिंडे मातरंपुत्रिकासुतः ॥ द्वितीये पितरस्तस्यस्तृतीयेचपितामहम् इति ॥ ( पुत्राद्यभावेपत्युरपिस्त्रीसपिंडीकरणाधिकारः प्रतिपादितो व्यासेन ) अपुत्रायांमृतायांतुपतिः कुर्यात्सपिंडनम्॥श्वश्रूभिस्तिसृभिःसार्द्धमेवंधर्मेणयुज्यते इति॥पतिःसपिंडनंकरोतितदामात्रादिभिःसहैवस्त्रियाःसपिंडनंकुर्यादित्यर्थः॥ ( गारुडेपि ) पुत्रोनास्तिनभर्त्ताच स्त्रीणांताक्ष्यंसपिंडने ॥ कारयेद्वृद्धिसमये भ्रातृजायाथदेवरा इति ॥ ( पत्युः सापिंड्यमाह पराशरमाधवेसुमंतुः ) अपुत्रेप्रस्थितेकर्त्ता नास्तिचेच्छ्राद्धकर्मणि ॥ तत्रपत्न्यपिकुर्वीत सापिंड्यंपार्वणंतथा इति ॥ प्रस्थिते मृते इत्यर्थः॥(तत्रैव लौगाक्षिरपि ) सर्वाभावेस्वयंपत्न्यः स्वभर्तॄणाममंत्रकम् ॥ सपिंडीकरणंकुर्युस्ततःपार्वणमेवच इति ॥ ( विधवायाः पार्वणप्रकारः स्मृतिरत्नावल्याम् ) स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैवच ॥ विधवाकारयेच्छ्राद्धंयथाकालमतंद्रिता इति ॥ विधवास्वयंसंकल्पंकृत्वाऽन्यत्सर्वं ब्राह्मणद्वाराकारयेदित्युक्तंप्रयोगपारिजाते ॥ ( यतीनांसापिंड्यंनिषेधतिमाधवे उशनाः ) सपिंडीकरणंतेषां नकर्त्तव्यंसुतादिभिः ॥ त्रिदंडग्रहणादेव प्रेतत्वंनैवजायते इति ॥ ( त्रिदंडमपितत्रैव ) वाग्दंडोऽथमनोदंडः कायदंडस्तथैवच ॥ यस्यैषानियताबुद्धिस्त्रिदंडीतिसउच्यते इति ॥ ( तत्रैव ) एकोद्दिष्टंनकुर्वीत यतीनांचैवसर्वदा ॥ अहन्येकादशेतेषां पार्वणंतुविधीयते इति ॥ पौगंडमृतस्यापिसपिंडनंनकार्यम् ॥ ( तथाच देवलः ) द्वादशाद्वत्सरादर्वाक्पौगंडमरणेसति ॥ सपिंडीकरणंनस्यादेकोद्दिष्टानिकारयेत् इति ॥ पौगंडोनवहायन इति देवयाज्ञिकः ॥ एतदनुपनीतपरमितिविज्ञानेश्वरः ॥ अकृतविवाहपरमितिवृद्धाः ॥ इत्युभयात्मकं सपिंडीकरणंनिरूपितम् ॥ अथैताःसपिंडी

करणांताःप्रेतक्रियाः केषांचिद्दुर्मरणमृतानाम् एकादशेऽह्निनाराणबलिमकृत्वाचनकार्य्याः ॥ ( तत्राह हेमाद्रौवृद्धयाज्ञवल्क्यः ) सर्पविप्रहता
नांच शृंगिदंष्ट्रिसरीसृपैः ॥ श्राद्धमेषांनकर्त्तव्यं ब्रह्मदंडहताश्चये ॥ ( संवर्तोपि ) महापातकिनांचैव तथाचैवात्मघातिनाम् ॥ उदकंपिंड
दानंच श्राद्धंचैवतुयत्कृतम् ॥ नोपतिष्ठतितत्सर्व राक्षसैर्विप्रलुप्यते ॥ ( बृहद्गारुडेपि ) शृणुतार्क्ष्यपरंगोप्यं जातेदुर्मरणेसति ॥ लंघनैर्ये
मृताजीवा दंष्ट्रिभिश्चाभिघातिताः ॥ कंठग्रहे विलग्नानां क्षीणानांतुंडघातिनाम् ॥ विषाग्निवृषविप्रेभ्यो विषूच्याचात्मघातकाः ॥ पतनो
द्बंधनजलैर्मृतानांशृणुसंस्थितम् ॥ सर्पव्याघ्रशृंगिभिश्च उपसर्गोपलोदकैः ॥ ब्राह्मणैःश्वापदैश्चैव पतनैर्वृक्षवैद्युतैः ॥ नखैर्लोहैर्गिरेःपातैर्भित्तेः
पातैर्मृगैस्तथा ॥ खट्वायामंतरिक्षेच चौरचांडालतस्तथा ॥ उदक्याशुनकीशूद्ररजकादिविदूषिकाः ॥ ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छि
ष्टास्तुयेमृताः ॥ शस्त्रघातैर्मृतायेचास्पर्शस्पृष्टास्तथैवच ॥ तत्तुदुर्मरणंज्ञेयं यच्चजातंविधिंविना ॥ तेनपापेननरकान्भुक्त्वाप्रेतत्वभागिनः ॥
नतेषांकारयेद्दाहं सूतकंनोदकक्रियाम् ॥ नविधानंमृताद्यंच नकुर्यादौर्ध्वदेहिकम् ॥ नापिंडदानंकर्त्तव्यं प्रमादाच्चेत्करोतिहि ॥ नोपतिष्ठतितत्सर्वम
तरिक्षेविनश्यति ॥ अतस्तस्यसुतैःपौत्रैः सपिंडैःशुभमिच्छुभिः ॥ नारायणबलिःकार्य्यो लोकगर्हाभियाखग ॥ तथातेषांभवेच्छौचं नान्यथेत्यब्रवी
द्यमः ॥ कृतेनारायणबलावौर्ध्वदेहिकयोग्यता ॥ तस्यशुद्धिकरंकर्म तद्भवेन्नतदन्यथा–इति ॥ ( हेमाद्रौषट्त्रिंशन्मते ) कृत्वाचांद्रायणंपूर्वंक्रियाः
कार्य्यायथाविधि ॥ नारायणबलिःकार्य्यो लोकगर्हाभयान्नरैः ॥ अन्नमिष्टंप्रियंचैव विप्रेदद्यात्सदक्षिणम् ॥ पिंडोदकक्रियापश्चाद्वृषोत्सर्गा
दिकंचयत् ॥ एकोद्दिष्टानिकुर्वीत सपिंडीकरणं तथा इति ॥ योऽयमभ्युदकादिमृतानांनारायणबलिरुक्तः सतुक्रोधमदशोकादियोगेन
यैरात्माघातितस्तेषामेवनतुप्रमादतोविदितोवा ॥ (तदुक्तं तत्रैवबोधायनेन) बुद्धिपूर्वाद्धंतॄणां क्रियालोपोविधीयते ॥ तेषामेवचसंस्कर्तुर्दोष

स्तुश्रुत्युदाहृतः इति ॥ ( गोब्राह्मणहतानांतुविशेषः षट्त्रिंशन्मते ) गोब्राह्मणहतानांच पतितानांतथैवच ॥ ऊर्ध्वंसंवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकमिति ॥ ( नारायणबलिकालउक्तो भविष्योत्तरे ) पूर्णेसंवत्सरेतेषामथकार्य्यंदयालुभिः ॥ एकादशींसमासाद्य शुक्लपक्षस्यवैतिथिम् ॥ ( बोधायनसूत्रेपि ) अथातोनारायणबलिंव्याख्यास्यामः दक्षिणायने वोत्तरायणेवा अपरपक्षस्य द्वादश्यांक्रियेतपूर्वेद्युः षड्द्वादशवा ब्राह्मणान्निमंत्रयेत इति ॥ एतत्पूर्णसांवत्सरिकसपिंडीविषयंज्ञेयम् ॥ ( द्वादशेह्निकृतेतुव्यवस्था गारुडे ) निमित्तंदुर्गतिंकृत्वा यदि नारायणोबलिः ॥ एकादशाहेकर्त्तव्यो वृषोत्सर्गोपितत्रवै इति ॥ ( अथनारायणबलिप्रकारो बृहद्गरुडपुराणे ) नारायणबलौसम्यक्तीर्थंसर्वंप्रकल्पयेत् ॥ गंगायांयमुनायांच नैमिषेपुष्करेपिच ॥ तडागेजलपूर्णेवा ह्रदे वा विमलोदके ॥ वापीकूपगवांगोष्ठे गृहेवाप्रतिमालये ॥ कृष्णाग्रेकारयेद्विप्र बलिंनारायणाह्वयम् ॥ विष्णुःस्वर्णमयःकार्यो रुद्रस्ताम्रमयस्तथा ॥ ब्रह्मारौप्यमयस्तद्वद्यमोलोहमयोभवेत् ॥ सीसकंतुभवेत्प्रेतो ह्यथवादर्भकंतथा इति ॥ ( प्रतिमाप्रमाणमपितत्रैव ) सुवर्णकर्षकोविष्णुर्ब्रह्मारौप्यपलेनतु ॥ रुद्रस्ताम्रैर्दशपलैर्यमोलोहमयस्तथा ॥ चतुःषष्टिप्रमाणंतु पलंपुरुषसीसकः ॥ अर्द्धंवास्वर्णमानेनप्रतिमाकार्य्यामनोरमा ॥ सुवर्णंसर्वदैवत्यं सर्वदेवात्मकोनलः ॥ सर्वदेवमयोविप्रः सर्वदेवमयोहरिः ॥ ( शौनकोपि ) पलमानेनवार्द्धेन तदर्द्धेनचशक्तितः ॥ देवतानांहिप्रतिमावित्तशाठ्यविवर्जिता इति ॥ ( गारुडे ) शन्नोदेवीतिमंत्रेण गोविंदंपश्चिमेन्यसेत् ॥ अग्नआयाहीतिरुद्रमुत्तरएवविन्यसेत् ॥ अग्निमीळेतिमंत्रेण पूर्वेणैवप्रजापतिम् ॥ इषेत्वोर्ज्जेतिमंत्रेण दक्षिणेस्थापयेद्यमम् ॥ मध्येमंडलकंकृत्वा स्थाप्योदर्भमयोनरः ॥ ब्रह्माविष्णुस्तथारुद्रो यमःप्रेतश्चपंचमः ॥ पृथक्कुंभेततःस्थाप्याः पंचरत्नसमन्विताः ॥ विष्णुंविधिंशिवंधर्मं वेदमंत्रैश्चतर्पयेत् ॥ प्रेतायतर्पणंकार्यं मंत्रैःपौराणवैदिकैः ॥

सर्वौषध्यक्षतैर्मिश्रैर्विष्णुमुद्दिश्यतर्पयेत् ॥ कार्यंपुरुषसूक्तेन मंत्रैर्वावैष्णवैरपि ॥ दक्षिणाभिमुखोभूत्वा प्रेतंविष्णुमिति
स्मरन् ॥ अनादिनिधनोदेवः शंखचक्रगदाधरः ॥ अक्षयःपुंडरीकाक्षः प्रेतमोक्षप्रदोभव ॥ तर्पणस्यावसानेच वीतरागोविमत्सरः ॥
जितेंद्रियमनाभूत्वा शुचिष्मान्धर्मतत्परः ॥ होमंकृत्वाचरेत्पश्चाच्छ्राद्धान्विष्ण्वादिदैवकान् ॥ प्रथमंविष्णवेदद्या
द्वितीयंश्रीशिवायच ॥ याम्यायसपरिवाराय तृतीयंपिंडमुत्सृजेत् ॥ चतुर्थं सोमराजाय हव्यवाहायपंचमम् ॥ कव्यवाहा
यषष्ठंच दद्यात्कालायसप्तमम् ॥ रुद्रायचाष्टमंदद्यान्नवमंपुरुषायच ॥ प्रेतायदशमंदत्त्वा चैकादशंतुविष्णवे ॥ द्वादशंब्रह्मणेदद्या
द्विष्णवेचत्रयोदशम् ॥ चतुर्दशंशिवायैव यमायदशपंचकम् ॥ दद्यात्तत्पुरुषायैव पिंडंषोडशकंखग ॥ ऋचावैदापयेदर्घंमे
कोद्दिष्टेपृथक्पृथक् ॥ आपोदेवामधुमतीं आदिपिंडेप्रकल्पिता ॥ उपयामगृहीतोसि द्वितीयेर्घंनिवेदयेत् ॥ येनापावकचक्षुषा
तृतीयेचप्रकल्पिता ॥ येदेवासश्चतुर्थेतु समुद्रंगच्छपंचमे॥अग्निर्ज्योतिस्तथाषष्ठे हिरण्यगर्भश्चसप्तमे ॥ यज्जाग्रतेतिनवमे दशमेयाःफलीति
च॥दद्याच्चविश्वतश्चक्षुःपिंडेचैकादशेततः॥ भद्रंकर्णेभिरितिच कुर्यात्पिंडविसर्जनम् ॥ पंचश्राद्धानिकुर्वीत देवतानांयथाविधि ॥ शंखेवाताम्र
पात्रेवाअलाभेमृन्मयेपिवा॥तिलोदकंसमादायसर्वौषधिसमन्वितम्॥जलधारांततोदद्यात्पीठेपीठेपृथक्पृथक् इति॥ (अत्रविशेषस्तुग्रंथांतरात्)
इतिनारायणबलिप्रकारः ॥ ( अथसर्पदष्टहतेनागपूजाउक्ता भविष्योत्तरे ) प्रमादादिच्छयावापि नागाद्वासर्पतोमृतः ॥ पक्षयोरुभयोर्नागान्पं
चमीषुप्रपूजयेत् ॥ कुर्य्यात्पिष्टमयींलेखां नागप्रतिकृतिंभुवि ॥ अर्चयत्तांसितैःपुष्पैःसुगंधैश्चंदनेनतु ॥ प्रदद्याद्धूपदीपन्तु तंडुलांश्चसितान्
क्षिपेत् ॥ आमपिष्टंतथैवान्नं क्षीरंचविनिवेदयेत् ॥ उपस्थायवदेदेवं मुञ्चमुंचामुकंत्विति ॥ मधुरंतद्दिनेदद्यादेवमब्दंसमाचरेत् ॥ सौवर्णशक्ति

तोनागं ततोदद्याद्विजोत्तमः॥ गांसवत्सांततोदद्यात्प्रीयतांनागराडिति॥ यथाविभागंकुर्वीत कर्माणिप्राक्तनान्यपि ॥ नागाद्विमोक्षणार्थंतु प्रो
क्तमप्यधिकंत्विदम्॥द्विजान्विमोक्षयित्वातु संप्रीताःसन्तुपन्नगाः॥ इतिनागपूजा॥ (अथदुर्मरणनिमित्तप्रायश्चित्तानि दिवोदासीये) चांडाला
दिमृतेविप्रे त्वंतरिक्षमृतेपिवा ॥ कृच्छ्रातिकृच्छ्रचांद्रस्तु शुद्धिस्तत्रप्रकीर्त्तिता ॥ (तत्रैव जाबालिः) शूद्रेणदग्धोयोविप्रो नलभेच्छाश्वतीं ग
तिम् ॥ प्रायश्चित्तंप्रकुर्वीत ब्राह्मणःपापशुद्धये ॥ चांद्रायणंपराकंच प्राजापत्यंविशोधनम् ॥ (मदनरत्ने) ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छि
ष्टेतथैवच ॥ अस्पृश्यस्पर्शनेचैव खट्वादिमरणेपिच ॥ श्वानक्रव्यादसंस्पर्शे क्रिमिकीटोद्भवेऽपिच॥ एतद्दोषानुसारेण प्रायश्चित्तंसमाचरेत् ॥
कृच्छ्रांस्त्रिषट्पंचदशांश्चांद्रायणमथापिवा ॥ शुद्ध्यैतदानींसंपाद्य शवधर्मेणदाहयेत् ॥ (स्मृतिरत्नावल्याम्) शवंरात्र्युषितंचेत्त्रीन्कृच्छ्रान्कृ
त्वादहेत्सुतः इति॥ प्राजापत्यादिप्रत्याम्नाया उक्ताः ॥ (स्मृत्यर्थसारे) प्राजापत्येष्वशक्तस्तु धेनुंदद्यात्पयस्विनीम् ॥ धेनोरभावेनिष्कं
स्यात्तदर्द्धंपादमेववा इति ॥ निष्कश्चत्वारिंशन्माषकइत्यर्थः ॥ (पारिजातेषट्त्रिंशन्मते) कृच्छ्रायुतंचगायत्र्या द्वादशब्राह्मणभो
जनम् ॥ तिलहोमसहस्रंतु सममेतच्चतुष्टयम् ॥ धेनुनिष्कस्तदार्द्धार्द्धं प्राणायामशतद्वयमिति॥प्रायश्चित्तंसूतकान्तेकार्यम्॥अथदुर्मरणनिमि
त्तदानानि ॥ (शातातपस्मृतौ)व्याघ्रेणनिहतेप्रेते विप्रकन्यांविवाहयेत्॥सर्पदष्टेनागबलिर्देयः सर्पश्चकांचनः ॥ चतुर्निष्कमितंहैमं गजंदद्या
द्गजैर्हते ॥ राज्ञाविनिहतेदद्यात्पुरुषंतुहिरण्मयम् ॥ चौरेणनिहतेधेनुं वैरिणानिहतेवृषम् ॥ वृषेणनिहतेदद्याद्यथाशक्त्यातुकाञ्चनम् ॥
शय्यामृतेप्रदातव्या शय्यातूलीसमन्विता ॥ निष्कमात्रसुवर्णस्य विष्णुनासमधिष्ठिता ॥ शौचहीनेमृतेचैव द्विनिष्कस्वर्णजंहरिम् ॥ संस्का
रहीनेचमृते कुमारमुपनाययेत् ॥ निष्कत्रयंस्वर्णमितं दद्यादश्वंहयाहते ॥ शुनाहतेक्षेत्रपालं स्थापयेन्निजशक्तितः ॥ सूकरेणहतेदद्यान्म

हिषंदक्षिणान्वितम् ॥ कृमिभिश्चमृतेदद्याद्गोधूमान्नञ्चवारिका ॥ वृषंवृषहतेदद्यात्सौवर्णवस्त्रसंयुतम् ॥ शृङ्गिणानिहतेदद्यादृषभंवस्त्रसंयु
तम् ॥ शकटेनहतेदद्यादश्वं सोपस्कारान्वितम् ॥ भृगुपातहतेचैव प्रदद्याद्धान्यपर्वतम्॥अग्निना निहतेकार्यमुदकदानंस्वशक्तितः ॥ दारुणानि
हतेचैव कर्त्तव्यासदनेसभा ॥ शस्त्रेणनिहतेदद्यान्माहिषींदक्षिणान्विताम् ॥ अश्मनानिहतेदद्यात्सवत्सांगांपयस्विनीम् ॥ विषेणचमृतेदद्या
न्मेदिनींक्षेत्रसंयुताम् ॥ उद्बंधनेनचमृते कपिंकनकनिर्मितम् ॥ मृतेजलेनवरुणंहैमं दद्याद्विनिष्कजम् ॥ विषूचिकामृतेस्वादु भोजयेच्चशतं
द्विजान् ॥ घृतधेनुःप्रदातव्या कंठान्नकवलेमृते ॥ कासरोगेणचमृते अष्टकृच्छ्रंव्रतंचरेत् ॥ अतीसारमृतेलक्षं गायत्र्याःप्रयतोजपेत् ॥ शा
किन्यादिग्रहग्रस्ते जपेद्रुद्रंयथोदितम् ॥ विद्युत्पातेननिहते विद्यादानंसमाचरेत् ॥ अंतरिक्षमृतेकार्यं वेदपारायणंतथा ॥ सच्छा
स्त्रपुस्तकंदद्यादस्पृश्यस्पर्शतोमृते ॥ पतितेचमृतेकुर्यात्प्राजापत्यांस्तुषोडश ॥ मृतेचापत्यरहिते कृच्छ्राणांनवतिंचरेत् ॥ एवंकृते
विधानेतु विदध्यादौर्ध्वदैहिकम् ॥ ततःप्रेतत्वनिर्मुक्ताः पितरस्तर्पितास्तथा ॥ दद्युःपुत्रांश्चपौत्रांश्च आयुरारोग्यसंपदः इति ॥ अथपंचकादि
मृतविधानम् ॥ ( गरुडपुराणे ) मृतस्यपंचकेदाहविधिंवक्ष्मिशृणुष्वमे ॥ आदौकृत्वाधनिष्ठार्द्धमेतन्नक्षत्रपंचकम् ॥ रेवत्यंतंसदादूष्यमशुभं
सर्वदाभवेत् ॥ दाहस्तत्रनकर्त्तव्यो विपादःसर्वजंतुषु॥नजलंदीयतेतेषु ह्यशुभंसर्व्वदाभवेत्॥पंचकानंतरंसर्व्वं कार्यंकर्त्तव्यमन्यथा॥पुत्राणांगो
त्रिणांतस्य संतापोऽप्युपजायते ॥ गृहेहानिर्भवत्येव ऋक्षेष्वेषुमृतस्यच॥अथवाऋक्षमध्येच दाहस्तुविधिपूर्व्वकः॥शवस्यतुसमीपेच क्षेतव्याः
पुत्तलास्ततः ॥ दर्भकृतास्तुचत्वार ऋक्षमंत्राभिमंत्रिताः ॥ ततोदाहःप्रकर्त्तव्यस्तैश्चपुत्तलकैःसह ॥ सूतकान्तेततःपुत्रैः कार्य्यंशांतिक
पौष्टिकम् ॥ तिलान्गांचसुवर्णंच तदुद्देशेघृतंदहेत् ॥ भोजनोपानहौछत्रं हेममुद्राचवाससी ॥ दक्षिणादीयतेविप्रे पातकस्यप्रमोचनी इति ॥

( तद्विधिः ब्रह्मपुराणे ) कुंभमीनस्थितेचंद्रे मरणंयस्यजायते ॥ नतस्योर्ध्वंगतिर्दृष्टा संततौनशुभंभवेत् ॥ नतस्यदाहःकर्त्तव्यो विनाशास्त्रे
षुजंतुषु ॥ अथवातद्दिनेकार्यो दाहस्तुविधिपूर्वकम् ॥ धनिष्ठापंचकेजीवो मृतोयादिकथंचन ॥ त्रिपुष्करेयाम्यभेवा कुलजान्मारयेद्ध्रुवम् ॥
तत्रानिष्टविनाशार्थं विधानंसमुदीर्यते ॥ दर्भाणांप्रतिमाःकार्याः पंचोर्णा सूत्रवेष्टिताः ॥यवपिष्टेनानुलिप्तास्ताभिः सहशवंदहेत् ॥ प्रेतवाहः
प्रेतसखः प्रेतपःप्रेतभूमिपः ॥ प्रेतहर्त्तापंचमस्तु नामान्येतानिचक्रमात् ॥(अथप्रतिमागंधपुष्पैःपूजयित्वा) ॥ शिरसिदक्षिणेकुक्षौ वामेनाभौ
चतुर्थकम् ॥ पंचमंपादयोर्मध्ये तेषुदद्याद्घृताहुतीः ॥ सूतकान्तेततःकुर्याद्विधानपंचकंतथा ॥ अन्यथानगतिस्तस्य प्रेतपुत्रस्यशोभनम् ॥ः
स्वगृह्योक्तविधानेन कृत्वाग्निस्थापनंततः ॥ अभिध्यानंविवर्णंतु देवतानांतथाशृणु॥ वसवोवरुणश्चैव अजैकपात्तृतीयकम्॥ अहिर्बुध्न्यश्चतुर्थं
च पूषणंपंचमंतथा ॥ यमायधर्मराजाय मृत्यवेचान्तकायच ॥ वैवस्वतायकालाय सर्वभूतक्षयायच ॥ औदुंबरायदध्नाय नीलायपरमे
ष्ठिने ॥ वृकोदरायचित्राय चित्रगुप्तायवैनमः ॥ अघोररुद्रमंत्रैश्च निर्वापयेत्क्रमेणतु॥ विधिनाश्रपणंकृत्वा एकैकामाहुतिंहुनेत्॥कुंडादीशान
दिग्भागे स्थंडिलंहस्तमात्रकम् ॥ तत्रवस्त्रंसमास्तीर्य स्थापयेद्वस्वादिपंचकान् ॥ चतुर्दशयमांश्चैव अघोरंस्थापयेत्पुनः ॥ अव्रणाःकलशाः
स्थाप्या दिक्षुचत्वारिविन्यसेत् ॥ कलशःपंचमोमध्ये स्थापयेद्विधिपूर्वकम् ॥ उच्चार्यवरुणंमंत्रं पूरयेत्तीर्थवारिणा ॥ मध्येसर्वौषधीः क्षिप्त्वा
मृद्दूर्वापल्लवस्तथा ॥ हिरण्यफलसंयुक्तं वस्त्रेणवेष्टयेत्ततः॥कलशोपरिन्यसेन्मूर्तिं पंचस्वर्णमयीभवेत्॥ प्रतिष्ठापूजनंकार्यं पंचसूक्तंजपेत्ततः ॥
श्रपयित्वाचरुंविद्वान्दद्यादग्निमुखंततः ॥ आघारावाज्यभागौच ततोवह्निंसमर्चयेत्॥ समित्तिलैश्चचरुभिर्होमंकुर्यात्पृथक्पृथक् ॥ अघोरेणै
व मंत्रेण ततोहोमंचरेत्क्रमात् ॥ पूर्णाहुतिंचाविधिवत्पूजयेद्देवतांततः ॥ इत्थंसमाप्यहवनं धेनुंदद्यात्पयस्विनीम् ॥ सहिरण्यंतिलान् दत्त्वा

माहिषींसप्तधान्यकम् ॥ सहिरण्यंघृतंदद्यात् कृष्णवस्त्रंचदक्षिणाम् ॥ अभिषेकंततःकुर्यात्कलशोदेनयत्नतः ॥ कलशैःस्नपनंतस्य कुर्या
दाज्यावलोकनम् ॥ वस्त्रंचैवपरित्यज्य रुद्रभक्तिविशेषतः ॥ ब्राह्मणान्भोजयेत्पश्चात् पायसंमधुसर्पिषा ॥ एवंयःकुरुतेपुत्रः शुभंतस्यप्र
जायते॥विधानंयोनकुर्वीत विघ्नस्तस्यभवेत्सदा ॥ तस्मात्सर्वप्रयत्नेन शांतिंकुर्याद्यथाविधि ॥ कृत्वातुगोत्रजाःसर्वे सुखिनःस्युर्निरामयाः ॥
भवंतिनात्रसंदेहो नात्रकार्याविचारणा ॥ इतिब्रह्मपुराणोक्तंपंचकविधानम् ॥ ( मदनरत्ने गार्ग्यः ) यदिभद्रातिथीनांस्याद्भानुभौमशनैश्चराः॥
त्रिपादर्क्षैश्चसंयोगे द्वयोर्योगेद्विपुष्करः ॥ द्वित्रिपुष्करयोगेतु मृतिमृत्यन्तरावहा ॥ दहनेमरणेचैव त्रिगुणंस्यात्त्रिपुष्करे ॥ खननेप्येवमेवस्या
त्तद्दोषोपशांतये॥तिलपिष्टैर्यवैर्वापि शरीरंकारयेत्ततः ॥ शूर्पेनिधायालंकृत्य दाहयेत्पैतृकोपरि ॥ ( तदाहेमंत्रमाह बोधायनः ) अस्मात्त्व
मितिमन्त्रेण तिलपिष्टंप्रदाहयेत्॥द्वित्रिपुष्करयादोषैस्त्रिभिःकृच्छ्रैर्व्यपोहति-इति॥इतिदुर्मरणप्रायश्चित्तादीनि॥ अथ सांवत्सरिकंश्राद्धंनिरूप्य
ते॥तत्रतावत्क्षयाहनिर्णयः॥(ब्रह्मपुराणे)प्रतिसंवत्सरंकार्य्यं मातापित्रोर्मृतेऽहनि ॥ पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्यचैवहि--इति ॥ अत्रमृ
ताहशब्देन मरणाहर्वर्तिनीतिथिर्विवक्षिता॥ संवत्सरान्तेमुख्यमृताहस्याऽसंभवात् ॥ अहर्ग्रहणंरात्रेरप्युपलक्षणार्थं तेनरात्रिमृतस्यापिसातिथि
र्लभ्यते॥अतःसंवत्सरान्तेमृताहसंबंधिन्यांतिथौसांवत्सरिकंकर्त्तव्यमित्यर्थः॥(तथाच हेमाद्रौवसिष्ठः)पारणेमरणेनॄणां तिथिस्तात्कालिकीस्मृ
ता॥पित्र्येऽस्तमयवेलायां स्पृष्टापूर्णानिगद्यते-इति॥ तात्कालिकी यस्मिन्कालेउपवासादिव्रतपारणं मरणं वातत्कालवर्त्तिन्येवतयोस्तिथिः॥
नपुनस्तत्कालवर्त्तिनी इत्यर्थः ॥ अथवात्रमृताहशब्देनोपलक्षणत्रयविशिष्टमहोरात्रमाभिप्रेतम् ॥ ( तदाह तत्रैवव्यासः ) मासपक्षतिथिस्पृ 
ष्टे योयस्मिन्म्रियतेऽहनि ॥ प्रात्यब्दन्तत्तथाभूतं क्षयाहंतस्यतंविदुरिति ॥ तथाभूतमित्युपलक्षणत्रयोपेतमित्यर्थः ॥ एकोद्दिष्टादिश्राद्धेषु

मध्यह्नाद्विव्यापिनीग्राह्या ॥ ( तथाच हेमाद्रौवृद्धगौतमः ) मध्याह्नव्यापिनीयास्यात्सैकोद्दिष्टेतिथिर्भवेत् ॥ अपराह्णव्यापिनीया पार्वणेसा तिथिर्भवेत् ॥ मध्याह्नव्यापिनीयातु तिथिःपूर्वापरापिवा ॥ तस्यांपितृभ्योदातव्यं ह्रासवृद्धीनकारणम्--इति ॥ ( क्षयाहप्रशंसामाह हेमाद्रौ जाबालिः ) उपरागसहस्राणि अमावास्यायुतानिच ॥ अक्षयंतुभवेच्छ्राद्धं यस्तुदद्यान्मृतेऽहनि ॥ ( अकरणेदोषमाह तत्रैवकार्ष्णाजिनिः ) ऊषरेतुयथाक्षिप्तं बीजंनप्रतिरोहति ॥ तथाचतद्भवेत्तेषां यन्नदत्तंमृतेऽहनि--इति ॥ तेनमृताहे अवश्यंदातव्यमित्यभिप्रायः ॥ अत्रैकोद्दिष्टपार्वणयोर्विचारः ॥ ( तथाचहेमाद्रौब्रह्माण्डपुराणे ) वत्सरेकेचिदेकस्मै दानंत्रिभ्यः परेजगुः ॥ अतःस्मृतिविरोधेन निर्णयंश्रोतुमर्हथ--इति ॥ एकस्मैद नमित्यनेन एकोद्दिष्टवत् सांवत्सरिकश्राद्धप्रयोगउक्तः ॥ त्रिभ्य इत्यनेनपार्वणवदित्यर्थः ॥ तावदेकोद्दिष्टविधायकानिवाक्यानि लिख्यंते ॥ ( तत्राह यमः ) सपिंडीकरणादूर्ध्वं प्रतिसंवत्सरंसुतः ॥ एकोद्दिष्टंप्रकुर्वीत पित्रोरन्यत्रपार्वणम् ॥ ( हेमाद्रौव्यासोपि ) प्रतिसंवत्सरंयत्र मातापित्रोःप्रदीयते ॥ अदैवंभोजयेच्छ्राद्धं पिंडमेकंचनिर्वपेत्--इति ॥ यमेनत्वेकोद्दिष्टं सांवत्सरिकं विधायतस्याकरणेदोषउक्तो हेमाद्रौ ॥ एकोद्दिष्टंपरित्यज्य पार्व्वणंकुरुतेयदि ॥ अकृतंतद्विजानीयात्समातृपितृघातकः--इति ॥ अधुनापार्वणविधायकानिवचनानि लिख्यंते ॥ ( तत्र हेमाद्रिमाधवयोर्जातूकर्ण्यः ) पितुःपितृगणस्थस्य कुर्य्यात्पार्वणवत्सुतः॥प्रत्यब्दंप्रतिमासंच विधिर्ज्ञेयःसनातनः--इति ॥ पितृगणस्थःकृतसपिंडीकरणःसनातनःआवश्यकइत्यर्थः ॥ ( तत्रैवपुलस्त्योपि ) एकोद्दिष्टंतुकर्त्तव्यं यावत्पित्रोःसपिंडनम्॥ततःसपिंडनादूर्ध्वमेकोद्दिष्टंनिवर्त्तते ॥ ( भविष्यपुराणेपि ) सपिंडीकरणंकृत्वा कुर्यात्पार्वणवत्सदा ॥ प्रतिसंवत्सरंविद्वानित्येवंविष्णुरब्रवीत्-इति ॥ अत्र केचित्पार्वणैकोद्दिष्टयोरन्यथाव्यवस्थामाहुः॥ (तत्र हेमाद्रिमाधवयोर्जमदग्निः) आपाद्यःसहपिंडत्वमौरसोविधिवत्सुतः ॥ कुर्वीतदर्शवच्छ्राद्धं

माता पित्रोः क्षयेऽहनि ॥ पुत्राणामौरसः पुत्रः पुत्रमात्रास्तथाऽपरे ॥ पितुः पितृगणस्थस्य नित्यं कुर्यात्स पार्वणमिति ॥ ननु दर्शातिदेशात् मातामहानामपि श्राद्धं प्रसज्येत ॥ नायं दोषः ॥ प्रत्याब्दिके षट्पिंडानां पर्युदस्तत्वात् ॥ ( तथाच कात्यायनः ) कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ॥ प्रत्याब्दिकं च शेषेषु पिंडाः स्युः षडिति स्थितिः-इति ॥ कर्षूसमन्वितं सपिंडीकरणम् अनेन अर्थात् कर्षूसमन्वितादिषु मातामहश्राद्धं न विद्यत इति चोक्तं भवति ॥ ( हेमाद्रौ जाबालिः ) औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु ॥ प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश-इति ॥ तदयुक्तम् ॥ एकोद्दिष्टं तु कर्त्तव्यमौरसेन मृतेऽहनि-इति माधवीये पैठिनसिवचनविरोधात ॥ जमदग्न्यादिवाक्यं तु क्षयाहव्यतिरिक्तप्रत्यब्दकर्त्तव्याक्षय्यतृतीयादिविषयत्वेनाप्युपपद्यते-इति ॥ केचित् अन्यथा व्यवस्थामाहुः ॥ ( तत्र हेमाद्रिसुमंतुस्मृतिभविष्यपुराणेषु ) ॥ कुर्याच्चविधिवच्छ्राद्धं पार्वणं योऽग्निमान्द्विजः ॥ पित्रोरनग्निमान्धीर एकोद्दिष्टं मृतेऽहनि-इति ॥ तदप्युक्तम् ॥ बह्वग्नयस्तु ये विप्रा ये चैकाग्नय एव च ॥ तेषां सपिंडनादूर्ध्वमेकोद्दिष्टं न पार्वणमिति-माधवीये मनुना साग्निकस्यापि एकोद्दिष्टविधानात् ॥ तत्रैकोद्दिष्टपार्वणयोर्विकल्पस्तथापि येषां परंपरया पार्वणमेव क्रियते तैस्तदेव कर्त्तव्यं येषामेकोद्दिष्टमेव क्रियते तैरेकोद्दिष्टमेवेति ॥ येनास्य पितरो याता येन याताः पितामहाः ॥ तेन यायात्सतां मार्गं तत्र गच्छन्न दुष्यति-इति मनुवचनात् ॥ तेन निरग्निकौरसक्षेत्रजपुत्रिकापुत्रैर्मृतेऽहनि एकोद्दिष्टं कर्त्तव्यम् ॥ साग्निकैस्तु पार्वणमेव अन्यैस्तु दत्तकादिभिर्दशपुत्रपुत्रैरेकोद्दिष्टमेवेति स्थितम् ॥ ( उक्तंच हेमाद्रौ भविष्यपुराणे ) निरग्नेरौरसस्योक्तमेकोद्दिष्टं मृतेऽहनि ॥ प्रत्यब्दं पार्वणं साग्नेरन्येषान्तु न पार्वणमिति ॥ अमावास्यायां प्रेतपक्षे च मृतानां सर्वेषां पार्वणमेवानयतम् ॥ ( तदाह हेमाद्रिमाधवयोः शंखः ) ॥ अमायां तु क्षयो यस्य प्रेतपक्षेथवा पुनः ॥ पार्वणं तस्य कर्त्तव्यं नैकोद्दिष्टं कदाचन इति ॥ प्रेतपक्षोऽश्वयुक्कृष्णपक्ष इत्यर्थः ॥ ( तत्रैव ) प्रेतपक्षे प्रमीतस्यापि

तुःकुर्वीतपार्वणम् ॥ पितृव्यभ्रातृमातृणामेकोद्दिष्टंनपार्वणम्–इति ॥ इत्थंपार्वणैकोद्दिष्टेअभिहितेयतेस्तुनकाप्येकोद्दिष्टम् ॥ किन्तुसर्वत्र पार्वणमेव (तथाच माधवेप्रचेताः) दण्डग्रहणमात्रेणनैवप्रेतोभवेद्यतिः॥ अतःसुतेनकर्त्तव्यं पार्वणंतस्यसर्वदा॥(?)(हेमाद्रौशातातपः) एको द्दिष्टंजलंपिंडमाशौचंप्रेतसत्क्रियाम् ॥ नकुर्यात्पार्वणादन्यद्ब्रह्मीभूतायभिक्षवे इति ॥ ( मातृश्राद्धेविशेषमाह कात्यायनः ) प्रत्यब्दंयोयथा कुर्यात्पुत्रःपित्रेसदाद्विजः ॥ तथैवमातुःकर्त्तव्यं पार्वणमन्यदेववा इति ॥ अन्यदेकोद्दिष्टंयत्तुतेनैवोक्तम् ॥ पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैवहीति ॥ एतत्पितृव्यादिसमभिव्यवहारान्मातृसपत्नीपरमितिवेदितव्यम् ॥ ( अपुत्राणांसांवत्सरिकश्राद्धमाहाऽऽपस्तंबः ) अपुत्राये मृताःकेचित्स्त्रियोवापुरुषाश्चये ॥ तेषामपिचदेयंस्यादेकोद्दिष्टं नपार्वणम् ॥ मित्रबंधुसपिंडेभ्यःस्त्रीकुमारीभ्यएवच ॥ दद्यादेमासिकंश्राद्धंसां वत्सरमतोन्यथा ॥ ( प्रचेताः ) सपिंडीकरणादूर्ध्वमेकोद्दिष्टंविधीयते ॥ अपुत्राणांचसर्वेषामपत्नीनांतथैवच–इति ॥ अपत्नीनां अकृतविवाहा नाम् ॥ ( हेमाद्रावत्रिः ) भ्रात्रेभगिन्यैपुत्राय स्वामिनेमातुलायच ॥ पितृव्यगुरवेश्राद्धमेकोद्दिष्टंनपार्वणम् ॥ ( तत्रैव जातूकर्ण्यः ) पितृव्य भ्रातृमातृणामपुत्राणांतथैवच ॥ मातामहस्यापुत्रस्य श्राद्धादिपितृवद्भवेदिति ॥ ( एकोद्दिष्टलक्षणमाह कात्यायनः ) अथैकोद्दिष्ट मेकंपवित्रमेकोऽर्घ्यएकंपिंडंनावाहनंनाग्नौकरणंनात्रविश्वेदेवाः स्वदितमितितृप्तिप्रश्नःसुस्वदितमित्यनुज्ञानमुपतिष्ठतामित्यक्षय्यस्थाने अभिरम्यतामितिविसर्गेअभिरताःस्मेत्यपरे इति ॥ तच्चैकोद्दिष्टंत्रिविधंनवंनवमिश्रंपुराणंचेति ॥ अत्रप्रथमाहाद्येकादशाहांतविषयंनवश्राद्ध म् ॥ नवश्राद्धानामुपरिकर्त्तव्यंमासिकंनवमिश्रम् ॥ मासिकानामुपरिकर्त्तव्यंप्रत्याब्दिकादिचपुराणम् इति माधवप्रभृतयः ॥ एतच्छ्राद्धं सूतिकादिनामुख्यकालातिक्रमेत्वाशौचागमनानन्तरकालएवकार्यम् ॥ ( तथाच ऋष्यशृङ्गः ) देयेपितृणांश्राद्धेतु आशौचंजायतेतदा ॥

आशौचेतुव्यतिक्रान्ते तेभ्यःश्राद्धंप्रदीयते इति ॥ यत्त्वत्रिवचनम् ॥ तदहश्चेत्प्रदुष्येतकेनचित्सूतकादिना ॥ सूतकानन्तरंकुर्यात्पुनस्तदहरे
वव-इति ॥ सूतकानन्तरकालेवाअन्तरेवामासितत्पक्षेतात्तिथौवेतिपक्षद्वयमुपन्यस्तम् ॥ तत्राद्यपक्षेविरोधएवनास्ति पुनस्तदहरेववेत्ययं
पक्षः सूतकव्यतिरिक्तनिमित्तान्तरेणविघ्नेसमुत्पन्नेप्रतिमासंक्षयाहेविहितैकोद्दिष्टमासिकश्राद्धविषयइतिऋष्यशृंगवचनाविरोधायव्यवस्था
प्यते ॥ ( अतएव देवलः ) एकोद्दिष्टेतुसंप्राप्ते यदिविघ्नःप्रजायते ॥ अन्यस्मिंस्तत्तिथौतस्मिन् श्राद्धंकुर्यात्प्रयत्नतः इति ॥ अन्यस्मिन्नन्तरे
मासितत्तिथौमृततिथौयस्मिन्शुक्लेकृष्णेवामृतस्तस्मिन्पक्षेश्राद्धंविघ्नवशात्कुर्यादित्यर्थः ॥ आशौचनिमित्तकविघ्नेतुमासिश्राद्धमपिसूत
कानन्तरमेवऋष्यशृङ्गवचनबलादनुष्ठेयम् ॥ एतत् ऋष्यशृंगवचनंसूतकाशौचविषयम् ॥ निमित्तान्तरतस्तदहर्विधाते ॥ एकोद्दिष्टेतुसंप्राप्ते
यदिविघ्नःप्रजायते ॥ इत्यादिस्मृत्यन्तरवचनमिति ॥ यत्तु व्यासेनोक्तम् ॥ श्राद्धविघ्नेसमुत्पन्ने अन्तरामृतसूतके ॥ अमायांतुप्रकुर्वीत
शुद्धावेकेमनीषिणः-इति ॥ अन्तराप्रयोगमध्येपाकोपक्रमात्प्राक्मृतकेसूतकेवाजातेअमावास्यायांशुद्धौशुद्ध्यनन्तरंवाश्राद्धंप्रकुर्वीतइति ॥
एतदनुमासिकसांवत्सरिकश्राद्धविषयम् ( अतएवोक्तं षट्त्रिंशन्मते ) ॥ मासिकेब्देतुसंप्राप्ते अन्तरामृतसूतके ॥ वदन्तिशुद्धौतत्कार्यं
दर्शेवापिविचक्षणाः-इति ॥ दर्शग्रहणंशुक्लकृष्णैकादश्योरुपलक्षणार्थम् ॥ ( अतएव मरीचिः ) श्राद्धविघ्नेसमुत्पन्ने अविज्ञातमृतेऽहनि ॥
एकादश्यान्तुकर्त्तव्यं कृष्णपक्षेविशेषतः॥ इति कृष्णपक्षे या एकादशीतस्यां विशेषतः कर्त्तव्यमितियोजनापितृकार्ये कृष्णपक्षस्यैव विशे
षतोग्राह्यत्वात् कृष्णैकादशीतोपि अमावास्यामुख्यत्वं पितृकार्येदंडापूपन्यायसिद्धम् एतदुक्तंभवति आशौचसमनन्तरकालोमुख्यकाल
सन्निकृष्टत्वाच्छ्रेष्ठतमः दर्शकालस्तुमुख्यकालप्रत्यासत्त्यभावात् ततोजघन्यः-इति ॥ ( अतएव ऋष्यशृङ्गः ) शुचीभूतेनदातव्यं यातिथिः

प्रतिपद्यते ॥ सातिथिस्तस्यकर्त्तव्या नचान्यावैकदाचन ॥ इतिशुचिनातावच्छ्राद्धंकर्त्तव्यंतत्राशौचवशान्मुख्यकालेशुद्ध्यभावे शुद्ध्यनन्तरंयातिथिः प्रतिपद्यते लभ्यते सातिथिस्तस्य कर्मणोऽङ्गत्वेनस्वीकर्त्तव्या आशौचाद्यनुपघातेतुमुख्यकालोनालस्यादिनाऽपिक्रमणीयः ॥ तदाह सएव-तिथिच्छेदोनकर्त्तव्यो विनाऽऽशौचंयदृच्छया ॥ पिंडंश्राद्धंचदातव्यं विच्छित्तिंनैवकारयेत् ॥ इति ॥ श्राद्धशब्देनात्रब्राह्मणतर्पणमात्रंविवक्षितंपिंडदानस्य पृथगुपात्तत्वात् ॥ विच्छित्तिंनैवकारयेदितिब्राह्मणकर्मकर्त्तुमसमर्थश्चेत्पिंडप्रदानमात्रमपिकुर्यात् ॥ सर्व्वथा पित्रर्चनस्यविच्छेदंनकुर्यादित्यर्थः ॥ अतएवनिगमः आहिताग्नेःपित्रर्चनंपिंडैरेव ब्राह्मणानपिवाभोजयेत् इति ॥ अत्रव्यवस्थितोविकल्पः सतिसामर्थ्ये ब्राह्मणतर्पणंपिंडप्रदानंचकुर्यात् तत्राऽसामर्थ्येपिंडप्रदानमात्रमिति ॥ ( यत्तु हारीतेन ) श्राद्धविघ्ने समुत्पन्नेअमावास्यादिष्वामश्राद्धंविहितम् ॥ श्राद्धविघ्नेद्विजातीनामामश्राद्धंप्रकीर्त्तितम् ॥ अमावास्यादिनियतं माससंवत्सराद्दते इति॥मासं मासिकम्॥ सांवत्सरंसांवत्सरिकम् ॥ तद्भार्यारजोदर्शनकृतविघ्नविषयम् ( तथाऽऽहोशनाः ) अपत्नीकःप्रवासीच यस्यभार्यारजस्वला ॥ सिद्धान्नंनप्रकुर्व्वीत आमन्तस्यविधीयते इति ॥यस्ययजमानस्यभार्याऋतुमतीतत्रपाककर्त्रभावेनित्यनैमित्तिकश्राद्धेषुमासिकसांवत्सरिकव्यतिरिक्तेषुयजमान आमश्राद्धाधिकारी भवतीत्यर्थः ॥ (कात्यायनोपि ) आपद्यनग्नौतीर्थेच प्रवासेपुत्रजन्मनि ॥ आमश्राद्धंप्रकुर्वीत यस्यभार्यारजस्वला॥( व्याघ्रपादोऽपि ) आर्त्तवेदेशकालानां विप्लवेसमुपस्थिते ॥ आमश्राद्धंद्विजैःकार्यं शूद्रेणतुसदैवहि इति ॥ नचकात्यायनव्याघ्रपादवचनपर्यालोचनयामासिकप्रत्याब्दिकयोरप्यामश्राद्धंप्राप्नोतीतिमन्तव्यम् ॥ 'माससंवत्सराद्दते' इतिहारीतवचनविशेषेणामश्राद्धस्य तद्व्यतिरिक्तविषयत्वागमात् ॥ ( अतएव मरीचिः ) अनग्निकःप्रवासीच यस्यभार्यारजस्वला ॥ आमश्राद्धंद्विजःकुर्याद्व्रतत्कुर्यान्मृतेऽ[illegible] ॥

इति ॥ तदामश्राद्धंमृतेऽहनिनकुर्यात् किन्तुपक्वान्नेनैवकुर्यादित्यर्थः ॥ ( लौगाक्षिरपि ) पुष्पवत्स्वपिदारेषु विदेशस्थोप्यनग्निकः ॥ अन्नेनैवा ब्दिकंकुर्याद्धेम्नावामेनवाक्वचित् इति ( यत्तु स्मृत्यन्तरे ) भार्यायांरजस्वलायांमृतेऽहनिश्राद्धनिषेधः ॥ मृतेऽहनितुसंप्राप्ते यस्यभार्यारजस्व ला ॥ श्राद्धंतदानकर्त्तव्यं कर्त्तव्यंपंचमेऽहनीतितस्यायंविषयः अपुत्रायाः पत्न्याएवपत्युर्मृताहश्राद्धेऽधिकारायदास्वयमेवरजस्वलास्या त्तदामृतेऽहनिश्राद्धंनकर्त्तव्यं किन्तुपंचमेऽहनीति ॥ ( तथाच गौतमः ) अपुत्रातुयस्यभार्या संप्राप्तेभर्तुराब्दिके ॥ रजस्वलाभवेत्सातु कु र्यात्तत्पंचमेऽहनि इति॥(प्रभासखंडेऽपि) शुद्धासातुचतुर्थेह्नि स्नानान्नारीरजस्वला॥दैवेकर्माणिपित्र्येच पंचमेऽहनिशुध्यति इति ॥ अन्येतु- श्राद्धीयेऽहनिसंप्राप्ते यस्यभार्यारजस्वला॥श्राद्धंतत्रनकर्त्तव्यं कर्तव्यंपंचमेऽहनि ॥ इतिश्लोकंगौतमवचनमन्यथापठित्वाश्राद्धादौकर्म्मणिभा र्ययासहैवाधिकारश्रवणात्तस्यांरजोदर्शनदूषितायामधिकारनिवृत्तेर्मुख्यकालमतिक्रम्यपंचमेऽहनिश्राद्धंकर्त्तव्यमितिमन्यंते नन्वस्मिन्पा ठेऽमावास्यादिश्राद्धस्यापिपंचमेऽहन्युत्कर्षःप्राप्नोति ॥ मैवंश्राद्धविघ्नेद्विजातीनामिति हारीतवचनेनामावास्यादिष्वामस्यान्नकार्ये सोमकार्येपू तिकवद्विहितत्वात् ॥ श्राद्धीयेऽहनीत्यस्यवचनस्यमृताहव्यतिरिक्तविषयत्वेनसार्थकत्वमस्त्वितिचेत् भवेदेतदेवं यदि विषयान्तरं वक्तुंशक्ये तनत्वेतदस्ति मृताहविषयन्तु 'मृतेहनितुसंप्राप्ते' इतिस्मृत्यन्तरवचनादेवावगम्यते तस्मादेकभार्येणमृताहश्राद्धंरजोदर्शनरूपविघ्नोपरमकाल एवकर्त्तव्यं भार्यान्तरयुक्तेनत्वधिकारानपगमान्मुख्यएव कालेकर्त्तव्यमिति यदत्रयुक्तं तद्ग्राह्यमितिपराशरमाधवीयाद्यवस्था ॥ एवमेव हेमाद्रिमदनपारिजातयोः ॥ अथ क्षयाहाऽपरिज्ञानेसांवत्सरिकश्राद्धकालः ॥ ( तत्र हेमाद्रौबृहस्पतिः ) नज्ञायतेमृताहश्चेत्प्रमीतेप्रोषिते सति ॥ मासश्चेत्प्रतिविज्ञातस्तद्दर्शस्यान्मृतेऽहनि ॥ इति यस्यप्रोषितस्याऽप्रोषितस्यवामृतस्यतिथिर्नज्ञायतेतस्यतन्मासामावास्यायां

सांवत्सरिकंकार्यमित्यर्थः ॥ ( अस्मिन्नेवविषये एकादश्यांश्राद्धमाहमरीचिः ) श्राद्धविघ्नेसमुत्पन्ने अविज्ञातेमृतेऽहनि ॥ एकादश्यान्तुकर्त्तव्यं कृष्णपक्षेविशेषत इति ॥ यस्य तुमृताहः परिज्ञायतेमासस्तुनज्ञायते तस्यमार्गशीर्षे माघेवातस्मिन्नहनिश्राद्धंकर्त्तव्यम् ॥ ( तथाच बृहस्पतिः ) यदामासोनविज्ञातो विज्ञातंदिनमेवतु ॥तदामार्गशिरेमासि माघेवातद्दिनंभवेत्—इति ॥ यदातुप्रोषितमृतस्यदिनमासावुभावप्यविज्ञातौ स्यातां,तदातत्प्रस्थानकालिकयोर्दिनमासयोस्तत्सांवत्सरिकंकार्यम् ॥ ( तदाह बृहस्पतिः ) दिनमासौनविज्ञातौमरणस्ययदापुनः॥ प्रस्थानदिनमासौतु ग्राह्यौपूर्वोक्तयादिशा इति ॥ प्रस्थानतिथिमासयोरुभयोरप्यज्ञानेतुतन्मरणश्रवणकालिकयोस्तिथिमासयोःकुर्यात् ॥ (तदाह हेमाद्रौप्रचेताः ) अविज्ञातमृते अमावास्यायांश्रवणदिवसेवा इतिश्रवणदिवसेमरणवार्त्ताकर्णनातिथौ इत्यर्थः ॥ इतिसांवत्सरिककालनिरूपणम् ॥ ( अथसंघातमरणेक्रममाह ऋष्यशृङ्गः ) भवेद्यादिसपिंडानां युगपन्मरणंतथा ॥संबंधासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत्॥ इति ॥ ( अत्र माधवाचार्यः ) पत्न्यादिसपिंडेषुसंबंधासत्तिरेवंद्रष्टव्या ॥ पतिपत्न्योः संबंधःप्रत्यासन्नः एकप्रतियोगिकत्वादव्यवधानाच्च पतित्वंपत्नीमात्रनिरूप्यं पत्नीत्वमपिपतिमात्रनिरूप्यमित्येकप्रतियोगिकत्वमतएवाप्यवहितत्वञ्चतत्संबंधस्य ॥ पुत्रस्यतु मातापितृद्वयनिरूप्यत्वेनविलम्बितप्रतिपत्तेर्विप्रकृष्टः संबंधः॥भ्रातुस्तुपितृजत्वव्यवधानेनततोऽपिविप्रकृष्टः एवमन्यत्रोहनीयम् इत्यर्थः॥(पत्न्यादीनांपित्रोश्चसंघातमरणे माधवीयेऋष्यशृङ्गः ) पत्न्याःपुत्रस्यतत्पुत्रभ्रात्रोस्तत्तनयस्यच ॥ स्नुषाश्वश्रोश्चपित्रोश्च संघातमरणंयदि ॥ अर्वागब्दान्मातृपितृपूर्वंसापिंड्यमाचरेदिति ॥ तत्पुत्रः पुत्रपुत्रः ॥ तत्तनयो भ्रातृतनयः इत्यर्थः ॥ ( यत्तु देवलेनोक्तम् ) पितरौप्रमृतौयस्य देहस्तस्याशुचिर्भवेत् ॥ नदैवंनापिपित्र्यंच यावत्पूर्णोनवत्सरः ॥ इतितत्पूर्वोक्तपत्न्यादिव्यतिरिक्तसापिंडविषयम् ॥ ( अतएव लौगाक्षिः )

अन्येषांप्रेतकार्याणि महागुरुनिपातने ॥ कुर्यात्संवत्सरादर्वाक्श्राद्धमेकंतुवर्जयेत् ॥ इतिप्रेतकार्याणिदहनादीन्याद्यश्राद्धान्तानिविवक्षि
तानि ॥ आद्यंश्राद्धमशुद्धोपि कुर्यादेकादशेऽहनि ॥ इतिविशेषस्मरणात् ॥ अनेनापितृमातृमरणेवत्सरमध्येपत्न्यादीनांदाहादिप्रेतकार्यं
श्राद्धंच कर्त्तव्यमेव ॥ पत्न्यादिभिन्नसपिंडानान्तु दाहाऽऽद्यश्राद्धपर्यन्तमेवकार्यंनतेषांप्रेतश्राद्धमपि इतिव्यवस्थानिष्कर्षः ॥(पित्रोः संघा
तमरणे माधवे देवलः ) पित्रोरुपरमेपुत्राः क्रियांकुर्युर्द्वयोरपि ॥ अनुवृत्तौचनान्येषां संघातमरणेऽपित्वा इति॥अनुगमनेनपित्रोःसंघातमरणे
मातुरनुगमनेनदिनान्तरमरणेपितत्तद्वादशाहेक्रियांकुर्युः ॥अन्येषांपित्रोश्चसंघातमरणे यथाकालंनकुर्युः किंतुत्रिपक्षएव॥(तदाह लोगाक्षिः)
पत्नीपुत्रस्तथापौत्रो भ्रातातत्पुत्रकाअपि ॥ पितरौचयदैकस्मिन् म्रियेरन्वासरेतदा ॥ आद्यमेकादशेकुर्यात्त्रिपक्षेतुसपिंडनम् इति ॥
पित्रोरनुगमनं विना संघातमरणे मातुरनुगमनंविना दिनान्तरमरणेपि मातुस्त्रिपक्षेसपिंडनं कुर्यात् ॥(तथाच देवलः ) एकाहमरणेपित्रोर
न्यस्यान्यदिनेमृतौ ॥ सपिंडनंत्रिपक्षेस्यादनुयानमृतिंविना इति॥अथश्राद्धसंपातेनिर्णयः ॥ तत्रमातृपितृश्राद्धद्वयस्यदैवात्कालैक्येपिपितृ
श्राद्धंपूर्वंकुर्यात् ॥(तदाह माधवीयेकार्ष्णाजिनिः) पित्रोःश्राद्धेसमंप्राप्ते नवेपर्युषितेपिवा ॥ पितृपूर्वंसुतःकुर्यादन्यत्रासत्तियोगतः इति ॥
पर्युषितेचिरन्तने अन्यत्रमातापितृव्यतिरिक्तविषयेसंबंधासत्तियोगतः कुर्यादित्यर्थः ॥ ( गृहदाहादिनायुगपन्मरणे भृगुः ) एककालेगतासू
नां बहूनामथवाद्वयोः ॥ तंत्रेणश्रपणंकृत्वा कुर्याच्छ्राद्धंपृथक्पृथक् ॥ पूर्वकस्यमृतस्यादौ द्वितीयस्यजघन्यतः ॥ तृतीयस्यततःकुर्यात्स
न्निपातेष्वयंक्रमः ॥ इति पूर्वकस्यमुख्यस्यपितुः द्वितीयस्यततोजघन्यायाजनन्याः ॥ तृतीयस्यततोऽपिजघन्यायाःसापत्नमातुरित्यर्थः ॥
( गारुडेपि ) एकेनैवतुपाकेन श्राद्धानिकुरुतेऽत्रहि॥ विकिरंत्वेकतःकुर्यात्पिंडान्दद्यात्पृथक्पृथक्॥(पुलस्त्योपि)महालयेगयाश्राद्धे गतासूनां

क्षयेऽहनि ॥ तंत्रेणश्रपणंकृत्वा श्राद्धंकुर्यात्पृथक्पृथक् इति ॥ इदंचपृथक्पाकाशक्ताविति कमलाकरः ॥ ( पृथ्वीचंद्रोदये आश्वलायन स्मृतिः ) एकत्रैवदिनेश्राद्धं द्वयंप्राप्तंयदातदा ॥ चरेदेवपुरावर्षात्पितुर्मातुश्चयत्सुतः ॥ एकस्मिन्यःकरोत्यह्नि द्वयोःश्राद्धंयदाद्विजः ॥ तदापूर्वमृतस्यादौ कृत्वास्नात्वायथाविधि ॥ पश्चात्पश्चान्मृतस्यैव पृथक्पाकैःसमाचरेत् ॥ नैकस्मिन्दिवसेश्राद्धं त्रयाणांकुत्रचिद्द्विजः एकःकुर्यात्तथाप्राप्ते अन्योभ्रातासमाचरेत् ॥ भ्रातर्यविद्यमानेतु तत्परेऽह्निसमाचरेत् ॥ अन्यथाश्राद्धहंतास्याच्छ्राद्धसंकरकृद्भवेदिति ॥ ( माधवीये कात्यायनः ) द्वेबहूनिनिमित्तानि जायेरन्नेकवासरे ॥ नैमित्तिकानिकार्याणि निमित्तोत्पत्त्यनुक्रमात् इति ॥ यद्यप्येकदेवताक श्राद्धद्वयमेकस्मिन्नहनिनयुक्तम् एकानुष्ठानेनेतरप्रयोजनस्यापिप्रसंगात्सिद्धेः॥तथापिनैमित्तिकानिवचनबलादनेकान्यप्यनुष्ठेयानि॥(तथा चतत्रैवजाबालिः ) श्राद्धंकृत्वातुतस्यैव पुनःश्राद्धंनतद्दिने ॥ नैमित्तिकन्तुकर्त्तव्यं निमित्तानुक्रमोदयमिति॥ नित्यकाम्ययोरेकदेवताकयोः सन्निपाते काम्येनैवनित्यसिद्धिः ॥ ( तदुक्तं स्मृतिसंग्रहे ) काम्यतंत्रेण नित्यस्य तंत्रश्राद्धस्यसिध्यति इति॥ ( पार्वणैकोद्दिष्टयोरेकदिनस न्निपाते माधवीये जाबालिः ) यद्येकत्रभवेतांवा एकोद्दिष्टंचपार्वणम् ॥ पार्वणंत्वभिनिर्वर्त्य एकोद्दिष्टंसमाचरेत् इति ॥ यद्यप्येकोद्दिष्टकाला त्पार्वणकालः परः तथाप्येतद्वचनबलादेवैकोद्दिष्टपरंकार्यमित्यर्थः॥इतिसंघातमरणेश्राद्धनिर्णयः समाप्तः ॥ अथश्राद्धदिनेतिलतर्पणनिर्ण यः ॥ ( तत्र श्राद्धमयूखे गर्गः ) पूर्वंतिलोदकंकृत्वा अमाश्राद्धंतुकारयेत् ॥प्रत्यब्देनभवेत्पूर्वं परेहनितिलोदकम् ॥ पक्षश्राद्धेहिरण्येच अनु व्रज्यतिलोदकम् इति॥ अमाश्राद्धं दर्शश्राद्धम् ॥ तत्रविप्रनिमंत्रणोत्तरंपाकारंभोत्तरंवातिलतर्पणंकार्यम् श्राद्धप्रयोगस्यारब्धत्वात् प्रत्यब्दे पित्रोर्वार्षिकेतिलतर्पणं न किंतु परेद्युरेव ॥ नैवश्राद्धदिनेकुर्यात्तिलैस्तुपितृतर्पणम् इति॥स्मृत्यंतरवचनात्॥सप्तम्यांभानुवारेच मातापित्रोः

क्षयेऽहनि ॥ तिलैर्यस्तर्पणंकुर्यात्सभवेत्पितृघातकः ॥ इतिस्मृतिरत्नावल्यां वृद्धमनुनानिषेधाच्च ॥ अतोवार्षिकश्राद्धदिनेनित्यतर्पणे तिलमात्रस्यनिषेधः नतुतर्पणस्य ॥ तिलैरित्यस्यवैय्यर्थ्यापत्तेः ॥ अत्रनित्यतर्पणंब्रह्मयज्ञोत्तरंकार्यम् ॥ पक्षश्राद्धे महालयश्राद्धे हिरण्ये आमश्राद्धेच अनुव्रज्य ब्राह्मणविसर्जनोत्तरं तर्पणं कार्यमित्यर्थः ॥ ( महालये तर्पणं श्राद्धोत्तरं कार्यं तथाच मयूखे कपिलः ) अर्द्धोदयेगजच्छाये षष्ठ्यांचैवमहालये ॥ भरण्यांचमघाश्राद्धे पिंडांतेतर्पणंभवेत् ॥ ( तत्रैव गार्ग्योपि ) कृष्णभाद्रपदेमासि श्राद्धंप्रतिदिनंभवेत् ॥ पितॄणांप्रत्यहंकार्यं निषिद्धाहेपितर्पणम् इति ॥ सकृन्महालयेतु वार्षिकवत् परेद्युरेव ॥ सकृन्महालयेश्वःस्यादष्टकास्वंतएवहि ॥ इतिस्मृत्यंतरस्मरणात् ॥ अंते विसर्जनान्ते इत्यर्थः ॥ मन्वादिषुदर्शश्राद्धवत् ॥ ( तथाच कपिलः ) मन्वादिषुयुगाद्यासु दर्शसंक्रमणेषुच ॥ पौर्णमास्यांव्यतीपाते दद्यात्पूर्वंतिलोदकम् इति ॥ ( तिलतर्पणनिषेधकालानाह गार्ग्यः ) भानौभौमेत्रयोदश्यां नंदाभृगुमघासुच ॥ पिंडदानंमृदास्नानं नकुर्यात्तिलतर्पणम् ॥ ( हेमाद्रौ मरीचिः ) सप्तम्यांरविवारेच ग्रहेजन्मदिनेतथा ॥ निशिसंध्यासुपुत्रार्थी नकुर्यात्तिलतर्पणम् ॥ ( बृहन्नारदीये ) वृद्धिश्राद्धेसपिंड्यांच प्रेतश्राद्धेऽनुमासिके ॥ संवत्सरविमोकेच नकुर्यात्तिलतर्पणमिति ॥ एतत्सर्वंनित्यतर्पणविषयकम् ॥ ( अस्यापवादः पृथ्वीचंद्रोदये ) तीर्थेतिथिविशेषेच गयायां प्रेतपक्षके ॥ निषिद्धेपिदिनेकुर्यात्तर्पणंतिलमिश्रितम् ॥ ( गोभिलः ) तिलाभावेनिषिद्धाहे सुवर्णरजतान्वितम् ॥ तदभावेनिषिंचेत्तु दर्भमंत्रेण वापुनरिति ॥ श्राद्धाऽशक्तौश्राद्धनिमित्तकपर्तणेकृतेतिलयुक्तमेव ॥ ( यत्तु कातीयम् ) उपरागेपितुःश्राद्धे पातेऽमायांचसंक्रमे ॥ निषिद्धेपिहिसर्वत्र तिलैस्तर्पणमाचरेदिति ॥ ॥ इतिश्रीबीकानेरस्यविषयान्तर्गतरत्नगढनगरनिवासिना श्रीवसिष्ठकुलोद्भवेन श्रीरामकृष्णपौत्रेण

श्रीकस्तूरीचंद्रसूनुना श्रीमहादेवभक्तवाजसनेयिना पण्डितगौडश्रीचतुर्थीलालशर्मणा विरचिते गौडीयश्राद्धप्रकाशे प्रथमखंडे प्रेतकल्प निर्णयकथनं नाम द्वितीयं प्रकरणम् ॥ अथमिश्रप्रकरणं तृतीयम् ॥ तत्रतावन्नित्यपितृयज्ञमधिकृत्यतर्पणमुच्यते ॥ ( तस्यकालदेशौ हेमाद्रौशातातपः ) तर्पणंतुततःकुर्यात्प्रत्यहंस्नातकोद्विजः ॥ देवेभ्यश्चऋषिभ्यश्च पितृभ्यश्चयथाक्रमम् ॥ ( याज्ञवल्क्योपि ) स्नात्वा देवान्पितृंश्चैव तर्पयेदर्चयेत्तथा॥ (व्यासः) तर्पणंद्विविधंप्राहुर्मुनयःशंसितव्रताः ॥ एकंजलेस्थितःकुर्यादपरंतुस्थलेस्थितः इति॥(अनयोर्व्य वस्थामाह विष्णुः ) स्नातश्चार्द्रवासादेवपितृतर्पणमम्भःस्थएवकुर्य्यात् ॥ परिवर्तितवासाश्चतीर्थतीरमुत्तीर्य्य ॥ ( हारीतोपि ) आर्द्रवासाज लेकुर्य्यात्तर्पणाचमनंजपम् ॥ शुष्कवासाःस्थलेकुर्य्यात्तर्पणाचमनंजपामिति ॥ ( उक्तव्यवस्थातिक्रमेदोषमाह लिखितः ) शुष्केणान्तर्जले चैव बहिरप्यार्द्रवाससा ॥ स्नानंदानंजपोहोमो निष्फलंपितृतर्पणम् इति ॥ ( स्नानं श्राद्धे ) यदातुस्थलेस्थितस्तर्पणंकुर्यात्तदातर्पणोदक मुदकमध्ये न निक्षिपेत् ॥(तदाह विष्णुः) स्थलेस्थित्वाजलेयस्तु प्रयच्छेदुदकंनरः ॥ नोपतिष्ठतितद्वारि पितॄणांतन्निरर्थकमिति॥ ( स्थलत र्पणमेवप्रकृत्याह गोभिलः ) नोदकेषुनपात्रेषु नक्रुद्धानैकपाणिना ॥ नोपतिष्ठतितत्तोयं यन्नभूमौप्रदीयते इति ॥ अतः स्थलस्थेनभूमावेव देयमित्यभिप्रायः ॥ ( अत्रविशेषमाह हारीतः ) वसित्वावसनंशुक्लं स्थलेविस्तीर्णबर्हिषि ॥ विधिज्ञस्तर्पणंकुर्य्यान्नपात्रेतुकदाचन ॥ पात्राद्वाजलमादाय शुभेपात्रान्तरेक्षिपेत् ॥ जलपूर्णेऽथवागर्ते नस्थलेषुविबर्हिषु इति ॥ पात्रंचात्रपितामहेनोक्तम् ॥ हेमरूप्यमयंकार्य्यं ताम्रकांस्यसमुद्भवम् ॥ पितॄणांतर्पणेपात्रं मृन्मयंतुपरित्यजेदिति ॥ यत्रप्रतिषिद्धमशुचिवास्थलं तत्रजलेदद्यात् ॥ ( तदाह विष्णुः ) यत्राशु चिस्थलंतुस्यादुदकेदेवताःपितॄन् ॥ तर्पयेत्तुयथाकाममप्सुसर्वंप्रतिष्ठितम् ॥ यदातूदकमध्यास्थितस्तर्पणंकुर्यात्तदातर्पणोदकंस्थलेननिक्षि

पेत् ॥ ( तदुक्तं हेमाद्रौ षट्त्रिंशन्मते ) नतर्पयेत्पितॄन्देवाञ्जलसंस्थः स्थलेक्वचित् ॥ स्थलस्थस्तुक्वचित्कुर्याज्जलेप्यशुचिचेत्स्थलमिति ॥ ( असंस्कृतप्रमीतांजलिस्तुसर्वदास्थलएवक्षेपणीयइत्याह कार्ष्णाजिनिः ) देवतानांपितॄणांच जलेदद्याज्जलाञ्जलिम् ॥ असंस्कृतप्रमीतानां स्थलेदद्याज्जलंपुनरिति ॥ इतितर्पणकालदेशनिरूपणम् ॥अथतर्पणसाधनानि ॥ (तत्राह लौगाक्षिः ) खड्गमौक्तिकहस्तेन कर्त्तव्यं पितृतर्पणम् ॥ मणिकांचनयुक्तेन नशुद्धेनकदाचन इति ॥ शुद्धेनकेवलेन ॥( योगियाज्ञवल्क्यः )अनामिकाधृतंहेम तर्जन्यांरूप्यमेवच॥ कनिष्ठिकाधृतंखड्गं तेनपूतोभवेन्नरः ॥ ( कात्यायनोपि ) अशून्यंतुकरंकृत्वा सुवर्णरजतैःकुशैः॥ प्रयतस्तर्पणंकुर्यान्मणिखड्गतिलैरपि (हेमाद्रौशंखोपि)विनारूप्यसुवर्णेन विनाताम्रतिलैस्तथा॥विनादर्भैश्चमंत्रैश्च पितॄणांनोपपद्यते॥सौवर्णराजताब्जाभ्यां खड्गेनोदुंबरेणवा॥दत्तमक्षयतांयाति पितॄणांतुतिलोदकम् ॥ हिमेनसहयद्दत्तं क्षीरेणमधुनाथवा॥तदप्यक्षयतांयाति पितॄणान्तुतिलोदकम् इति॥उदुंबरेण ताम्रपात्रेण हिमं चंदनादि इत्यर्थः॥(तत्रैव मरीचिः)रजतेमनसायायात्सुवर्णेहस्तानिर्गतम्॥तिलेषुचक्षणाद्गच्छेत्ताम्रेतुद्विमुहूर्त्ततः॥दर्भैसप्तमुहूर्त्तेन मंत्रयुक्तंतदक्षयम्॥यत्रयत्रहियोयस्य तस्यतत्रोपतिष्ठते इति ॥नैतानिसुवर्णादिसमुच्चयार्थानिवचनानि॥(यदाह मरीचिः)एषामन्यतमेनापि युक्तपाणिःसमाचरेत् ॥ द्वाभ्यांवाथत्रिभिर्वापि सर्वैर्वातर्पणंबुधः ॥ ( याज्ञवल्क्योपि ) तिलानामप्यलाभेतु सुवर्णरजतान्वितम्॥तदभावेनिषिंचेत्तु दर्भैर्मंत्रेणवापुनः॥ ( गौतमः ) कुशानामप्यलाभेतु काशान्दूर्वामथापिवा ॥ संयोज्यतर्पणंकुर्यान्नतुशून्यकरःक्वचित् ॥ ( अत्रविशेषमाह प्रजापतिः ) तर्पणादीनिकार्याणि पितॄणांयानिकानिचित् ॥ तानिस्युर्द्विगुणैर्दर्भैः सपवित्रैर्विशेषतः ॥ ( हेमाद्रौ भृगुः ) प्रागग्रैस्तर्पयेद्देवानुदगग्रैस्तुमानुषान् ॥ तानेवाद्विगुणीकृत्य तर्पयेत्प्रयतःपितॄन् इति ॥ तानेवेतिदेवतर्पणविनियुक्तानामपितेषांपितृतर्पणयोग्यतेत्युक्तंगृह्यप

रिशिष्टे ॥ दर्भाःकृष्णाजिनंमंत्रा ब्राह्मणाहविरग्नयः ॥ अयातयामान्येतानि नियोज्यानिपुनःपुनः॥ ( छागलेयः ) लघुपात्रंकरेकृत्वा सौवर्णं खड्गमेवच ॥ राजतंताम्रजंवापि तेनसंतर्पयेत्पितॄन् ॥ ( मत्स्यपुराणे ) यवैस्तुतर्पयेद्देवान्मनुष्यान्सनकादिकान् ॥ तिलैर्विशेषतः कृष्णैरग्निष्वात्तादिकान्पितॄन् ॥ आत्मनश्चापितॄन्सर्वान्सुहृत्संबंधिभिःसह ॥ ( योगियाज्ञवल्क्यः ) नामगोत्रस्वधाकारैस्तर्पयेदनुपूर्वशः ॥ मंत्रैश्चदेयमुदकं पितॄणांप्रीतिवर्द्धनम् इति ॥ ( तत्रजलस्थस्यविशेषमाह शालंकायनः ) बाहुंपूर्णंतिलैःकृत्वा जलस्थस्तर्पयेत्पितॄन् ॥ स्थलस्थेननकर्त्तव्यं पितॄणांतृप्तिमिच्छता ॥ ( कालिकापुराणे ) रविशुक्रत्रयोदश्यां सप्तम्यांनिशिसंध्ययोः ॥ तिलतर्पणसंयोगात्तज्जलंरुधिरंभवेदिति ॥ ( अधिकारविशेषेणतिलतर्पणनिषेधमाह कौण्डिन्यः ) दर्शश्राद्धंगयाश्राद्धं श्राद्धंचापरपाक्षिकम् ॥ नजीवत्पितृकःकुर्यात्तिलैस्तर्पणमेव च इति ॥ अथाञ्जलिसंख्या ( तत्र हेमाद्रौ व्यासः ) एकैकमंजलिंदेवा द्वौद्वौतुसनकादयः ॥ अर्हंतिपितरस्त्रींस्त्रीन्स्त्रियस्त्वेकैकमंजलिम् ॥ ( कूर्मपुराणेपि ) देवतानांतुसर्वासामेकैकांजलिरिष्यते ॥ ऋषीणामेकएवस्यान्मनुष्याणांद्वयंतथा ॥ त्रयस्त्रयःपितॄणांतु स्त्रीणामेकैकएवहि ॥ ( वृद्धशातातपः ) मातृमुख्याश्चयास्तिस्रस्तासांदद्याज्जलांजलीन् ॥ त्रींस्त्रीनेव तथान्यासान्दद्यादेकैकमंजलिम् इति ॥ अथहस्ततीर्थोपवीतजानुदिङ्नियमः ( तत्र यमः ) द्वौहस्तौयुग्मतःकृत्वा पूरयेदुदकाञ्जलिम् ॥ गोशृङ्गमात्रमुद्धृत्य जलमध्येजलंक्षिपेत् ॥ ( मात्स्येपि ) उभयोर्हस्तयोःकृत्वा सलिलैःपूर्णमंजलिम् ॥ देवानांचपितॄणांच शुचिस्तर्पणमाचरेत् ॥ ( कूर्मपुराणे ) अन्वारब्धेनसव्येन पाणिनादक्षिणेनतु ॥ देवर्षींस्तर्पयेद्धीमानुदकांजलिभिःपितॄन् ॥ ( अग्निपुराणे ) दैवेनैवहितीर्थेन देवानांतर्पणंस्मृतम् ॥ प्राजापत्येनतीर्थेन तर्पयेद्ब्रह्मणःसुतान् ॥ पितॄणामपितीर्थेन तेषामेवहितर्पणम् इति ॥ ( तीर्थलक्षणमुक्तं योगि

याज्ञवल्क्येन ) अंगुष्ठमूलेब्राह्मन्तु दैवंह्यंगुलिमूर्द्धनि॥प्राजात्यन्तुमूलेषु मध्येसौम्यंप्रतिष्ठितम्॥अंगुष्ठस्यप्रदेशिन्या मध्येपित्र्यंप्रकीर्त्तितम्॥
एवंज्ञात्वानमुह्यंति सर्वकर्मसुवैद्विजाः॥ (जमदग्निः) यज्ञोपवीतीदेवेभ्यः प्रदद्यात्सतिलाञ्जलीन् ॥ निवीतीतुमनुष्याणां कुर्यात्तर्पणमादृतः ॥
प्राचीनावीतसंयुक्तः पितृभ्योनिर्वपेज्जलम्॥ (हेमाद्रौ सुमंतुः) न्युब्जंजानुनिवेश्याधो दक्षिणंतर्पयेत्सुरान् ॥ तथैवसव्यंविन्यस्य पितॄणांतर्पणं
चरेत् ॥ ( ब्रह्मवैवर्त्ते ) पूर्वाशाभिमुखोभूत्वा पूर्वाग्रेषुकुशेषुच ॥ अपोनिर्षिंचेत्प्रयतो देवानुद्दिश्यधर्मवित्॥ सौम्याशाभिमुखोनित्यमुदगग्रेच
बर्हिषि॥ मनुष्याणांचतृप्त्यर्थं निर्वपेत्तुजलांजलीन्॥याम्याशासम्मुखःस्थित्वा दक्षिणाग्रकुशेषुच॥पितृभ्यःसलिलंदद्यात्तृप्त्यर्थंप्रीतमानसः ॥
अथतर्पणीयक्रमः ॥ ( तत्र हेमाद्रौ शातातपः ) देवेभ्यश्चऋषिभ्यश्च पितृभ्यश्चयथाक्रमम् ॥ ( तत्रैव भविष्यपुराणे ) प्रथमंतर्पयेद्देवानुपवी
तीविनायकान् ॥ मोदश्चैवप्रमोदश्च सुमुखोदुर्मुखस्तथा ॥ अविघ्नोविघ्नकर्त्ताच इत्येतेषड्विनायकाः ॥ ( योगियाज्ञवल्क्यः ) ब्रह्माणंतर्पये
त्पूर्वं विष्णुंरुद्रंप्रजापतिम् ॥ देवान्छंदांसिवेदांश्च ऋषींश्चैवतपोधनान् ॥ आचार्यांश्चैवगंधर्वानाचार्यानितरांस्तथा ॥ संवत्सरंसावयवं देवी
रप्सरसस्तथा ॥ तथादेवानुगान्नागान्सागरान्पर्वतानपि ॥ सरितोऽथमनुष्यांश्च यक्षान्रक्षांसिचैवहि ॥ पिशाचांश्चसुपर्णांश्च भूतान्यथप
शूंस्तथा ॥ वनस्पतीनोषधींश्च भूतग्रामंचतुर्विधम् ॥ सनकश्चसनंदश्च तृतीयश्चसनातनः ॥ कपिलश्चासुरिश्चैव वोढुःपंचशिखस्तथा ॥
एतेब्रह्मसुताःसप्त मनुष्याःपरिकीर्त्तिताः ॥ कव्यवाडनलंसोमं यममर्यमणंतथा ॥ अग्निष्वात्तान्सोमपांश्च तथाबर्हिषदःपितॄन् ॥ यदि
स्याज्जीवत्पितृक एतान्दिव्यान्पितॄंस्तथा ॥ येभ्योवापिपितादद्यात्तेभ्योवापिप्रदापयेत् ॥ एतांश्चवक्ष्यमाणांश्च प्रमीतपितृकोद्विजः ॥
वसून्रुद्रांस्तथादित्यान्नमस्कारस्वधान्वितान् ॥ एतेसर्वस्यपितर एष्वायत्ताश्चमानुषाः ॥ आचार्यांश्चपितॄन्स्वांश्च पितृप्रभृतिनामतः

इति ॥ यदिजीवत्पितृकस्तर्प्पणंकुर्यात्तदा देवऋषिमनुष्यतर्प्पणानन्तरं कव्यवाट्प्रभृतीनष्टौदेवपितॄन्सन्तर्प्य तर्प्पणं समापयेत् ॥ ये
भ्यःपितादद्यात् तेभ्योवापि तर्प्पणं कुर्य्यात ॥ प्रमीतपितृकस्त्वेतान् कव्यवाट्प्रभृतीन् वक्ष्यमाणान् वसून् रुद्रादित्यान् स्वान् पितृ
पितामहांश्चतर्प्पयेत् ॥ ( कात्यायनपरिशिष्टसूत्रेऽपि ) ब्रह्माणंतर्प्पयेत्पूर्वं विष्णुंरुद्रंप्रजापतिम् ॥ देवाञ्छन्दांसिवेदानृषीन्पुराणाचार्या
न् गंधर्वानितराचार्यान्संवत्सरंसावयवं देवीरप्सरसोदेवानुगान्नागान् सागरान्पर्वतान् सरितोमनुष्यान्यक्षान् रक्षाꣳसिपिशाचान्सुपर्णान्
भूतानिपशून्वनस्पतीनोषधीर्भूतग्रामश्चतुर्विधस्तृप्यतामित्योङ्कारपूर्वंततोनिवीती मनुष्यान्सनकꣳसनंदनꣳसनातनं कपिलमासुरियम
मर्यमणमग्निष्वात्तान्सोमपोबर्हिषदोयमांश्चैके यमायधर्मराजाय मृत्यवेचान्तकायच॥वैवस्वतायकालाय सर्वभूतक्षयायच॥औदुंबरायदध्नाय
नीलायपरमेष्ठिने॥वृकोदरायचित्राय चित्रगुप्तायवैनमः॥ इत्येकैकस्यतिलैर्मिश्रांस्त्रींस्त्रीन्दद्याज्जलांजलीन् ॥ यावज्जीवकृतंपापं तत्क्षणादेवन
श्यतीति ॥ जीवत्पितृकोप्येतानन्यांश्चेतरउदीरताङ्गिरस आयन्तुनऊर्ज्जंवहन्तीःपितृभ्योयेचेहमधुवाता इतित्र्यृचंजपन्प्रसिंचेत्तृप्यध्वमिति
त्रिर्नमोवइत्युक्त्वामातामहानांचैवंगुरुशिष्यर्त्विग्ज्ञातिबांधवानतर्पितादेहाद्रुधिरंपिबन्तिवासोनिष्पीड्याचम्य अहश्रमस्यहꣳस इत्युपस्था
यप्रदक्षिणीकृत्यादिशश्च देवताश्चनमस्कृत्योपविश्य ब्रह्माग्निपृथिव्योषधीवाग्वाचस्पतिर्विष्णुर्महद्भ्योऽपांपतये वरुणायनमइतिसंवर्चसेति
मुखंविमृष्टेदेवागातुविद इति विसर्जयेदिति ( हेमाद्रौ ब्रह्मपुराणेविशेषः ) प्रथमंतर्पयेद्देवान्ब्रह्मादीन्सुसमाहितः ॥ ततःसंतर्पयेद्विद्वान्
मरीचिप्रमुखानृषीन् ॥ वसून्रुद्रांस्तथादित्यान्क्रमशस्तदनन्तरम् ॥ यक्षान्पशून्सुपर्णांश्च भूतग्रामंचतुर्विधम् ॥ आचार्यानितरांश्चैव का
लस्यावयवानपि ॥ सनकप्रमुखांश्चैव मनुष्यांस्तदनंतरम् ॥ कव्यवाडनलादींश्च ततःपितृगणानपि ॥ स्वपितृभ्यस्ततोदद्यान्मातृभ्यस्त

स्यचाप्यनु ॥ ततोमातामहानांच पितृव्याणांततःपरम् ॥ पत्नीनांचसुतानांच पितृमातृष्वसुस्ततः ॥ मातुलानीचदुहिता स्वसाचार्यर्त्विजस्तथा ॥ शिष्याश्चज्ञातयश्चैव सुहृत्संबंधिनस्तथा ॥ एतेषांतर्पणंकार्यं यथावदनुपूर्वशः ॥ ज्ञाताज्ञातान्समुद्दिश्य प्रदेयश्चांजलिस्ततः ॥ असंस्कृतप्रमीतानां पृथग्देयोंजलिस्ततः ॥ इतिक्रमेणयःकुर्याद्देवादीनांतुतर्पणम् ॥ तेनस्युस्तर्पितास्तेतु सुधाभिर्नात्रसंशयः ॥ इति ॥ ( योगियाज्ञवल्क्यः ) अन्वारब्धेनसव्येन पाणिनादक्षिणेनतु ॥ तृप्यतामितिसेक्तव्यं नाम्नातुप्रणवादिना ॥ इति तृप्यतामित्यत्र तर्पणीयव्यापारस्य प्रतीयमानत्वात् अभिहितेकर्त्तरिप्रथमैवयुक्तेति प्रणवादिप्रथमान्तंनामसंकीर्त्य तदन्तेतृप्यतामिति वक्तव्यं इति प्रयोगंदर्शितवान् ॥ जातूकर्ण्यस्तुपरस्मैपदेनापिप्रयोगंदर्शितवान् ॥ तृप्यत्वितिसमुच्चार्य्य तृप्यतामित्यथापिवा ॥ विधिज्ञःप्रक्षिपेत्तोयं देवादीनामशेषतः इति ॥ ( कात्यायनस्तु ) उत्तमपुरुषांतस्याख्यानपदस्यप्रयोगमुक्तवान् ॥ अथाद्भिस्तर्पयेद्देवान्सतिलाभिःपितॄनपि ॥ नामांतेतर्पयामीति आदावोमितिचब्रुवन् इति ॥ तर्पयामीत्यत्रतर्पणीयस्यकर्म्मत्वेनाभिसंबन्धात् प्रणवादिदेवतानाम द्वितीयान्तमुच्चार्य तर्पयामिनमः इत्यन्तेसमुच्चारयेत् ॥ ततश्चॐब्रह्मातृप्यतां ॐब्रह्मातृप्यतु ॐब्रह्माणं तर्पयामिनम इतिवा एकवचनेन ॐवेदास्तृप्यंतां ॐवेदास्तृप्यन्तु ॐवेदांस्तर्पयामि इति वा बहुवचनेनप्रयोगः कर्त्तव्य इत्युक्तंभवति अत्र यथास्वशाखंव्यवस्था ॥ तत्र तृप्यतामितियजुर्वेदिनां तृप्यतामितिसेक्तव्यमितियोगियाज्ञवल्क्येनोक्तत्वात् भूतग्रामश्चतुर्विधस्तृप्यतामितिपरिशिष्टसूत्रे कात्यायनेनोक्तत्वाच्च इति ॥ तृप्यतु इति आश्वलायनशाखिनांचतेषांस्मृतिग्रंथेषुदर्शनात् ॥ तर्पयामीति छंदोगानांवेदितव्यम् ॥ नामांतेतर्पयामीति छंदोगपरिशिष्टेकात्यायनेनविहितत्वादिति ॥ अत्रवस्वादितर्पणेयमतर्पणेतुन

मोन्तपदेन ॥ ॐवसुभ्योनमः ॐयमायनमः इत्यादयएवप्रयोगा विधेयाः ॥ ( तथाच हेमाद्रौकश्यपः ) ॥ वसूनरुद्रांस्तथा दित्यान्नमस्कारसमन्वितान् ॥ अद्भिःसंतर्पयेन्नित्यं नामभिःप्रणवादिभिः ॥ तर्पयन्यमराजंच नमस्कारंप्रकीर्त्तयेत् ॥ कात्यायनपरिशिष्टसूत्रेपियमायधर्मराजायइत्यादि ॥ अत्रपितृतर्पणेयमतर्पणेचएकैकस्यपुरुषस्यत्रींस्त्रीन्जलांजलीन्दद्यात् ॥ ( तथाच पैठीनसिः ) सनामगोत्रग्रहणं पुरुषंपुरुषंप्रति ॥ तिलोदकांजलींस्त्रींस्त्रीनुच्चैरुच्चैर्विनिक्षिपेत् ॥इति॥( नामादिग्रहेणविशेषमाह बोधायनः )शर्मांतंब्राह्मणस्योक्तंवर्मांतं क्षत्रियस्यच ॥ गुप्तांतंचैववैश्यस्य दासांतंशूद्रजन्मनः ॥ चतुर्णामपिवर्णानां पितॄणांपितृगोत्रता ॥ पितृगोत्रंकुमारीणामूढानांभर्तृगोत्रता ॥ इति॥ अत्रसंबंधानुकीर्त्तनमपिकर्त्तव्यम् ॥ गोत्रसंबंधनामानि पितृकर्मणिकीर्त्तयेदितिभृगुस्मरणात् ॥(योगियाज्ञवल्क्यः) मंत्रैश्चदेयमुदकं पितॄणांप्रीतिवर्द्धनैरिति ॥ तेचमंत्रास्तेनैवदर्शिताः ॥ उदीरतामङ्गिरस आयंत्वित्यूर्जमित्यपि ॥ पितृभ्यइतियेचेह मधुव्राताइतित्र्यृचम् ॥ पितॄन्ध्यायन्प्रसिंचेद्वै जपन्मंत्रानिमान्क्रमात् ॥ तृप्यध्वमितितुत्रिर्वै ततःप्रांजलिरानतः ॥ इति ॥ अस्यार्थःउदीरतामितिमंत्रांतेअमुकगोत्रअस्मत्पितामुकशर्मातृप्यतामिदंतिलोदकंतस्मैस्वधाइति ॥ अमुकगोत्रपितरमुकशर्मन्नेतत्तेतिलोदकम् ॥ स्वधाइतिवाप्रथमांतिलांजलिंदद्यात् ॥ ततश्चाङ्गिरसोनइतिमंत्रांतेतथैववाक्यमुच्चार्यद्वितीयम् ॥ ततआयंतुनइतिमंत्रेणतथैवतृतीयमित्येवंपित्रेऽजलित्रयंदद्यात् ॥ ततऊर्जंवहंतीरितिमंत्रांतेअमुकगोत्रास्मत्पितामहामुकशर्मातृप्यतामिदंतिलोदकंतस्मैस्वधा इतिप्रथमम् ॐपितृभ्यःस्वधाइतितथैवद्वितीयम् ॥ येचेहपितरइतितथैवतृतीयंचापितामहायांजलित्रयंदद्यात् ॥ ततोमधुव्राताइतिमंत्रांतेअमुकगोत्राऽस्मत्प्रपितामहाऽमुकशर्मातृप्यतामिति तिलोदकंतस्मैस्वधाइतिप्रथमम् मधुनक्तमितितथैवद्वितीयम् मधुमान्न इतितथैवतृतीयंचप्रपितामहायांजलित्रयंदद्यात् इत्यर्थः ॥ अत्रावसरे

प्रथमंमात्रादीनांतर्पणंततोमातामहादीनाम् ॥ पूर्वंपित्रादयस्तर्प्यास्ततोमात्रादयोपिच ॥ ततोमातामहाश्चैव मातामह्यस्ततःपरमितिहेमाद्रौ व्यासस्मरणात् ॥ ॐअमुकगोत्रास्मन्माताऽमुकीदेवीतृप्यतामिदंतिलोदकंतस्यैस्वधाइतिमात्रेएवमेवपितामह्यैप्रपितामह्यैचएकैकमंजलिं स्वधाकारवतानाममंत्रेणदद्यात् इति ॥ तदनंतरंनमोवइतिमंत्रांतेॐअमुकगोत्रास्मन्मातामहाऽमुकशर्मातृप्यतामिदंतिलोदकंतस्मैस्वधा इतिप्रथमंतथैवद्वितीयतृतीयावित्येवंमातामहायांजलित्रयंदद्यात् ॥ एवमेवप्रमातामहवृद्धप्रमातामहयोस्त्रींस्त्रीनंजलीन्दद्यात् ॥ मंत्रस्तुनमो वइत्येकएवपुनःपुनरावर्त्तते॥ (तथाचयोगियाज्ञवल्क्यः)नमोवइतिजप्त्वावै ततोमातामहानपि॥तर्पयेदानृशंस्यार्थं धर्मपरममाश्रितः॥इति॥अथ मातृवत्प्रयोगमुच्चार्यमातामह्यादीनामेकैकांजलिर्देयः॥अत्रअंतर्मातामहान्कृत्वामातृभ्योञ्जलिदानम् आचारादर्शे श्रीदत्तलिखनंप्रमाणशून्य म् ॥ (तथाच मरीचिः)अन्तर्मातामहान्कृत्वा मातृणांयःप्रयच्छति॥उदकंपिंडदानंच नरकंसतुगच्छति॥(हेमाद्रौ उशनापि) अन्तर्मातामहा न्कृत्वा मातृणांयःप्रयच्छति ॥ उदकंपिंडदानंवा पितृणांनोपतिष्ठते इति ॥ एवमेवहेमाद्रिमहीधरप्रभृतयः॥ ततोज्येष्ठतातपितृव्यपुत्रपौत्रदौ हित्रभ्रातृपुत्रजामातृमातुलभागिनेयपितृस्वस्रीयमातृभगिनीमातुलानीपत्नीभगिनीभ्रातृपत्नीभागिनेयीदुहिताश्वश्रूश्वशुरबंधुबांधवादीनांमध्ये पुरुषाणांजलांजलित्रयंस्त्रीणामेकैकांजलिंदद्यात् ॥ ( तथाच हेमाद्रौ ब्रह्मपुराणे ) ततोमातामहानांच पितृव्याणांततःपरम् ॥ पत्नीनांचसुता नांच पितृमातृस्वसुस्तत इत्यादिपूर्वोक्तम् ॥ कामोदकाख्यमन्यमप्यंजलिंदद्यात् ॥ ( तदुक्तं विष्णुपुराणे ) इदंचापिजपेदम्बु दद्देदात्मे च्छयानृप ॥ उपकारायभूतानां सकृद्देवादितर्पणः ॥ देवासुरास्तथायक्षा गंधर्वोरगराक्षसाः ॥ पिशाचागुह्यकाःसिद्धाः कूष्मांडा स्तरवः खगाः ॥ जलेचराभूनिलया वाय्वाधाराश्चजन्तवः ॥ तृप्तिमेतेनयान्त्वाशु मद्दत्तेनाम्बुनाखिलाः ॥ नरकेषुसमस्तेषु यातनासुचये

गताः ॥ तेषामाप्यायनायैव दीयतेसलिलंमया ॥ येबांधवाऽबांधवावा येऽन्यजन्मनिबांधवाः ॥ तेतृप्तिमखिलायांतु यश्चास्मत्तोऽभिवांछतीति ॥ इदंचकाम्यतर्पणंदेवविधिनाकर्त्तव्यमितिमैथिलश्रीदत्तः ॥ शिष्टास्तुपैतृककर्म्माङ्गत्वात्पैतृकविधिनाएवइतिवदंतितस्माद्यथाचारं कार्यम् ॥ अत्रावसरेस्नानवस्त्रनिष्पीडनंकर्त्तव्यम् ॥ ( तदाह वसिष्ठः ) तीरेजलाशयस्यैवं निर्वर्त्यपितृतर्पणम् ॥ निष्पीडयेत्स्नानवस्त्रं दक्षिणाभिमुखःस्थले इति ॥ ( अत्रमंत्रउक्तो गोभिलीये ) येकेचास्मत्कुलेजाता अपुत्रागोत्रिणोमृताः ॥ तेगृह्णन्तुमयादत्तं वस्त्रनिष्पीडनोदकमिति ॥ ( अनंतरमाह योगियाज्ञवल्क्यः ) निष्पीडयस्नानवस्त्रन्तु आचम्यप्रयतःशुचिः ॥ देवानामर्चनंकुर्याद्ब्रह्मादीनाममत्सरः ॥ इति ॥ ( एवंकुर्वतः फलमाहुर्मनुशातातपयोगियावल्क्याः ) यदेवतर्पयत्यद्भिः पितॄन्स्नात्वाद्विजोत्तमः ॥ तेनैवसर्वमाप्नोति पितृयज्ञक्रियाफलम् ॥ ( कौर्मेपि ) एवंयःसर्वभूतानि तर्पयेदन्वहंद्विजः ॥ सगच्छेत्परमंस्थानं तेजोमूर्त्तिरनामयः इति ॥ ( तर्पणाऽकरणे दोषउक्तो ब्रह्मवैवर्त्ते ) देवतांश्चमुनींश्चैव पितॄन्वैयोनतर्पयेत ॥ देवादीनामृणीभूत्वा नरकंसव्रजत्यधः ॥ इति तर्पणप्रयोगनिर्णयः ॥ ॥

( अथसंन्यासाङ्गश्राद्धप्रयोगः ( हेमाद्रौ बोधायनः ) अथातः संन्यासविधिंव्याख्यास्यामः ॥ तत्रसन्न्याससंकल्पकमष्टम्या आरभ्य श्राद्धादिकंकुर्यात् ॥ अग्निमान्पार्वणविधिनाष्टौश्राद्धानि अनग्निमानेकोद्दिष्टविधिनाच कुर्यात् ॥ पौर्णमास्याममावास्यायांवा देवश्राद्धं ऋषिश्राद्धं दिव्यश्राद्धं मानुष्यश्राद्धं भूतश्राद्धं पितृश्राद्धं मातृश्राद्धं आत्मनः श्राद्धंचेति ॥ देवश्राद्धे देवतात्रयं ब्रह्मविष्णुमहेश्वराः ॥ ऋषिश्राद्धे देवतात्रयं देवर्षिब्रह्मर्षिक्षत्रर्षयः॥ दिव्यश्राद्धे देवतात्रयं वसुरुद्रादित्याः ॥ मनुष्यश्राद्धे सनकसनंदनसनातनाः॥ भूतश्राद्धे पृथिव्यादीनि भूतानि चक्षुरादीनिकरणानि चतुर्विधोभूतग्रामः ॥ पितृश्राद्धे पितृपितामहप्रपितामहाः मातामहप्रमातामहवृद्धप्रमातामहाश्च ॥

मातृश्राद्धे देवतात्रयं मातृपितामहीप्रपितामह्यः ॥ आत्मनः श्राद्धे देवतात्रयं आत्मपितृप्रपितामहा इति ॥ ( विशेषमाह तत्रैव शौनकः )
पूर्वेद्युर्नांदीमुखंश्राद्धं कुर्य्यात् देवर्षिदिव्यमनुष्यभूतपितृमातृआत्मनश्च पृथक् पिंडदानैर्युग्मैर्ब्राह्मणैः पिंडोदकं कुर्यात् ॥ तच्च
पूर्ववत् नामगोत्रसंबंधात् पिंडोदकं दत्त्वाऽनंतरं पुण्याहं वाचयेत् ॥ इति संन्यासाङ्गश्राद्धप्रयोगः ॥ अथजीवच्छ्राद्धप्रयोगः ॥
( हेमाद्रौ आदित्यपुराणे ) देशकालधनश्रद्धाव्यवसायसमुच्छ्रये ॥ जीवतेवाथजीवाय दद्याच्छ्राद्धंस्वयंनरः ॥ इति ॥ वाश
ब्दाच्छ्राद्धकर्त्रंतराभावे स्वयमेवस्वस्यश्राद्धंकर्त्तव्यमिति हेमाद्रिः ( बोधायनीयेपि ) अथाप्युदाहरंति ॥ जीवन्नेवात्मनःश्राद्धं
कुर्यादन्येषुसत्स्वपि ॥ यथाविधिप्रवृत्त्याशु सपिंडीकरणादृते ॥ ( आदित्यपुराणे ) कृतोपवासःसुस्नातस्त्रयोदश्यांसमाहितः ॥
कर्त्तारमथभोक्तारं विष्णुंसर्वेश्वरंयजेत् ॥ जलेस्थलेबेरमूर्त्तौ कलशेपुष्करेरवौ ॥ त्रयोदश्यां कृष्णपक्षत्रयोदश्याम् ॥ रवौ रविप्रतिमाया
मित्यर्थः ॥ चंद्रार्कगुरुगोविप्रमातापितृषुसर्वगम् ॥ दक्षिणास्तुसतिलास्तिस्रस्तुजलधेनवः ॥ निवेदयेत्पितृभ्यश्च तदग्रेषुसमाहितः ॥
एवंसंपूज्यपितुरुद्देशेनातिस्रोजलधेनूर्दद्यात् ॥ ( तत्र मंत्रानाह ) सोमायत्वापितृमतेस्वधानमइतिस्मरन् ॥ अग्नयेकव्यवाहनायस्वधानमइति
स्मरन् ॥ दक्षिणेतुनिदध्याच्च तृतीयांदक्षिणायुताम् ॥ यमायांगिरसेचाथ स्वधानमइतिस्मरन् ॥ तयोर्मध्येतुनिक्षिप्य विप्रान्पंचोपवेशयेत् ॥
प्रथमामुत्तरतःद्वितीयांदक्षिणतःतृतीयांमध्येनिक्षिपेदित्यर्थः ॥ आवाहनादिनापूर्वं विश्वान्देवान्प्रपूज्यच ॥ अहंवसुभ्यस्त्वाविप्ररुद्रेभ्यस्त्वा
महन्ततः सूर्येभ्यस्त्वामहंविप्र भोजयामीतितान्वदेत् ॥ आवाहनादिकंसर्वं कुर्याच्चापितृकर्मवत् ॥ वसुभ्यस्त्वामहंविप्र भोजयामि ॥ एवंरुद्रे
भ्यःसूर्येभ्यइत्युक्त्वाऽऽवाहनादिश्राद्धविधिना भोजयित्वावस्वादिभ्यस्त्रीन्पिंडान् दद्यादित्यर्थः ॥ सौम्यधेनुस्ततोदेया वासवायाद्विजायतु ॥

आग्नेयीचाथरौद्राय याम्यासूर्यद्विजायतु ॥ विश्वेभ्यश्चाथदेवेभ्यस्तिलपात्रंनिवेदयेत्॥ तिलपात्रं कांस्यस्य॥ स्वस्त्युदकमथाक्षय्यं जलंदत्त्वा क्षतान्द्विजान् ॥ विसर्जयेत्स्मरन्विष्णुं देवमष्टाक्षरंविभुम् ॥ ॐ नमोनारायणायेत्यष्टाक्षरः ॥ ततःकामकुलेशानं निशिनारायणंस्मरेत् ॥ कामकुलेशानविशेषणक नारायणमित्यर्थः ॥ ( अत्रोक्तजलधेनुविधिर्धर्मोत्तरे ) जलधेनुंप्रवक्ष्यामि प्रीयतेदत्तयायया ॥ देवदेवोहृषीकेशः सर्वेशःसर्वभावनः ॥ जलकुंभंनरव्याघ्र सुवर्णरजतान्वितम् ॥ रत्नगर्भमशेषैस्तु ग्राम्यैर्धान्यैःसमन्वितम् ॥ सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम् ॥ कुशमांसीमुरोशीरवालकामलकैर्युतम् ॥ प्रियंगुपत्रसहितं सितवस्त्रोपवीतिनम् ॥ सच्छत्रंसदुपानत्कं दर्भविष्टरसंस्थितम् ॥ चतुर्भिःसंवृतंभूप तिलपात्रैश्चतुर्दिशम् ॥ स्थगितंदधिपात्रेण घृतक्षौद्रवतामुखे ॥ उपोषितःसमभ्यर्च्य वासुदेवंजलेशयम् ॥ पुष्पधूपोपहारैश्च यथाविभवमादृतः॥ संकल्प्यजलधेनुंच कुंभंतमभिपूज्यच ॥ पूजयेद्वत्सकंतद्वत्कृतंजलमयंबुधः॥ एवंसंपूज्यगोविंदं जलधेनुंसवत्सकाम्॥ दद्याद्द्विजायराजेंद्र प्रीत्यर्थंजलशायिनः ॥ जलशायीजगद्योनिः प्रीयतांममकेशवः॥ इत्युच्चार्यचभूनाथ विप्रायप्रतिपादयनाम् ॥ अपक्वान्नाशिनास्थेयमहोरात्रमतःपरम् ॥ अनेनविधिनादत्त्वा जलधेनुंनराधिप ॥ सर्वान्कामानवाप्नोति येदिव्यायेचमानुषाः ॥ शरीरारोग्यमाबाधाप्रशमःसार्वकामिकः ॥ नृणांभवतिदत्तायां जलधेन्वांसमाहितः॥ इति जलधेनुविधिः॥ एवंकृष्णत्रयोदश्यामेतत्सर्वं विधायाद्वितीयेऽह्निनियत्कर्त्तव्यंतदाह ॥ चतुर्दश्यांततोगच्छेद्यथाप्राप्तांसरिद्वराम् ॥ पूर्वेणविप्रःसौम्येन राजावैश्योऽपरेणच ॥ दक्षिणेनतथाशूद्रो मार्गेणविकिरन्यवान् ॥ सौम्येन उत्तरेण अपरेण पश्चिमेन। यवान्विकिरन् प्रक्षिपन् गच्छेदित्यर्थः॥ वस्त्राणिलोहखंडानि जितंतइतिसंस्मरन् ॥ जितंतेपुंडरीकाक्ष जितंतेविश्वभावन ॥ नमस्तेस्तुहृषीकेश महापुरुषपूर्वज ॥ इति ॥ तत्रगत्वायत्कर्त्तव्यं तदाह ॥ दक्षिणाभिमुखोवह्निं ज्वालयेत्तत्रचस्वयम्॥

पंचाशताकुशैर्ब्राह्मीं कृत्वाप्रतिकृतिंदहेत् ॥ अस्यार्थः ॥ ततोनदीतीरेदक्षिणामुखःस्मात्तंलौकिकंवाग्निंपंचभूसंस्कारकृतेदेशेस्वयंप्रज्वा ल्यचित्यर्थंगर्त्तंखननभूमिप्रार्थनादिप्रत्यक्षमरणवत्सर्वंकुर्यात् ॥ जीवच्छ्राद्धेसर्वत्रप्रेतशब्दोनप्रयोज्यः ॥ ततःस्वशाखोक्तंपूर्णाहुत्यंतंहोमं कृत्वाप्रधानहोमस्थाने ॐपृथिव्यैस्वाहाॐयमायस्वाहा ॐरुद्रायस्वाहा ॥ इतिसंस्कृताज्येनाहुतित्रयंहुत्वापंचाशत्कुशैरात्मप्रतिकृतिमन्येन क्रव्यादमग्निमितिमंत्रेणदाहयेत्॥ततोमुद्गमिश्रंतिलमिश्रंचतंडुलचरुद्वयमन्यस्मिन्नग्नौसपवित्रकंश्रपयेत् इत्यर्थः ॥तथा॥श्रपयेच्चापरेवह्नौ मुद्ग मिश्रंचरुंततः॥तिलतंडुलमिश्रंतु द्वितीयंसपवित्रकमिति॥अपरग्रहणंयत्रप्रतिकृतिदाहःकृतस्ततोऽन्यस्मिन्नित्यर्थः॥(चरुश्रपणानन्तरंकर्त्तव्य माह) मधुक्षीरघृतांभोभिः पूरयेत्कर्षुकात्रयम् ॥ तदुपान्तेतुसम्मुद्गपात्राणित्रीणिपूरयेत् इति ॥ तदग्निसमीपेकर्षूत्रयंकृत्वाप्रत्येकमधुक्षीरघृतो दकैः पूरयेत्॥तथातेमुद्गपूरितानि त्रीणिशरावाणीत्यर्थः ॥ ततः ॥ ॐपृथिव्यैनमस्तुभ्यमितिचैकंनिवेदयेत् ॥ ॐयमायनमश्चेति द्वितीयंतद नन्तरम्॥ॐनमश्चाथरुद्राय श्मशानपतयेतथा ॥ ततोदीप्तंसमिद्धाग्निं भूमौप्रकृतिदाहकम्॥क्रव्यादमग्निंतत्रायै भूम्यैनमइतिस्मरन्॥क्षीरात्क्तंज लकुंभंतु विकिरेत्तत्प्रशान्तये॥नाभिमात्रंततस्तोयं प्रविश्ययमदिङ्मुखः ॥सतभ्योयमसंज्ञेभ्यो दद्यात्सप्तजलांजलीन् ॥यमायधर्मराजाय मृ त्यवेचान्तकायच॥वैवस्वतायकालाय सर्वप्राणहरायच ॥ स्वधाकारनमस्कारप्रणवैःसहसप्तधा ॥ ॐनमश्चाथरुद्राय श्मशानपतयेस्मरन् ॥ लाजोदकाभ्यांपूर्णंतु कुंभंचविकिरेद्भुवि॥याम्योन्मुखेषुदर्भेषु प्रदद्याच्चावनेजनम् ॥ स्वधायैचस्वधारूपिरुद्रायनमइतिस्मरन्॥अमुकामुकगो त्रैतत्तुभ्यमस्तुतिलोदकम्॥ सूक्ष्मदेहैषतेपिंडस्त्वर्घ्यपुष्पसुगंधिमान्॥ धूपदीपाबलिर्वाथ स्वर्ग्यैषातुभ्यमक्षया॥दशपिंडांस्ततोदत्त्वा विष्णोः सौम्यमुखान्स्मरेत् ॥ निरुष्मणस्तुतत्तोयं नाभिमात्रंप्रविश्यच ॥ प्रक्षिपेत्पूर्णकुंभंतु जलमध्येपृथक्पृथक् ॥ प्रदद्यात्पंचपंचाशत्कुंभां

श्वाथजलांजलीन् ॥ द्वारोपान्तेगृहेवाथ क्षीरतोयंचनिक्षिपेत् ॥ जीवात्रस्नाहिदुग्धंच पिबेदंचाप्यनुस्मरन्॥याम्योन्मुखेषुदर्भेषु स्वपेत्पश्चादु दङ्मुखः॥अमावास्यायांकुर्याच्च जीवच्छ्राद्धमतःपरम्॥घृतान्नमांसदधिभिः पूरयेत्कर्षुकात्रयम्॥कुर्याच्चमासिकंमासि सपिंडीकरणंततः॥आ शौचान्तेततःसर्वमात्मनोवापरस्यवा॥कुर्यादस्थिरतांज्ञात्वा भक्त्यारोग्यधनायुषाम् इति ॥ ( हेमाद्रौ लिंगपुराणेविशेषः) जीवच्छ्राद्धविधिंव क्ष्ये समासाच्छ्रुतिसम्मतम् ॥ मुनयेदेवदेवेन कथितंब्रह्मणापुरा ॥ विशिष्टायवसिष्ठाय भार्गवायचसांप्रतम् ॥ शृण्वंतुसर्वभावेन सर्वसिद्धिक रंपरम् ॥ श्राद्धमार्गक्रमंसाक्षाच्छ्राद्धार्हाणामपिक्रमम् ॥ विशेषमपिवक्ष्यामि जीवच्छ्राद्धेषुयःस्मृतः ॥ पर्वतेवानदीतीरे वनेदेवालयेपिवा ॥ जीवच्छ्राद्धंप्रकर्त्तव्यं मृत्युकालेप्रयत्नतः ॥ जीवच्छ्राद्धेकृतेजीवो जीवन्नेवविमुच्यते॥ कर्मकुर्वन्नकुर्वन्वा अज्ञानोज्ञानवानपि॥श्रोत्रियोऽश्रो त्रियोवापि ब्राह्मणःक्षत्रियोऽपिवा ॥ वैश्योवानात्रसंदेहो योगमार्गरतोथवा ॥ परीक्ष्यभूमिंविधिना गंधवर्णरसादिभिः॥ स्वल्पमुद्धृत्ययत्नेन स्थंडिलंसैकतंभुवि ॥ मध्यतोहस्तमात्रेण कुंडंचैवाग्रतःशुभम् ॥ स्थंडिलंवाप्रकर्त्तव्यं इषुमात्रंपुनःपुनः ॥ उपलिप्यविधानेन चोल्लिख्या ग्निंनिधायच ॥ अन्वाधानंयथाशाखं परिसमुह्यसर्वतः॥परिस्तीर्यस्वशाखोक्तं पारम्पर्यक्रमागतम्॥समाप्याग्निमुखंसर्वं मंत्रैरेतैर्यथाक्रमम् ॥ संपूज्यस्थंडिलेवह्निं होमयेत्समिदादिभिः ॥ आदौकृत्वासमिद्धोमं चरुणाचपृथक्पृथक् ॥ घृतेनचपृथक्पात्रे शोभितेनपृथक्पृथक् ॥ जुहु यादात्मनोद्धृत्य तत्त्वभूतानिसर्वतः ॥ ॐभूःब्रह्मणेस्वाहा ॥ ॐभुवःविष्णवेस्वाहा ॥ ॐस्वःरुद्रायस्वाहा ॥ ॐमहःईश्वरायस्वाहा ॥ॐजनः प्रकृतयेस्वाहा ॥ ॐतपः मुद्गलाय० ॐऋतं पुरुषाय० ॐसत्यंशिवाय० एवंसर्वत्रप्रणवादिस्वाहान्तेनज्ञेयः ॥ ॐसर्वधरांमेगोपायघ्राणेगंधं सर्वस्यदेवायभूः स्वाहा ॥ ॐसर्वधरांमेगोपायघ्राणेगंधंसर्वस्यदेवस्यपत्न्यैभूःस्वाहा ॥ ॐभवजलंमेगोपायजिह्वायां रसंभवाय देवायभुवः

स्वाहा ॥ भवजलंमे० रसंभवस्यपत्न्यैभुवःस्वाहा ॥ रुद्राग्निंमेगोपायनेत्ररूपं रुद्रायदेवायस्वःस्वाहा ॥ रुद्राग्निंमे०रुद्रस्यदेवस्यपत्न्यैस्वः
स्वाहा ॥ उग्रवायुंमेगोपायत्वचिस्पर्शम् उग्रायदेवायमहःस्वाहा ॥ उग्रवायुं० उग्रस्य देवस्य पत्न्यैमहःस्वाहा ॥ भीमसुषिरंमेगोपाय
श्रोत्रेशब्दंभीमायदेवायजनःस्वाहा ॥ भीमसुषि० भीमस्यदेवस्यपत्न्यैजनःस्वाहा ॥ ईशरजोमेगोपायद्रव्ये तृष्णाम् ईशायदेवायतपः
स्वाहा ॥ ईशरजोमेगोपायद्रव्येतृष्णाम् ईशस्यदेवस्यपत्न्यैतपःस्वाहा ॥ महादेवसत्यंमेगोपाय श्रद्धांधर्मेमहादेवाय ऋतं स्वाहा॥ महादेव०
महादेवस्य पत्न्यै ऋतं स्वाहा ॥ ॐपशुपत पाशंमेगोपाय भोक्तृत्वं भोग्येपशुपतयेदेवाय सत्यं स्वाहा ॥ ॐपशुपते०पशुपतेर्देवस्य
पत्न्यै सत्यं स्वाहा ॥ ॐशिवायसत्यं स्वाहा ॥ इति ॥ एवंशिवादिहोतव्यं विरिंच्यान्तंचपूर्ववत् ॥ विरिंचांतंपुराप्रोक्तं सृष्टिमार्गेण
सुव्रताः ॥ पुनःपशुपतेःपत्नीं तथापशुपतिंक्रमात् ॥ संपूज्यपूर्ववन्मंत्रैर्होतव्यंवैक्रमेणच ॥ सर्वान्तमाज्यंपूर्वंच समिदन्तंसमाहितः ॥
ॐसर्वधरांमेछिंधिप्राणोगंधंछिंधिमेऽघंजहिभूः स्वाहा भूर्भुवःस्वःस्वाहा ॥ एवंपृथक्पृथग्हुत्वा केवलेनघृतेनच ॥ सहस्रंवातदर्द्धंवा शतमष्टो
त्तरंतुवा ॥ विधायैवंघृतेनैव शतमष्टोत्तरंपृथक् ॥ प्राणादिभ्यश्चजुहुयाद् घृतेनैवतुकेवलम्॥ॐप्राणेनिविष्टोऽमृतंजुहोमिशिवोमाविशाप्रदाहा
यप्राणाय स्वाहा ॥ प्राणाधिपतयेरुद्राय वृषान्तकाय स्वाहा ॥ भूःस्वाहा ॥ भुवःस्वाहा ॥ स्वः स्वाहा॥भूर्भुवःस्वःस्वाहा ॥ एवंक्रमेणजुहुया
द्यथोक्तंचयथाक्रमम् ॥ सप्तमेऽहनिविप्रेंद्राञ्छ्राद्धार्हान्विप्रभोजयेत् ॥ सर्वेषांचैवविप्राणां वस्त्राभरणसंयुतम् ॥ वाहनंशयनंकांस्यमासनादिंच
भाजनम् ॥ हैमंवाराजतंधेनुं तिलक्षेत्रंचवैगृहम् ॥ दासीदासगणश्चैव दातव्योदक्षिणाअपि ॥पिंडंचपूर्ववद्देयं पृथगुक्तप्रकारतः ॥ ब्राह्मणानां
सहस्रंच भोजयेच्चसदक्षिणम् ॥ एकंवायोगनिरतं ब्रह्मनिष्ठंजितेंद्रियम् ॥ त्र्यहंचैवतुरुद्रस्यमहाचरुर्निवेदनम् ॥ विशेषमेतत्कथितम

शेषंश्राद्धचोदितम् ॥ मृतेकुर्य्यान्नकुर्यांद्वा जीवन्मुक्तोयतःस्वयम् ॥ नित्यनैमित्तिकादीनि कुर्य्याद्वासंत्यजेतवा ॥ बांधवेपिमृते
तस्य नैवाशौचंनविद्यते ॥ सूतकंचनसंदेहः स्नानमात्रेणशुध्यति ॥ पश्चाज्जाते कुमारेच स्वक्षेत्रेवात्मनोयदि ॥ तस्यसर्वंप्रकर्त्तव्यं
पुत्रोपिब्रह्मविद्भवेत् ॥ कन्यकायदिसंजाता पश्चात्तस्यमहात्मनः ॥ एकवर्णाथवाप्यन्या सवर्णासाचसुव्रता ॥ भवत्येवनसंदेहः
तस्य स्वान्वयजाअपि ॥ मुच्यन्तेनात्रसंदेहः पितरोनरकादपि ॥ मुच्यंतेसर्वकर्माणा मातृतः पितृतस्तथा ॥ कालङ्गतोद्विजेभूमौ खने
द्वापिदहेतवा ॥ पुत्रकृत्यमशेषंवा कृत्वादोषोनविद्यते ॥ कर्मणाचोत्तरेणैव गतिरस्यमहात्मनः ॥ ब्रह्मणाकथितंसर्वं मुनीनांभावितात्म
नाम् ॥ पुरासनत्कुमाराद्याच्छ्रुतंचैवनियोगतः ॥ एतद्वःकथितंसर्व घृणयातेनधीमता ॥ कृष्णद्वैपायनायैव कथितंब्रह्मसूनुना ॥ प्रसादात्त
स्यदेवस्य वेदव्यासस्यधीमतः ॥ ज्ञातंमयाकृतंचैव नियोगादेवतस्यतु ॥ एतद्वःकथितंसर्वं रहस्यंसर्वसिद्धिदम् ॥ नैवदुष्टायदातव्यं
नचाभक्तायसुव्रत इति ॥ अस्यलिंगपुराणोक्तप्रयोगस्यव्याख्याहेमाद्रिणोक्तावक्ष्यते ॥ सूतः श्रोतॄन्प्रत्याह॥श्राद्धमार्गेजीवच्छ्राद्धावधिकारे
क्रमंप्रकारंविशेषदेशकालादिरूपंमृत्युकालेमरणकाले ॥ समासन्नेजीवन्नेवेतिसत्त्वशुद्धिद्वारेणतत्त्वज्ञानलाभान्मुच्यतएव इत्यर्थः ॥ अग्रत
इतिमध्येस्थंडिलादिभ्योऽर्चार्चनार्थात्प्राग्दिशि ॥ मध्यस्थंडिलाद्देवार्चनात्प्राग्दिशीत्यर्थः ॥ कुंडंस्थंडिलानंतरं वा होमार्थंकार्यम्॥ एतैर्व
क्ष्यमाणैर्ब्रह्मादिमंत्रैः स्थंडिले ब्रह्मादीन्संपूज्य ॥ तैरेवाग्नौसमिदादीन्जुहुयात् ॥ आत्मनोद्धृत्येति आत्मस्थानितत्त्वानिभूतानिचतत्त
न्मंत्रप्रकाशिताज्यनेकशः ॥ समुद्धृत्यपृथक्कृतानीवभावयित्वा ॥ ततोदेवतामुद्दिश्यजुहुयात् ॥ ततस्तत्तत्त्वंशुद्धं भावयेत् ॥ अत्रनमोंतः
पूजायांस्वाहांतोहोमेमंत्रः ॥ तत्रब्रह्मादित्रिप्रथमाष्टकेतत्तद्देवानांपूजाहोमौ तथासर्वादिपशुपत्यंतानांसपत्नीकानांधरादितत्त्वयुक्तानांच

पूजाहोमौ एवंसृष्टिक्रमे द्विचतुर्विंशतिमंत्रानुक्त्वा संहारे तद्वैपरीत्यप्रदर्शनाथप्रथमाष्टकप्रान्तमंत्रमाद्यत्वेनोदाहरति ॐ शिवायसत्यमित्यादि एवमितिसृष्टिक्रमेणप्रागुक्तविरिंच्यादिशिवान्तदेवताष्टकमंत्रेषु पुनः संहारक्रमेणाग्निशिवायसत्यस्वाहा इत्यादि ब्रह्मणेस्वाहेत्यंततथा पशुपतिपत्न्यादिसर्वान्तमुक्तक्रमेणसंपूज्य घृतचरुसमित्क्रमात् प्रत्येकंहोतव्यम् ॐसर्वेत्यादिकेवलाज्यहोममंत्रस्तत्रसर्वधरामितिवा क्यत्रयान्तेभुवः स्वाहेतितृतीयः ॐभूर्भुवः स्वाहेतिचतुर्थोमंत्रः ॥ एवंपृथक् पृथगिति तथा शिवस्यपत्नीत्येतेचत्वारोमंत्राऊह्याः एवं भवजलंमेछिंधिजिह्वायांरसंभवमेऽघंजहि भूःस्वाहेत्यादिभिरूहितैश्चतुर्भिर्मंत्रैर्होमः ॥ तथाविरजमंत्रैश्च तथाप्राणेनिविष्ट इत्यादिषण्मं त्रैश्चश्राद्धोक्तः स्वगृह्योक्तः पितृपितामहप्रपितामहाद्युद्देशेनहोमश्च ॥ एवंसप्ताहं प्रत्यहंहुत्वासप्तमेदिने भुवादितत्तद्देवतोद्देशात् विप्रानभ्य र्च्य सर्वादिभ्योऽष्टौपिंडादेयाः॥एवंकृतेजीवच्छ्राद्धे स्वबांधवेमृतेनाशौचंनसूतकम्॥ एवंतस्मादुत्पन्नःपुत्रोपिपित्रादिजातकर्मादिनासंस्कार्य्यः सचज्ञानीभवेत् एवंदुहिताच तथाचैतत्सन्ततौयोगिनोजायन्तेइति॥इतिजीवच्छ्राद्धप्रयोगः समाप्तः ॥ अथकुष्ठिमरणविधानं तत्रयमः॥मृत स्यकुष्ठिनोदेहं निखनेद्गोष्ठभूमिषु ॥वासरत्रितयंपश्चादुद्धृत्यान्यत्रतंदहेत्॥नगंगाप्लवनंकार्यं निक्षेपेविधिरुच्यते॥षडब्दव्रतपूर्णेन विधानांत्यं क्रतुंचरेत् ॥ततोस्थिसंचयंतस्य गंगायांप्रक्षिपेत्सुधीः॥मासिमासिततःकुर्यान्मासिश्राद्धानिपार्वणात्॥इत्येतत्कुष्ठिमरणे कथितंशास्त्रकोविदैः इति ॥ अस्यदाहकरणप्रायश्चित्तमुक्तं ( भविष्ये ) शृणुकुष्ठगणंविप्र उत्तरोत्तरतोगुरुम्॥विचर्चिकातुदुश्चर्मा चर्चरीयस्तृतीयकः ॥ त्रिकचूर्ण ताम्रौच कृष्णश्वेततथाष्टकम्॥ इत्युक्त्वा॥मृतेतुप्रापयेत्तीर्थमथवातरुमूलकम्॥ नपिंडंनोदकंकार्यं नचदानक्रियांचरेत्॥षण्मासीयत्रिमासी यमृतःकुष्ठीकदाचन ॥ यदिस्नेहाच्चरेद्दाहं यतिश्चांद्रायणंचरेत् ॥ (कौर्मे) क्रियाहीनस्यमूर्खस्य महारोगिणएवच ॥ यथेष्टाचरणस्याहुर्मरणां

तमशौचकम् ॥ महारोगास्तु ॥ वातव्याध्यश्मरीकुष्ठमेहोदरभगंदराः ॥ अर्शांसिग्रहणीत्यष्टौ महारोगाः प्रकीर्त्तिताः ॥ इतिकुष्ठिमरणविधानम् ॥
( अथरजस्वलामृतौ मदनरत्नेस्मृत्यन्तरे ) उदक्यासूतिकावापि मृतास्याद्यदितांतदा ॥ आशौचेत्वनतिक्रान्ते दाहयेदन्तरायदि ॥ उद्धृते
नतुतोयेन स्नापयित्वातुमंत्रतः ॥ आपोहिष्ठेतितिसृभिर्हिरण्यवर्णा [illegible]भिः ॥ पवमानानुवाकेन यदंतीतिचसप्तभिः ॥ ततोयज्ञपवित्रे
ण गोमूत्रेणाथतेद्विजाः ॥ स्नापयित्वान्यवसनेनाच्छाद्य [illegible] ॥ दाहादिकंततःकुर्यात्प्रजापतिवचोयथा ॥ इति ॥ यज्ञपवित्रं
आपोअस्मानिति ॥ गृह्यकारिकायाम् ॥ अन्तरिक्ष [illegible] ॥ उदक्यासूतिकानारी चरेच्चान्द्रायणत्रयम् इति ॥
( अथगर्भिणीमृतौ मदनरत्ने शौनकः ) गर्भिण्युदक्य [illegible] ॥ प्रवक्ष्यामिसमासेन शौनकोहंद्विजन्मनाम् ॥
गर्भिणीमरणेप्राप्ते गोमूत्रेणजलैःसह ॥ आपोहिष्ठादिभि [illegible] थतः ॥ प्रेतंश्मशानेनीत्वाऽथोल्लिख्यसव्योदरंततः ॥
पुत्रमादायजीवंश्चेत्स्तनंदत्वासुतायतु ॥ यस्तेस्तनःशश [illegible] ॥ उदरंचाऽव्रणंकुर्यात्पृषदाज्येनपूर्यच ॥ मृद्भस्मकुशगो
मूत्रैरापोहिष्ठादिभिस्त्रिभिः ॥ स्नाप्यचाच्छाद्यवासोभिः शवं [illegible] ॥ ( तत्रैव षडशीतिमते ) गर्भिण्यांमृतायांदक्षिणाशिर
संनिधायतस्यानाभेरधात्सव्यमुदरंचतुरंगुलंहिरण्यगर्भेतिमंत्रेणोल्लिख्य [illegible] लस्यनिखनेत्सयदिजीवन् ॥ जीवत्वंममपुत्रक
इत्युक्त्वाक्षेत्रयेत्वेतिपंचभिर्मंत्रैः स्नापयित्वाहिरण्यमन्तर्धाय [illegible] ॥ यस्तेस्तनः शशयइतिस्तनंपाययित्वा
शिशुंग्रामंप्रापयेत् ॥ गर्भच्छेदस्थलेशतायुधायेतिपंचाहुतीर्हुत्वा [illegible] स्वाहापूर्णेस्वाहा इत्यनुवाकाभ्यां व्याहृत्यावाज्यंहुत्वा
भिन्नमुदरंसूत्रेणसंग्रथ्यघृतेनानुलिप्यब्राह्मणायतिलान्गांभूमिंसुवर्णंदद्याद [illegible] कल्पनेनदहेत् ॥ ( गृह्यकारिकायामपि ) यदागर्भवती

नारी सशल्यासंस्थिताभवेत् ॥ कुक्षिंभित्त्वाततःशल्यं निर्हरेद्यदिजीवति ॥ प्रमीतनिखनेत्तंतु प्रायश्चित्तमतःपरम् ॥ सात्रयस्त्रिंशताकृच्छ्रैः
शुद्ध्यतेशल्यदोषतः ॥ सगर्भदहनेतस्या वर्णजंवधपातकम् ॥ प्रायश्चित्तंचरित्वातु शुद्ध्यन्तिपापकारिणः ॥ दग्ध्वातुगर्भसंयुक्तां
त्रिरब्दंकृच्छ्रमाचरेत् इति ॥ गर्भिणीमृतविधानम् ॥ ॥ ( चतुर्दश्यां शस्त्रहतानामेकोद्दिष्टमेवकर्त्तव्यमित्यत्र कारणमुक्तं हेमाद्रौ
नागरखण्डे ) ॥ आनर्त्त उवाच ॥ कस्माच्छस्त्रहतानांच प्रोक्ताश्राद्धेचतुर्दशी ॥ एकोद्दिष्टंकुतःश्राद्धं कारणंप्रब्रवीहिमे ॥ भर्तृयज्ञउवाच ॥
बृहत्कल्पेपुराराजन्हिरण्याक्षोमहासुरः ॥ बभूवबलवाञ्छूरः सर्व्वदेवभयंकरः ॥ ब्रह्माप्रतोषितस्तेन विधायविविधंतपः ॥ कृष्णपक्षे
चतुर्दश्यां नभस्येमासिसंस्थिते ॥ ब्रह्मोवाच ॥ परितुष्टोस्मितेवत्स प्रार्थयस्वयथेप्सितम् ॥ अदेयमापिदास्यामि दुर्लभंयत्सुरासुरैः ॥ हि
रण्याक्षउवाच ॥ भूताःप्रेताःपिशाचाश्च राक्षसादैत्यदानवाः ॥ बुभुक्षिताःप्रधावन्ति मांनित्यंपद्मसंभव ॥ पितृपक्षेकृतेश्राद्धे कन्यासंस्थेदिवा
करे ॥ एतस्मिन्नहनिप्रायस्तृप्तिःस्याद्धर्पसंभवा ॥ तदेषामत्रदिवसे तृप्त्युपायंकुरुप्रभो ॥ ब्रह्मोवाच ॥ यःकश्चिन्मानवःश्राद्धं स्वपितृभ्यः
प्रदास्यति ॥ पितृपक्षेचतुर्दश्यां नभस्येमासिसंस्थिते ॥ प्रेतानांराक्षसानांच भूतानांतद्भविष्यति ॥ एवमुक्त्वाततोब्रह्मा गतश्चादर्शनं
नृप ॥ हिरण्याक्षोपिसंहृष्टः स्वीयमेवगृहंययौ ॥ यच्चशस्त्रहतानांच तस्मिन्नहनिदीयते ॥ एकोद्दिष्टंनरैःश्राद्धं तत्तेवक्ष्यामिकारणम् ॥
संख्येशस्त्रहतायेच निर्विकल्पेनचेतसा ॥ युध्यमानानतेमर्त्ये जायन्तेमनुजाःपुनः ॥ प्राङ्मुखायेनहन्यन्ते पलायनपरायणाः ॥ तेभ
वंतिनराःप्रेता एतदाहपितामहः ॥ सम्मुखाअपियेदैन्यं हन्यमानावदंतिच ॥ पश्चात्तापंचवाकुर्य्युः प्रहारैर्जर्जरीकृताः ॥ तेऽपिप्रेताभवं
तीह मनुःस्वायंभुवोब्रवीत् ॥ कदाचिच्चित्तचलनं शूराणांसंप्रजायते ॥ तेषामपिदिनेतत्र देयंप्रेतत्वशंकया ॥ अपमृत्युगतानांच सर्वं

षामेवदेहिनाम् ॥ प्रेतत्वंजायतेयस्मात्तस्मात्तेषांहितादिनम् ॥ श्राद्धार्हंपार्थिवश्रेष्ठ विशेषेणप्रकीर्त्तितम् ॥ एकोद्दिष्टंप्रकर्त्तव्यं तस्मात्तत्र दिनेनरैः॥ सपिंडीकरणादूर्ध्वं तत्तेवक्ष्यामिकारणम् ॥ यदिप्रेतत्वमापन्नः कदाचित्तत्पितामवेत् ॥ तृप्त्यर्थंतस्यकर्त्तव्यं श्राद्धंतस्यादिनेनृप ॥ पितामहाद्यास्तत्राह्नि श्राद्धंनार्हंतिकुत्रचित् ॥ अथचेद्भ्रान्तितोदद्याद्ध्रियतेराक्षसैस्तुतत् ॥ ब्रह्मणोवचनाद्राजन्भूतप्रेतैश्चदानवैः ॥ तेनैकोद्दिष्टमेवात्र कर्त्तव्यंनतुपार्वणम् ॥ पितृपक्षेचतुर्दश्यां कन्यासंस्थेदिवाकरे ॥ एतस्मात्कारणाच्छ्राद्धं पार्वणंनविधीयते ॥ तस्मिन्नह्नि संप्राप्ते व्यर्थंश्राद्धंभवेद्यतः ॥ इतिचतुर्दशीश्राद्धनिरूपणीयइतिहासः ॥ ॥ अथजीवत्पितृकश्राद्धकालाः ( तत्र कात्यायनः ) सपितुःपितृकृत्येषु अधिकारोनविद्यते ॥ नजीवन्तमतिक्रम्य किंचिद्दद्यादितिश्रुतिरिति ॥ ( अत्रापवादोमैत्रायणीयपरिशिष्टे ) उद्वाहेपुत्रजनने पित्र्येष्ट्यांसौमिकेमखे ॥ तीर्थेब्राह्मणआयाते षडेतेजीवतःपितुः इति ॥ जीवत्पितृकस्यषडेतेश्राद्धकाला इत्यर्थः ॥ पित्र्येष्ट्यां चातुर्मास्येषुतथापिंडापितृयज्ञेच सौमिकेमखे सोमादौपुरोडाशात्पिंडदानेच ॥ इति ( अन्योपिविशेषस्तत्रैव ) आन्वष्टक्यंगयाप्राप्तौ सत्यां यच्चमृतेहनि ॥ मातुःश्राद्धंसुतःकुर्यात्पितर्यपिचजीवति ॥ यत्तुदर्शश्राद्धंगयाश्राद्धं श्राद्धंचापरपाक्षिकम् ॥ नजीवत्पितृकःकुर्यात्तिलैःकृष्णैस्तुतर्पणमितिगयाश्राद्धनिषेधकंवचनम् ॥ तत्तु गयाश्राद्धोद्देशेनगत्वागयाश्राद्धंनकर्त्तव्यमित्येतत्परम् ॥ पूर्वोक्तवाक्यंतुदैवाद्गयाप्राप्तौ सत्यां श्राद्धविधायकम् इति ॥ अथजीवत्पितृकर्तृकश्राद्धविचारः ॥ ( तत्र पारिजातनिर्णयामृतयोर्मनुः ) ध्रियमाणेतुपितरि पूर्वेषामेवनिर्वपेत् ॥ विप्रवद्वापितंश्राद्धे स्वकंपितरमाशयेत् ॥ इतिपूर्वेषांपितामहादीनामित्यर्थः ॥ पितामहेजीवति पितृप्रपितामहयोर्मृतयोस्तत्रैवसएवाह ॥ पितायस्यतुवृत्तःस्याज्जीवेच्चापिपितामहः ॥ पितुःसनामसंकीर्त्य कीर्त्तयेत्प्रपितामहम् ॥ पितामहोवातच्छ्राद्धे भुंजीतेत्यत्र

वीन्मनुः॥ इति ॥ मृतः मृतः ॥ पितुः स नामसंकीर्त्तयेति अस्मत्पितुः पितामहः पितुः प्रपितामहः पितुर्वृद्धप्रपितामह इति स्वप्रपितामहा
दिनाम [illegible] श्राद्धं कुर्यादित्यर्थः ॥ अत्र मनुनाजीवतः पितामहस्य भोजनमुक्तं तथापि प्रत्यक्षार्चनस्यनिषिद्धत्वात् पितामहं [illegible]
पितृप्रपिता[illegible]महेभ्यो देयमिति ॥ पितरिपितामहेचजीवतिप्रपितामहादीनांत्रयाणांश्राद्धं कुर्यात् ॥ ( तदुक्तं हेमाद्रिपारिजात
निर्णयामृतेषु [illegible] ) ॥ पितरि जीवति यः श्राद्धं कुर्यात् ॥ येषांपिताकुर्यात्तेषांकुर्यात् पितरि पितामहेचजीवति येषां पितामहःपि
[illegible]पितामहे प्र[illegible]जीवतिनैवकुर्य्यात् ॥ यस्यपिताप्रेतःस्यात् सपित्रेपिण्डंनिधाय प्रपितामहात्पराभ्यांद्वाभ्यांदद्यात् ॥ यस्यपिता
प्रपितामहश्च [illegible] पित्रे पिण्डंनिधाय पितामहात्पराभ्यांदद्यात् यस्यपितामहः प्रेतःस्यात् स तस्मै पिण्डंनिधाय प्रपितामहात्
पराभ्यांदद्यात् [illegible] पितामहश्चप्रेतौस्यातां सताभ्यां पिण्डौदत्त्वापितामहाय प्रपितामहायदद्यात् इति ॥ मातामहानामप्येवं श्राद्धं
कुर्याद्विचक्षणः ॥ [illegible]यथान्यायं शेषाणांमंत्रवर्जितम् इति ॥ अत्र पितृवन्मातामहेजीवति तत्पित्रादिभ्यः यथा तत्र त्रिषु जीवत्सु
नैवकुर्यादिति ॥ [illegible]पीतिशूलपाणिकालादर्शप्रभृतयः ॥ ( अत्र विशेषः ) मृतमातृमातामहकोपिजीवत्पितृकः स्वसंस्का
रेपितुर्मातृपितामही[illegible]प्रपितामह्यः पितुःपितृपितामहप्रपितामहाः पितुर्मातामहप्रमातामहवृद्धप्रमातामहाः इतिपार्वणत्रयमुद्दिश्य
श्राद्धंकुर्य्यात् ॥ [illegible]मातृमातामहपार्वणोद्देशः ॥ पितरिमातामहेचजीवति स्वसंस्कारे पितामहस्यमातृपितामहीप्रपितामह्य
इत्याद्युद्देशः ॥ एवं पितामहेपियोज्यम् इति ॥ माणवकपितुः प्रवासादिना असन्निधाने भ्रात्रादि माणवकस्य पितुर्मातृपितामही
प्रपितामह्य इत्याद्युद्देशः कार्य्यः ॥ मृतपितृकमाणवकसमावर्त्तने पितृव्यभ्रात्रादिरस्य माणवकस्य मातृपितामहीप्रपितामह्य

इत्यादि उच्चारयेत् ॥ भ्रात्रादेरभावेस्वयमेवस्वपितृभ्योदद्यात् ॥ एवंजीवत्पितृकोपि पितुरसन्निधाने भ्रात्रादेरभावेपितुः पि
तृभ्यःस्वयमेवदद्यात् ॥ एवंविवाहादिष्वपिज्ञेयम् ॥ मृतपितृकस्योपनयनादिसंस्कारंपितृव्यमातुलादिकुर्वन्नस्यसंस्कार्य्यस्यपितृ
पितामहेत्याद्युच्चार्यश्राद्धंकुर्यात् ॥ जीवतः पितुरसन्निधानेन कुर्वन्मातुलादिरस्यसंस्कार्यस्यापितुर्जनकादीनुद्दिश्यकुर्यान्नतुसंस्कार्यस्य
मृतानपिमात्रादीनिति ॥ इति जीवत्पितृककर्तृकाभ्युदयिकश्राद्धनिर्णयः ॥ अथमलमासेश्राद्धनिर्णयः ॥ मलमासोनामसंक्रान्तिविर
हितोमासः संक्रांतिद्वययुतोवा ॥ ( तथाच हेमाद्रौकाठकगृह्ये ) यस्मिन्मासेनसंक्रांतिः संक्रांतिद्वयमेववा ॥ मलमासःसविज्ञेयो मासेत्रिं
शत्तमेभवेदिति ॥ अत्रद्विविधेऽपिमलमासे महालयादिश्राद्धंनकुर्यात् ॥ ( तथाचहेमाद्रिपारिजातयोः काठकगृह्यपरिशिष्टम् ) तथामलेऽ
नन्यगतिं नित्यांनैमित्तिकींक्रियाम् ॥ सोमयागादिकर्म्माणि नित्यान्यपिमलिम्लुचे ॥ पुष्टीष्ट्याग्रहणाधानचातुर्मास्यादिकान्यपि ॥महाल
याष्टकाश्राद्धोपाकर्मोत्सर्गकर्म्मयत् ॥ स्पष्टंमासविशेषाख्यं विहितंवर्जयेन्मले इति ॥ ( तत्रैव भृगुरपि ) वृद्धिश्राद्धंतथासोमरम्याधेयंमहा
लयम् ॥ राज्याभिषेकंकाम्यंच नकुर्य्याद्भानुलंघिते इति॥अथमलमासेश्राद्धकर्म्मणांप्रतिप्रसवाः॥ (तत्र हेमाद्रौयमः) गर्भेवार्द्धुषिकेकृत्ये श्रा
द्धकर्म्मणिमासिके ॥ सपिंडीकरणेनित्ये नाधिमासोविधीयते॥ तीर्थस्नानंजपोहोमो यवव्रीहितिलादिभिः॥जातकर्मान्त्यकर्म्माणि नवश्राद्धं
तथैवच ॥ मघात्रयोदशीश्राद्धं श्राद्धान्यपिचषोडश ॥ चंद्रसूर्यग्रहेस्नानं श्राद्धदानजपादिकम् ॥ कार्याणिमलमासेपि नित्यंनैमित्तिकं
तथा इति ॥ अत्रतीर्थस्नानश्राद्धादिप्रासंगिकं नत्वपूर्वंतस्यमलमासेस्मृत्यन्तरेनिषेधात् ॥ ( हेमाद्रौ मात्स्ये ) चंद्रसूर्यग्रहेचैव मरणेपुत्रज
न्मनि ॥ मलमासेपिदेयंस्याद्दत्तमक्षय्यकारकम् ॥ ( सौरपुराणे ) एकोद्दिष्टंतुयच्छ्राद्धं तन्नैमित्तिकमुच्यते ॥ तत्कार्यंमलमासेपि काला

धिक्येपिधर्मतः ॥ ( हेमाद्रौ व्यासः ) जातकर्मणियच्छ्राद्धं दर्शश्राद्धंतथैवच ॥ मलमासेपिकर्त्तव्यं व्यासस्यवचनं यथा ॥ ( शातातपः ) प्रतिसंवत्सरेश्राद्धे नाधिमासंविवर्जयेत् ॥ मलमासेपिकर्त्तव्यं श्राद्धंयत्प्रतिवत्सरम् ॥ इति ॥ एतदाद्यसांवत्सरिकविषयंमलमासेसांवत्सरिकं कृत्वातदुत्तरमासेपुनस्तदहर्वर्त्तनीयमित्येवंविधमतानुसारि चेदंवचनमत्रवचनानि ॥ ( तत्र हेमाद्रौ वृद्धवसिष्ठः ) असंक्रांतेपिकर्त्तव्य माब्दिकंप्रथमंद्विजैः ॥ तथैवमासिकंश्राद्धं सपिंडीकरणंतथा ॥ ( पैठीनसिः ) मलमासमृतानांच श्राद्धंयत्प्रतिवत्सरम् ॥ मलमासेपिकर्त्त व्यं नान्येषांतुकदाचन॥ ( यमः ) आब्दिकंप्रथमंयत्स्यात्तत्कुर्वीतमलिम्लुचे॥त्रयोदशेतुसंप्राप्ते कुर्वीतपुनराब्दिकम्॥ ( वसिष्ठोपि ) आब्दि काहनिसंप्राप्ते अधिमासोभवेद्यदि ॥ श्राद्धद्वयंप्रकुर्वीत एवंकुर्वन्नमुह्यति इति ॥ तदेवंसपिंडीकरणान्तानिप्रेतश्राद्धानि॥ पुत्रजन्मादिनिमित्त कमुपरागनिमित्तकमाद्यसांवत्सरिकमनाद्यपि मलमासमृतानांवत्सरिकंगजच्छायाश्राद्धममावास्याश्राद्धंप्रत्यहमनुष्ठीयमानंचनित्यश्राद्धं वर्जयित्वाऽन्यच्छ्राद्धंमलमासेनानुष्ठेयमितिस्थितम् ॥ इतिमलमासश्राद्धनिर्णयः ॥ अथपिंडशब्देपुन्नपुंसकयोर्विचारः ॥ अत्रयद्यपि सूत्रस्मृतिपुराणेषुसर्वत्रपिंडशब्दस्यपुंल्लिंगताएवदृश्यते ॥ तथापि पिंडपितृयज्ञेकात्यायनेन असावेतत्ते इति नपुंसकदर्शनात् यजुर्वेदि नांदर्शमहालयप्रभृतिश्राद्धेषु एतत्तेऽन्नंपिंडंवा इतिगम्यते ॥ प्रविश्यपिंडीकुडयस्यपिंडंपतति इतिमहाभाष्यादौपिंडशब्दस्यस्त्रीनपुंस कयोरपिप्रयोगदर्शनात् ॥ विरूपाआमगर्भाश्चज्ञाताज्ञाताःकुलेमम ॥ तेभ्यःपिंडंमयादत्तमक्षय्यमुपतिष्ठतामितिहेमाद्रौलौगाक्षिणाविशेषोपा दानात् हेमाद्रियजुर्वेदीयश्राद्धतत्त्वप्रभृतिमहानिबंधेषूक्तत्वाच्चनपुंसकेन निर्देशोनविरुध्यते॥ ( उपाध्यायकर्कस्तु ) एतत्तेऽन्नम् इत्यध्याहारः कार्य्य इत्युक्तवान् ॥ तत्तु पिंडपितृयज्ञीयदर्शश्राद्धविषयकम्॥दर्शव्यतिरिक्तेषुतु एतत्तेपिंडासौतिअध्याहारःकार्य्यः ॥ ( अनयोश्चव्यवस्था

माह हेमाद्रौ लौगाक्षिः ) महालयेगयायांच प्रेतश्राद्धेदशाहिके ॥ पिंडशब्दप्रयोगःस्यादन्नमन्यत्रकीर्त्तयेत् इति ॥ महालये भाद्रपदापरपक्षेतीथिविशेषेवाप्रेतश्राद्धे इति सपिंडीकरणान्तेषुश्राद्धेषु दशाहिकेश्राद्धव्यतिरेकेणापिदशाहनिर्वर्त्येपिंडदाने अन्नशब्दस्यचानन्तरंस्वधाशब्दःप्रयोज्यइत्यर्थः ॥ तत्रेदंप्रयोगवाक्यम् ॥ ॐअमुकगोत्राऽस्मत्पितरमुकशर्मन्नेतत्तेऽन्नंपिंडंवास्वधानमः ॥ इति ॥ प्रेतश्राद्धेतुसर्वत्रएषपिंडइतिपुँल्लिंगत्वेनएवउच्चारःकार्य्यः ॥ सर्वनिबंधेषुपुँल्लिंगत्वेनैवोपदेशात् इति विवेकः ॥ इतिपिंडशब्देपुन्नपुंसकयोर्विचारः ॥ अथरुचिस्तवः ॥ ( हेमाद्रौ मार्कण्डेयपुराणे ) रुचिरुवाच ॥ नमस्येऽहंपितॄञ्छ्राद्धे येवसन्त्यधिदेवताः॥देवैरपिहितर्प्यन्ते येचश्राद्धेस्वधोत्तरैः॥ ॥ १ ॥ नमस्येऽहंपितॄन्स्वर्गे येतर्प्यन्तेमहर्षिभिः ॥ श्राद्धैर्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः ॥२॥ नमस्येऽहंपितॄन्स्वर्गे सिद्धाःसंतर्पयन्तियान् ॥ श्राद्धेषुदिव्यैःसकलैरुपहारैरनुत्तमैः ॥ ३ ॥ नमस्येऽहंपितॄन्भक्त्या येऽर्च्यन्तेगुह्यकैरपि ॥ तन्मयत्वेनवाञ्छद्भिर्ऋद्धिमात्यंतिकींपराम् ॥ ४ ॥ नमस्येऽहंपितॄन्मर्त्यैरर्च्यन्तेभुवियेसदा ॥ श्राद्धेषुश्रद्धयाभीष्टलोकप्राप्तिप्रदायिनः ॥ ५ ॥ नमस्येऽहंपितॄन्विप्रैरर्च्यन्तेभुवियेसदा ॥ वाञ्छिताभीष्टलाभाय प्राजापत्यप्रदायिनः ॥ ६ ॥ नमस्येऽहंपितॄन्येवै तर्प्यन्तेऽरण्यवासिभिः ॥ वन्यैःश्राद्धैर्यताहारैस्तपोनिर्धूतकिल्बिषैः ॥ ७ ॥ नमस्येऽहंपितॄन्विप्रैर्नैष्ठिकब्रह्मचारिभिः ॥ येसंयतात्मभिर्नित्यं संतर्प्यन्तेसमाधिभिः ॥ ८ ॥ नमस्येऽहंपितॄञ्छ्राद्धेराजन्यास्तर्पयन्तियान् ॥ कव्यैरशेषैर्विधिवल्लोकत्रयफलप्रदान् ॥ ९ ॥ नमस्येऽहंपितॄन्वैश्यैरर्च्यन्तेभुवियेसदा ॥ स्वकर्माभिरतैर्नित्यंपुष्पधूपान्नवारिभिः ॥ १० ॥ नमस्येऽहंपितॄञ्छ्राद्धेयैःशूद्रैरपिभक्तितः ॥ संतर्प्यन्तेजगत्यत्र नाम्नाज्ञाताः सुकालिनः ॥ ११ ॥ नमस्येऽहंपितॄञ्छ्राद्धैः पातालेयेमहासुरैः ॥ संतर्प्यन्तेस्वधाहारास्त्यक्तदंभमदैःसदा ॥ १२ ॥ नमस्येऽहंपितॄञ्छ्राद्धैरर्च्यन्तेयेरसातले ॥ भोगैरशेषै

विधिवन्नागैः कामानभीप्सुभिः ॥ १३ ॥ नमस्येहंपितॄञ्छ्राद्धैः सर्वैः सन्तर्पितान्सदा ॥ तत्रैवविधिवन्मंत्रभोगसंपत्समन्वितैः ॥ १४ ॥ पितॄन्नमस्येनिवसन्तिसाक्षाद्येदेवलोकेचतथान्तरिक्षे ॥ महीतलेयेचसुरादिपूज्यास्तेमेप्रयच्छंतुमयोपनीतम् ॥ १५ ॥ पितॄन्नमस्येपरमात्मभूता येवैविमानेनिवसंतिमूर्त्ताः ॥ यजन्तियानस्तमलैर्मनोभिर्योगीश्वराः क्लेशविमुक्तिहेतून् ॥ १६ ॥ पितॄन्नमस्येदिवियेचमूर्त्ताः स्वधाभुजः काम्यफलाभिसंधौ ॥ प्रदानशक्ताः सकलेप्सितानां विमुक्तिदायेऽनभिसंहितेषु ॥ १७ ॥ तृप्यंतुतेऽस्मिन्पितरः समस्ता इच्छावतांये प्रदिशंतिकामान् ॥ सुरत्वमिंद्रत्वमतोऽधिकंवा सुतान्पशून्स्वानिबलंगृहाणि ॥ १८ ॥ सोमस्ययेरश्मिषुयेऽर्कबिम्बे शुक्लेविमानेचसदावसन्ति ॥ तृप्यन्तुतेऽस्मिन्पितरोऽन्नतोयैर्गंधादिनापुष्टिमितोव्रजन्तु ॥ १९ ॥ येषांहुतेऽग्नौहविषाचतृप्तिर्येभुञ्जतेविप्रशरीरभाजः ॥ येपिंडदानेनमुदंप्रयांति तृप्यन्तुतेऽस्मिन्पितरोऽन्नतोयैः ॥ २० ॥ येखड्गिमांसेनसुरैरभीष्टैः कृष्णैस्तिलैर्दिव्यमनोहरैश्च ॥ कालेनशाकेनमहर्षिवर्यैः संप्रीणितास्तेमुदमत्रयान्तु ॥ २१ ॥ कव्यान्यशेषाणिचयान्यभीष्टान्यतीवतेषाममरार्चितानाम् ॥ तेषांतुसान्निध्यमिहास्तुपुष्पगंधान्नभोज्येषुमयाकृतेषु ॥ २२ ॥ दिनेदिनेयेप्रतिगृह्णतेर्चां मासान्तपूज्याभुवियेऽष्टकासु ॥ येवत्सरान्तेऽभ्युदयेचपूज्याः प्रयान्तुतेमेपितरोत्रतृप्तिम् ॥ २३ ॥ पूज्याद्विजानांकुमुदेंदुभासो येक्षत्रियाणांचनवार्कवर्णाः ॥ तथाविशांयेकनकावदाता नीलीनिभाःशूद्रजनस्ययेच ॥२४॥ तेऽस्मिन्समस्तामम पुष्पगंधधूपान्नतोयादिनिवेदनेन ॥ तथाग्निहोमेनचयांतुतृप्तिं सदापितृभ्यः प्रणतोस्मितेभ्यः ॥२५॥ येदेवपूर्व्वाण्यतितृप्तिहेतोरश्नंतिकव्यानिशुभाहुतानि ॥ तृप्ताश्चयेभूतिसृजोभवंति तृप्यन्तुतेऽस्मिन्प्रणतोऽस्मितेभ्यः ॥ २६ ॥ रक्षांसिभूतान्यसुरास्तथोग्रान्निर्णाशयन्तस्त्वशिवंप्रजानाम् ॥ आद्याः सुराणाममरेशपूज्यास्तृप्यन्तुतेस्मिन्प्रणतोस्मितेभ्यः ॥ २७ ॥ अग्निष्वात्ताबर्हिषद आज्यपाः सोमपा

स्तथा॥ व्रजन्तुतृप्तिंश्राद्धेऽस्मिन्पितरस्तर्पितामया ॥२८॥ अग्निष्वात्ताःपितृगणाः प्राचींरक्षन्तुमेदिशम् ॥ तथाबर्हिषदःपान्तु याम्यांयेपितर
स्तथा ॥ २९ ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपिसोमपाः॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥३०॥ सर्वतश्चाधिपस्तेषां यमोरक्षांकरो
तुमे ॥ विश्वोविश्वभुगाराध्यो धर्म्योधन्यःशुभाननः ॥ ३१ ॥ भूतिदोभूतिकृद्भूतिः पितृणांयेगणानव ॥ कल्याणःकल्पतांकर्ता कल्पः
कल्पतराश्रयः ॥ ३२ ॥ कल्पताहेतुरनघः षडिमेतेगणाःस्मृताः ॥ वरोवरेण्योवरदः पुष्टिदस्तुष्टिदस्तथा ॥ ३३ ॥ विश्वपातातथाधाता
सप्तैवैतेतथागणाः ॥ महान्महात्मामहितो महिमावान्महाबलः ॥ ३४ ॥ गणाःपंचतथैवैते पितृणांपापनाशनाः ॥ सुखदोधनदश्चान्यो धर्म
दोऽन्यश्चभूतिदः ॥ ३५ ॥ पितृणांकथ्यतेचैतत्तथागणचतुष्टयम् ॥ एकत्रिंशत्पितृगणा यैर्व्याप्तमखिलंजगत् ॥ ३६ ॥ तेमेऽनुतृप्तास्तुष्यं
तु यच्छंतुचसदाहितम् ॥ इतिश्रीमार्कंडेयपुराणेरुचिकृतपितृस्तवः ॥ अथसप्तार्चिस्तोत्रम् ( तत्रैव ) ॥ रुचिरुवाच ॥ अमूर्त्तानांचमूर्त्तानां
पितृणांदीप्ततेजसाम् ॥ नमस्यामिसदातेषां ध्यानिनांदिव्यचक्षुषाम् ॥ १ ॥ इंद्रादीनांचनेतारो दक्षमारीचयोस्तथा ॥ सप्तर्षीणांतथान्येषां
तान्नमस्यामिकामदान् ॥ २ ॥ मन्वादीनांमुनींद्राणां सूर्य्याचंद्रमसोस्तथा ॥ तान्नमस्याम्यहंसर्व्वान्पितरश्चार्णवेषुये ॥ ३ ॥ नक्षत्राणां
ग्रहाणांच वाय्वग्न्योर्नभसस्तथा ॥ द्यावापृथिव्योश्चतथा नमस्यामिकृतांजलिः ॥ ४ ॥ देवर्षीणांग्रहाणांच सर्वलोकनमस्कृतान् ॥ अक्ष
य्यस्यसदादातॄन्नमस्येऽहंकृतांजलिः ॥ ५ ॥ नमोगणेभ्यःसप्तभ्यस्तथालोकेषुसप्तसु ॥ स्वयंभुवेनमस्यामि ब्रह्मणेयोगचक्षुषे ॥
॥ ६ ॥ सोमाधारान्पितृगणान्योगमूर्त्तिधरांस्तथा ॥ नमस्यामितथासोमं पितरंजगतामहम् ॥ ७ ॥ अग्निरूपांस्तथैवान्यान्नमस्यामिपितॄ
नहम् ॥ अग्नीषोममयंविश्वं यतएतदशेषतः ॥८॥ येतुतेजसियेचैते सोमसूर्य्याग्निमूर्त्तयः॥जगत्स्वरूपिणश्चैव तथाब्रह्मस्वरूपिणः ॥ ९ ॥

तेभ्योऽखिलेभ्योयोगिभ्यः पितृभ्योयतमानसाः॥नमोनमोनमस्तेमे प्रसीदन्तुस्वधाभुजः ॥१०॥ पितरऊचुः॥स्तोत्रेणानेनचनरो योस्मांस्ता
ष्यतिभक्तितः ॥ तस्यतुष्टावयंभोगानात्मज्ञानंतथोत्तमम् ॥११॥ शरीरारोग्यमर्थंच पुत्रपौत्रादिकंतथा ॥ प्रदास्यामोनसंदेहो यच्चान्यदभिवा
ञ्छितम् ॥ १२ ॥ तस्मात्पुण्यफलंलोके वाञ्छद्भिःसततंनरैः ॥ पितॄणांचाक्षयांतृप्तिं स्तव्याःस्तोत्रेणमानवैः ॥ १३ ॥ वाञ्छद्भिःसततंस्त
व्याः स्तोत्रेणानेनवैयतः॥ श्राद्धेचयइमंभक्त्या अस्मत्प्रीतिकरंस्तवम् ॥१४॥ पठिष्यंतिद्विजाग्र्याणां भुंजतांपुरतःस्थिताः ॥ स्तोत्रश्रवणसं
प्रीत्या सान्निध्यानेपरेकृते ॥ १५ ॥ अस्माकमक्षयंश्राद्धं तद्भविष्यत्यसंशयम् ॥ यद्यप्यश्रोत्रियंश्राद्धं यद्यप्युपहतंभवेत् ॥१६॥ अन्यायोपा
त्तवित्तेन यदिवाकृतमन्यथा ॥ अश्राद्धार्हैरुपहतैरुपहारैस्तथाकृतम् ॥ १७ ॥ अकालेऽप्यथवाऽदेशे विधिहीनमथापिवा ॥ अश्रद्धयावापु
रुषैर्दंभमाश्रित्यवाकृतम् ॥ १८ ॥ अस्माकंतृप्तयेश्राद्धं तथाप्येतदुदीरणात् ॥ यत्रैतत्पठ्यतेश्राद्धे स्तोत्रमस्मत्सुखावहम् ॥ १९ ॥
अस्माकंजायतेतृप्तिस्तत्रद्वादशवार्षिकी ॥ हेमंतेद्वादशाब्दानि तृप्तिमेतत्प्रयच्छति ॥ २० ॥ शिशिरेद्विगुणाब्दांश्च तृप्तिंस्तोत्रमिदंशुभम् ॥
वसंतेषोडशसमास्तृप्तयेश्राद्धकर्मणि ॥ २१ ॥ ग्रीष्मेचषोडशैवैतत्पठितंतृप्तिकारकम् ॥ विकलेपिकृतेश्राद्धे स्तोत्रेणानेनसाधिते ॥ २२ ॥
वर्षासुतृप्तिरस्माकमक्षयाजायतेरुचे ॥ शरत्कालेऽपिपठितं श्राद्धकालेप्रयच्छति ॥ २३ ॥ अस्माकमेतत्पुरुषैस्तृप्तिंपंचदशाब्दिकाम् ॥
यस्मिन्गृहेचलिखितमेतत्तिष्ठतिनित्यदा॥२४॥ सन्निधानंकृतेश्राद्धे तत्रास्माकंभविष्यति ॥ तस्मादेतत्त्वयाश्राद्धे विप्राणांभुंजतांपुरः॥२५॥
श्रावणीयंमहाभाग अस्माकंपुष्टिहेतुकम् ॥ इत्युक्त्वापितरस्तस्य स्वर्गतामुनिसत्तम ॥ इतिमार्कंडेयपुराणोक्तंपितृस्तोत्रम् ॥ इति
श्रीबीकानेरस्यविषयान्तर्गतश्रीरतनगढनगरनिवासिना श्रीवसिष्ठकुलोद्भवेनश्रीरामकृष्णपौत्रेण श्रीकस्तूरीचन्द्रसूनुना श्रीमहादेवभक्त
वाजसनेयिनागौडपंडितश्रीचतुर्थीलालशर्मणाविरचितेगौडीयश्राद्धप्रकाशेपूर्वखंडेमिश्रप्रकरणम्॥३॥समाप्तोयंनिर्णयविधायकःपूर्वखण्डः॥

श्रीगणेशायनमः ॥ अथमुख्यकल्पानुकल्पपद्धतिखण्डोद्वितीयः प्रारभ्यते ॥ तत्रतावदर्शश्राद्धमधिकृत्यपूर्वदिनकृत्यम् ॥ तत्रकर्त्तापूर्वेद्युर्नि रामिषमेकवारंभुक्त्वा तद्दिने रात्रौप्रदोषान्ते असंभवे श्राद्धदिनेप्रातर्वा श्राद्धारंभसमयेवा यथावकाशं विप्रगृहंगत्वाब्राह्मणनिमंत्रणंकुर्यात्॥ ततः निमंत्रितोविप्रः श्राद्धकर्त्ताच द्विर्भोजनं वेदाध्ययनं दूरगमनं भारोद्वहनं मैथुनं श्रमं हिंसां क्रोधं त्वरां प्रमादं कलहं क्षौरं च वर्जयेत्॥ शुचिःसत्यवादी क्षमी ब्रह्मचारीच भवेत् ॥ पूर्वमङ्गीकृतनिमंत्रणे नान्यन्निमंत्रणमिच्छेत् ॥ नान्यंप्रतिग्रहंगृह्णीयात् ॥ नान्यत्रगमनादि नाकुर्यादिश्राद्धकालातिक्रमंकुर्यात् ॥ नचाऽस्नातः श्राद्धेभुंजीत॥ अथश्राद्धदिनपूर्वाह्णकृत्यम् ॥ कर्त्ताब्राह्मेमुहूर्त्ते उत्थाय यथोपदेशं शौच विधिंकृत्वाऽऽचम्य दंतधावनंतुनकुर्यात् ॥ ततोनद्यादौस्नात्वा प्रक्षालितनूतनश्वेतवाससीपरिधाय संध्यादिनित्यावश्यकंसमाप्य विविक्तां पाकभूमिं गोमयादिना संस्कुर्यात् ॥ तत्रनूतनताम्रादिपात्रेषु यथाशक्त्युत्कृष्टमन्नंभक्ष्यभोज्यादिनानाप्रकारमनेकव्यंजनयुतं स्वयंयज मानः पक्तुमारभेत् ॥ अशक्तश्चेद्यदि बांधवैः स्त्रीद्वारा वापाचयेत् ॥ अमातृपितृवंशजां पाखण्डां पुंश्चलीं पतितां वंध्यां विधवाम् अन्यगो त्रजां व्यंगकर्णां चतुर्थदिनेस्नातामपि गर्भिणींच पाकार्थवर्जयेत् ॥ पाकस्थानंशुद्धवस्त्रादिनावेष्टयेत् ॥ एवंसमाप्तेचपा के श्राद्धभूमिंगोमयोदकेनोपलिप्य ज्वलदंगारैः संशोध्य गौरमृत्तिकयाऽऽच्छाद्य तिलान्सर्षपांश्चविकिरेत् ॥ तत्रश्राद्धसामग्रींसंपाद्य दिनस्य षण्मुहूर्त्तानंतरं द्विजानाहूय तेभ्योदंतधावनंतैलमुद्वर्त्तनंस्नानोपकरणंच नानाविधताम्रपात्रस्थं यथाचारं स्वयमुपगम्यवैश्वदैविकब्राह्मणपू र्वकंदद्यात् ॥ ततः श्राद्धगृहाग्रतो गोमयोपलिप्तायांभूमौगोमूत्रेणद्विहस्तमात्रदीर्घविस्तारमुदक्प्लवमेकंचतुरस्रंमंडलंविधाय तद्दक्षिणतो दक्षिणप्लवं चतुर्हस्तदीर्घविस्तारमपरं चतुरस्रंचकुर्यात् ॥ एतत्तुविप्रस्य क्षत्रियवैश्ययोस्तुत्रिकोणवर्तुलौज्ञेयौ॥ अथ सव्येन उत्तरमडलेसय

वकुसुमौप्रागग्रौद्वौद्वौकुशौ विन्यस्यमण्डलमभ्यर्च्य तत्र ब्राह्मणार्थं पीठेविन्यसेत् ॥ ततोदक्षिणमंडले अपसव्येन सतिलकुसुमानिदक्षि
णाग्रैकैककुशानिविन्यस्य नेपालकंबलादीन्यासनानिस्थापयेत् ॥ ततोऽपराह्णे ब्राह्मणान्स्नातान् यजमानसवर्णैनाहूतान् प्रांगणे शुचिः
शुक्लद्विवासाः कृतांजलिर्दर्भेषुतिष्ठन् स्वागतमितिब्रूयात् ॥ सुस्वागतमितितैरुक्ते ॥ पूर्वकृतमण्डलद्वये आसनेषु प्राङ्मुखान् देवब्राह्म
णान् उदङ्मुखान्पितृब्राह्मणानुपवेशयेत् ॥ अथ श्राद्धारंभसमयमधिकृत्यनिमंत्रणप्रकारोलिख्यते ॥ तत्रादौ आचम्य सव्येन दक्षिणंजा
न्वाच्य विप्रकरे पुष्पचंदनतांबूलानिदत्त्वा ॥ दक्षिणकरेण ब्राह्मणदक्षिणजानुस्पृष्ट्वा ॥ देशकालौसंकीर्त्य ॥ अद्यकरिष्यमाणपार्वणश्राद्धे
पित्रादित्रयसंबंधिविश्वेदेवश्राद्धार्थंयुवामहमामंत्रये ॥ इतिपित्रादित्रयसंबंधिविश्वेदेवश्राद्धार्थं द्वौविप्रौनिमंत्र्य एवमेव मातामहादिदेवसं
बंध्यर्थमपिद्वौविप्रौनिमंत्रयेत् ॥ अथवा पित्रादित्रयसंबंधि मातामहादित्रयसंबंधि विश्वेदेवश्राद्धार्थं युवामहमामंत्रये इतिब्राह्मणद्वयंनिमं
त्रयेत् ॥ निमंत्रितोस्मीतिप्रतिवचनम् ॥ ततः ॥ अक्रोधनैःशौचपरैः सततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिश्च मयाचश्राद्धकारि
णा ॥ १ ॥ पूर्वदिननिमंत्रणपक्षेतु-सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ॥ भवितव्यंभवद्भिर्नः श्वोभूतेश्राद्धकर्मणीति जपेच्छृणुयाद्वा ॥
भवितव्यमिति प्रतिवचनम् ॥ ततोऽपसव्येनवामंजान्वाच्य ब्राह्मणदक्षिणजानुस्पृष्ट्वा ॥ ॐ अद्यकरिष्यमाणपार्वणश्राद्धे पितृश्राद्धार्थं
त्वामहमामंत्रये॥इतिपितृब्राह्मणंनिमंत्र्य एवंपितामहादिपंचानामपिश्राद्धार्थंचनिमंत्रयेत्॥सर्वत्रनिमंत्रितोस्मीतिप्रतिवचनम्॥ततःअक्रोधनैः
शौचपरैः सततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिर्नोऽद्यतनेश्राद्धकर्मणीत्यादिनियमाञ्छ्रावयेत् ॥ भवितव्यमितिप्रतिवचनम्
एवमस्मिन्पक्षे दशाऽष्टौवा ब्राह्मणाभवंति अत्राऽशक्तौ दैवे उभयत्रैकैकं पित्रादित्रिके एकं मातामहादित्रिकेचैकं निमंत्रयेत् ॥ अत्रपक्षे

त्वारः ॥ एकोदैवेतंत्रेण पित्रादावेकौ मातामहादौचैक इतित्रयोवा ॥ यद्वा षण्णामेकः दैवेचैक इतिद्वौवानिमंत्रयेत् ॥ अथपादप्रक्षाल
नादिप्रयोगः ॥ यज्ञोपवीती उदङ्मुखः ॥ ॐपुरूरवार्द्रवसंज्ञका विश्वेदेवा इदंवः पाद्यंस्वाहानमः ॥ इतिपाद्यमुपनीय वारंवारमभिनंद्य
विनीतः स्वयमेवतेषांक्रमेणपादौप्रक्षालयेत् ॥ ततोऽपसव्येन ॐ अद्यामुकगोत्र पितरमुकशर्मन् वसुरूप इदंतेपाद्यंस्वधानम इत्युच्चार्य्य
विनीतः सन्पुनः पुनरभिनंद्यपितृब्राह्मणपादौप्रक्षालयेत् ॥ एवंपितामहादिब्राह्मणपादावपिप्रक्षालयेत् ॥ ततः सव्येनाऽर्घ्यपात्रंगृहीत्वा
ॐ पुरूरवार्द्रवसंज्ञकाः विश्वेदेवा इदमर्घ्यंवः स्वाहानमः ॥ इत्युभयत्र ब्राह्मणहस्तयोर्यवपुष्पगंधोदकयुतमर्घ्यंदद्यात् ॥ ततोऽपसव्येन
ॐ अद्यामुकगोत्रपितरमुकशर्मन् वसुरूप इदमर्घ्यंते स्वधानम इत्युच्चार्य्य ब्राह्मणहस्तयोरर्घ्यंदद्यात् ॥ एवमेवपितामहादिपंचभ्यः ॥
ततः ॐ पुरूरवार्द्रवसंज्ञका विश्वेदेवा इदमाचनीयंवः स्वाहानमः ॥ इत्याचमनार्थंजलंब्राह्मणेभ्योदद्यात् ॥ ततोऽपसव्येन ॐ अद्यामुकगो
त्रपितरमुकशर्मन् वसुरूप इदमाचनीयंते स्वधानम इतिपितृब्राह्मणायाऽऽचमनार्थं जलंदत्त्वा पितामहादिपंचभ्योपिदद्यात् ॥ ततःसव्ये
नस्वयमप्याचामेत् ॥ ततो ब्राह्मणैः सह श्राद्धभूमिमागत्य ॥ अन्नाभिप्रायेण सिद्धमित्युक्त्वाब्राह्मणान्गृहीत्वापूर्वकल्पितान्यासनानि उप
स्पृश्य अत्रासध्वमिति देवान्प्राङ्मुखान् पितॄनुदङ्मुखानुपवेशयेत् ॥ ततस्तेषांपादयोरधस्तादक्षिणाग्रंकुशत्रयंप्रत्येकंदत्त्वा प्रत्यासन
समीपेतिलतैलेनश्राद्धाऽपवर्गस्थायिनोदीपान्दद्यात् ॥ तेषांरक्षाद्विजैरेवकार्य्या॥काककुक्कुटादीञ्छ्राद्धापहंतनपसारयेत् ॥ श्राद्धदेशावरणंच
कुर्यात् ॥ अथश्राद्धप्रयोगप्राक्कालीनश्राद्धदिनकृत्यम् ॥ तत्रकर्त्ताब्राह्मणानांपुरतः स्वासनेप्राङ्मुखउपविश्यपवित्रधारणंकृत्वासव्येनाऽऽ
चम्यकर्मपात्रद्वयंजलेनापर्यंतत्रगंधपुष्पयवतिलकुशान्निक्षिप्य ॐकर्मपात्रंसंपन्नमितिब्रूयात्॥सुसंपन्नमित्यनुज्ञातः॥ ॐअपवित्रः पवित्रोवा स

र्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षं सबाह्याभ्यंतरःशुचिः ॥ ॐपुंडरीकाक्षः पुनात्वितिपठित्वाकुशत्रयेण श्राद्धदेयद्रव्याणिस्वा
त्मानंचसिंचेत् ॥ ततः ॐवैष्णव्यैनमः ॥ ॐकाश्यप्यैनमः ॥ ॐअक्षयायैनमः ॥ ॐभूम्यैनमः इतिनत्वाश्राद्धदेशंगयात्मकत्वेन तदेकदे
शस्थंगदाधरंचध्यात्वा तयोः ॐभगवत्यैगयायैनमः ॥ ॐभगवतेगदाधरायनमः ॥ इति मनोवाक्कायैर्नमस्कारंकुर्यात् ॥ ततः कुशत्र
यतिलजलान्यादाय देशकालौसंकीर्त्य ॐअद्यामुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाम् अमुकामुकशर्मणांसपत्नीकानांवसुरुद्रा
दित्यस्वरूपाणां तथाऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां सपत्नीकानांवसुरुद्रादित्यस्वरूपाणां सदैवं
पार्वणश्राद्धं पितृतृप्तिकामोहंकरिष्ये इतिसंकल्प्य ॐ कुरुष्व इतिब्राह्मणानुज्ञातःसप्रणवव्याहृतिकांगायत्रींत्रिर्जपित्वा ॥ ॐदेव
ताभ्यःपितृभ्यश्च महायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायै नित्यमेवनमोनम इतित्रिर्जपेत् ॥ ततः सव्यापसव्याभ्यां दैवपै
तृकप्रदेशयोः यवान्तिलगौरसर्षपांश्चविकिरेत् ॥ ( तत्रमंत्रः ) ॐनमोनमस्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्ष
तांसर्वतोदिशः ॥ ततः ॐ तिलारक्षंतुअसुराद्भौरक्षंतुराक्षसात् ॥ वह्निर्वैश्रोत्रियंरक्षेदतिथिःसर्व्वरक्षक इतिमंत्रेणतिलकुशान्
द्वारदेशेक्षिप्त्वा ॐ अग्निष्वात्ताःपितृगणाः प्राचींरक्षंतुमेदिशम् ॥ तथाबर्हिषदःपांतु याम्यांयेपितरःस्थिताः ॥ प्रतीची
माज्यपास्तद्वदुदीचीमपिसोमपाः ॥ अधोर्ध्वमपिकोणेषु विकोणेषुचसर्वशः ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥ सर्वतश्चाधि
पस्तेषां यमोरक्षांकरोतुमे ॥ वायुभूतापितॄणांच तृप्तिर्भवतुशाश्वती ॥ इत्यनेनाऽधस्तादूर्ध्वंकोणेषुचसर्व्वत्रतिलान्गौरसर्षपांश्चविकी
र्यदक्षिणवामेवाकटिभागेयथाचारंनीवीबंधंकुर्यात् ॥ ततःसव्येनकार्स्मिश्चित्पात्रेजलंगृहीत्वा दर्भैरालोड्य ॥ ॐयदेवादेवहेडनंदेवासश्चकृ

मावयम् ॥ अग्निर्मातस्मादेनंसोविश्वांन्मुञ्चत्वꣳहंसः ॥१॥ यदिदिवायदिनक्तमेनाꣳसिचकृमावयम् ॥ वायुर्मातस्मादेनसोविश्वान्मुंचत्वꣳ
हसः ॥ २ ॥ यदिजाग्रतयदिस्वप्रएनाꣳसिचकृमावयम् ॥ सूर्योमातस्मादेनंसोविश्वानमुंचत्वꣳहंसः ॥३॥ इतिकूष्मांडसूक्तेनाऽभिमंत्र्य ॥
ॐउदक्याादिदुष्टदृष्टिपातात्शूद्रादिसंपर्कदोषाच्चपाकादीनांपवित्रताऽस्तुदेशकालपाकपात्रद्रव्योपहारश्रद्धासंपदस्तु इति पाकादीन्
संप्रोक्ष्यहरयेनिवेदयेत् ॥ अथासनादिदानम् ॥ तत्रतावत् ॥ उदङ्मुखःसजवनंदक्षिणंजान्वाच्ययज्ञोपवीत्यंतर्जानुकरोजलयवसमन्वितम्
कुशत्रयमृज्वेवादाय ॥ ॐअद्याऽस्मत्पित्रादित्रयश्राद्धसंबंधिनः पुरूरवार्द्रवसंज्ञकाः विश्वेदेवा इदमासनं वोनम इत्युच्चार्य्य द्विजहस्ते
जलमासिच्य कंबलाद्यासनदक्षिणभागस्योपरि देवतीर्थेन पूर्वाग्रंकुशत्रयंप्रक्षिपेत् ॥ एवंमातामहादिदेवेभ्योपिदद्यात् ॥ ततोदक्षिणामुखः
प्राचीनावीती पातितवामजानुर्द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐअद्यामुकगोत्रास्मत्पितरमुकशर्मन् सपत्नीकवसुरूप इद
मासनंते स्वधा इत्युच्चार्य्यविप्रहस्तेजलंदत्त्वा कंबलाद्यासनवामभागस्योपरि पितृतीर्थेन मोटकं दक्षिणाग्रमुत्सृजेत् ॥ एवमेवपिता
महादिपंचभ्योपिदर्भासनानिदद्यात् ॥ ततः सव्यादिना ॐपुरूरवार्द्रवसंज्ञकान् विश्वान्देवानहमावाहयिष्ये ॥ इति देवब्राह्मणानपृष्ट्वा
ॐआवाहयेत्यनुज्ञातःसयवकरो देवब्राह्मणाङ्गुष्ठौगृहीत्वा ॥ ॐविश्वेदेवासऽआगंतशृणुतामऽइमꣳहवम् ॥ एदंबर्हिर्निषीदत॥इत्यनेनावाह्य
ॐयवोसियवयास्मद्द्वेषोयवयारातीःइत्यनेनयवान्विकीर्य ॥ ॐविश्वेदेवाः शृणुतेमꣳहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥ येऽअग्निजिह्वाऽउ
तवायजत्राऽआसद्यास्मिन्बर्हिषिमादयध्वम् ॥ इतिजपेत् ॥ विश्वेदेवोत्पत्तिनाम्नोरज्ञाने ॥ ॐआगच्छंतुमहाभागा विश्वेदेवामहाबलाः॥ येय

१ दक्षप्रजापतेर्दुहितारिविश्वविद्यायांधर्माद्विश्वेदेवाः समुत्पन्नाइतिवैश्वदेविकीमुत्पत्तिमनुस्मरन् ॥

त्रयोजिवाःश्राद्धेसावधानाभवन्तुते ॥ इतिश्लोकोऽप्युच्चारणीयः ॥ ततोऽपसव्यादिना ॥ ॐपितॄनहमावाहयिष्ये ॐमातामहानावाहयि
ष्येइतिपृष्ट्वा ॐआवाहयेत्यनुज्ञातः ॥ सतिलकरोब्राह्मणाङ्गुष्ठंक्रमेणगृहीत्वा ॐउशंतस्त्वानिधीमह्युशन्तः समिधीमहि ॥ उशन्नुशतऽआ
वहपितॄन्हविषेऽअत्तवे इत्यावाह्य ॥ ॐ अपहताऽअसुरारक्षांꣳसिवेदिषदः ॥ इतितिलान्श्राद्धदेशेविकीर्य्य ॐ आयन्तुनःपितरःसो
म्यासोऽग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदन्तोऽधिब्रुवंतुतेऽवंत्वस्मान् ॥ इतिजपेत् ॥ ततःसव्याऽपसव्याभ्यां अर्घपात्रेष्वष्ट
सुपवित्रमेकैकमुपरिधृत्वा ॥ ॐशन्नो देवीरभिष्टयऽआपोभवंतुपीतये ॥ शंयोरभिस्रवन्तुनः ॥ इतिप्रत्येकंजलंप्रक्षिप्य ॥ देवपात्रेषु ॐ य
वोऽसियवयास्मद्द्वेषो यवयारातीः ॥ इतियवान्विकीर्य ॥ पित्रादिपात्रषट्के ॐ तिलोऽसिसोमदैवत्यो गोसवोदेवनिर्मितः ॥ प्रत्नमद्भिः
पृक्तःस्वधयापितॄँल्लोकान् प्रीणाहिनःस्वधानमः ॥ इतितिलान्प्रक्षिपेत् ॥ ततोऽष्टसुपात्रेषुतूष्णीमेवगंधपुष्पतुलसीदलानिनिक्षिपेत् ॥
ततःसव्येनदेवार्घपात्रसंपत्तिरस्तुइति कृतांजलिर्देवब्राह्मणान् पृच्छेत् ॐअस्तुदेवार्घ्यपात्रसंपत्तिरित्यनुज्ञातः पात्रं वामहस्तेकृत्वा
तत्रस्थंपवित्रंदेवविप्रदक्षिणकरेदत्त्वाकिंचिदुदकंचदत्त्वा ॥ ॐयादिव्याआपःपयसासंबभूवुर्याऽअन्तरिक्षा उतपार्थिवीर्याः ॥ हिरण्यवर्णा
यज्ञियास्तानऽआपः शिवाः सꣳस्योनाः सुहवाभवंतु ॥ इतिमंत्रंपठित्वा ॥ कुशत्रययवजलान्यादाय ॐ अद्यास्मत्पित्रादित्रयसंबंधि
नः पुरूरवार्द्रवसंज्ञकाविश्वेदेवा एषवोहस्तार्घः स्वाहानमः ॥ इतिदक्षिणहस्तेन देवतीर्थेन पवित्रोपरि अर्घंदत्त्वा पवित्रसहितमर्घपात्रं
पुरतःस्थापयेत् ॥ एवमेवमातामहादिदेवेभ्योप्यर्घंदद्यात् ॥ ततोऽपसव्यादिना पितृपात्रसंपत्तिरस्त्वितिकृतांजलिःपितृब्राह्मणान्पृच्छे

त् ॥ अस्तुपैत्र्यार्घ्यपात्रसंपत्तिरितिप्रतिवचनानन्तरंपात्रं गृहीत्वाविप्रदक्षिणकरेपवित्रंदत्त्वा ॥ ॐयादिव्याऽआपइतिपठित्वा द्विगुणभु
ग्नकुशत्रयतिलजलान्यादाय ॥ ॐअद्यामुकगोत्र अस्मत्पितरमुकशर्मन्सपत्नीक वसुरूपएषतेहस्तार्घःस्वधाइतिदक्षिणहस्तापितृती
र्थेन यथाजलंपततितथा ब्राह्मणहस्तस्थपवित्रोपरि अर्घंदद्यात् ॥ साऽवशेषमर्घपात्रंचपुरतः स्थापयेत् ॥ एवमेवपितामहादिपंचभ्यो
पिदद्यात् ॥ ततः सव्यंकृत्वा ॐविश्वेभ्योदेवेभ्यः स्थानमसीत्युक्त्वापवित्रजलयुतंदेवार्घपात्रद्वयं ब्राह्मणदक्षिणपार्श्वेऽसंचरदेशेउत्तानमे
वस्थापयेत् ॥ ततोऽपसव्यादिनापितामहप्रपितामहार्घपात्रस्थानिजलतिलगंधपुष्पादीनिपितृपात्रेकृत्वाएवमेव प्रमातामहादिपात्रस्थ
जलादीनि मातामहपात्रेकुर्यात् ॥ ततः सव्यंकृत्वा प्राङ्मुखः पुत्रकामः पितृपात्रस्थजलेन मुखमार्जनम् ॥ आयुष्कामो दक्षिणपाणिनाने
त्रांजनंचकुर्यात् ॥ अथवा यजमानः स्वयमन्योवा ॐ आपःशिवाः शिवतमाःशांताः शांततमास्ते कृण्वंतुभेषजम् ॥ १ ॥ इत्यनेनाभिषिं
चेत् ॥ ततोऽपसव्यंकृत्वा ॐ पितृभ्यः स्थानमसीति प्रथमंपितृपात्रं पितृब्राह्मणवामप्रदेशभूमावधोमुखं स्थापयेत् तदुपरि पितामह
पात्रं तदुपरिप्रपितामहपात्रंचदद्यात् ॥ एवम् ॐ मातामहेभ्यः स्थानमसीत्युक्त्वामातामहपात्रंन्युब्जीकृत्य प्रमातामहवृद्धप्रमातामहपात्रा
भ्यामाच्छादयेत् ॥ एतानिचषट्कपात्राणि दक्षिणादानपर्यंतंनोद्धरेन्नचालयेत् ॥ अथगंधादिदानम् ॥ सव्यादिकृत्वा विप्रकरेषुजलमा
सिच्य गंधपुष्पधूपदीपवस्त्रादिप्रत्येकंधृत्वा ॥ कुशत्रययवजलान्यादाय ॐ अद्याऽस्मत्पित्रादित्रयश्राद्धसंबंधिनःपुरूरवार्द्रवसंज्ञका विश्वे
देवा एतानिगंधपुष्पधूपदीपतांबूलवासांसिवोनम इत्युच्चार्ययथाविभवंदद्यात् ॥ एवमेवमातामहादिदेवेभ्योपिसंकल्प्यदद्यात् ॥ ततः अयं
वोगंध इत्यभिधाय ब्राह्मणहस्तेषु प्रत्येकमर्पयेत्॥ ॐसुगंध इतितैरुक्ते ॥ ॐइमानिवःपुष्पाणि इतिपुष्पाणिनिवेदयेत् ॥ ॐसुपुष्पाणीति

तैरुक्ते ॥ ॐअयंवोधूपः ॥ ॐसुधूपः ॥ ॐअयंवोदीपः ॥ ॐसुदीपः ॥ ॐएतानिवोवासांसि ॥ ॐसुवासांसि इति तैरुक्ते ॥ इत्यादिक्रमेण प्रत्येकं ब्राह्मणेभ्यः प्रतिपादयेत ॥ ॥ तैश्चपुष्पंशिखातिरिक्तदेशेनाधार्यम् ॥ अत्रावसरे अन्यदपि तांबूलयज्ञोपवीताभरणकमंडलुप्रभृतीनि फलार्थितयादद्यात् ॥ ततः कृतांजलिः कर्त्ता विश्वेषां देवान मर्चनं संपूर्णमस्त्विति द्विजान्प्रति ब्रूयात् ॐअस्त्वर्चनं संपूर्णमितिद्विजा ब्रूयुः ॥ ततोऽपसव्यादिनापितृद्विजकरेषु जलमासिच्य गंधपुष्पादि प्रत्येकंसन्निधाय ॥ द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐअद्यामुक गोत्र अस्मत्पितरमुकशर्मन् सपत्नीक वसुरूप एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितुभ्यंस्वधा इति पित्रेगंधाद्युत्सृज्य एव मेव पितामहादिपंचभ्योपिदद्यात् ॥ ततः ॐएषवोगंध इति ब्राह्मणहस्तेषु गंधंनिवेदयेत् ॥ ॐसुगंध इति तैरुक्ते ॥ ॐएतानिवःपुष्पाणि॥ ॐसुपुष्पाणि ॥ ॐएषवोधूपः ॥ ॐसुधूपः ॥ ॐएषवोदीप ॥ ॐसुदीपः ॥ ॐइमे यज्ञोपवीते॥ॐसुयज्ञोपवीते ॥ ॐएतानिवोवासांसि ॥ ॐसुवासांसि इति तैरुक्ते ॥ इत्यादिक्रमेण पित्रादिषट्कब्राह्मणेभ्यःप्रत्येकं गंधादिप्रतिपाद्यकृतांजलिर्भूत्वा ॐ पितॄणामर्चनं संपूर्णमस्त्वितिद्विजान्प्रतिब्रूयात् ॐअस्त्वर्चनं संपूर्णमितिविप्राः वदेयुः ॥ एवंगंधाद्यर्चनं विधाय सव्याऽपसव्याभ्यां भोजनपात्रस्थापनदेशंसंमार्ज्य ॥ नीवारचूर्णेनगौरमृत्तिकयावाप्रणीताग्निभस्मनावारिणावा ब्राह्मणादिषुचतुरस्रत्रिकोणवर्तुलमंडलानिविप्रान्वेष्टयित्वाकुर्यात् ॥ ततोभोजनपात्राणिदत्त्वाहस्तप्रक्षालनार्थंप्रत्येकंजलंदद्यात् ॥ अथाग्नौकरणम् ॥ ( तत्रसाग्निनाऽग्नौनिरग्निनास्वाहादिदैविकधर्मयुक्तेनयज्ञोपवीतिना देवविप्रकरे ॥ अथवास्वधादिपैतृकधर्मयुक्तेनप्राचीनावीतिनापितृविप्रकरेहोमःकार्य्यः ॥ तत्रयजुर्वेदिनांतुनियमेनएवप्राचीनावीतिनास्वाहाकारेणहोमः ) ॥ अथव्यंजनक्षारवर्जितंघृताक्तमुष्णंश्राद्धान्नाग्रभागंकांस्यपात्रेसमुद्धृत्य अपसव्यंकृत्वा पातितवामजानुःदक्षिण

मुखः ॥ ॐअग्नौकरणंकरिष्ये इतिपितृब्राह्मणंपृष्ट्वा ॐकुरुष्वइत्यनुज्ञातोभयक्रोधत्वराराहितः स्वदक्षिणकरेणपितृविप्रकरे ॥ ॐअग्नयेकव्य
वाहनायस्वाहा इदमग्नयेकव्यवाहनाय ॥ ॐसोमायपितृमतेस्वाहा इदंसोमायपितृमते इत्याहुतिद्वयंजुहुयात् ॥ ततोऽग्नौकरणार्थोद्धृत
हुतशेषमन्नंपितामहादिपंचसुपात्रेषुदत्त्वापिंडार्थंचावशेषयेत् ॥ ततःसव्येनदेवपात्रेषु ॥ अपसव्येनपितृपात्रेषुच उष्णमन्नंसघृतम् अनेक
व्यञ्जनयुतंयथावत् परिविष्यसुशीतलजलसहितंपात्रंचसंस्थाप्याऽन्नंमधुनाऽभिघार्य्य ॐ मधुव्वाताऽऋतायतेमधुक्षरन्तिसिंधवः ॥ माध्वी
र्न्नःसन्त्वोषधीः ॥१॥ ॐमधुनक्तमुतोषसोमधुमत्पार्थिवᳫंरजः ॥मधुद्यौरस्तुनःपिता॥२॥ॐमधुमान्नोव्वनस्पतिर्म्मधुमाँऽअस्तुसूर्य्यः॥ मा
ध्वीर्गावोभवन्तुनः॥३॥ॐमधुमधुमध्वित्यभिमंत्रयेत् ॥ ततःसव्येनउत्तानपाणिभ्यांपित्रादिदेवपात्रमालभ्य ॥ ॐ पृथिवीतेपात्रंद्यौरपिधानं
ब्राह्मणस्यमुखेअमृतेअमृतंजुहोमिस्वाहा इतिजप्त्वा ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳫंसुरेस्वाहाइत्येतांवैष्णवी
मृचमुच्चार्य्याऽधोमुखेनस्वदक्षिणकरेण अधोमुखमेवाद्विजाङ्गुष्ठमन्नखंगृहीत्वा ॥ ॐ विष्णोहव्यᳫंरक्षइतियजुषाऽन्नेनिवेश्य ॥ इदमन्नं
इमाआपः इदमाज्यम् इदंहविरित्युक्त्वा ॐ अपहताऽअसुरारक्षाᳫंसिवेदिषदः इतियवान् अन्नपात्रपरितोविकीर्य्यवामेनकरेणपात्रंस्पृशन्
दक्षिणकरेण कुशत्रययवजलान्यादाय ॐअद्यास्मत्पित्रादित्रयश्राद्धसंबंधिनः पुरूरवार्द्रवसंज्ञकाविश्वेदेवाः इदमन्नं हव्यं सोपस्करं परि
विष्टं परिवेक्ष्यमाणंचब्राह्मणतृप्तिपर्य्यंतम् अमृतरूपं वः स्वाहानमः इत्युदकं देवतीर्थेन विप्रदक्षिणभागेभूमौनिक्षिपेत् एवमेवमातामहादिदे
वेभ्योप्युत्सृजेत् ॥ ततोऽपसव्यादिना पितृपात्रंन्युब्जपाणिभ्यांव्यस्ताभ्यांस्पृष्ट्वा ॐ पृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेअमृतेअमृतंजुहो

मिस्वधा इतिपठित्वा ॐ इदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्यपाᳬसुरे इत्येतामृचंचजप्त्वा ब्राह्मणाङ्गुष्ठमनखमधोमुखं ॐ विष्णो कव्यᳬ रक्ष इतियजुषाऽन्नेनिवेश्य ॥ इदमन्नम् इमाआपः इदमाज्यम् इदंहविरित्युक्त्वा॥ॐ अपहताऽअसुरारक्षाᳬसिवेदिषदः-इति तिलान् अन्नपात्रपरितोऽप्रदक्षिणेनविकीर्य्य ॥ वामकरेणपात्रंस्पृशन्॥ ॐ अद्यामुकगोत्र अस्मत् पितरमुकशर्मन् सपत्नीक वसुरूप इदमन्नं कव्यं सोपस्करंपरिविष्टं परिवेक्ष्यमाणं ब्राह्मणतृप्तिपर्य्यंतममृतरूपंतुभ्यंस्वधाइत्युदकं पितृतीर्थेन विप्रवामभागे भूमौक्षिपेत् ॥ एवमेवपितामहादिपंचभ्योप्युत्सृजेत् ॥ ततः ॐ अन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत्॥ तत्सर्वमच्छिद्रमस्तु इतिप्रार्थ्य॥जुषध्वमिच्छातः॥इतिचोक्त्वा॥भवंतःप्राशयन्तुइति ब्राह्मणेभ्यः सकृत्सकृदापोशानंदद्यात्॥तेचवाग्यमादिनियमवंतः ॐकारपूर्वंभुंजीरन् ॥ श्राद्धकर्त्तातुतेष्वश्नत्सु व्याहृतित्रयपूर्वांसप्रणवांगायत्रींत्रिःसकृद्वाजपेत्॥तथापवित्रपाणिर्दर्भेष्वासीनः ॐमधुवाताऽऋतायते मधुक्षरन्तिसिन्धवः॥माद्ध्वीर्नःसन्त्वोषधीः॥१॥ ॐमधुनक्तमुतोषसोमधुमत्पार्थिवᳬरजः॥मधुद्यौरस्तुनःपिता॥२॥ ॐमधुमान्नोवनस्पतिर्मधुमाँ२॥ऽअस्तुसूर्य्यः॥माध्वीर्गावोभवन्तुनः ॥ ३ ॥ इतित्र्यृचम् ॐमधुमधुमध्वितिचजपेत् ॥ ततःसव्यंकृत्वादक्षिणामुखः ॥ ॐकृणुष्वपाजः प्रसितिन्नपृथ्वीय्याहिराजेवामवाँऽइभेन ॥ तृष्वीमनुप्प्रसितिन्द्रूणानोऽस्तासिविध्यरक्षसस्तपिष्ठैः ॥ १ ॥ ॐ तवभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः॥तपूᳬष्यग्नेजुह्वापतङ्गानसन्दितोव्विसृजव्विष्वगुल्काः ॥ २ ॥ प्रतिस्पशोव्विसृजतूर्णितमोभवापायुर्व्विशोऽअस्याऽअदब्धः॥योनोदूरेऽअघशᳬसोयोऽअन्त्य

ग्नेमाकिंष्टेव्यथिरादंधर्षीत् ॥ ३ ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ २ऽओषतात्तिग्महेते॥योनोऽअरातिर्ठ०समिधानचक्रेनीचातंधक्ष्यतसन्न
शुष्कम्॥४॥ऊर्द्ध्वोभवप्रतिविद्ध्याद्ध्यस्म्मदाविष्कृणुष्व दैव्यान्न्यग्ने॥ अवस्थिराननुहियातुजूनांजामिमजामिम्प्रमृणीहिशत्रून्॥५॥ अग्ग्ने
ष्ट्वातेजसासादयामिइतिरक्षोघ्नीः पञ्चऋचः पठित्वा भूमिंतिलैरास्तीर्यपित्रादिकरूपतया ब्राह्मणान्ध्यायेत् ॥ ततः ॐ उदीरतामवरऽउत्परासऽ
उन्म्मद्ध्यमाः पितरः सोम्म्यासः॥ असुंयऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥ १ ॥ आङ्गिरसोनः पितरोनवग्वाऽअथर्वाणो
भृगवः सोम्म्यासः ॥ तेषांवयर्ठ०सुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥ २ ॥ येनः पूर्व्वेपितरः सोम्म्यासो नूहिरे सोमपीथंव्वसिष्ठाः तेभि
र्यमः सर्ठ० रराणोहवीर्ठ०ष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ३ ॥ त्वर्ठ० सोमप्रचिकितोमनीषात्वर्ठ० रजिष्ठमनुनेषिपन्थाम् ॥ तवप्प्रणी
तीपितरोनऽइन्दोदेवेषुरत्नमभजन्तधीराः ॥ ४ ॥ त्वयाहिनः पितरः सोमपूर्व्वे कर्म्माणिचक्रुः पवमानधीराः ॥ व्वन्न्वन्नवातः परिधीँ२ऽर
पोर्णुव्वीरेभिरश्वैर्म्मघवाभवानः ॥ ५ ॥ त्वर्ठ० सोमपितृभिः संव्विदानोनुद्यावापृथिवीऽआततन्थ॥तस्म्मैतऽइन्दोहविषाव्विधेमव्वयर्ठ०स्स्या
मपतयोरयीणाम् ॥६॥ बर्हिषदः पितरऽऊत्यार्व्वागिमावोहव्व्याचकृमाजुषद्ध्वम् ॥ तऽआगतावसा शन्तमेनाथानः शंयोररपोदधात ॥ ७ ॥
आहम्पितॄन्त्सुविदत्राँ २ऽअवित्सिनपातञ्चव्विक्क्रमणञ्चव्विष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजन्तपित्त्वस्तऽइहागमिष्ठाः ॥ ८ ॥ उपहूताः
पितरः सोम्म्यासोबर्हिष्येषुनिधिषुप्प्रियेषु ॥ तऽआगमन्तुतऽइहश्रुवन्त्वधिब्रुवन्तुतेवन्त्वस्म्मान् ॥ ९ ॥ आयन्तुनः पितरः

सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ १० ॥ अग्निष्वात्ताः पितर एह गच्छत सदः सदः सदत सुप्रणीतयः ॥ अत्ता हवीꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीरं दधातन ॥ ११ ॥ ये अग्निष्वात्ता ये अनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते ॥ तेभ्यः स्वराडसुनीतिमेतां यथावशं तन्वं कल्पयाति ॥ १२ ॥ अग्निष्वात्तानृतुमतो हवामहे नाराशꣳसे सोमपीथं य आशुः ॥ तेनो विप्रासः सुहवा भवन्तु वयꣳ स्याम पतयो रयीणाम् ॥ १३ ॥ इति पितृमंत्रान् ॥ ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ स भूमिꣳ सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एतावानस्य महिमातो ज्यायाँश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ॥ ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥ ततो विराडजायत विराजो अधि पूरुषः ॥ स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ॥ पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥ ६ ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ॥ छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥ तस्मादश्वा अजायन्त ये के चोभयादतः ॥ गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ॥ तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ९ ॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ॥ मुखं किमस्यासीत्कि

म्बाहूकिमूरूपादाऽउच्येते ॥ १० ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः ॥ ऊरूतदस्ययद्वैश्यः पद्भ्याᳪंशूद्रोऽअजायत ॥ ११ ॥
चन्द्रमामनसोजातश्चक्षोः सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ १२॥ नाभ्याऽआसीदन्तरिक्षᳪंशीर्ष्णोद्यौः सम
वर्त्तत ॥ पद्भ्यांभूमिर्दिशः श्रोत्रात्तथालोकाँ२ऽअकल्पयन् ॥ १३ ॥ यत्पुरुषेणहविषा देवायज्ञमतन्न्वत ॥ वसन्तोस्स्यासीदाज्ज्य
ङ्ग्रीष्मइध्मः शरद्धविः ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः ॥ देवायद्यज्ञन्तन्न्वानाऽअबध्नन्पुरुषम्पशुम् ॥ १५ ॥
यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्न्यासन् ॥ तेहनाकम्महिमानः सचन्तयत्र पूर्व्वेसाध्याः सन्ति देवाः ॥ १६ ॥ इतिपुरुष
सूक्तंच ॥ ॐ आशुः शिशानोव्वृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषएकवीरः शतᳪंसेनाऽअजयत्साकमिन्द्रः
॥ १ ॥ सङ्क्रन्दनेनानिमिषेणजिष्णुनायुत्कारेण दुश्च्यवनेनधृष्णुना ॥ तदिन्द्रेणजयततत्सहध्वंयुधोनरऽइषुहस्तेनव्वृष्ष्णा ॥ २ ॥ सऽ
इषुहस्तैः सनिषङ्गिभिर्व्वशीसᳪंस्रष्टासयुधऽइन्द्रो गणेन ॥ सᳪंसृष्टजित्सोमपाबाहुशर्द्ध्युग्ग्रधन्वाप्रतिहिताभिरस्ता ॥ ३ ॥ बृहस्पते
परिदीयारथेनरक्षोहामित्राँ२ऽअपबाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणोयुधाजयन्नस्माकमेद्ध्यविताrथानाम् ॥ ४ ॥ बलविज्ञायस्स्थविरः
प्रवीरः सहस्वान्वाजीसहमानऽउग्रः ॥ अभिवीरोऽअभिसत्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ५ ॥ गोत्रभिदङ्गोविदंव्व
ज्रबाहुञ्जयन्तमज्ज्मप्रमृणन्तमोजसा ॥ इमᳪंसजाताऽअनुवीरयद्ध्वमिन्द्रᳪंसखायोऽअनुसᳪंरभध्वम् ॥६॥ अभिगोत्राणिसहसागाहमानोद

योव्वीरःशतमंन्युरिन्द्रं÷॥ दुश्च्यवनःपृतनाषाडयुद्ध्योस्म्माकर्ठ्सेनांऽअवतुप्प्रयुत्सु ॥ ७ ॥ इन्द्रंऽआसान्नेताबृहस्प्पतिर्दक्षिणायज्ञःपुरऽएं
तुसोमं÷॥देवसेनानांमभिभञ्जतीनाञ्जयन्तीनाम्मरुतोंयन्त्वग्ग्रम् ॥ ८ ॥ इन्द्रंस्यवृष्णोव्वरुणंस्यराज्ञंऽआदित्यानाम्मरुताᳬंशर्द्धंऽउग्ग्रम्॥
महामनसाम्भुवनच्च्यवानाङ्घोषोदेवानाञ्जयंतामुदंस्थात्॥९॥ उर्द्धर्षयमघवन्नायुधान्युत्सत्त्वनाम्मामकानाम्मनाᳬंसि ॥ उर्द्दृत्रहन्वाजिनां
व्वाजिनान्युद्रथानाञ्जयतांञ्जन्तुघोषा÷ ॥ १० ॥ अस्माकमिन्द्रःसमृतेषुद्ध्वजेष्वस्माकंय्याऽइषंवस्ताजंयन्तु ॥ अस्माकंव्वीराऽउत्तरेभवन्त्व
स्म्मा २ ऽउदेवाऽअवताहवेषु ॥११॥ अमीषाञ्चित्तम्प्रतिलोभयन्तीगृहाणाङ्गान्यप्वपरेहि ॥ अभिप्प्रेहिनिर्दहहृत्सुशोकैरन्धेनामित्रास्तमसास
चन्ताम्॥१२॥अवंसृष्टापरापतशरव्व्येब्रह्मसᳬंशिते ॥ गच्छामित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः ॥१३॥ प्प्रेताजयतानरऽइन्द्रोवःशर्म्मय
च्छतु॥उग्ग्रावः सन्तुबाहवोनाधृष्य्यायथासथ॥१४॥असौया सेनामरुतःपरेषामभ्यैतिनऽओजसास्पर्द्धमाना॥ तान्गूहततमसापव्व्रतेनयथामी
ऽअन्योऽअन्यन्नजानन्॥१५॥ यत्रबाणाःसंपतन्तिकुमाराव्विशिखाऽइव॥तन्नऽइन्द्रोबृहस्प्पतिरादितिः शर्म्मयच्छतु व्विश्वाहाशर्म्म
यच्छतु ॥१६॥ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥
॥१७॥ इत्यप्रतिरथम् ॥ ॐसप्तव्याधादशार्णेषु मृगाःकालंजरेगिरौ ॥ चक्रवाकाःशरद्वीपे हंसाःसरसिमानसे ॥ तेऽभिजाताःकुरुक्षेत्रे ब्राह्म
णावेदपारगाः ॥ प्रस्थितादूरमध्वानं यूयंतेभ्योऽवसीदत ॥ इतिहविःस्तोत्रम् ॥ ॐयोगीश्वरंयाज्ञवल्क्यमित्यादियाज्ञवल्कीयगाथांत्रपठि

त्वासप्तार्चिस्तवादिकंपठेत् ॥अथसप्तार्चिस्तवम् ॥ मूर्त्तानाममूर्त्तानां पितृणाममितौजसाम् ॥ नमस्यामिसदातेषां ध्यायिनांदिव्यचक्षु
षाम् ॥ १ ॥ इन्द्रादीनांजनेतारो दक्षमारीचयोस्तथा ॥ सप्तर्षीणांतथाऽन्येषां तान्नमस्यामिकामदान् ॥ २ ॥ मन्वादीनांजनेतॄँश्च सूर्याचंद्र
मसोस्तथा ॥ तान्नमस्याम्यहंसर्वान्पितरश्चार्णवेषुच ॥ ३ ॥ नक्षत्राणांग्रहाणांच वाय्वग्निनभसान्तथा ॥ द्यावापृथिव्योश्चतथा नमस्या
मिकृतांजलिः ॥ ४ ॥देवर्षीणांजनेतॄंश्चसर्वदेवनमस्कृतान् ॥ अभयस्यसदादातॄन्नमस्येहंकृतांजलिः॥५॥प्रजापतेःकश्यपस्य सोमायवरु
णायच ॥ योगेश्वरेभ्यश्चतथा नमस्यामिकृतांजलिः ॥ ६ ॥ नमोगणेभ्यःसप्तभ्यस्तथालोकेषुसप्तसु ॥ स्वयंभुवेनमस्यामि ब्रह्मणेयोगचक्षु
षे ॥ ७ ॥ यदाधाराःपितृगणा योगमूर्तिधराहिते ॥ नमस्यामिततःसोमं पितरंजगतामहम् ॥ ८ ॥ अग्निरूपांस्तथैवान्यान्नमस्यामिपितॄन
हम् ॥ अग्नीषोममयंविश्वं यतएतदशेषतः ॥ ९ ॥ येतुतेजोमयाश्चैते सोमसूर्याग्निमूर्तयः॥जगत्स्वरूपिणश्चैव तथाब्रह्मस्वरूपिणः ॥ १० ॥
तेभ्योऽखिलेभ्योयोगिभ्यः पितृभ्योयतमानसः ॥ नमोनमोनमस्तेमे प्रसीदंतुस्वधाभुजः॥११॥इत्यादीनिपवित्राणि अन्यान्यपिरुचिस्तव
ब्राह्मादिस्तोत्राणिचयथारुचियथाशक्तिब्राह्मणान् श्रावयेत् ॥ वेणुवीणाप्रभृतिभिर्ब्राह्मणान्हर्षयन्माधुर्यादीन् व्यंजनगुणानुकीर्त्तयन्यस्ययत्रे
च्छोपलभ्येततस्यतदुपनयन् मंदंमंदंभोजयेत् ॥ अथतृप्तान्ज्ञात्वा अपसव्येन उच्छिष्टसन्निधौविप्राणामग्रतोभूमिंप्रोक्ष्यतत्रदक्षिणाग्रकुश
त्रयमास्तीर्य्यसर्वप्रकारमन्नंसव्यअन्नमुद्धृत्यसतिलमेकीकृत्य ॥ ॐअग्निदग्धाश्चयेजीवा येऽप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यन्तु तृप्तायां
तुपरांगतिम् ॥ १ ॥ इतिमंत्रेणकुशोपरितदन्नंविकिरेत् ॥ ततःसव्यंकृत्वा आचम्यहरिंस्मृत्वाततोऽपसव्येनविप्रेभ्यःप्रत्येकं
पितृब्राह्मणपूर्वकंसकृत्सकृदपोदत्त्वागायत्रीम् ॐमधुवाताऋतायतइतितृचंमधुमधुमध्वितिचजप्त्वा ॥ ॐतृप्ताःस्थइतिपृष्ट्वा

१ जनयितार इत्यर्थः ।

ॐतृप्ताःस्मः इतितैरुक्तेशेषमन्नंकिंक्रियतामितिपृष्ट्वा ॥ इष्टैःसहभुज्यतामित्युक्ते ॥ पिंडानहंकरिष्ये इति पृच्छेत् ॥ ॐ कुरुष्वे
त्यनुज्ञातः ॥ पित्रादिब्राह्मणोच्छिष्टसन्निधौ चतुरस्रंदक्षिणप्लवंरमणीयंहस्तमात्रंचतुरङ्गुलोच्छ्रितंपित्रादित्रयपिंडपातनार्थं स्थानं
निर्माय ॥ तथा मातामहादिब्राह्मणोच्छिष्टसन्निधौ मातामहादिपिंडपातनार्थं तादृशमेवस्थानंकुर्यात् ॥ ततः उभयत्र मध्यदेशे
दर्भपिंजूलीमूलेन ॥ ॐअपहताऽअसुरारक्षांꣳसिवेदिषदः ॥ इतिमंत्रेणसव्योपगृहीतदक्षिणहस्तेनदक्षिणाग्रांरेखांसकृदुल्लिख्यदर्भपिंजू
लीमुत्तरस्यांदिशिनिक्षिप्य ॥ ॐयेरूपाणिप्रतिमुञ्चमानाऽअसुराः सन्तःस्वधयाचरंति ॥ परापुरो निपुरोयेभरंन्त्यग्निष्टाँल्लोका
त्प्रणुदात्यस्मात् ॥ इतिमंत्रेणज्वलदुल्मुकं प्रत्येकंरेखोपरिभ्रामयित्वा दक्षिणतोनिदध्यात् ॥ ततःउपमूलसकृदाच्छिन्नद
क्षिणाग्रकुशत्रयं रेखोपरिप्रत्येकंस्तीर्त्वा सव्येनदेवताभ्य इतित्रिर्जपेत् ॥ ततोऽपसव्यंकृत्वा पुटकषट्केजलतिलगंधपुष्पाणिकृ
त्वा एकंपात्रंवामहस्तेकृत्वा ॥ द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐअद्यामुकगोत्रास्मत्पितरमुकशर्मन् सपत्नीकव
सुरूपात्रावनेनिक्ष्वतेस्वधा इति कुशमूलेपित्रेपितृतीर्थेन अवनेजनंकिंचिदवशिष्यदद्यात् ॥ एवंपितामहायकुशत्रयमध्ये प्रपितामहाय
कुशाग्रे अवनेजनंदद्यात् ॥ एवमेवमातामहादिभ्योपिदद्यात् ॥ ततःसर्वस्माच्छ्राद्धशेषान्नादुष्णंकिंचित्किंचिदन्नमुद्धृत्य मध्वाज्यातिलसर्व
व्यंजनहुतशेषान्नयुतंरजतादिपात्रेकृत्वाबिल्वोपमान्षट्पिंडान्निर्माय मधुघृताभ्यामभिघार्य पित्रादिभ्योदद्यात्॥तत्र प्रथमं पिंडंकुशादीनिचा
दाय ॐअद्यामुकगोत्रअस्मत्पितरमुकशर्मन् सपत्नीक वसुरूप एतत्तेपिंडंस्वधा इतिप्रथमावनेजनस्थाने सव्योपगृहीतदक्षिणहस्तेन

पितृतीर्थेनदद्यात् ॥ एवमेवपितामहादिभ्यः पंचभ्यः प्रत्येकंतत्तदवनेजनस्थानेपिंडंदद्यात् ॥ ततःप्रपितामहादूर्ध्वंत्रयाणांलेपभुजांतृप्तिमु
द्दिश्य पित्रादिकपिंडाधारकुशमूले ॐलेपभागभुजःपितरस्तृप्यंतु इतिपठित्वादक्षिणहस्तंप्रोञ्छ्यजलेनहस्तौप्रक्षालयेत् ॥ ततःसव्यंकृ
त्वात्रिराचम्य हरिंस्मरेत् ॥ ततोऽपसव्येन ॐअत्रपितरोमादयध्वंयथाभागमावृषायध्वम् ॥ इति पित्रुद्देश्येनपठित्वा वामावर्त्तेनोदङ्मुखी
भूयप्रीतमनाः ॥ मनाक् श्वासंनियम्य तेनैवयथापरावृत्त्य ॐअमीमदन्तपितरो यथाभागमावृषायिषत इतिजपेत् ॥ एवमेवमातामहपक्षे ॥
ततःपूर्वदत्तावनेजनजलेन ॐअद्यामुकगोत्र अस्मत्पितरमुकशर्मन् सपत्नीकवसुरूप अत्रप्रत्यवनेनिक्ष्वतेस्वधा इति प्रथमपिंडोपरिप्रत्यवने
जनंदत्त्वा एवमेवपितामहादिपंचपिंडोपरि तत्तदवनेजनपात्रेणप्रत्येकं प्रत्यवनेजनंदद्यात् ॥ ततोनीवींविस्रंस्य सव्येन आचम्य ॥ अप
सव्यं कृत्वा ॐनमोवःपितरोरसाय नमोवः पितरः शोषाय नमोवः पितरोजीवाय नमोः वः पितरःस्वधायै नमोवः पितरोघोराय नमोवः
पितरोमन्यवे नमोवः पितरः पितरोनमोवोगृहान्नः पितरोदत्तसत्तोवः पितरोदेष्म इति कृताञ्जलिः पठेत् ॥ ततः ॐएतद्वःपितरोवास
इतिपठित्वा षट्सुपिंडेषु सूत्राणि प्रतिपिंडमूर्णादशावा पंचाशदूर्ध्ववयस्कयजमानहृदयलोमानिवा दत्त्वा ॥ ततः कुशतिलजलान्यादाय
ॐअद्यामुकगोत्र अस्मत्पितरमुकशर्मन् सपत्नीक वसुरूप एतत्तेवासः स्वधा इति सूत्रमुत्सृजेत् ॥ एवमेवपितामहादिपंचस्वपि पिंडेषु
सूत्राणिदत्त्वातत्तन्नाम्नोत्सृजेत् ॥ ततः पित्राद्युद्दिश्यतदीयपिंडेषु तूष्णीं गंधपुष्पधूपदीपतांबूलदक्षिणादीनिदद्यात् ॥ पिंडशेषान्नंचपिंडस
मीपेविकिरेत्॥ततः पितृब्राह्मणानाचमय्य देवद्विजानाचामयेत्॥ततःसर्वेषां ब्राह्मणानांदक्षिणकरे ॐअपांमध्येस्थितादेवाः सर्वमप्सुप्रतिष्ठित

म्॥ब्राह्मणस्यकरेन्यस्ताः शिवाआपोभवन्तुमे इति सकृत्सकृज्जलंदद्यात् ॥ ॐलक्ष्मीर्वसतिपुष्पेषु लक्ष्मीर्वसतिपुष्करे ॥ लक्ष्मीर्वसतिगोष्ठेषु
सौमनस्यंसदास्तुमे इति पुष्पाणि ॥ ॐअक्षतंचास्तुमेपुण्यं शांतिःपुष्टिर्धृतिश्चमे ॥ यद्यच्छ्रेयस्करंलोके तत्तदस्तुसदामम इतियवांश्चद
द्यात् ॥ ततः ॐअद्यामुकगोत्रस्यास्मत्पितुरमुकशर्मणः सपत्नीकस्य वसुरूपस्य दत्तैतदन्नपानादिकमक्षय्यमस्तु इतिसतिलमक्षय्यो
दकंपितृविप्रकरेदद्यात् एवमेव पितामहादीनां नामगोत्राभ्यां तदीयविप्रकरेषु अक्षय्योदकंदद्यात् ॥ ततः सव्यंकृत्वा प्राङ्मुखस्तन्मनाः
सुमनाः कृतांजलिर्दक्षिणांदिशंपश्यन् पितृविप्रेभ्यः आशिषोगृह्णीयात् ॥ ॐअघोराःपितरः सन्तु इतिवदेत् सन्त्वितितैरुक्ते समाचारात्
पिंडोपरि पूर्वाग्रां जलधारां दद्यात्ततः ॐगोत्रंनोवर्द्धताम् इत्युक्तौ ॐवर्द्धतां वोगोत्रम् इतिप्रत्युक्तिः ॥ ॐदातारो नोऽभिवर्द्धताम् ॥ ॐअभि
वर्द्धतांवोदातारः॥ ॐवेदाश्चनोऽभिवर्द्धताम् ॥ ॐअभिवर्द्धतांवोवेदाः॥ॐसंततिर्नोभिवर्द्धताम् ॥ ॐअभिवर्द्धतांवः संततिः॥ॐश्रद्धाचनोमा
व्यगमत् ॥ ॐमाव्यगमद्वः श्रद्धा ॥ ॐबहुदेयंचनोऽस्तु ॥ॐअस्तुवोबहुदेयम् ॥ ॐअन्नंचनो बहुभवेत् ॥ ॐभवत्वन्नंवो बहु ॥ ॐअतिथीं
श्चलभेमहि ॥ ॐलभध्वं चातिथीन् ॥ ॐयाचितारश्चनः संतु ॥ ॐसंतु वो याचितारः ॥ माचयाचिष्मकंचन ॥ ॐमायाचध्वं कंचन ॥
ॐएताः सत्याः आशिषःसंतु ॥ ॐसंत्वेताः सत्याः आशिषः ॥ इत्येवं प्रार्थनाप्रतिवचनेभ्योऽनन्तरं द्विजैर्दत्तमक्षतपुष्पं गृहीत्वाशिरसि
धारयेत् ॥ ततोऽपसव्यंकृत्वापिंडोपरिसपवित्रान्कुशानास्तीर्य स्वधांवाचयिष्येइतिब्रूयात् ॐवाच्यतामितिविप्रानुज्ञातः ॥ पितृभ्यःपितामहे
भ्यःप्रपितामहेभ्योमातामहेभ्यःप्रमातामहेभ्ये वृद्ध मातामहेभ्यश्चस्वधोच्यतामितिवदेत् ॥ अस्तुस्वधेतितैरुक्ते ॥ ॐऊर्जंवहन्तीरमृतंघृतंपयः ॥ ८१ ॥
कीलालंपरिस्रुतम् ॥ स्वधास्थतर्पयतमेपितॄन् इतिसपवित्रकुशोपरिदक्षिणाग्रांजलधारांदद्यात् ॥ ततः स्वयंयजमानोर्घ्यपात्राण्युत्तानीकृ

त्य सव्येनदेवदक्षिणांदद्यात् ॥ ॐ अद्यकृतैतत्पार्वणश्राद्धांगभूतास्मत्पित्रादित्रयसंबंधिनांपुरूरवार्द्रवसंज्ञकविश्वेदेवानांश्राद्धप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतंयथानामगोत्रायब्राह्मणायदक्षिणात्वेनतुभ्यमहं संप्रददे ॥ ॐस्वस्तीति इतिप्रतिवचनम् ॥ एवंमातामहादिदेवश्राद्धार्थमपि हिरण्यंदद्यात् ॥ ततोऽपसव्यादि कृत्वा ॐअद्यामुकगोत्रस्यास्मत्पितुरमुकशर्मणः सपत्नीकस्यवसुरूपस्य कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थंइदं रजतंचंद्रदैवतम् अमुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणात्वेनतुभ्यमहं संप्रददे इतिपितृब्राह्मणहस्तेरजतदक्षिणांचद्यात्॥एवंपितामहादिपंच श्राद्धप्रतिष्ठार्थमपिरजतंदद्यात्॥सर्वत्रस्वस्तीतिवाचयेत्॥दैवेरजतनिषेधः॥असंभवेफलमूलादिकंदद्यात्॥ ततः पिंडानुत्थापयामि॥उत्थापय इत्यनुज्ञातः पिंडानुत्थाप्यस्थाल्यांनिधायाऽवघ्राणंकृत्वापिंडाधारसकृदाच्छिन्नान्दर्भान् उल्मुकंचवह्नौ निक्षिपेत् ॥ ततः ॐ विश्वेदेवाः प्रीयन्तामितिभवन्तोऽधिब्रुवन्तु इतिदेवद्विजान्प्रार्थयेत्॥तेच ॐप्रीयंतांवोविश्वेदेवा इतिप्रतिब्रूयुः॥ ततोऽपसव्यंकृत्वा ॐवाजेवाजेवत व्वाजिनोनोधनेषु विप्राऽअमृताऽऋतज्ञाः॥अस्यमध्वः पिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥ इतिमंत्रेणपितृब्राह्मणानुत्थाप्य पङ्क्तिमूर्द्धन्यमङ्गुष्ठेनगृहीत्वागृहीतोदकपात्रोविसर्जयेत्॥ ततस्तथैवदेवब्राह्मणानपिविसर्जयेत् ॥ ततस्तान्कृतपादादिशौचानुभयान् बहिःस्थितान् प्रदक्षिणी कुर्वन् ॐआमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीव्विश्वरूपे ॥ आमागंतांपितरामातराचामासोमोऽअमृतत्वेनगम्यात् १॥१९ इतिमंत्रेण सीमांतमष्टौवापदानि बंधुभार्यासहितोऽनुव्रज्य उदकधारयाप्रदक्षिणीकृत्य गृहंप्रविशेत् ॥ ततःसव्यंकृत्वादेवताभ्यइतित्रिर्जपेत् ॥ ततोऽपसव्येनरक्षादीपान्निर्वाप्य सव्येनहस्तापादौचप्रक्षाल्याचम्य ॐप्रमादात्कुर्वतांकर्म प्रच्यवेताध्वरेषुयत्॥ स्मरणादेवतद्विष्णोः संपूर्णं स्यादितिश्रुतिरितिपठित्वाकर्मपूर्त्तिकामोविष्णुंस्मरेत्॥ततःपिंडान् गामजं विप्रादिवायसान्वाखादयेत् ॥ अग्नौजलेवाक्षिपेत् विप्रांतिकेवावि

किरेत् जलस्थोदक्षिणामुखोऽम्भसिवाक्षिपेत् ॥ पुत्रकामःपितामहपिंड ॐअपांत्वौषधीनांरसंप्राशयामि भूतकृतंगर्भंधत्स्व इतिमंत्रेण ऋतुस्नातायै पितृभक्तायै साध्व्यैधर्मपत्न्यैदद्यात ॥ सा शुचिर्वाग्यता पुत्रकामा ॐआधत्तपितरो गर्भंकुमारंपुष्करस्रजम् ॥ यथेहपुरुषोऽसत् इतिमंत्रेणाऽश्नीयात् ॥ ततोवैश्वदेवबलिकर्मणीकुर्यात् ॥ तत्रप्रयोगः ॥ तत्रादावग्नेः पश्चात्प्राङ्मुख उदङ्मुखोवा उपविश्यआचम्यदक्षिणजान्वाच्यमणिकोदकेनाऽग्निंपर्युक्ष्यहस्तेनार्द्रामलकमात्रंमोदनमादायसुसमिद्धेऽग्नौ॥ ॐब्रह्मणेस्वाहाइदंब्रह्मणे॥ ॐप्रजापतयेस्वाहा इदंप्रजापतये ॥ ॐगृह्याभ्यःस्वाहा इदंगृह्याभ्यः ॥ ॐकश्यपायस्वाहा इदंकश्यपाय ॥ ॐअनुमतयेस्वाहा इदमनुमतये ॥ इतिदेवयज्ञः ॥ इतिपंचाहुतीर्हुत्वा मणिकसमीपे प्राक्संस्थमुदक्संस्थंवाबलित्रयंदद्यात् ॥ तद्यथा ॥ ॐपर्ज्जन्यायनमः इदंपर्ज्जन्याय ॥ ॐअद्भ्योनमः इदमद्भ्यः ॥ ॐ पृथिव्यै नमः इदं पृथिव्यै ॥ इतिदद्यात् ॥ ततोद्वारशाखयोर्दक्षिणोत्तरयोर्यथाक्रमम् ॥ ॐ धात्रे नमः इदंधात्रे ॥ ॐविधात्रेनमः इदंविधात्रे ॥ इतिद्वौबलीदत्त्वा ॥ प्रतिदिशम् ॥ ॐवायवेनमः ॥ इत्यनेनैव चतसृषुदिक्षुचतुरोबलीन् दद्यात् ॥ इदंवायवइतित्यागः ॥ ततोदिशांच ॐ प्राच्यैदिशेनमः इदंप्राच्यैदिशे ॥ ॐदक्षिणायैदिशेनमः इदंदक्षिणायैदिशे ॥ ॐ प्रतीच्यैदिशेनमः इदंप्रतीच्यैदिशे ॥ ॐउदीच्यैदिशेनमः इदमुदीच्यैदिशे ॥ इतिदिग्भ्योबलीन्दद्यात् ॥ दत्तानांबलीनामंतराले ॐ ब्रह्मणेनमः इदंब्रह्मणे ॥ ॐअंतरिक्षायनमः इदमंतरिक्षाय ॥ ॐसूर्यायनमः इदंसूर्याय ॥ इतिप्राक्संस्थंबलित्रयंदद्यात् ॥ ततोब्रह्मादीनां बलित्रयाणामुत्तरप्रदेशे ॐविश्वेभ्योदेवेभ्योनमः इदंविश्वेभ्योदेवेभ्यः ॥ ॐविश्वेभ्योभूतेभ्योनमः इदंविश्वेभ्योभूतेभ्यः ॥ इतिद्वौबलीदद्यात् ॥ तयोरुत्तरतः ॐ उषसेनमः इदमुषसे ॥ ॐभूतानांपतयेनमः इदंभूतानांपतये इतिद्वौबलीदद्यात् ॥ इतिभूतयज्ञः ॥ ततोब्रह्मादी

नांबलीनां दक्षिणप्रदेशे ॥ अपसव्येन ॐ पितृभ्यः स्वधानमः इदंपितृभ्यः ॥ इतिपितृतीर्थेन दक्षिणामुखः एकंबलिंदद्यात्॥ इतिपितृयज्ञः॥ ततःसव्येन तत्पात्रंप्रक्षाल्य निर्णेजनजलम् ब्रह्मादीनांबलीनांवायव्ये ॐयक्ष्मैतत्तेनिर्णेजनंनमःइदंयक्ष्मणे इतिक्षिपेत् ॥ ततोदेवादिबलीन् बहिर्दद्यात् ॥ ॐ देवामनुष्याःपशवोवयांसि सिद्धाःसयक्षोरगदैत्यसंघाः ॥ प्रेताःपिशाचास्तरवःसमस्ता येचान्नमिच्छंतिमयाप्रदत्तम् ॥ ॥ १ ॥ इदमन्नंदेवादिभ्यः ॐ पिपीलिकाःकीटपतंगकाद्याः बुभुक्षिताःकर्मनिबंधबद्धाः ॥ तृप्त्यर्थमन्नंहिमयाप्रदत्तं तेषामिदंतेमुदिताभवंतु ॥ २ ॥ इदंपिपीलिकादिभ्यः ॥ ॐ ऐंद्रवारुणवायव्याः सौम्यावैनैर्ऋतास्तथा ॥ वायसाःप्रतिगृह्णंतु भूमावन्नंमयार्पितम् ॥ ३ ॥ इदंवायसेभ्यः ॥ ॐ सौरभेयाःसर्वहिताः पवित्राःपुण्यराशयः ॥ प्रतिगृह्णन्तुमेग्रासं गावस्त्रैलोक्यमातरः ॥४॥ इदंगोभ्यः ॥ ॐ श्वानौद्वौश्यामशबलौ वैवस्वतकुलोद्भवौ ॥ ताभ्यामन्नंप्रदास्यामि स्यातामेतावहिंसकौ ॥ ५ ॥ इदंश्वभ्याम् ॥ इतिवैश्वदेवबलिकर्म ॥ ततोवैश्वदेवांते सुतभृत्यबांधवातिथिसंयुक्तः पितृशेषितमन्नमश्नीयात् ॥ तद्दिने श्राद्धभुक्दानप्रतिग्रहहोमस्वाध्यायभारान् वर्जयेत् ॥ कर्तृभोक्तारौ द्यूताध्वगमनमैथुनायासस्वाध्यायकलहंचपुनर्भोजनहिंसादीनिनकुर्यात् ॥ एषएवविधिरुपरागसंक्रांतित्रयोदश्यादिनिमित्तकश्राद्धेषुज्ञेयः ॥ महालयेतुमातृपक्षोमध्येपृथक्कार्यः ॥ विधिस्तुएषएव ॥ इतिगौडीयश्राद्धप्रकाशेमध्यमखंडे ( मुख्यकल्पे ) दर्शपार्वणश्राद्धपद्धतिःसमाप्ता ॥१॥ अथसपात्रकैकोद्दिष्टश्राद्धपद्धतिः॥ तत्रपूर्वदिने एकभक्तादिनियमंविधाय श्राद्धदिने प्रातःस्नात्वानित्यकर्मसमाप्यमध्याह्ने ब्राह्मणं स्नातं यजमानसवर्णेनाहूतं शुचिः शुक्लद्विवासाः कृतांजलिर्दर्भेष्वासीनः ॐस्वागतमितिपृच्छेत्॥ ॐसुस्वागतमितिप्रतिवचनम्॥ततो गोमयमंडलेपीठाद्यासने उदङ्मुखमुपवेश्य अपसव्यादिधर्मयुक्तो विप्रजानु दक्षिणकरेणस्पृष्ट्वा देशकालौसंकीर्त्य ॐ अद्यामुकगोत्रस्यपितुर

मुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धार्थं त्वामहमामंत्रये इतिनिमंत्रणंकुर्यात् ॐनिमंत्रितोस्मीतिप्रतिवचनम् ॥ ततः ॐअक्रोधनेन शौच
परेणसततं ब्रह्मचारिणा ॥ भवितव्यंभवतानोऽद्यतनेश्राद्धकर्म्मणि ॥ इतिनियमान् श्रावयेत् ॥ सर्वायासविनिर्मुक्तेनकामक्रोधविवर्जितं
नभवितव्यंभवताचमयाचश्राद्धकारिणा ॥ इतिप्रार्थयेत् ॥ भवितव्यमितिप्रतिवचनम् ॥ [ पूर्वदिननिमंत्रणपक्षे अद्यतनपदस्थानेश्वोभू
तपदंदातव्यम् ] ॥ तत इदंतेपाद्यंस्वधा ॥ इतिपाद्यमुपनीयविनीतः स्वयं विप्रपादौप्रक्षालयेत् ॥ ततः ॐअद्यामुकगोत्र पितरमुकशर्मन्
एषते पादार्घः स्वधानम इति जलतिलगंधपुष्पैः विप्रपादयोरर्घंदद्यात् ॥ ततः ॐइदंतेआचमनीयम् इति विप्रायआचमनार्थं
जलंदत्त्वासव्येनस्वयमप्याचामेत् ॥ ततः पूर्वकल्पितं दक्षिणाप्रवणं सुसमावृतंगोमयानुलिप्तं श्राद्धदेशमागत्य यथाविहितंनेपाल
कंबलाद्यासनं स्पृशन् ॐ अत्रास्यताम् इति ब्राह्मणमासने उपवेशयेत् ॥ ततस्तत्पादयोरधः कुशत्रयंदक्षिणाग्रंदत्त्वा आसन
समीपेतिलतैलेनदीपंप्रज्वाल्यस्थापयेत् ॥ श्राद्धसमाप्तिंयावद्द्विजेनरक्षणीयः ॥ काककुक्कुटादीन्श्राद्धहंतॄनपसारयेत् ॥ ततः कर्त्ता ब्राह्मण
स्यपुरतःस्वासने प्राङ्मुखउपविश्यपवित्रधारणंकृत्वा ॥ सव्येनआचम्य॥ कर्मपात्रंजलेनापूर्यगंधपुष्पातिलादिभिः संपूज्य ॥ ॐअपवित्रः
पवित्रोवा सर्वावस्थांगतोपिवा ॥ यः स्मरेत्पुंडरीकाक्षं सबाह्याभ्यंतरः शुचिः ॥ ॐपुंडरीकाक्षः पुनातु इति पठित्वाकुशत्रयानीतजलेन
श्राद्धद्रव्याणिस्वात्मानंचसिंचेत् ॥ ततः ॥ ॐभूम्यैनमः॥ॐगयायैनमः॥ ॐगदाधरायनमः इतिनत्वा॥ कुशत्रयतिलजलान्यादाय ॐअद्या
मुकगोत्रस्यअस्मत्पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहंकरिष्यइति संकल्प्य ॐकुरुष्वइति ब्राह्मणानुज्ञातो गायत्रींत्रिर्जपित्वा ॥
ॐदेवताभ्यः पितृभ्यश्च इतित्रिर्जपेत् ॥ ततोऽपसव्यंकृत्वा ॥ ॐनमोनमस्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतो

दिश इति सर्वत्र गौरसर्षपान्विकीर्य ॥ ॐअग्निष्वात्ताःपितृगणाः प्राचींरक्षंतुमेदिशम् ॥ तथाबर्हिषदःपांतु याम्यांयेपितरःस्थिताः ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपिसोपमाः ॥ अधऊर्ध्वमपिकोणेषु विकोणेषुचसर्वशः ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥ सर्वतश्चाधिपस्तेषां यमोरक्षांकरोतुमे ॥ वायुभूतपितॄणांच तृप्तिर्भवतुशाश्वती ॥ इत्यनेनाऽधस्तादूर्ध्वंकोणेषुच सर्वत्रातिलान्गौरसर्षपांश्चविकीर्य्यदक्षिणेवामेवाकटिभागेनीवीबंधंकुर्यात् ॥ ततः सव्येन कांस्यमिश्रितपात्रेजलंगृहीत्वादर्भैरालोडय ॥ ॐयद्देवादेवहेडनंदेवासश्चकृमावयम् ॥ अग्निर्मातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ १ ॥ यदिदिवायदिनक्तमेनांसिचकृमावयम् ॥ वायुर्मातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ २ ॥ यदिजाग्रद्यदिस्वप्न एनांसिचकृमावयम्॥ सूर्योमातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ ३ ॥ इति कूष्मांडमंत्रैरभिमंत्र्यदुष्टदृष्टिनिपातदूषितंपाकादिपूतं भवतु इत्युक्त्वातेनपाकादीन्प्रोक्षयेत् ॥ ततोऽपसव्यादिनाद्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐअद्यामुकगोत्रअस्मत्पितरमुकशर्मन् इदमासनंतेस्वधाइत्युक्त्वा विप्रहस्तेजलंदत्त्वाकंबलाद्यासनवामभागस्योपरि पितृतीर्थेनमोटकंदक्षिणाग्रमुत्सृजेत् ॥ ततः ॐअपहताऽअसुरारक्षाꣳसिवेदिषदः इति तिलान्विकीर्य ॥ अर्घपात्रोपरिपवित्रंधृत्वा ॥ ॐशन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंयोरभिस्रवन्तुनः इति तत्रजलंप्रक्षिप्य ॐतिलोसिसोमदैवत्यो गोसवोदेवनिर्मितः ॥ प्रत्नमद्भिःपृक्तःस्वधयापितॄँल्लोकान्प्रीणाहिनःस्वधा ॥ इतितिलान् तूष्णीमेव गंधपुष्पेप्रक्षिपेत् ॥ ततोऽर्घपात्रंसंपन्नंसुसंपन्नमित्यनुज्ञातोवामकरे अर्घपात्रमादायविप्रदक्षिणकरे पवित्रंदत्त्वा ॐयादिव्याऽआप इति मंत्रंपठित्वा ॐ अद्याऽमुकगोत्रास्मत्पितरमुकशर्मन् वसुरूप एषते हस्तार्घःस्वधाइतिदक्षिणहस्तेन

पितृतीर्थेन यथाजलं पतति तथा ब्राह्मणकरे सपवित्रेऽर्घं दद्यात् ॥ ततः ॥ ॐपित्रे स्थानमसीतिमंत्रेणार्घपात्रंन्युब्जंपितृवामपार्श्वे नि...
त् ॥ एवंस्थितमर्घपात्रंदक्षिणादानपर्यंतंनचालयेत् ॥ ततो गंधादि दद्यात् ॥ तत्र विप्रकरे जलमासिच्य गंधपुष्पधूपदीपवस्त्रा...
धायद्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐ अद्याऽमुकगोत्र अस्मत्पितरमुकशर्मन् वसुरूप एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीता...
च्छादनानितुभ्यंस्वधाइत्युच्चार्यदद्यात् ॥ ॐअयंतेगंधइतिनिवेदयेत् ॥ ॐसुगंध इति तेनोक्ते ॥ ॐएतानिते पुष्पाणि ॥ ॐसुपुष्पाणि ॥
ॐएषतेधूपः॥ॐसुधूपः ॥ ॐएषतेदीपः ॥ ॐसुदीपः ॥ ॐइमेयज्ञोपवीते ॥ ॐसुयज्ञोपवीते॥ॐएतानितेवासांसि॥ॐसुवासांसि इत्यादि
क्रमेण ब्राह्मणायप्रत्येकंप्रतिपाद्य कृतांजलिर्भूत्वा ॐअर्चनंसंपूर्णमस्त्वितिब्रूयात् ॥ ॐअस्त्वर्चनं संपूर्णमितिविप्रः ततो भोजनपात्रस्याध...
देशंसंमार्ज्यब्राह्मणंवेष्टयित्वा गौरमृत्तिकादिनामंडलंकुर्यात् ॥ [ परकीयभूमौश्राद्धकरणपक्षे ] ॐ इदमन्नंभूस्वामिपितृभ्योनमः इतिभू...
दियुक्तमन्नंदर्भेषूत्सृजेत् ॥ ततः उष्णमन्नंसघृतं यथावत् कराभ्यामादाय पितरं ध्यायन् मंदंमंदं परिविश्यसुशीतलजलसू...
कव्यंजनंघृतंचपात्रांतरस्थं तत्रोपनीय अन्नं मधुनाभिघार्य ॐ मधुवाताऽऋतायते इतित्र्यृचेनाभिमंत्र्यन्युब्जकराभ्यांपात्रमालभेत् ॥
ततः ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वधाइतिपठित्वा ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्य
पाᳪंसुरे इत्येतामृचंचजप्त्वा ब्राह्मणाङ्गुष्ठमनखमधोमुखम् आत्महस्तधृत ॐ विष्णोकव्यᳪंरक्षइतियजुषाऽन्नेनिवेश्य ॐइदमन्नम्
इमाआपः इदमाज्यम् इदंहविरित्युक्त्वा ॐअपहताऽअसुरारक्षाᳪंसिवेदिषद इतितिलान्विकीर्य ॥ वामकरेणपात्रंस्पृशन् द्विगुणभुग्नकुश
त्रयंतिलजलान्यादाय ॐअद्यामुकगोत्रअस्मत्पितरमुकशर्मन् वसुरूप इदमन्नं कव्यं सोपस्करं परिविष्टंपरिवेक्ष्यमाणं ब्राह्मणतृप्तिपर्यंतम

मृतरूपंतुभ्यंस्वधा इत्युदकंपितृतीर्थेनविप्रवामभागेभूमौक्षिपेत् ॥ ततः ॐअन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्तु
इतिप्रार्थ्यजुषस्वइत्युक्त्वा ॥ भवान् प्राशयतु इत्यापोशानंविप्रायदद्यात् ॥ स यथाविधिभुंजीत ॥ श्राद्धकर्त्तातुसव्याहृतिकांसप्रणवांगायत्रीं
त्रिःसकृद्वाजपेत् कृतांजलिर्दर्भेष्वासीनः ॥ ॐमधुवाताऽऋतायतेमधुक्षरंतिसिंधवः माध्वीर्नःसन्त्वोषधीः ॥ १ ॥ ॐमधुनक्तमुतोषसो
मधुमत्पार्थिवꣳरजः मधुद्यौरस्तुनःपिता ॥२॥ ॐ मधुमान्नोवनस्पतिर्मधुमा २ ऽअस्तुसूर्यः माध्वीर्गावोभवन्तुनः ॥३॥ इतित्र्यृचम् ॥
ॐ मधुमधुमध्वितिचजपेत् ॥ ततःसव्येन ॐकृणुष्वपाजःप्रसितिन्नपृथ्वींयाहिराजेवामवाँऽइभेन ॥ तृष्वीमनुप्रसितिन्द्रूणानोस्तासि
विद्ध्यरक्षसस्तपिष्ठैः ॥ १ ॥ तवभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः ॥ तपूꣳष्यग्नेजुह्वापतङ्गानसन्दितोविसृजविष्वगु
ल्काः ॥ २ ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोऽअस्याऽअदब्धः ॥ योनोदूरेऽअघशꣳसोयोऽअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत्
॥ ३ ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ २ऽओषतात्तिग्महेते॥योनोऽअरातिꣳसमिधानचक्रेनीचातंधक्ष्यतसन्नशुष्कम् ॥४॥ ऊर्द्ध्वोभव
प्रतिविद्ध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनाञ्जामिमजामिम्प्रमृणीहिशत्रून् ॥ अग्नेष्ट्वातेजसासादयामि
॥ ५ ॥ इतिरक्षोघ्नीः ऋचःपठित्वाभूमौतिलान् विकीर्यपितृरूपतयाब्राह्मणंध्यायेत् ॥ ततः ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः
सोम्यासः ॥ असुंयऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥१॥ अङ्गिरसोनः पितरोनवग्वाऽअथर्वाणोभृगवः सोम्यासः॥ तेषांवयꣳ
सुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥ २ ॥ येनःपूर्वेपितरःसोम्यासोनूहिरेसोमपीथंवसिष्ठाः ॥ तेभिर्यमःसꣳरराणोहवीꣳष्युश

न्तुशर्द्धि÷प्रतिकाममंतु ॥ ३ ॥ त्वर्ठंसोमप्प्रचिकितोमनीषात्वर्ठंरजिष्ठमनुनेषिपंथाम् ॥ तवप्प्रणीतीपितरानऽइन्दोदेवेषुरत्नंमभजन्त
धीराः ॥ ४ ॥ त्वयाहिनः पितरः सोमपूर्व्वेकर्म्माणिचक्रुः पवमानधीराः ॥ व्वन्वन्नवातःपरिधीँऽरपोर्णुवीरेभिरश्वैर्मघवाभवानः ॥ ५ ॥
त्वर्ठंसोमपितृभिः संव्विदानोनुद्यावापृथिवीआततन्थ ॥ तस्मैतऽइन्दोहविषाव्विधेमव्वयर्ठंस्यामपतयोरयीणाम् ॥ ६ ॥ बर्हिषदः पितरऽ
ऊत्यर्व्वागिमावोहव्व्याचकृमाजुषद्ध्वम् ॥ तआगतावसाशन्तमेनाथानः शंय्योररपोदधात ॥ ७ ॥ आहम्पितन्त्सुविदत्राँ २ अवित्सि
नपातञ्चव्विक्रमणञ्चव्विष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजन्तपित्वस्तऽइहागमिष्ठाः ॥ ८ ॥ उपहूताः पितरः सोम्म्यासोबर्हिष्येषुनिधि
षुप्प्रियेषु ॥ तऽआगमन्तुतऽइहश्रुवन्त्वधिब्ब्रुवन्तुतेवन्त्वस्मान् ॥ ९ ॥ आयन्तुनः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मि
न्यज्ञेस्वधयामदन्तोधिब्ब्रुवन्तुतेवन्त्वस्मान् ॥ १० ॥ अग्निष्वात्ताः पितरऽएहगच्छतसदः सदः सदतसुप्रणीतयः ॥ अत्ताहवीर्ठंषिप्प्रय
तानिबर्हिष्यथारयिर्ठंसर्व्ववीरन्दधातन ॥ ११ ॥ येऽअग्निष्वात्तायेऽअनग्निष्वात्तामद्ध्येदिवः स्वधयामादयन्ते ॥ तेभ्यः स्वराडसु
नीतिमेतांय्यथावशन्तन्वङ्कल्पयाति ॥ १२ ॥ अग्निष्वात्तानृतुमतोहवामहे नाराशर्ठंसेसोमपीथंयऽआशुः ॥ तेनोव्विप्रासः सु
हवाभवन्तुव्वयर्ठंस्यामपतयोरयीणाम् ॥ १३ ॥ इतिपितृमंत्रान् ॥ ॐसहस्रशीर्षापुरुषइत्यादिषोडशर्चात्मकंपुरुषसूक्तंच ॥
ॐआशुः शिशानोवृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽएकवीरः शतर्ठंसेनाऽअजयत्साकमिन्द्रः ॥ १ ॥

इत्यादिसप्तदशमंत्रात्मकमप्रतिरथंचपठेत् ॥ ततः ॐसप्तव्याधादशार्णेषु मृगाःकालांजरेगिरौ ॥ चक्रवाकाःशरद्वीपे हंसाःसरसिमानसे ॥
तेऽभिजाताःकुरुक्षेत्रे ब्राह्मणावेदपारगाः ॥ प्रस्थितादूरमध्वानं यूयंतेभ्योऽवसीदत ॥ इतिपौराणीयं हविःस्तोत्रम् ॥ ॐयोगीश्वरं
याज्ञवल्क्यमित्यादियाज्ञवल्कीयगाथांचपठेत् ॥ ॐ मूर्त्तानाममूर्त्तानां पितॄणाममितौजसाम् ॥ नमस्यामिसदातेषां ध्यायिनां
दिव्यचक्षुषाम् ॥ १ ॥ इंद्रादीनां जनेतारो दक्षमारीचयोस्तथा ॥ सप्तर्षीणांतथाऽन्येषां तान्नमस्यामिकामदान् ॥ २ ॥ मन्वादीनांजनेतॄंश्च
सूर्याचंद्रमसोस्तथा ॥ तान्नमस्याम्यहंसर्वान्पितरश्चार्णवेषुच ॥ ३ ॥ नक्षत्राणांग्रहाणांच वाय्वग्निनभसांतथा ॥ द्यावापृथिव्योश्चतथा
नमस्यामिकृतांजलिः ॥ ४ ॥ देवर्षीणांजनेतॄंश्च सर्वदेवनमस्कृतान् ॥ अभयस्यसदादातॄन्नमस्येहंकृतांजलिः ॥ ५ ॥ प्रजापतेःकश्यपस्य
सोमायवरुणायच ॥ योगेश्वरेभ्यश्चतथा नमस्यामिकृतांजलिः ॥ ६ ॥ नमोगणेभ्यःसप्तभ्यस्तथालोकेषुसप्तसु ॥ स्वयंभुवेनमस्यामि
ब्रह्मणेयोगचक्षुषे ॥ ७ ॥ यदाधाराःपितृगणा योगमूर्त्तिधराहिते ॥ नमस्यामिततःसोमं पितरंजगतामहम् ॥ ८ ॥ अग्निरूपांस्तथैवान्या
न्नमस्यामिपितॄनहम् ॥ अग्नीषोममयंविश्वं यतएतदशेषतः ॥ ९ ॥ येतुतेजोमयाश्चैते सोमसूर्याग्निमूर्त्तयः ॥ जगत्स्वरूपिणश्चैव तथाब्रह्मस्वरू
पिणः ॥ १० ॥ तेभ्योऽखिलेभ्योयोगिभ्यः पितृभ्योयतमानसः ॥ नमोनमोनमस्तेमे प्रसीदंतुस्वधाभुजः ॥ ११ ॥ इतिसप्तार्चिस्तोत्रंपठेत् ॥
अन्यान्यपिरुचिस्तवविष्ण्वादिस्तोत्राणि ब्राह्मणं श्रावयेत् ॥ ततः तृप्तंज्ञात्वाअपसव्यादिना उच्छिष्टसन्निधौ आस्तृतदक्षिणाग्रकुशत्रयां
भूमिंप्रोक्ष्यतत्र ॐअग्निदग्धाश्चयेजीवा येऽप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यंतु तृप्तायांतुपरांगतिम् ॥ १ ॥ इतिमंत्रेण अन्नंप्रकीर्यसव्येनाचम्यह
रिंस्मरेत् ॥ ततोऽपसव्यादिना ब्राह्मणाय जलगंडूषंदत्वा पूर्ववत् गायत्रींजप्त्वा ॐ मधुवाताऽऋतायते इतित्र्यृचं मधुमधुमध्वितिचजपेत् ॥

ततः ॐस्वदितम् इति पृष्ट्वा ॐसुस्वदितम् इतितेनोक्ते ॥ शेषमन्नंकिंक्रियतामितिपृष्टेइष्टैःसहभोक्तव्यमितिविप्रोवदेत् ॥ ततःपिंडमहंकरिष्ये
इतिपृष्टे कुरुष्वइत्यनुज्ञातः ॥ उच्छिष्टसन्निधौपिंडार्थंस्थानंसैकतंचतुरस्रंदक्षिणाप्लवंनिर्माय तन्मध्ये दर्भपिंजूलीमूलेन ॐ अपहताऽअसु
रारक्षांᳬंसिवेदिषदः इतिवान्वारब्धदक्षिणहस्तेन प्रादेशमितां रेखांदक्षिणाग्रांसकृदुल्लिख्य दर्भपिंजूलीमुत्तरस्यांदिशिनिक्षिपेत् ॥
ततो येरूपाणिप्रतिमुंचमानाऽअसुराः सन्तः स्वधयाचरंति ॥ परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् इतिमंत्रेणोल्मुकं रेखायां
भ्रामयित्वा दक्षिणतोनिदध्यात् ॥ ततः उपमूलसकृल्लूनकुशत्रयं रेखोपरिस्तृणुयात् ॥ ततः सव्येन ॐ देवताभ्यःपितृभ्यश्च महा
योगिभ्यएवच ॥ नमःस्वाहायैस्वधायै नित्यमेवनमोनम इति त्रिर्जपेत् ॥ ततोऽपसव्यंकृत्वा तिलजलगंधपुष्पाणिपात्रेकृत्वा
तत्पात्रं वामहस्तेधृत्वा दक्षिणहस्ते द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐ अद्यामुकगोत्रास्मत्पितरमुकशर्मन्नत्रवनेनिक्ष्वतेस्वधा
इतिकुशोपर्य्यवनेजनंदद्यात् ॥ ततः सर्वस्मादन्नात्किंचित्किंचिदन्नमुद्धृत्य मध्वाज्यतिलसहितमेकत्रपात्रेकृत्वा बिल्वोपमंपिंडंनिर्माय
मधुघृताभिघारितं सतिलसव्योपगृहीतदक्षिणहस्तेनाऽवनेजनस्थाने ॐ अद्यामुकगोत्रास्मत्पितरमुकशर्मन्नेतत्तेपिंडं स्वधा इतिदद्यात् ॥
ततोलेपभागभुजस्तृप्यंतु इतिदर्भमूलेकरंप्रोञ्छ्य सव्येनहस्तौप्रक्षाल्य आचम्य हरिंस्मरेत्ततोऽपसव्यादिकृत्वाॐअत्रपितमादयस्वयथा
भागमावृषायिष्ट इतिपठित्वा वामावर्त्तेनउदङ्मुखीभूय प्रीतमनाः श्वासंनियम्य तेनैवयथापरावृत्यॐअमीमदन्तपितरयथाभागमावृषायिषत
इतिजपेत् ॥ ततोऽवनेजनावशिष्टजलयुतपात्रमादाय ॐअद्यामुकगोत्रअस्मत्पितरमुकशर्मन्नत्रप्रत्यवनेनिक्ष्वतेस्वधा इतिपिंडोपरिप्रत्यवने
जनंदद्यात्॥ततोनीवींविस्रंस्य सव्येनाचम्य अपसव्यादिकृत्वा कृतांजलिः ॐनमस्तेपितारसायनमस्तेपितः शोषाय नमस्तेपितर्जीवाय

नमस्तेपितःस्वधायै नमस्तेपितर्घोराय नमस्तेपितर्म्मन्यवे नमस्ते पितःपितर्नमस्तेगृहान्नःपितर्दत्तसतस्तेपितर्द्वेष्म इतिप्रार्थ्य ततः ॐएत
त्तेपितर्वासः इतिमंत्रंपठित्वा ॐअद्यामुकगोत्रपितरमुकशर्मन्नेतत्तेवासः स्वधा इति श्वेतवस्त्रदशां ऊर्णासूत्राणिवा पंचाशद्वर्षोपरियजमान
हृदयलोमानिवा पिंडोपरिदद्यात् ॥ ततस्तूष्णीमेवपितरमुद्दिश्य गंधपुष्पधूपदीपतांबूलदक्षिणादिकंदद्यात् ॥ ततो ब्राह्मणमाचमय्य
तदीयहस्ते ॐअपांमध्येस्थितादेवाः सर्वमप्सुप्रतिष्ठितम् ॥ ब्राह्मणस्यकरेन्यस्ताः शिवाआपोभवंतुमे इति सकृज्जलंदद्यात् ॐल
क्ष्मीर्वसतिपुष्पेषु लक्ष्मीर्वसतिपुष्करे ॥ लक्ष्मीर्वसतिगोष्ठेषु सौमनस्यंसदास्तुमे इतिपुष्पाणि ॥ ॐ अक्षतंचास्तुमेपुण्यं शांतिःपुष्टि
र्धृतिश्चमे ॥ यद्यच्छ्रेयस्करंलोके तत्तदस्तुसदामम इतियवान् तिलांश्च दत्त्वा ॐअद्यामुकगोत्रस्यास्मत्पितुरमुकशर्मणोदत्तैतदन्नपा
नादिकमक्षय्यमुपतिष्ठताम् ॥ इति तिलयुक्तमक्षय्योदकंविप्रकरे दद्यात् ॥ ततः सव्यं कृत्वा प्राङ्मुखः कृतांजलिराशिषोगृह्णीयात् ॥
ॐअघोरःपिताऽस्तु ॥ अस्तु इतिविप्रः ॥ गोत्रन्नोवर्द्धताम्इतिकर्त्ता ॥ वर्द्धतामितिप्रतिवचनम् ॥ १ ॥ दातारोनोऽभिवर्द्धंतां वेदाःसंततिरेवच ॥
श्रद्धाचनोमाव्यगमद्बहुदेयंचनोऽस्तु ॥ अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनःसंतु माचयाचिष्मकंचन ॥ एताः सत्याआशिष
संतु इतिवदेत् संतु इति तेनोक्ते ॥ ततोऽपसव्येन पिंडोपरि सपवित्रदर्भानास्तीर्य ॥ ॐस्वधांवाचयिष्ये ॥ इतिपृष्ट्वा ॥ वाच्यतामित्य
नुज्ञातः ॥ ॐ पित्रे स्वधोच्यतामिति वदेत् अस्तुस्वधा इत्युच्यमाने सपवित्रदर्भांतरितपिंडोपरि ॐऊर्ज्जंवहंतीरमृतं घृतंपयः की
लालं परिस्रुतं स्वधास्थ तर्पयतमेपितरम् ॥ इतिमंत्रेण वारिधारांदद्यात् ॥ ततोऽर्घपात्रमुत्तानीकृत्ययथाशक्तिरजतदक्षिणां दद्यात् ॥
ॐ अद्यामुकगोत्रस्यपितुरमुकशर्मणः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिमांरजतदक्षिणांचंद्रदैवत्यामुकगोत्रायाऽमुकशर्मणेब्रा

ह्मणायतुभ्यमहंसंप्रददे इतिदद्यात् ॐस्वस्तीतिविप्रोवदेत्॥असंभवेफलमूलादिकंदद्यात् ॥ ततः पिंडमुत्थाप्यस्थाल्यांनिधायआघ्रायापिंडा
धःस्तृतदर्भंचोल्मुकमग्नौनिक्षिपेत् ॥ ततो विप्रमुत्थाप्याऽङ्गुष्ठंगृहीत्वा गृहीतोदकपात्रो अभिरम्यतामितिविसर्जयेत् अभिरतोस्मीति
प्रतिवचनम् ॥ ततः प्रदक्षिणीकृत्य ॐ आमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवी विश्वरूपे॥आमागंतांपितरांमातराचामा सोमोऽमृत
त्वेनगम्यतात् इतिमंत्रेण सीमांतमप्रोवापदानि अनुव्रज्यगृहं प्रविशेत् ॥ ततो रक्षादीपनिर्वापणंकृत्वासव्येनहस्तौपादौप्रक्षाल्य आचम्य
ॐ देवताभ्यः पितृभ्यश्चेतित्रिः पठेत्॥ततः ॐप्रमादात्कुर्वतांकर्म प्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोः संपूर्णंस्यादितिश्रुतिरितिपठि
त्वाकर्मपूर्त्तिकामो विष्णुंस्मरेत् ॥ ततः पिंडं गामजं वायसान्वाखादयेत् अग्नौजलेवाक्षिपेत् ततो वैश्वदेवबलिकर्मणीकुर्यात् वैश्वदेवांतेसुतभृ
त्यबांधवातिथिसंयुक्तःपितृशेषितमन्नमश्नीयात् एवमेव मातृश्राद्धंकुर्यात् ॥ ततः कर्तृभोक्तारौभूताऽध्वगमनमैथुनायासस्वाध्यायकलहं पुन
र्भोजनहिंसादीनिनकुर्यात् ॥ एवमेवपितृव्यभ्रातृभगिनीपुत्रपत्नीश्वशुरमातुलगुरुशिष्यादीनामपुत्राणामपि कुर्यात् विषशस्त्रश्वापदाऽहितिर्य
ग्ब्राह्मणघातिनाम् अनशनाग्नियुवानोद्बंधनादीनांच आश्विनकृष्णचतुर्दश्यामप्येकोद्दिष्टवेम कर्त्तव्यम् ॥ तत्रसांवत्सरिकपदं न दातव्यम् ॥
इति श्रीगौडीयश्राद्धप्रकाशे प्रतिवर्षक्षयाहसपात्रैकोद्दिष्टपद्धतिः समाप्ता ॥ ७ ॥ ॥ अथाभ्युदयिकश्राद्धम् ॥ एतच्च गर्भाधानपुंसवनसीमं
तोन्नयनजातकर्मनामकर्मान्नप्राशनचौलोपनयनविवाहादिसंस्कारेषु तुलादानव्रतनवान्नभोजनप्रथमार्तवकूपारामतडागाद्युत्सर्गदेवप्रतिष्ठा
राज्याभिषेकयज्ञोत्सववृषोत्सर्गतीर्थयात्रानिमित्तिकादिषुच कर्त्तव्यम्॥तत्र श्राद्धदिनेप्रातरेव निमंत्रणं नपूर्वेद्युः॥प्राङ्मुखउदङ्मुखेभ्योदद्या
त्॥उदङ्मुखोवाप्राङ्मुखेभ्यः॥सर्वंकर्म देवतीर्थेन ऋजुपाणिनापातितदक्षिणजानुना उपवीतिना प्रदक्षिणं देवकर्मवत्कार्यम् आसनादौसर्वं

त्रऋजवोदर्भाः॥विकिरणाद्यर्थंयवाः स्वधास्थानेस्वाहानमःशब्दोवाप्रयोक्तव्यः॥नाऽत्रापसव्यकरणं नपितृतीर्थेन नवामजानुपातनं अन्येपि
दक्षिणाप्लवादयोऽसाधारणाःपित्र्याधर्मा निवर्त्तंते किंतु दैवेनधर्मेणाऽत्रपितॄणामुपचारः॥इतरे विशेषाःप्रयोगएवव्यक्ताभविष्यन्ति अत्रच ॥
प्रथमं मातृपूजनम् ततोमातृपितामहीप्रपितामहीनांश्राद्धम् ततः पितृपितामहप्रपितामहश्राद्धम् ततो मातामहप्रमातामहवृद्धप्रमातामहा
नांसपत्नीकानांश्राद्धं श्राद्धत्रयेऽप्यष्टौ ब्राह्मणान् देवपूर्वकान्पूजयेत् ॥ अथपद्धतिः ॥ तत्रतावद्ब्राह्मेमुहूर्त्ते उत्थाय यथोपदेशंस्नानसंध्या
दिनित्यकर्मप्रातःसमाप्य ॥ वेद्यां गणपतिसहिता गौर्य्यादिषोडशमातृकाः प्रतिमाक्षतपुंजलेखान्यतमेष्वधिष्ठानेषुसंस्थापयेत् तद्यथा ॥
कर्त्ताप्रक्षालितकरचरणःस्वाचांतःसकुशोपग्रहपाणिः शुद्धासने प्राङ्मुखउपविश्य ॥ कुशत्रययवजलान्यादाय देशकालौसंकीर्त्य ॥ अमु
ककर्माङ्गभूतगणपतिसहितषोडशमातृपूजनमहंकरिष्ये इतिसंकल्पयेत् ॥ ततःपुष्पाक्षतानादाय ॐगणानांन्त्वागणपतिर्ठंहवामहेप्रियाणां
न्त्वाप्रियपतिर्ठंहवामहेनिधीनांत्वांनिधिपतिर्ठंहवामहेव्वसोमम आहमजानि गर्ब्भधमात्वमजासिगर्ब्भधम्॥ ॐभूर्भुवःस्वर्गणपतेइहागच्छ
इहतिष्ठ इतिगणपतिंस्थापयेत् ॥ ततःप्रदक्षिणक्रमेणगौर्य्यादिस्थापनम् ॥ ॐभूर्भुवःस्वः गौरि इहागच्छइहतिष्ठ ॥ १ ॥ ॐभूर्भुवःस्वः
पद्मेइहागच्छ इहतिष्ठ ॥ २ ॥ ॐभूर्भुवःस्वःशचि इहागच्छ इहतिष्ठ ॥ ३ ॥ ॐभूर्भुवःस्वर्मेधेइहागच्छ इहतिष्ठ ॥ ४ ॥ ॐभूर्भुवःस्वःसावि
त्रिइहागच्छ इहतिष्ठ॥ ५ ॥ ॐभूर्भुवः स्वर्विजये इहागच्छ इहतिष्ठ ॥६॥ ॐभूर्भुवःस्वर्जये इहागच्छ इहतिष्ठ ॥ ७ ॥ ॐभूर्भुवःस्वर्देवसेने
इहागच्छ इहतिष्ठ ॥ ८ ॥ ॐभूर्भुवःस्वःस्वधे इहागच्छ इहतिष्ठ ॥ ९ ॥ ॐभूर्भुवःस्वःस्वाहे इहागच्छ इहतिष्ठ ॥ १० ॥ ॐभूर्भुवःस्वर्मा

तर इहागच्छत इहतिष्ठत ॥ ११ ॥ ॐभूर्भुवःस्वर्लोकमातर इहागच्छत इहतिष्ठत ॥ १२ ॥ ॐभूर्भुवःस्वःहृष्टे इहागच्छ इहतिष्ठ ॥ १३ ॥
ॐभूर्भुवःस्वःपुष्टे इहागच्छ इहतिष्ठ ॥ १४ ॥ ॐभूर्भुवःस्वस्तुष्टे इहागच्छ इहतिष्ठ ॥१५॥ ॐभूर्भुवःस्वःआत्मकुलदेवते इहागच्छ इहतिष्ठ
॥१६॥ॐभूर्भुवःस्वःश्रीरिहागच्छ इहतिष्ठ इतिगणपतिसहिताएतामातः प्रत्येकमोंकारव्याहृतिपूर्वकमावाह्य स्थापयित्वा ॐमनोजूतिर्जुष
तामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳसमिमंदधातु विश्वेदेवासऽइहमादयंतामोंप्रतिष्ठ॥इत्यक्षतान्विकीर्यप्रतिष्ठांकुर्यात् ॥ ततः
पाद्यार्घाचमनीयमधुपर्कपुनराचमनीयस्नानवस्त्रगंधपुष्पधूपदीपतांबूलादिभिर्नैवेद्यैः पृथग्विचैश्चप्रणवादिनमोंतैनस्वस्वनाम्नापूजयेत् ॥
तद्यथा॥ॐगणपतयेनमः पादयोरिदंपाद्यम्॥ॐगणपतयेनमः॥इदमर्घ्यम्॥इदमाचमनीयम् इदंस्नानार्थंजलम्॥ॐगणपतयेनमः इमं गंधम्
इमानिपुष्पाणि ॐगणपतयेनमःएतानि धूपदीपनैवेद्यतांबूलानि दक्षिणां च समर्पयामि ॥ एवमेव ॐ गौर्यैनमः॥१॥ॐपद्मायैनमः ॥२॥
ॐशच्यैनमः ॥ ३ ॥ ॐमेधायैनमः ॥ ४ ॥ ॐसावित्र्यैनमः ॥ ५ ॥ ॐविजयायैनमः ॥ ६ ॥ ॐजयायैनमः॥७॥ॐदेवसेनायैनमः ॥
॥ ८ ॥ ॐस्वधायैनमः ॥ ९ ॥ ॐस्वाहायैनमः ॥१०॥ॐमातृभ्योनमः ॥११॥ ॐलोकमातृभ्योनमः ॥ १२॥ ॐहृष्टयैनमः ॥१३॥
ॐपुष्टयैनमः ॥ १४ ॥ ॐतुष्टयैनमः ॥ १५ ॥ ॐआत्मकुलदेवतायैनमः ॥ १६ ॥ ॐश्रियैनमः ॥ १७ ॥ इति प्रत्येकमर्चयेत्॥ततः
केनचित्पात्रेण विलीनघृतंसगुडमादाय ॐ वसोःपवित्रमसिशतधारं वसोः पवित्रमसिसहस्रधारं देवस्त्वासवितापुनातुवसोः पवित्रेणश
तधारेणसुप्वाः काममधुक्षः ॥ इति मंत्रेण मातृणामुपरिभित्तिलग्नाः सप्त पंचतिस्रोवाधारारुत्तरोत्तरक्रमेणपातयेत् ताश्चपूजयेत् ॥ ततोवृद्धि

सूक्तंपठेत् ॥ ॐआयुष्यंवर्चस्यꣳरायस्पोषमौद्भिदम् ॥ इदꣳहिरण्यं वर्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥ नतद्रक्षाꣳसिनपिशाचास्तरन्ति देवानामोजःप्रथमजꣳह्येतत् ॥ योबिभर्तिदाक्षायणꣳहिरण्यꣳसदेवेषु कृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥२॥ यदाबध्नन्दाक्षायणा हिरण्यꣳशतानीकायसुमनस्यमानाःतन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम् ३ अथसपात्रकाऽभ्युदयिकश्राद्धप्रयोगः ॥ तत्रकर्त्ता पूर्वाह्णेसुस्नातःप्रक्षालितकरचरणःस्वाचांतःसपवित्रोपग्रहकुशःसुस्नातान् स्वाचांतान् अष्टौ संख्यकान् ब्राह्मणानाहूय गोमयोपलिप्तेमंडले ॐस्वागतंवः सुस्वागतमितिप्रश्नोत्तरपूर्वकंप्रागग्रकुशोत्तरेष्वासनेषु प्राङ्मुखान् ॥ दक्षिणोपक्रमानुदगपवर्गानुपवेश्य स्वयमुदङ्मुखउपवि श्यसजघनं दक्षिणंजान्वाच्यतांबूलादिकमादाय विप्रजानुनीस्पृशन् ॥ ॐअद्यकरिष्यमाणाऽमुककर्मनिमित्ताकाभ्युदयिकश्राद्धे अस्मन्मा त्रादित्रयास्मन्मातामहादित्रयनांदीश्राद्धसंबंधिसत्यवसुसंज्ञकविश्वेदेवस्थाने भवंतौ मयानिमंत्रितौ ॥ इति तांबूलादिनाद्वौविप्रौनि मंत्रयेत् ॥ ॐनिमंत्रितौस्वः इतिप्रतिवचनम् ॥ पुनस्तांबूलादीन्यादाय तदुत्तरयोर्विप्रयोर्जानुनीस्पृशन् ॥ ॐअद्यामुकगोत्राणामस्मन्मातृ पितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनाममुककर्मनिमित्ताभ्युदयिकश्राद्धेभवंतौमयानिमंत्रितौ ॥ ॐनिमंत्रितौस्व इतिता भ्यामुक्ते तद्वदेव पित्राद्यर्थेमातामहाद्यर्थेचप्रतिवर्गंद्विजद्वयं निमंत्रयेत् ॥ एवमष्टौब्राह्मणान्निमंत्र्य ततः ॐअक्रोधनैःशौचपरैःसततंब्रह्मचा रिभिः ॥ भवितव्यंभवद्भिश्च मयाचश्राद्धकारिणा ॥ इतिनियमान् सर्वान्द्विजान् श्रावयेत् ॥ ततोदेवद्विजपूर्वकंचरणप्रक्षालनंविधाय गंधपुष्पादियुतंपाद्यंगृहीत्वा ॥ ॐअद्यनांदीमुखमात्रादित्रयपित्रादित्रयमातामहादित्रयसंबंधिनः सत्यवसुसंज्ञकाविश्वेदेवाएतत्पादार्घ्यंवः

स्वाहानमः इतिदेवद्विजपादयोरर्घ्यंदद्यात् ॥ पुनः ॐ अद्यामुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्योऽमुकामुकदेव्योनांदीमुख्यएततपाद्यानेन्ने
याविभज्यवः स्वाहानम इतिमातृवर्गब्राह्मणचरणयोर्दत्त्वापित्रादित्रये मातामहादित्रयेऽप्येवमेवदद्यात् ॥ ततो ब्राह्मणानाचमय्यस्वयमप्या
चम्यश्राद्धदेशेद्विजान्प्रवेश्यस्वयमपिप्रविश्य ॥ अत्रासध्वमिति प्रागग्रकुशासनेषु उदगपवर्गान्देवपूर्वकमुपवेश्यस्वयमुदङ्मुखउपविश्य
प्रत्यासनसमीपेदीपं प्रज्वाल्यकाककुक्कुटादीन्श्राद्धापहर्तॄनपसारयेत् ॥ श्राद्धदेशावरणंचकुर्यात् ॥ इतिनिमंत्रणप्रकारः ॥ अथोपवीती
आचम्यप्राणानायम्यस्वपुरतः कर्म्मपात्रंजलेनापूर्य्यदूर्वादधियवहारितकुशांस्तत्रनिक्षिप्य ॐ कर्मपात्रंसंपन्नमितिब्रूयात् ॐ सुसंपन्नमि
त्यनुज्ञातः ॥ ॐअपवित्रःपवित्रोवा सर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षं सबाह्याभ्यंतरःशुचिः ॥ ॐपुंडरीकाक्षः पुनात्वितिपठित्वाकु
शानीतजलेनश्राद्धीयोपकरणानिप्रोक्षयेत् ॥ ततः ॐवैष्णव्यैनमः ॥ ॐकाश्यप्यैनमः ॥ ॐभूम्यैनमः ॥ इतिभूमिंसंपूज्यविष्णवेनमः इति
विष्णुंमनोवाक्कायैर्नमस्कारंकुर्यात् ॥ ततोदूर्वाकुशयवजलान्यादाय देशकालौसंकीर्त्य ॐ अद्यामुकगोत्राणामस्मन्मातृपितामहीप्रपितामही
नाममुकामुकदेवीनां नांदीमुखीनाम् अमुकगोत्राणामस्मात्पितृपितामहप्रपितामहानाममुकामुकशर्मणांनांदीमुखानां तथा चामुकगो
त्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां सपत्नीकानां नांदीमुखानाम् अमुककर्मनिमित्तकंसत्यवसुसंज्ञक
विश्वेदेवपूर्वकंसपिंडकर्माभ्युदयिकश्राद्धंभवदनुज्ञयाहंकरिष्ये इतिसंकल्प्य ॐ कुरुष्वइतिब्राह्मणानुज्ञातः सप्रणवव्याहृतिकांगायत्रीं
त्रिर्जपित्वाविष्णुंस्मरेत्॥ततः ॐनमोनमस्तेगोविंद पुराणपुरुषोत्तम॥इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः॥ इतिसर्वत्रयवान् गौरसर्षपांश्चवि
कीर्यवामकटिभागेनीवीबंधंकुर्यात् ॥ ततःकांस्मिश्चित्पात्रेजलंगृहीत्वाहरितैः कुशैरालोड्य ॐयद्देवादेवहेडनम् ॥ इत्यादिकूष्मांडसूक्तेन ॐ

पुनन्तुमादेवजना ० इति पावमानेनचाऽभिमंत्र्यपाकादीनांपवित्रताऽस्तुइतिपाकादीन् संप्रोक्षयेत्॥ अथासनादिप्रयोगः॥ तत्रतावत् कुशत्रय
यवजलान्यादाय॥ॐअद्याऽस्मन्मात्रादित्रयपित्रादित्रयमातामहादित्रयश्राद्धसंबंधिनःसत्यवसुसंज्ञकाविश्वेदेवा इदंकौशमासनंवोनमः॥ इति
देवद्विजकरयोर्जलंदत्त्वाकुशत्रयरूपंसयवंब्राह्मणासनदक्षिणभागस्योपरि देवतीर्थेनपूर्वाग्रमुत्सृजेत्॥नद्विजकरयोर्दद्यात्॥ततः ॐअद्यामुकगो
त्राऽस्मन्मातृपितामहीप्रपितामह्यःनांदीमुख्यः इदमासनंत्रेधाविभज्य वः स्वाहा ॥ इत्युच्चार्यमातृवर्गविप्रकरयोर्जलंदत्त्वा कंबलाद्यासनद
क्षिणभागस्योपरिदेवतीर्थेनपूर्वाग्रं कुशत्रयमुत्सृजेत् ॥ एवमेवपित्रादिमातामहादिवर्गद्वयब्राह्मणासनोपरिदद्यात् ॥ ततः ॐसत्यवसुसं
ज्ञकविश्वान्देवानावाहयिष्ये ॥ इतिदेवद्विजौपृष्ट्वा ॥ आवाहयइत्यनुज्ञातः सयवकरो द्विजांगुष्ठौगृहीत्वा ॥ ॐविश्वेदेवासऽआगंतशृ
णुतामऽइमर्ठ॑हवंम् ॥ एदंबर्हिर्निषीदत ॥ इत्यावाह्य ॐयवोसियवयास्मद्द्वेषोयवयारातीत्यनेनयवान्विकीर्य ॥ ॐ विश्वेदेवा ꣳ शृणुतेमर्ठ॑
हवंम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ॥येऽअग्निजिह्वाऽउतवायजंत्राऽआसद्यास्मिन्बर्हिषिमादयध्वम् इतिजपेत् ॥ विश्वेदेवोत्पत्तिनाम्नोरज्ञाने ॥
ॐ आगच्छंतुमहाभागा विश्वेदेवामहाबलाः॥येयत्रयोजिताःश्राद्धे सावधानाभवंतुते ॥ इतिश्लोकंपठेत् ॥ ततःॐनांदीमुखीमातॄरावाहयिष्ये
इतिमातृवर्गब्राह्मणौपृष्ट्वा आवाहयेत्यनुज्ञातः सयवकरो ब्राह्मणयोर्दक्षिणकरांगुष्ठौगृहीत्वा ॐ उशन्तस्त्वानिधीमह्युशन्तःसमिधीमहि॥ उश
न्नुशतऽआवहमातॄन्हविषेऽअत्तवे ॥ इत्यावाह्य प्रदक्षिणकर्मणा यवान् विकीर्य ॥ एवमेवपित्रादिब्राह्मणयोश्चपूर्वोक्तप्रयोगेन ॐपितॄन् हविषे
अत्तवे ॥ मातामहान्हविषेऽअत्तवे इतिमंत्रोहेन यथाक्रमंपित्रादीन्मातामहादींश्चावाह्य प्रदक्षिणं यवान्विकिरेत् ॥ ततोदेवपूर्वकंदशसुस्वर्णा

ग्र्घपात्रेषु प्रतिपात्रं पवित्रंनिधाय ॐशन्नोदेवीरभिष्टय आपोभवंतुपीतये शंय्योरभिस्रवंतुनः इतिप्रत्येकंपात्रेष्वपोनिषिच्य ॐयवो
सियववयास्म्मद्द्वेषोयववयारातीरितिदेवपात्रेषु यवान्निक्षिप्य ॥ ॐयवोसिसोमदैवत्यो गोसवोदेवनिर्मितः॥ प्रत्नमद्भिःपृक्तःपुष्ठ्यानांदीमुखाँल्लो
कान् प्रीणाहिनः स्वाहा इतिमंत्रेणमात्राद्यर्घपात्रेषु यवान् क्षिपेत् ॥ ततः सर्वत्र तूष्णींगंधपुष्पेचदत्त्वा द्वितीयब्राह्मणहस्तेप्रथमदेवाविप्र
करं निधायतत्रप्रागग्रेदैवार्घपात्रस्थपवित्रेविन्यस्यदक्षिणहस्तेनाऽर्घपात्रमादाय ॐयादिव्याऽआपः पयसासंबभूवुर्या अंतरिक्षाऽउतपार्थिवी
र्याः॥हिरण्यवर्णायज्ञियास्तानऽआपः शिवाः सꣳस्योनाः सुहवाभवंतु इत्यभिमंत्र्य ॐअस्मन्मात्रादिपित्रादिमातामहादित्रयनांदी
श्राद्धसंबंधिनः सत्यवसुसंज्ञकाविश्वेदेवा एषवोर्घोनमः ॥ इति दैवतीर्थेनपवित्रोपरि अर्घंदद्यात् ॥ एवमेव मातृवर्गद्वितीयब्राह्मणकरे
प्रथमब्राह्मणकरं निधाय तत्र प्रागग्रंमात्रर्घपात्रस्थंपवित्रंन्यस्य ॥ अर्घपात्रमादाय ॐयादिव्याऽआपइत्यभिमंत्र्य ॐअद्यामुकगोत्रेऽस्म
न्मातरमुकदेविनांदीमुखिएषतेऽर्घः स्वाहानमइतिदैवतीर्थेनार्घंदत्त्वातत्रैवपितामहीपात्रस्थंपवित्रंप्रागग्रंनिधाय ॥ ॐयादिव्याइत्यभिमंत्र्यगो
त्राद्युच्चारणपूर्वकंपितामह्यैप्राग्वदर्घंदत्त्वाएवमेवप्रपितामह्यैचार्घंदद्यात् ॥ ततः पित्रादिद्वितीयद्विजकरेप्रथमद्विजकरंनिधाय तत्रक्रमेणप्राग
ग्रपवित्रनिधानादिपूर्वोक्तप्रकारेणपित्रेपितामहायप्रपितामहायचार्घंप्रत्येकंदत्त्वा तेनैवक्रमेणमातामहादिभ्यः पवित्रदानपूर्वकं प्रत्येकमर्घं
दद्यात् ॥ ततः ॐ विश्वेभ्योदेवेभ्यः स्थानमसीत्युक्त्वापवित्रजलयुतंदेवार्घपात्रंप्रथमब्राह्मणदक्षिणपार्श्वेउत्तानंस्थापयेत् ॥ ततः पितामही
प्रपितामहीपात्रद्वयस्थितंपवित्रादि मात्रर्घपात्रेकृत्वा ॐनांदीमुखीभ्योमातृभ्यः स्थानमसीतिमातृपात्रंविप्रदक्षिणपार्श्वेन्युब्जं कुर्यात् एव

मेवापितृपात्रेपितामहादिसंस्रवान् ॥ मातामहपात्रे प्रमातामहादिसंस्रवांश्च समवनीय ॐ नांदीमुखेभ्यः पितृभ्यः स्थानमसि ॐ नांदीमुखे भ्योमातामहेभ्यः स्थानमसीतिचोक्त्वा स्वस्वविप्रदक्षिणपार्श्वेन्युब्जं कुर्यात्॥ ततः स्वस्वपात्रद्वयेनाच्छादयेत्॥ एतानिस्थापितान्यर्घपात्राणिदक्षिणादानपर्यंतंनोद्धरेन्नचालयेत् ॥ ततोगंधादिदानम् ॥ तत्र अष्टसुब्राह्मणेषुगंधपुष्पधूपदीपवस्त्रादिप्रत्येकंसन्निधायतदीयकरेषुप्रत्येकंजलमासिच्यकुशत्रययवजलान्यादाय ॐ अद्यास्मन्मात्रादित्रयपित्रादित्रयमातामहादित्रयश्राद्धसंबंधिनः सत्यवसुसंज्ञका विश्वेदेवाः एतानिगंधपुष्पधूपदीपतांबूलवासांसिवोनमइत्युच्चार्यगंधादिदद्यात् ॥ ततः अयं वोगंधइत्यभिधाय ब्राह्मणहस्तेषुप्रत्येकंगंधमर्पयेत् ॐ सुगंध इतितैरुक्ते ॥ ॐ इमानिवः पुष्पाणि इति पुष्पाणि निवेदयेत् ॐ सुपुष्पाणीतितैरुक्ते ॥ ॐ अयंवोधूपः ॐ सुधूपः ॥ ॐ अयं वोदीपः ॐसुदीपः ॥ ॐएतानिवोवासांसि ॐसुवासांसि इतितैरुक्ते ॥ इत्यादिक्रमेणप्रत्येकंब्राह्मणेभ्यो गंधादिप्रतिपादयेत् ॥ तैश्चपुष्पं शिखातिरिक्तदेशे न धार्यम् ॥ अत्रावसरे अन्यदपितांबूलयज्ञोपवीताभरणकमंडलुप्रभृतीनिफलार्थितया दद्यात् ॥ ततः कुशत्रययवजलान्यादाय ॐ अद्यामुकगोत्राः मातृपितामहीप्रपितामह्यः नांदीमुख्यः एतानि गंधपुष्पधूपदीपतांबूलसिंदूरवासांसित्रेधाविभज्य वः स्वाहा इत्यभिधाय गंधादिदत्त्वा एवमेव पित्रादिमातामहादिब्राह्मणेषु द्वयोर्द्वयोः क्रमेणगोत्राद्युच्चारणपूर्वकं सकुशयवजलेनगंधादीनिसंकल्प्यपूर्ववद्दद्यात् ॥ एवंगंधादि दत्त्वा कृतांजलिर्भूत्वा अर्चनंसंपूर्णमस्त्वितिद्विजान्प्रतिब्रूयात् अस्त्वर्चनंसंपूर्णमितिविप्रावदेयुः ॥ ततोभोजनपात्रस्थापनदेशंसंमार्ज्य तत्र गौरमृत्तिकाभस्मतंडुलचूर्णादिभिर्मंडलं प्रत्येकं कृत्वा भोजनपात्राणि च दत्त्वा हस्तप्रक्षालनार्थं प्रत्येकं जलं दद्यात् ॥ ततोघृतप्लुतमन्नं पात्रे कृत्वा आर्द्रामलकमात्रं गृहीत्वा ॐ अग्नौकरिष्ये

इतिपृष्ट्वा ॥ कुरुष्वेत्यनुज्ञातोऽग्निमानग्नौ निरग्निकस्तु पित्र्यपंक्तिमूर्द्धन्यहस्ते प्राङ्मुखः अग्नये कव्यवाहनायस्वाहा इदमग्नयेकव्य
वाहनाय ॥ सोमायपितृमतेस्वाहा इदं सोमायपितृमते इत्याहुतिद्वयंदत्त्वाशेषं दैवपात्रवर्ज्जमात्रादिपात्रेषुकिंचित् किंचिद्दद्यात् ॥ नहि
स्मृताः शेषभाजोविश्वेदेवाः पुराणगैरितिवायुपुराणवाक्यात् ॥ ततोऽष्टस्वपिपात्रेषुयथासंभवमन्नं परिविष्य पात्रांतरस्थंजलंघृतंव्यंजनं
चोपनीय ॥ उत्तानाभ्यांपाणिभ्यां पात्रमालभ्यजपति ॥ ॐ पृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वाहा इति ॐ
इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम्॥समूढमस्यपाᳬंसुरे स्वाहा॥इतिचपठित्वा ॐ विष्णोहव्यᳬंरक्ष इत्यनयाविप्रांगुष्ठमन्नेऽवगाह्य इदमन्नम् इमा
आपः इदमाज्यम् इदंहविरित्युक्त्वा॥ ॐअपहताऽअसुरारक्षाᳬंसिवेदिषदः॥इतियवान्पात्रपरितो विकीर्य्य एवमेवद्वितीयपात्रस्थमन्नंसंस्कृत्य
वामकरेण भोजनपात्रद्वयमालभ्य कुशत्रययवजलान्यादाय ॐअद्यामुकगोत्रास्मन्मात्रादित्रयपित्रादित्रयमातामहादित्रयनांदीश्राद्धसंबंधि
नःसत्यवसुनामानोविश्वेदेवाः इदमन्नंघृताद्युपस्करसहितंपरिविष्टंपरिवेक्ष्यमाणंचद्विजयोस्तृप्तिपर्यंतम् अमृतरूपं वोनम इतिसंकल्प्यविप्रदक्षि
णभागेजलसमुत्सृजेत् ॥ एवमेवमात्रादिपात्रद्वयंक्रमेण विप्रांगुष्ठाऽवगाहनयवविकिरणैः संस्कृत्य भोजनपात्रद्वयमालभ्य ॐअमुकगोत्राऽस्म
न्मातृपितामहीप्रपितामह्योऽमुकाऽमुकदेव्योनांदीमुख्य इदमन्नंघृताद्युपस्करसहितं परिविष्टंपरिवेक्ष्यमाणंचद्विजयोस्तृप्तिपर्य्यंतममृतरूपं
त्रेधाविभज्यवः स्वाहानमः ॥ इत्युत्सृजेत् ॥ एवमेवपित्रादिपात्रद्वयंमातामहादिपात्रद्वयंचक्रमेण पात्रालंभनादिपूर्व्वकंसंकल्प्यदद्यात् ॥
ततः ॐअन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत्॥तत्सर्वमच्छिद्रमस्तु इतिप्रार्थ्य ॥ विप्रान्नांदीमुखान्मात्रादिरूपान्ध्यात्वा दैवपूर्वकं ब्राह्मणा

नामापोशानंदत्त्वा यथासुखंजुषध्वमित्युक्त्वाभोजयेत्॥ततः अश्नत्सुविप्रेषुप्रागग्रकुशोत्तरासनोपविष्टः प्रणवव्याहृतिपूर्विकांसकृत्रिर्वागायत्रीं जप्त्वा ॐमधुमधुमध्वितिचजपेत् न मधुवाता इतियृचं नापित्रृमंत्रान् ततः ॐकृणुष्वपाजः प्रसितिन्नपृथ्वींय्याहिराजेवामवाँऽइभेन ॥ तृष्वीमनुप्रसितिन्द्रूणानोस्तासिविद्ध्यरक्षसस्तपिष्ठैः ॥ १ ॥ ॐतवभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः ॥ तपूंष्यग्ने जुह्वापतङ्गानसंन्दितोविसृजविष्वगुल्काः ॥ २ ॥ प्रतिस्पशो विसृज तूर्णितमोभवापायुर्विशोऽअस्याऽअदब्धः ॥ योनोदूरेऽअघशंसो योऽअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥३॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ२ऽओषतात्तिग्महेते॥योनोऽअरातिंसमिधानचक्रे नीचातंधक्ष्यतसन्नशुष्कम् ॥४॥ ऊर्ध्वोभवप्रतिविद्ध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनांजामिमजामिम्प्रमृणीहिशत्रून् ॥ अग्नेष्ट्वातेजसासादयामि ॥ ५ ॥ इतिरक्षोघ्नसूक्तम् ॥ ॐपुनन्तुमादेवजनाइत्यादिपवमानम् ॥ ॐसहस्रशीर्षापुरुषइत्यादिपुरुषसूक्तम् ॥ अन्यानि शिवसंकल्पमास्त्वित्यादिपवित्राणिचजपेत् ॥ ततस्तृप्तान् ज्ञात्वा सर्वव्यञ्जनोपेतमन्नाद्यमादाय वारिणाप्लाव्यप्रागग्रास्तृतकुशोपरि ॥ ॐ अग्निदग्धाश्चयेजीवा येप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यन्तु तृप्तायांतुपरांगतिमितिविकीर्यद्विराचम्य विष्णुमनुस्मृत्य विप्रेभ्यः सकृत्सकृदपोदत्त्वापूर्ववत् गायत्रीं मधुमधुमध्वितिजप्त्वा ॐ संपन्नम् इतिब्राह्मणान्पृष्ट्वा ॥ सुसंपन्नमितितैरुक्ते ॥ शेषमन्नं किंक्रियतामितिपृष्ट्वा ॥ इष्टैः सह भुज्यतामित्यनुज्ञातः पिंडानहंकरिष्ये इतिपृच्छेत् ॥ कुरुष्व इत्युक्ते भोजनशालायाबहिः चतुरस्रं प्राक्प्लवंसिकताभिर्मंडलत्रयंकृत्वातन्मध्ये ॐअपहताऽअसुरारक्षांसिवेदिषदः ॥ इति प्रागग्रं रेखात्रयंकृत्वा

प्रत्येकंरेखोपरि ॐयेरूपाणिप्रतिमुञ्चमाना असुराः संतः स्वाहयाचरंति परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकान् प्रणुदात्यस्मादित्यं गारंभ्रामयेत् ॥ तत्ररेखात्रयोपरि सकृदाच्छिन्नान् प्रागग्रान्कुशानास्तीर्य ॥ ॐ देवताभ्यइतित्रिर्जप्त्वाप्रथममंडलस्थदर्भ मूले ॐ अद्यामुकगोत्रे मातरमुकदेविनांदीमुखि अत्राऽवनेनिक्ष्वतेस्वाहा इतियवसहितजलेन मात्रे अवनेजनंदत्त्वाएवमेव पितामही प्रपितामहीभ्यांमध्याग्रयोःक्रमेण दद्यात् ॥ ततः ॐअद्यामुकगोत्रपितरमुकशर्मन् नांदीमुखात्रावनेनिक्ष्वतेस्वाहा इतिद्वितीय मंडलस्थितकुशत्रयमूलेऽवनेजनंदत्त्वा एवंपितामहप्रपितामहयोस्तत्तत्कुशमध्याग्रयोरवनेजनंदद्यात् ॥ एवमेव मातामहादिदर्भमूलम ध्याग्रेषुदद्यात् ॥ ततःसर्व्वव्यंजनोपेतं सर्व्वविधमन्नमुद्धृत्यदधिबदरयवैः संमिश्र्य नवपिंडान् बिल्वोपमान्निर्माय एकंपिंडं कुशादींश्चा दाय ॐअद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि एषदधिबदराक्षतमिश्रः पिंडस्तेनमः ॥ इत्यवनेजनक्रमेणावनेजनस्थानेषु मात्रादिभ्यः पिंडान्दद्यात् ॥ ततः ॐअद्यामुकगोत्र पितरमुकशर्मन् नांदीमुख एषदधिबदराक्षतमिश्रःपिंडस्तेनमः ॥ इति पितृस्थानेदद्यात् ॥ एवमेव पितामहादिभ्यः पंचभ्यस्तत्तदवनेजनस्थाने पिंडान् दद्यात् ॥ ततोदर्भमूलेषु पाणिस्थं पिंडलेपंनिमृज्य ॥ हस्तौप्रक्षाल्याचम्य हरिंस्म रेत् ॥ ततो मात्रादिपिंडाभिमुखोंजलिंबद्ध्वा ॥ ॐअत्रमातरोमादयध्वंयथाभागमावृषायध्वमितिजपित्वा उदङ्मुखीभूयश्वासंनियम्यप्र दक्षिणंपरावृत्य॥ॐअमीमदंतमातरोयथाभागमावृषायिषतेतिजपेत् एवं पित्रादिपिंडाभिमुखः ॐअत्रपितरोमादयध्वमित्यादिजपित्वा ॥ मातामहादिपिंडाभिमुखोभूत्वा ॐअत्रमातामहादयोमादयध्वमित्यादिचजपित्वा प्रदक्षिणंपरावृत्योदङ्मुखोऽसून्नियम्य तथैवपरावृत्य

नामापोशानंदत्त्वा यथासुखंजुषध्वमित्युक्त्वाभोजयेत्॥ततः अश्नत्सुविप्रेषुप्रागग्रकुशोत्तरासनोपविष्टः प्रणवव्याहृतिपूर्विकांसकृत्त्रिर्वागायत्रीं
जप्त्वा ॐमधुमधुमध्विति चजपेत् न मधुवाता इतियृचं नापित्र्यमंत्रान् ततः ॐकृणुष्वपाजः प्रसितिन्नपृथ्वींयाहिराजेवामवाँऽइभेन ॥
तृष्वीमनुप्रसितिन्द्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ १ ॥ ॐतवभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः ॥ तपूंष्यग्ने
जुह्वापतङ्गानसन्दितोविसृजविष्वगुल्काः ॥ २ ॥ प्रतिस्पशो विसृज तूर्णितमोभवापायुर्विशोऽअस्याऽअदब्धः ॥ योनोदूरेऽअघशंसो
योऽअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥३॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ२ऽओषतात्तिग्महेते॥योनोऽअरातिंसमिधानचक्रे नीचातंधं
क्ष्यतसन्नशुष्कम् ॥४॥ ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनांजामिमजामिम्प्रमृणीहिशत्रून् ॥
अग्नेष्ट्वातेजसासादयामि ॥ ५ ॥ इतिरक्षोघ्नसूक्तम् ॥ ॐपुनन्तुमादेवजनाइत्यादिपवमानम् ॥ ॐसहस्रशीर्षापुरुषइत्यादिपुरुषसूक्तम् ॥
अन्यानि शिवसंकल्पमास्त्वित्यादिपवित्राणिचजपेत् ॥ ततस्तृप्तान् ज्ञात्वा सर्वव्यञ्जनोपेतमन्नाद्यमादाय वारिणाप्लाव्यप्राग
ग्रास्तृतकुशोपरि ॥ ॐ अग्निदग्धाश्चयेजीवा येप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यन्तु तृप्तायांतुपरांगतिमितिविकीर्यद्विराचम्य
विष्णुमनुस्मृत्य विप्रेभ्यः सकृत्सकृदपोदत्त्वापूर्ववत् गायत्रीं मधुमधुमध्वितिजप्त्वा ॐ संपन्नम् इतिब्राह्मणान्पृष्ट्वा ॥ सुसंपन्न
मितितैरुक्ते ॥ शेषमन्नं किंक्रियतामितिपृष्ट्वा ॥ इष्टैः सह भुज्यतामित्यनुज्ञातः पिंडानहंकरिष्ये इतिपृच्छेत् ॥ कुरुष्व इत्युक्ते
भोजनशालायाबहिः चतुरस्रं प्राक्प्लवंसिकताभिर्मंडलत्रयंकृत्वातन्मध्ये ॐअपहताऽअसुरारक्षांसिवेदिषदः ॥ इति प्रागग्रं रेखात्रयंकृत्वा

ततोयत्पापं तत्प्रतिहतमस्त्विति भूमौनिषिच्यद्विपदचतुष्पदेभ्यः शांतिर्भवत्वित्युक्त्वा ॥ मात्रादि प्रथमब्राह्मणकरं द्वितीय ब्राह्मणकरे कृत्वा ॥ नांदीमुख्योमातरः पितामह्यः प्रपितामह्यः प्रीयंतामितिक्षीरयवोदकमक्षय्यस्थाने दत्त्वैवमेवपितरः पितामहाः प्रपितामहाः प्रीयंतामिति पित्रादिद्विजद्वयकरे दत्त्वा ॥ मातामहाः प्रमातामहाः वृद्धप्रमातामहाः सपत्नीकाः प्रीयंतामितिमातामहादित्रयद्विजद्वयकरेच प्रत्येकं दद्यात् ॥ ततःकृतांजलिः प्रार्थयेत् ॥ ॐअघोरामातरः संतु ॥ संत्विति ब्राह्मणाब्रूयुः ॥ ॐअघोराः पितरः संतु ॥ ॐअघोरामातामहाःसंत्वितिचोक्त्वा ॥ संत्वित्यनुज्ञातः ॐगोत्रंनोवर्द्धतामितिप्रार्थयेत् ॥ वर्द्धतामितिविप्राब्रूयुः ॥ दातारोनोभिवर्द्धताम् ॥ वेदाःसंततिरेवच ॥ श्रद्धाचनोमाव्यगमत् ॥ बहुदेयंचनोऽस्तु ॥ अन्नंचनोबहुभवेत् ॥ अतिथींश्चलभेमहि ॥ याचितारश्चनःसंतु॥ माचयाचिष्मकंचन ॥ एताःसत्याआशिषःसंतु इतिब्रूयात् ॥ सन्त्वितितैरुक्ते ॥ सपवित्रान्कुशान् प्रत्येकंमात्रादित्रयपिंडेपित्रादित्रयपिंडे मातामहादित्रयपिंडेच धृत्वानांदीमुखीमातृपितामहीप्रपितामहीः नांदीमुखान् पितृपितामहप्रपितामहान् नांदीमुखान् मातामहप्रमातामहवृद्धप्रमातामहान् सपत्नीकान्स्वाहा वाचयिष्य इतिपृष्ट्वावाच्यतामित्यनुज्ञातः ॥ ॐनांदीमुख्योमातृपितामहीप्रपितामह्योनांदीमुखाः पितृपितामहप्रपितामहाःनांदीमुखामातामहप्रमातामहवृद्धप्रमातामहासपत्नीकाश्चप्रीयंतामितिप्रार्थयेत् ॥ प्रीयंतामितिद्विजैरुच्यमानोपिंडेषु जलंनिषिंचेत ॥ ततःसंस्रवपात्राण्युत्तानीकृत्यदेवदक्षिणांदद्यात् ॥ कुशत्रययवजलान्यादाय ॐ अद्यास्मन्मात्रादित्रयपित्रादित्रयमातामहादित्रयाभ्युदयिकश्राद्धसंबंधिवैश्वदेविकश्राद्धप्रतिष्ठार्थमिमांद्राक्षामलकार्द्रकमूलकादिरूपांदक्षिणांविष्णुदैवत्यामसुकामुकगोत्राभ्यामसुकामुकशर्मभ्यांभवद्भ्यांदातुमहमुत्सृजे इत्युच्चार्य देवविप्रद्वयकरयोर्दद्यात् ॥ ततः ॐअद्यामुकगोत्राणांमातृपितामहीप्रपितामहीनां नांदीमुखीनां कृतै

नामापोशानंदत्त्वा यथासुखंजुषध्वमित्युक्त्वाभोजयेत्॥ततः अश्नत्सुविप्रेषुप्रागग्रकुशोत्तरासनोपविष्टः प्रणवव्याहृतिपूर्विकांसकृत्त्रिर्वागायत्रीं जप्त्वा ॐमधुमधुमध्वितिचजपेत् न मधुवाता इतिऋचं नापित्र्यमंत्रान् ततः ॐकृणुष्वपाजः प्रसितिन्नपृथ्वींय्याहिराजेवामवाँऽइभेन ॥ तृष्वीमनुप्रसितिन्द्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ १ ॥ ॐतवभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः ॥ तपूंष्यग्ने जुह्वापतङ्गानसन्दितोव्विसृजव्विष्वगुल्काः ॥ २ ॥ प्रतिस्पशो व्विसृज तूर्णितमोभवापायुर्व्विशोऽअस्याऽअदब्धः ॥ योनोदूरेऽअघशंसो योऽअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥३॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ२ऽओषतात्तिग्महेते॥योनोऽअरातिंसमिधानचक्रे नीचातन्धक्ष्यतसन्नशुष्कम् ॥४॥ ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनांजामिमजामिम्प्रमृणीहिशत्रून् ॥ अग्नेष्ट्वातेजसासादयामि ॥ ५ ॥ इतिरक्षोघ्नसूक्तम् ॥ ॐपुनन्तुमादेवजनाइत्यादिपवमानम् ॥ ॐसहस्रशीर्षापुरुषइत्यादिपुरुषसूक्तम् ॥ अन्यानि शिवसंकल्पमास्त्वित्यादिपवित्राणिचजपेत् ॥ ततस्तृप्तान् ज्ञात्वा सर्वव्यञ्जनोपेतमन्नाद्यमादाय वारिणाप्लाव्यप्रागग्रास्तृतकुशोपरि ॥ ॐ अग्निदग्धाश्चयेजीवा येप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यन्तु तृप्तायांतुपरांगतिमितिविकीर्यद्विराचम्य विष्णुमनुस्मृत्य विप्रेभ्यः सकृत्सकृदपोदत्त्वापूर्ववत् गायत्रीं मधुमधुमध्वितिजप्त्वा ॐ संपन्नम् इतिब्राह्मणान्पृष्ट्वा ॥ सुसंपन्नमितितैरुक्ते ॥ शेषमन्नं किंक्रियतामितिपृष्ट्वा ॥ इष्टैः सह भुज्यतामित्यनुज्ञातः पिंडानहंकरिष्ये इतिपृच्छेत् ॥ कुरुष्व इत्युक्ते भोजनशालायाबहिः चतुरस्रं प्राक्प्लवंसिकताभिर्मंडलत्रयंकृत्वातन्मध्ये ॐअपहताऽअसुरारक्षांसिवेदिषदः ॥ इति प्रागग्रं रेखात्रयंकृत्वा

दत्त्वाअपराह्ने ब्राह्मणान्स्नातान् शुचिः शुक्लद्विवासाः कृतांजलिः स्वागतं भवतामितिब्रूयात् सुस्वागतमितितैरुक्ते पूर्वकृतगोमयमंडलद्वये
आसनेषुप्राङ्मुखान् देवब्राह्मणान् उदङ्मुखान् तितृब्राह्मणानुपवेशयेत् ॥ ततः सव्येनाऽऽचम्य सजवनं दक्षिणंजान्वाच्य विप्रकरे पुष्पचं
दनतांबूलानिदत्त्वादक्षिणकरेण ब्राह्मणदक्षिणजानुस्पृष्ट्वा ॥ देशकालौसंकीर्त्य अद्यकरिष्यमाणाऽन्वष्टकाश्राद्धेऽस्मत्पित्रादित्रयसंबंधि
विश्वेदेवश्राद्धार्थं त्वामहमामंत्रये इतिब्राह्मणमेकंनिमंत्र्य एवमेवमात्रादित्रयमातामहादित्रयसंबंधिविश्वेदेवश्राद्धार्थंच विप्रद्वयंनिमंत्रयेत् ॥
निमंत्रितोस्मीतिप्रतिवचनम् ॥ ततः अक्रोधनैःशौचपरैः सततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिश्च मयाचश्राद्धकारिणा ॥ इतिप्रार्थयेत् ॥
ततोऽपसव्येनवामंजान्वाच्य पितृब्राह्मणकरे पुष्पचंदनतांबूलानिदत्त्वा दक्षिणकरेण विप्रद्क्षिणजानुस्पृष्ट्वा ॐअद्यकरिष्यमाणान्वष्ट
काश्राद्धे अस्मत्पित्रादित्रयश्राद्धार्थंत्वामहमामंत्रये निमंत्रितोस्मीतिप्रतिवचनम् ॥ एवंमात्रादित्रयमातामहादित्रयश्राद्धद्वयार्थं च द्वौ
विप्रौनिमंत्र्य ततः अक्रोधनैः शौचपरैरितिनियमान्श्रावयेत् ॥ एवमस्मिन्पक्षेपड्ब्राह्मणभवंति ॥ मुख्यकल्पशक्तस्तु पंचदशद्वादश
एकादशवाविप्रान्निमंत्रयेत् ॥ ततः सव्येन ॐ विश्वेदेवाः इदंवः पाद्यंस्वाहानमइति देवविप्रपादौक्रमेणप्रक्षाल्यपादयोरर्घ्यंदत्त्वातेभ्यआच
मनार्थंजलंदद्यात् ॥ ततोऽपसव्येन ॐ अमुकगोत्राऽस्मत्पितृपितामहप्रपितामहाऽमुकामुकशर्माणोवसुरुद्रादित्यरूपाः इदंवः पाद्यंस्वध
नमः इत्युच्चार्यपितृब्राह्मणपादौप्रक्षाल्यएवमेव मात्रादित्रयमातामहादित्रयब्राह्मणद्वयस्यक्रमेणपादौप्रक्षालयेत् ॥ ततोनामगोत्राभ्यामर्घ्य
माचमनीयंच पूर्वोक्तपार्वणवद्दत्त्वा सव्येनस्वयमाचम्य ब्राह्मणैः सहश्राद्धस्थानमागत्याऽऽसनेषु अत्रासध्वमिति देवान्प्राङ्मुखान् पितॄनुद
ङ्मुखानुपवेशयेत् ॥ ततः प्रत्यासनसमीपेतिलतैलेनदीपंप्रज्वाल्य काककुक्कुटादीनपसारयेत् ॥ श्राद्धदेशावरणंचकुर्यात् ॥ इतिनिमंत्रणप्र

कारः ॥ ततः श्राद्धकर्त्तास्वासनेप्राङ्मुखउपविश्य सव्येनाचम्य ॐ अपवित्रः पवित्र इति ॐ पुंडरीकाक्षः पुनात्वितिच पठित्वाश्राद्धीय
द्रव्याणिस्वात्मानंचसिंचेत् ॥ ततः ॐ वैष्णव्यैनमः ॐकाश्यप्यैनमः ॐ अक्षयायैनमः ॐभूम्यैनमः इतिनत्वा ॐभगवत्यैगयायै
नमः ॥ ॐ भगवतेगदाधरायनमः इतितयोर्नमस्कारंकुर्यात् ॥ ततः कुशत्रयतिलजलान्यादाय देशकालौसंकीर्त्य ॐ
अद्यामुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणामस्मन्मातृपितामहीप्रपितामहीनाममुकामुकदेवीनाममुक
गोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां सपत्नीकानां विश्वेदेवपूर्वकं सपिंडकमन्वष्टकाश्राद्धं पिंड
पितृयज्ञव्यतिरिक्तपार्वणविधानेनपितृतृप्तिकामोहंकरिष्ये इतिसंकल्प्य ॐ कुरुष्व इतिब्राह्मणानुज्ञातो गायत्रींत्रिर्जपित्वा ॐ
देवताभ्यइतित्रिर्जपेत् ॥ ततः ॐ नमोनमस्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः इति ॥
दैवकप्रदेशेयवगौरसर्षपान्विकीर्य अपसव्येन ॐ तिलारक्षंतु असुराद्भर्यारक्षंतुराक्षसात् ॥ वह्निर्वैश्रोत्रियंरक्षेदातिथिःसर्व्वरक्षक इति
तिलकुशान्द्वारदेशेक्षिप्त्वा ॐ अग्निष्वात्ताः पितृगणा इत्यादिमंत्रैः सर्वत्रपैतृकप्रदेशेतिलान् गौरसर्षपांश्चविकीर्य्यदक्षिणेवामेवाकटि
भागेनीवीबंधंकुर्यात् ॥ ततःसव्यंकृत्वा ॐ यद्देवा देवहेडनमित्यादिकूष्मांडमंत्रैर्जलमभिमंत्र्यतेनदर्भैःपाकादीन्प्रोक्ष्य हरयेनिवे
दयेत् ॥ अथासनादिदानम् ॥ तत्रतावत् उदङ्मुखोदक्षिणंजान्वाच्ययज्ञोपवीतीजलयवसमन्वितमृजुकुशत्रयमादाय ॐअद्यपित्रादित्रय
श्राद्धसंबंधिनोविश्वेदेवाइदमासनंवोनमइत्युच्चार्य्यद्विजहस्तेजलमासिच्य आसनदक्षिणभागस्योपरिदेवतीर्थेनपूर्वाग्रंकुशत्रयंप्रक्षिपेत् ॥
एवंमात्रादित्रयमातामहादित्रयसंबंधिदेवेभ्योपिदद्यात् ॥ ततोदक्षिणामुखः प्राचीनावीती पातितवामजानुः द्विगुणभुग्नकुशत्रय

तिलजलान्यादाय ॐ अद्यामुकगोत्राऽस्मत्पितृपितामहप्रपितामहाऽमुकामुकशर्माणोवसुरुद्रादित्यरूपा इदमासनंत्रेधाविभज्ययुष्मभ्यं स्वधा ॥ इत्युच्चार्य्य विप्रहस्तेजलंदत्त्वाकंबलाद्यासनवामभागस्योपरि पितृतीर्थेनमोटकं दक्षिणाग्रमुत्सृजेत् ॥ एवमेवमात्रादिमातामहादिवर्गद्वयब्राह्मणासनोपरिदद्यात् ॥ ततः सव्यादिना ॐ विश्वेदेवानावाहयिष्ये इतिदेवब्राह्मणंपृष्ट्वा ॐ आवाहय इत्यनुज्ञातः सयवकरोद्विजाङ्गुष्ठंगृहीत्वा ॐविश्वेदेवासऽआगतशृणुतामऽइमठंहवम् ॥ एदंबर्हिर्निषीदत ॥ इत्यावाह्य ॐयवोसियवयास्मद्द्वेषोयवयारातीरित्यनेनयवान् विकीर्य ॐविश्वेदेवाःशृणुतेमठंहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ॥येऽअग्निजिह्वाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषिमादयध्वम् इतिजपेत् ॥ ॐआगच्छंतुमहाभागाविश्वेदेवामहाबलाः ॥ येयत्रयोजिताःश्राद्धे सावधानाभवंतुतेइतिश्लोकंचपठेत् ॥ ततोऽपसव्यादिना ॐ पितॄनावाहयिष्ये इतिपितृवर्गब्राह्मणंपृष्ट्वा ॐ आवाहयेत्यनुज्ञातः सतिलकरो ब्राह्मणदक्षिणांगुष्ठंगृहीत्वा ॐ उशन्तस्त्वानिधीमह्युशन्तःसमिधीमहि ॥ उशन्नुशतऽआवहपितॄन्हविषेऽअत्तवे॥ इत्यावाह्य ॐअपहताऽअसुरारक्षाठंसिव्वेदिषदः॥इतितिलान् विकीर्य्यएवमेव मात्रादिमातामहादिवर्गब्राह्मणयोश्चपूर्वोक्तप्रयोगेण ॐमातर्हविषेऽअत्तवे ॥ मातामहान्हविषेऽअत्तवे इति मंत्रोहेनयथाक्रमं मात्रादीन्मातामहादींश्चावाह्य ॥ तिलान् विकीर्य्य ॐआयन्तुनःपितरः सोम्यासोऽग्निष्वात्ताःपथिभिर्देवयानैः॥ अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेऽवन्त्वस्मान्॥इतिजपेत् ॥ ततः सव्यापसव्याभ्यांदेवपूर्वकंषट्सुपात्रेषुप्रतिपात्रंपवित्रमेकैकंनिधाय ॐशन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये। शंय्योरभिस्रवन्तुनः॥ इतिप्रत्येकंपात्रेष्वपोनिषिच्य ॐयवोसियवयास्मद्द्वेषोयवयारातीरितिदेवपात्रेषुयवान्निक्षिप्य पित्रादिपात्रत्रये ॐ तिलोसिसोमदैवत्यो गोसवोदेवनिर्मितः ॥प्रत्नमद्भिःपृक्तःस्वधयापितॄँल्लोकान्प्रीणाहिनःस्वधानमः इति तिलान्प्रक्षिपेत् ॥ ततःसर्वत्र तूष्णींगंधपुष्पाणिदत्त्वा सव्येनअर्घपात्रं

संपन्नमिति ब्रूयात् सुसंपन्नमित्यनुज्ञातोदेवार्घपात्रंवामहस्तेकृत्वा तत्रस्थपवित्रं देवविप्रकरेप्रागग्रंधृत्वा पात्रंदक्षिणहस्तेनाच्छाद्य ॐयादिव्या ऽआपःपयसासंबभूवुर्य्याऽअन्तरिक्षाउतपार्थिवीर्य्याः॥हिरण्यवर्णा यज्ञियास्तानऽआपःशिवाःसर्ठंस्योनाः सुहवाभवन्तु ॥ इत्यभिमंत्र्य कुश त्रययवजलान्यादाय ॐअस्मत्पित्रादित्रयश्राद्धसंबंधिनोविश्वेदेवाएषवोहस्तार्घोनमः इति देवतीर्थेनपवित्रोपरिअर्घंदद्यात् ॥ एवमेव मातृ वर्गमातामहवर्गदेवेभ्योप्यर्घंदद्यात् ॥ अर्घपात्राणिसपवित्राणिपुरतः स्थापयेत् ॥ ततोऽपसव्यादिना अर्घपात्रंसंपन्नंसुसंपन्नमित्यनंतरंपि तृपात्रंगृहीत्वाविप्रदक्षिणकरे पवित्रमुत्तराग्रंदत्त्वापात्रंदक्षिणहस्तेनाच्छाद्य ॐयादिव्याऽआप इतिपठित्वाद्विगुणभुग्नकुशत्रयातिलजलान्या दाय ॐअसुकगोत्रास्मत्पितृपितामहप्रपितामहामुकामुकशर्माणोवसुरुद्रादित्यरूपाएषहस्तार्घस्तेधाविभज्ययुष्मभ्यंस्वधा इति पितृतीर्थे नपवित्रोपरि अर्घंदद्यात् ॥ अर्घपात्रंचपुरतःस्थापयेत् ॥ एवमेव मात्रादिभ्यो मातामहेभ्यश्चदद्यात् ॥ ततःसव्येनपित्राद्यर्घपात्रजलेनशिरः संमृज्य ॐ विश्वेभ्योदेवेभ्यःस्थानमसीत्युक्त्वापवित्रजलयुतंदेवार्घपात्रत्रयंक्रमेणब्राह्मणदक्षिणपार्श्वेउत्तानमेवस्थापयेत् ॥ ततोऽपसव्येन ॐ पितृभ्यः स्थानमसीतिपितृपात्रं विप्रवामप्रदेशभूमावधोमुखंस्थापयेत् ॥ एवम् ॐमातृभ्यः स्थानमसि ॥ ॐमातामहेभ्यःस्थानमसीति चोक्त्वास्वस्वविप्रवामपार्श्वे न्युब्जंकुर्यात् ॥ एतानिस्थापितान्यर्घपात्राणिदक्षिणादानपर्यंतंनोद्धरेन्नचालयेत् ॥ अथगंधादिदानम् ॥ तत्र सव्यादिकृत्वा देवविप्रकरेषुजलमासिच्य गंधपुष्पधूपदीपवस्त्रादिप्रत्येकंधृत्वा कुशत्रययवजलान्यादाय ॐ अद्याऽस्मत्पित्रादित्रयश्राद्ध संबंधिनोविश्वेदेवाएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसिवोनमः इत्युच्चार्ययथाविभवंदद्यात् ॥ एवमेवमात्रादिमातामहादिदेवे भ्योपिसंकल्प्यदद्यात् ॥ ततः अयंवोगंधः इत्यभिधायब्राह्मणहस्तेषुप्रत्येकंगंधमर्पयेत् ॥ ॐ सुगंध इतितैरुक्ते ॥ ॐ इमानिवः पुष्पाणि

इतिपुष्पाणिनिवेदयेत् ॥ ॐसुपुष्पाणीतितैरुक्ते ॥ ॐअयंवोधूपः ॥ ॐ सुधूपः ॥ ॐ अयंवोदीपः ॥ ॐ सुदीपः ॥ ॐ एतानिवोवासांसि ॥ ॐ सुवासांसि इतितैरुक्ते ॥ इत्यादिक्रमेणप्रत्येकं ब्राह्मणेभ्यः प्रतिपादयेत् ॥ तैश्चपुष्पंशिखातिरिक्तदेशे न धार्यम् ॥ ततःकृतांजलिः कर्त्ता विश्वेषांदेवानामर्चनंसंपूर्णमस्त्वितिद्विजान् प्रतिब्रूयात् ॐ अस्त्वर्चनंसंपूर्णमितिद्विजाब्रूयुः ॥ ततोऽपसव्यादिना पित्रादिविप्रकरेषुजलमासिच्यगंधपुष्पादिप्रत्येकंसन्निधाय द्विगुणभुग्नकुशान्यतिलजलान्यादाय ॐ अमुकगोत्रास्मत्पितृपितामहप्रपितामहाअमुकशर्माणोवसुरुद्रादित्यरूपाएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेयानिभज्ययुष्मभ्यंस्वधा ॥ इति पित्रादिभ्योगंधाद्युत्सृज्य एवमेव मात्रादिभ्योमातामहादिभ्यःसपत्नीकेभ्यश्चदद्यात् ॥ ततः ॐ एषवोगंधः ॥ ॐ एतानिवःपुष्पाणीत्यादिपूर्वोक्तक्रमेणपित्रादिब्राह्मणेभ्यःप्रत्येकंगंधादिप्रतिपाद्यप्रतिवचनानन्तरं कृतांजलिर्भूत्वा ॐपितॄणामर्चनंसंपूर्णमस्त्वितिद्विजान्प्रतिब्रूयात्॥ ॐअस्त्वर्चनंसंपूर्णमितिविप्रावदेयुः ॥ एवंगंधाद्यर्चनंविधायसव्याऽपसव्याभ्यां भोजनपात्रस्थापनदेशंसंमार्ज्य गौरमृत्तिकयाजलेनवाभस्मनीवारचूर्णादिभिर्वामंडलंप्रत्येकंकृत्वाभोजनपात्राणिचदत्त्वाहस्तप्रक्षालनार्थंप्रत्येकंजलंदद्यात् ॥ ततोघृतप्लुतमन्नंकांस्यपात्रेकृत्वा आर्द्रामलकमात्रंगृहीत्वा ॐ अग्नौकरणंकरिष्ये इति पितृब्राह्मणंपृष्ट्वा कुरुष्वेत्यनुज्ञातः पितृवर्गविप्रकरे अपात्रकेजलेएवअपसव्येन दक्षिणाभिमुखः ॥ ॐ अग्नयेकव्यवाहनायस्वाहा इदमग्नयेकव्यवाहनाय ॥ ॐसोमायपितृमतेस्वाहा इदं सोमायपितृमते इत्याहुतिद्वयंजुहुयात् ॥ ततोहुतशेषितमन्नं दैवपात्रवर्ज्यंमात्रादिपात्रेपुर्किंचित्किंचिद्दत्त्वापिंडार्थंचावशेषयेत् ॥ नहिस्मृताः शेषभाजो विश्वेदेवाः पुराणगौरितिवायुपुराणात् ॥ ततः सव्येनदेवपात्रेषु अपसव्येन पितृपात्रेषुचाऽपूपाद्युष्णमन्नंसघृतम् अनेकव्यञ्जनयुतं यथावत्परिविष्यसजलंपात्रंचसंस्थाप्यमधुनाभि

घार्घ्यं ॐ मधुव्वाताऽऋतायते इत्यादिमंत्रत्रयेण ॥ ॐ मधुमधुमध्विति चाभिमंत्रयेत् ॥ ततः सव्येनउत्तानपाणिभ्यांपित्रादिदेवपात्रामलभ्य ॐ पृथिवीतेपात्रंद्यौरपिधानं ब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वाहा इति॥ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳪंसुरेस्वाहा ॥ इतिचपठित्वा ॥ ॐ विष्णोहव्यᳪंरक्ष इत्यनयाविप्रांगुष्ठमन्नेऽवगाह्य इदमन्नम् इमाआपः इदमाज्यम् इदंहविरित्युक्त्वा ॐ अपहताऽअसुरारक्षाᳪंसिवेदिषद इतियवान् अन्नपात्रपरितोविकीर्य्य वामेनकरेणपात्रंस्पृशन् दक्षिणकरेण कुशत्रययवजलान्यादाय ॐ अद्याऽस्मत्पित्रादित्रयश्राद्धसंबंधिनोविश्वेदेवाः इदमन्नंहव्यंसोपस्करं परिविष्टंपरिवेक्ष्यमाणंचब्राह्मणतृप्तिपर्य्यंतम् अमृतरूपं वः स्वाहानमः ॥ इत्युदकंविप्रदक्षिणभागेभूमावेवोत्सृजेत् ॥ एवमेव मात्रादिमातामहादिभ्योप्युत्सृजेत् ॥ ततोऽपसव्यादिना पितृपात्रंन्युब्जपाणिभ्यांव्यस्ताभ्यांस्पृष्ट्वा ॐ पृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेऽअमृतं जुहोमिस्वधा इति पठित्वा ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳪंसुरे ॥ इत्येतामृचंचजप्त्वा ब्राह्मणाङ्गुष्ठमनखमधोमुखम् ॐ विष्णोकव्यᳪंरक्षइतियजुषाऽन्नेनिवेश्य ॥ इदमन्नम् इमाआपः इदमाज्यं इदंहविरित्युक्त्वा ॥ ॐ अपहताऽसुरारक्षाᳪंसिवेदिषदः ॥ इतितिलान् अन्नपात्रपरितोवामावर्त्तेनविकीर्य्य वामकरेणपात्रंस्पृशन् ॥ ॐ अमुकगोत्रास्मत्पितृपितामहप्रपितामहाऽअमुकामुकशर्माणोवसुरुद्रादित्यरूपाः इदमन्नंकव्यंसोपस्करंपरिविष्टंपरिवेक्ष्यमाणंब्राह्मणतृप्तिपर्य्यंतममृतरूपंत्रेधाविभज्ययुष्मभ्यंस्वधा ॥ इत्युदकंपितृतीर्थेनविप्रवामभागेभूमौक्षिपेत् ॥ एवमेवमात्रादिभ्योमातामहेभ्यःसपत्नीकेभ्यश्चाप्युत्सृजेत्॥ततः ॐ अन्नहीनंक्रीयाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्तु इति प्रार्थ्यविप्रान्पित्रादिरूपान् ध्यात्वाब्राह्मणानामापोशानंदत्त्वा ॥ यथासुखंजुषध्वमित्युक्त्वाभोजयेत् ॥ ततअश्नत्सुविप्रेषुप्रणवव्याहृतिपूर्वि

कांसकृत्रिर्वागायत्रींजप्त्वा ॐ मधुवाताऽऋतायते॥इतित्र्यृचम् ॐ मधुमधुमध्वितिचजपेत्॥ततःसव्येनदक्षिणामुखः ॥ ॐ कृणुष्वपाजःप्रासि
तिम् इत्यादिरक्षोघ्नीः पंचऋचःपठित्वाभूमौतिलैरास्तीर्य ॐ उदीरतामवरइत्यादित्रयोदशपितृमंत्रान् ॐ सहस्रशीर्षा इत्यादिपुरुषसूक्तंच
ॐ आशुः शिशानो इत्यादिसप्तदशमंत्रात्मकमप्रतिरथम् ॐ सप्तव्याधाइत्यादिस्तोत्रंचपठित्वा पूर्वोक्तंसप्तार्चिस्तवंपठेत्॥ अन्यान्यपि
वैष्णवादिस्तोत्राणियथाशक्तिब्राह्मणान् श्रावयेत् ॥ ततस्तृप्तान् ज्ञात्वा अपसव्येन उच्छिष्टसन्निधौविप्राणामग्रतोभूमिंप्रोक्ष्यतत्रदक्षिणाग्र
कुशत्रयमास्तीर्य्यसर्वं प्रकारमन्नंसव्यंजनमुद्धृत्यसतिलमेकीकृत्य ॐ अग्निदग्धाश्चयेजीवा येऽप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यन्तु तृप्ता
यान्तुपरांगतिम् ॥ इतिमंत्रेणकुशोपरितदन्नंविकिरेत् ॥ ततःसव्यंकृत्वा आचम्यहरिंस्मृत्वा अपसव्येनाविप्रेभ्यःप्रत्येकंपितृपूर्वकं सकृत्स
कृदपोदत्त्वा गायत्रीम् ॐ मधुव्वाताऽऋतायते इतित्र्यृचंमधुमधुमध्वितिचजप्त्वाउभयान् विप्रान् ॐ तृप्ताःस्थइतिपृष्ट्वा ॥ ॐ तृप्ताःस्मःइतितैरु
क्तेशेषमन्नंकिंक्रियतामितिपृष्ट्वा ॥ इष्टैःसहभुज्यतामित्यनुज्ञातः पिंडानहंकरिष्ये इति पृच्छेत् ॥ ॐ कुरुष्व इत्युक्ते पित्रादिभोजनपात्रस
न्निधौचतुरस्रंदक्षिणप्लवंस्थानत्रयंनिर्माय तेषुमध्येदर्भपिंजूलीमूलेन ॐ अपहताऽअसुरारक्षाᳪसिवेदिषदः इतिदक्षिणाग्रंरेखात्रयंकृत्वा
प्रत्येकंरेखोपरि ॐ येरूपाणिप्रतिमुंचमानाऽअसुराः संतःस्वधयाचरंति ॥ परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मादित्यंगारंभ्रामये
त् ॥ तत्ररेखोपरिसकृदाच्छिन्नदक्षिणाग्रकुशत्रयंप्रत्येकंस्तीर्त्वा सव्येन ॐ देवताभ्य इतित्रिर्जपेत् ॥ ततोऽपसव्येनपुटकनवसुजलतिलगं
धपुष्पाणिकृत्वा एकंपात्रंवामहस्तेकृत्वाद्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐ अमुकगोत्रास्मत्पितरमुकशर्मन्नवसुरूपअत्राऽवनेनि
क्ष्वतेस्वधाइति कुशमूलेपितृतीर्थेनापित्रे अवनेजनजलंकिंचिदवशिष्यदद्यात् ॥ एवंपितामहायकुशत्रयमध्येप्रपितामहायकुशाग्रेअवने

जनंदद्यात्॥एवमेवमात्रादिभ्योमातामहेभ्यश्चदद्यात्॥ ततःसर्वप्रकारमन्नमुद्धृत्यपात्रेकृत्वामध्वाज्यतिलसर्वव्यंजनैःहतशेषान्नेनचसंमिश्र्यनव पिण्डान् बिल्वोपमान्निर्माययमधुघृताभ्यामभिघार्य्यएकंपिंडंकुशादींश्चादाय ॐ असुकगोत्रास्मत्पितरमुकशर्मन्वसुरूपएतत्तेपिंडंस्वधा इतिप्रथमावनेजनस्थानेपितृतीर्थेनदद्यात् ॥ एवमेवपितामहायप्रपितामहायचदद्यात् ॥ ततः ॐअमुकगोत्रेऽस्मन्मातरमुकदेविएतत्ते पिंडंस्वधा इतिमातृस्थानेदद्यात् ॥ एवमेवपितामह्यादिभ्यः पंचभ्यस्तत्तदवनेजनस्थानेपिंडान्दद्यात् ॥ ततोदर्भमूलेषुपाणिस्थं पिंडलेपम् ॐ लेपभागभुजः पितरस्तृप्यन्तुइति निमृज्य जलेनहस्तौप्रक्षाल्यसव्येनत्रिराचम्यहरिंस्मरेत् ॥ ततोऽपसव्यादिना त्रिपादिपिंडाभिमुखोंजलिबद्धा ॥ ॐ अत्रपितरोमादयध्वं यथाभागमावृषायध्वमितिपठित्वा वामावर्त्तेनोदङ्मुखीभूयप्रीतमनाः मना क्श्वासंनियम्य तथैवपरावृत्य ॥ ॐ अमीमदन्तपितरोयथाभागमावृषायिषत इतिजपेत् एवंमात्रादिपिंडेषु ॥ अत्रमातरोमादयध्वंयथा भागमावृषायध्वमितिजपित्वा मातामहादिपिंडाभिमुखोभूत्वा ॥ ॐ अत्रमातामहादयोमादयध्वंयथाभागमावृषायध्वमित्यादिपिंडसमीपे जपेत् ॥ ततोऽवनेजनपात्रजलेन ॐअमुकगोत्रास्मत्पितरमुकशर्मन्वसुरूप अत्रप्रत्यवनेनिक्ष्वतेस्वधा ॥ इतिपितृपिंडोपरिप्रत्यवनेजनं दत्त्वाएवंपितामहप्रपितामहाभ्यां० ॥ ततः ॐअमुकगोत्रेऽस्मत् मातरमुकदेवि अत्रप्रत्यवनेनिक्ष्वतेस्वधा इतिमातृपिंडोपरि दद्यात् ॥ एवमे वपितामह्यादिभ्यः पंचभ्यस्तत्तत्पिंडोपरिदद्यात् ॥ ततोनीवींविस्रंस्य सव्येन आचम्य अपसव्यंकृत्वा ॐ नमोवः पितरोरसायनमोवः पितरः शोषायनमोवः पितरोजीवायनमोवः पितरः स्वधायैनमोवः पितरोघोरायनमोवः पितरोमन्यवे नमोवः पितरः पितरोनमोवोगृहान्नः पितरोदत्तसतोवः पितरोदेष्म इतिपितृवर्गंनमस्कृत्य ॐ नमोवोमातरोरसाय इतिमातृवर्गम् ॐनमोवः पितरोरसाय इति पूर्वोक्तेनमाता

महद्वर्गंचनमस्कुर्यात् ॥ तत ॐ एतद्वः पितरोवास इति पितृपिंडेषु सूत्राणिदत्त्वा ॐ एतद्वोमातरोवासः ॥ ॐएतद्वोमातामहाद्योवास्स
इतिच मात्रादिषट्पिंडेषुप्रतिपिंडं सूत्रत्रयं दद्यात् ॥ ततः कुशतिलजलान्यादाय ॥ ॐ अमुकगोत्रास्मत्पितृपितामहप्रपितामहासुकामु
कशर्माणोवसुरुद्रादित्यरूपाएतानिवासांसित्रेधाविभज्ययुष्मभ्यं स्वधा इतिसूत्रमुत्सृजेत् ॥ एवमेवमात्रादिभ्यः मातामहादिभ्य सपत्नीके
भ्यश्चोत्सृजेत्॥ततः पित्रादीनुद्दिश्य तदीयपिंडेषु तूष्णींगंधपुष्पधूपदीपतांबूलदक्षिणादीनिदद्यात् ॥ पिंडशेषान्नंचपिंडसमीपेविकिरेत् ॥
ततः पितृब्राह्मणपूर्वकं सर्वानाचमय्यवाचंविसृज्यद्विजकरेषु ॐ शिवाआपःसंतु इतिसकृत्सकृज्जलंदत्वा ॐसौमनस्यमस्त्वितिपुष्पा
णि ॥ अक्षतंचारिष्टंचास्तु इतियवांश्चदद्यात् ॥ ततः ॐ अमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणांदत्तैतदन्नपानादि
कमक्षय्यमस्तु॥इतिसतिलमक्षय्योदकंपितृविप्रकरेदद्यात् ॥ एवमेव मात्रादीनांमातामहादीनांसपत्नीकानांचनामगोत्राभ्यांतदीयविप्रकरयोर
क्षय्योदकंदद्यात् ॥ ततःसव्यादिनाकृतांजलिःप्रार्थयेत्॥ॐ अघोराःपितरःसंतु इति॥ ॐअघोरामातरः संतु ॥ ॐअघोरामातामहाःसपत्नी
काश्चसंतु इतिचोक्त्वा संत्वितिब्राह्मणानुज्ञातःप्राङ्मुखः॥ॐगोत्रंनोवर्द्धतामितिवदेत्॥वर्द्धतामितिब्राह्मणाब्रूयुः॥दातारोनोभिवर्द्धन्ताम् वेदाःसं
ततिरेवच॥श्रद्धाचनोमाव्यगमत् बहुदेयंचनोऽस्तु॥अन्नंचनोबहुभवेत् अतिथींश्चलभेमहि॥याचितारश्चनःसन्तु । माचयाचिष्मकंचन॥एताः
सत्या आशिषः संतु इतिवदेत्॥संन्त्विततितैरुक्ते॥अपसव्यंकृत्वा॥पिंडोपरिसपवित्रान्कुशानास्तीर्यस्वधांवाचयिष्ये इतिब्रूयात्॥ॐवाच्यता॥मि
ति विप्रानुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्योमातृभ्यः प्रमातृभ्योवृद्धप्रमातृभ्योमातामहेभ्यः प्रमातामहेभ्योवृद्धप्रमातामहेभ्यःसपत्नी
केभ्यश्चस्वधोच्यतामितिवदेत् ॥अस्तुस्वधा इतितैरुक्ते ॥ ॐऊर्जंवहंतीरमृतंघृतंपयःकीलालंपरिस्रुतम् ॥ स्वधास्थतर्प्पयतमेपितॄनितिसप

वित्रकुशोपरिदक्षिणाग्रांजलधारांदद्यात् ॥ ततः स्वयंयजमानोऽर्घ्यपात्राण्युत्तानीकृत्यसव्येन देवदक्षिणांदद्यात् ॥ कुशत्रययवजलानिहिरण्यं
चादाय ॐअद्यास्मत्पित्रादित्रयसंबंधिविश्वेदेवानांश्राद्धप्रतिष्ठार्थमिदं हिरण्यमाग्नेदैवत्यममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणात्वेनतुभ्यम
हंसंप्रददे इत्युच्चार्य देवविप्रकरेदद्यात्॥एवमेव मात्रादिमातामहादिदेवश्राद्धार्थमपिदद्यात् ॥ ततोऽपसव्यादिकृत्वाॐअद्यामुकगोत्राणामस्म
त्पितृपितामहप्रपितामहानाममुकामुकशर्मणांवसुरुद्रादित्यरूपाणांकृतैतदन्वष्टकानिमित्तकपार्वणश्राद्धकर्मणः प्रतिष्ठार्थमिदंरजतंचंद्रदैवत्यं
ममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणात्वेनतुभ्यमहं संप्रददे॥ इतिपितृब्राह्मणकरेदद्यात्॥एवममुकगोत्राणामस्मन्मातृपितामहीप्रपितामही
नाममुकामुकदेवीनांकृतैतत०॥ अमुकगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणांसपत्नीकानांकृतैतत०इति ॥ मात्रादि
मातामहादिवर्गद्वयब्राह्मणकरयोरपिदक्षिणांदद्यात् ॥ सर्वत्रस्वस्तीतिवाचयेत्॥दैवेरजतनिषेधः॥ असंभवेफलमूलादिकंदद्यात् ॥ पिंडानुत्था
पयामिउत्थापयइत्यनुज्ञातःपिंडानुत्थाप्यस्थाल्यांनिधायावघ्राणंकृत्वासकृदाच्छिन्नान्दर्भानुल्मुकंचवह्नौक्षिपेत् ॥ ततःसव्येनजलदानपूर्वकं
ॐविश्वेदेवाः प्रीयंतामितिदेवद्विजान्प्रार्थयेत्॥ तेच ॐप्रीयंतांवोविश्वेदेवा इति ब्रूयुः॥ततोऽपसव्यादिनाॐवाजेवाजेवतवाजिनोनोधनेषुविप्रा
प्राऽअमृताऽऋतज्ञाः ॥ अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः॥१॥ इति मंत्रेणपितृब्राह्मणानुत्थाप्यतथैवदेवद्विजान्विसृजेत् ॥
ततः कृतपादादिशौचानुभयान् ॥ ॐ आमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमागंतांपितरामातराचामासोमोऽअमृत
त्वेनगम्यादितिमंत्रेणविप्रान् प्रदक्षिणीकृत्याऽनुव्रज्यगृहंप्रविशेत् ॥ ततः सव्येन ॐदेवताभ्यः पितृभ्यश्चेतित्रिर्जपित्वा अपसव्येनरक्षादी
पनिर्वापणंकृत्वासव्येनहस्तौपादौप्रक्षाल्याचम्य पिंडान् गवादिभ्योदत्त्वोच्छिष्टमार्जनादिकारयेत् ॥ ततो वैश्वदेवबलिकर्मणीकृत्वा

प्रमादात्कुर्वतांकर्म इति पठित्वाकर्मपूर्तिकामोविष्णुंस्मरेत् ॥ ततोवैश्वदेवांतेसुतभृत्यबांधवातिथिसंयुक्तः पितृशेषितमन्नमश्नीयात् ॥
तद्दिनेश्राद्धकर्तृभोक्तारौद्यूताध्वगमनमैथुनायासस्वाध्यायकलहपुनर्भोजनहिंसादीनिचनकुर्यात् ॥ एषएवविधिः तीर्थश्राद्धेषुज्ञेयः ॥
तत्र केषांचित्पदार्थानामननुष्ठानम् । तेचयथा अर्घ्यदानमावाहनं विसर्जनं द्विजांगुष्ठनिवेशनम् तृप्तिप्रश्नः विकिरं दिग्बंधं पाकप्रोक्षणंच
वर्ज्जयेत् ॥ अन्यत्सर्वं पूर्ववदिति [ मृतमातृकोजीवत्पितृकस्तु महालयेऽन्वष्टकायांच मात्रादित्रिदैवत्यं पार्वणंकुर्यात् तच्चाऽपात्रकप्रकरणे
वक्ष्यामि ] ॥ इत्यन्वष्टकाश्राद्धपद्धतिः समाप्ता ॥ इति श्रीबीकानेरस्यविषयान्तर्गतरत्नगढनगरनिवासिनाश्रीवासिष्ठकुलोद्भवेनश्रीरामकृष्ण
पौत्रेणश्रीकस्तूरीचन्द्रसूनुनाश्रीमहादेवभक्तवाजसनेयिनागौडपंडितश्रीचतुर्थीलालशर्मणाविरचिते गौडीयश्राद्धप्रकाशेमुख्यकल्पपद्धति
खंडे पार्वणादिसपात्रकपद्धतिकथनंनामचतुर्थप्रकरणम् ॥ ४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

अथापात्रकपार्वणादिश्राद्धप्रकरणम् ॥ तत्रादौमहालयनिमित्तनवदैवत्यापात्रकपार्वणपद्धतिः ॥ कर्त्तापूर्वेद्युर्निरामिषंसकृद्भुक्तातद्दिनेरात्रौ
प्रदोषांते विप्रगृहेषुगत्वाब्राह्मणेभ्योनिमंत्रणंदद्यात् ॥ ततः श्राद्धदिनेप्रातर्नित्यावश्यकंसमाप्य पाकभूमिंमृद्गोमयोदकेनसंस्कृत्य तत्रस्वयं
यजमानः पाकंकुर्यात् ॥ अशक्तश्चेद्यदिसुस्नातैर्बांधवैः स्त्रीद्वारावापाचयेत् ॥ ततोदिनस्यषण्मुहूर्त्तानन्तरं श्राद्धभूमिंगोमयोदकेनोपलिप्य
ज्वलदङ्गारैः संशोध्यगौरमृत्तिकयाऽऽच्छाद्यतिलैर्गौरसर्षपैश्चविकीर्य्य तत्रश्राद्धसामग्रींसंपाद्यतिलतैलेनश्राद्धापवर्गस्थायिनंदीपंप्रज्वाल्य
संस्थाप्यश्राद्धदेशावरणंचकुर्य्यात् ॥ ततोऽपराह्णेपुनःस्नात्वा गौरमृत्तिकयाश्राद्धदेशे पश्चिमतएकमुदक्प्लवंचतुरस्रं अपरंदक्षिणतोदक्षि
णप्रवणंच मंडलंविधाय गोमयोदकेनोपलिप्य तत्रसव्येनपश्चिममण्डले सयवकुसुमौ प्रागग्रौ द्वौकुशौविन्यस्य तत्रकुशमयौद्वौ दर्भबटू

स्थापयेत् ॥ ततोऽपसव्येन दक्षिणमण्डले सतिलकुसुमानि दक्षिणाग्रैकैककुशत्रयाणिविन्यस्य तत्रदर्भबटुत्रयंदक्षिणाग्रं स्थापयेत् ॥
अथनिमन्त्रणप्रकारः ॥तत्रादौसव्येनाचम्यप्राणानायम्य उदङ्मुखोदक्षिणंजान्वाच्यदक्षिणकरे पूगीफलतांबूलान्यादाय देशकालौसंकीर्त्य
ॐअद्याऽस्मत्पित्रादित्रयमात्रादित्रयमातामहादित्रयश्राद्धसंबंधिनो धूरिलोचनसंज्ञकावा पुरूरवार्द्रवसंज्ञकाविश्वेदेवाः पार्वणश्राद्धे अनेन
सपूगीफलेनतांबूलेन कुशबटुरूपाभवन्तोमयानिमंत्रिताः॥आमंत्रिताःस्मः॥इतिपठित्वातांबूलंमंडलेक्षिपेत् ॥ ततःअक्रोधनैःशौचपरैः सततं
ब्रह्मचारिभिः॥ भवितव्यंभवद्भिश्च मयाचश्राद्धकारिणा ॥ इतिप्रार्थ्यस्वागतंभवताम् ॥ सुस्वागतमितिब्रूयात् ॥ ततोऽपसव्यंकृत्वादक्षिणामु
खोवामजानुनिपात्य पूगीफलतांबूलंगृहीत्वा ॐ अमुकगोत्राऽस्मत्पितृपितामहप्रपितामहाऽमुकामुकशर्माणः पार्वणश्राद्धे अनेनसपूगीफले
नतांबूलेनकुशत्रयबटुरूपाभवन्तोमयानिमंत्रिताः ॥ आमंत्रिताःस्मः ॥ अक्रोधनैरितिप्रार्थ्यस्वागतंभवतांसुस्वागतमितिब्रूयात् ॥ ततः ॐ
अमुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्योऽमुकामुकदेव्यःपार्वणश्राद्धेअनेनसपूगीफलेनतांबूलेनकुशत्रयबटुरूपाभवंतोमयानिमंत्रिताः ॥
ॐ आमंत्रिताः स्मः ॥ अक्रोधनैरितिप्रार्थ्यस्वागतं भवतांसुस्वागतमितिब्रूयात् ॥ ततः ॐ अमुकगोत्राऽस्मन्मातामहप्रमातामहवृ
द्धप्रमातामहाऽमुकाऽमुकशर्माणः सपत्नीकाः पार्वणश्राद्धे अनेनसपूगीफलेनतांबूलेन कुशत्रयबटुरूपा भवंतोमयानिमंत्रिताः ॥
॥ आमंत्रिताःस्मः ॥ ॐ अक्रोधनैरितिप्रार्थ्यस्वागतंभवतां सुस्वागतमितिपठेत् ॥ ततःसव्यादिना ॐ अद्याऽस्मत्पित्रादि
त्रयमात्रादित्रयमातामहादित्रयश्राद्धसंबंधिनोधूरिलोचनसंज्ञकावापुरूरवार्द्रवसंज्ञकाविश्वेदेवाः एषपादार्घोवोनमः ॥ इति दद्यात् ॥
अमुकगोत्राऽस्मत्पितृपितामहप्रपितामहाऽमुकामुकशर्माणः एषपादार्घस्तेभ्योविभज्ययुष्मभ्यंस्वधा इति ॥ ॐ ततोऽपसव्यादिना ॥

अमुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्योऽमुकामुकदेव्यः एषपादावनेजनं त्रेधाविभज्ययुष्मभ्यंस्वधा इति ॥ ॐ अमुकगोत्राऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहाऽमुकामुकशर्माणः सपत्नीकाः एषपादावनेजनं त्रेधाविभज्य युष्मभ्यंस्वधाइत्युत्सृजेत् ॥ ततःसव्येन ॐअस्मत्पित्रादित्रयमात्रादित्रयमातामहादित्रयश्राद्धसंबंधिनः धुरिलोचनसंज्ञकाःवा पुरूरवार्द्रवसंज्ञकाविश्वेदेवाः इदमाचमनंवोनमः ॥ इत्युत्सृजेत् ॥ ततोऽपसव्येन ॐ अद्याऽमुकगोत्राऽस्मत्पितृपितामहप्रपितामहाः इदमाचमनंत्रेधाविभज्ययुष्मभ्यं स्वधा ॥ ॐ अमुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्यः अमुकामुकदेव्यइदमाचमनंयुष्मभ्यंस्वधा ॥ ॐ अद्याऽमुकगोत्राऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहामुकामुकशर्माणःसपत्नीकाः इदमाचमनंत्रेधाविभज्ययुष्मभ्यंस्वधा इत्युत्सृजेत्॥ततःसव्येन ॐअद्यास्मत्पित्रादित्रयमात्रादित्रयमातामहादित्रयश्राद्धसंबंधिनःधुरिलोचनसंज्ञकाःवापुरूरवार्द्रवसंज्ञकाविश्वेदेवाःइदंकौशमासनंवोनमः॥इत्यासनंदद्यात्॥ततोऽपसव्येन ॐअद्यामुकगोत्रास्मत्पितृपितामहप्रपितामहाऽमुकामुकशर्माणः इदंकौशमासनं त्रेधा विभज्ययुष्मभ्यंस्वधा इति॥ॐअमुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्योऽमुकामुकदेव्यइदंकौशमासनं त्रेधाविभज्य युष्मभ्यं स्वधा ॥ ॐ अद्यामुकगोत्रास्मन्मातामहप्रमातामहवृद्धप्रमातामहाऽमुकामुकशर्माणः सपत्नीकाः इदंकौशमासनंत्रेधा विभज्ययुष्मभ्यंस्वधा इत्युत्सृजेत् ॥ इतिनिमंत्रणप्रकारः ॥ ततः सव्यापसव्याभ्यांक्रमेणपात्रद्वयंजलेनापूर्य्य तत्रदर्भपवित्रौ यवतिलचंदनपुष्पाणिचयथाक्रमं निक्षिप्य ॥ कर्मपात्रंसंपन्नम् ॥ सुसंपन्नमिति ब्रूयात् ॥ ततः श्राद्धकर्त्ता स्वासने प्राङ्मुखउपविश्य सव्येनाचम्य ॐ अपवित्रः पवित्रोवा इति ॐ पुंडरीकाक्षःपुनात्वितिचपठित्वाश्राद्धीयद्रव्याणिस्वात्मानंचसिंचेत् ॥ततः ॐ वैष्णव्यैनमः॥ॐ काश्यप्यैनमः॥ॐअक्षय्यायैनमः॥ॐभूम्यैनमः॥इतिनत्वाॐभगवत्यैगयायैनमः

ॐ भगवते गदाधराय नमः इतितयोर्नमस्कारं कुर्यात् ॥ ततः कुशत्रयतिलजलान्यादाय देशकालौ संकीर्त्य ॥ ॐ अद्यामुकगोत्राणामस्म
त्पितृपितामहप्रपितामहानाममुकामुकशर्मणांवसुरुद्रादित्यरूपाणां तथा चास्मन्मातृपितामहीप्रपितामहीनाममुकामुकदेवीनांगंगायमुनास
रस्वतीरूपाणाम् अमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणांसपत्नीकानांवसुरुद्रादित्यरूपाणां विश्वेदेवपूर्व
कंसपिंडकं महालयानिमित्तकंपार्वणश्राद्धंपितृतृप्तिकामोहंकरिष्य इतिसंकल्प्य कुरुष्वेत्यनुज्ञातोगायत्रींत्रिर्जपित्वा ॐदेवताभ्यः पितृभ्यश्च
महायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायै नित्यमेवनमोनमः इति त्रिर्जपेत्॥ततोऽपसव्यंकृत्वा ॥ ॐनमोनमस्तेगोविंद॥पुराणपुरुषोत्तम ॥
इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः॥१॥तिलारक्षंतुअसुरान्दर्भारक्षन्तुराक्षसात् ॥ वह्निर्वैश्रोत्रियंरक्षेदतिथिःसर्व्वरक्षकः ॥२॥ इतितिलकुशान्
द्वारदेशेक्षिप्त्वा ॥ ॐअग्निष्वात्ताःपितृगणाःप्राचींरक्षंतुमेदिशम् ॥ तथाबर्हिषदःपांतुयाम्यांयेपितरःस्थिताः ॥ १ ॥ प्रतीचीमाज्यपास्तद्वदुदी
चीमपिसोमपाः॥अधोर्ध्वमपिकोणेषुविकोणेषुचसर्वशः॥२॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः॥सर्वतश्चाधिपस्तेषांयमोरक्षांकरोतुवै ॥ वा
युभूतपितॄणांच तृप्तिर्भवतुशाश्वती ॥३॥ इतिमंत्रैःसर्वत्रतिलान्गौरसर्षपांश्चविकीर्यदक्षिणेवामेवाकटिभागेनीवींबध्नीयात्॥ततःसव्येनॐयद्दे
वादेवहेडनं देवासश्चकृमावयम्॥अग्निर्मातस्मादेनसोविश्वान्मुंचंत्वꣳहस १॥यदिदिवायदिनक्तमेनाꣳसिचकृमावयम्॥वायुर्मातस्मादेनसोवि
श्वान्मुञ्चंत्वꣳहसः॥२॥यदिजाग्रद्यदिस्वप्नएनांसिचकृमावयम् । सूर्योमातस्मादेनसोविश्वान्मुञ्चंत्वꣳहसः॥३॥इतिकूष्मांडसूक्तेनजलमभिमं
त्र्यतेनदर्भैः उदक्यादिदुष्टदृष्टिपातात शूद्रादिसंपर्कदोषाच्च पाकादीनांपवित्रताऽस्तुदेशकालपाकपात्रद्रव्योपहारश्रद्धासंपदस्तु इतिपाकादीन्
प्रोक्षयेत् ॥ ततः उदङ्मुखउपविश्यसजघनंदक्षिणंजान्वाच्य सव्येनजलयवसमन्वितमृजुकुशत्रयमादाय ॥ ॐ अद्यास्मत्पित्रादित्रयमात्रा

दित्रयमातामहादित्रयश्राद्धसंबंधिनः धुरिलोचनसंज्ञकाःवापुरूरवार्द्रवसंज्ञकाविश्वेदेवाइदमासनंवोनमः॥ इत्यासनार्थं देवतीर्थेनपूर्वाग्रंकुशत्रयं दद्यात्॥ततोदक्षिणामुखः पातितवामजानुः अपसव्येन द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐअद्यामुकगोत्राऽस्मत्पितृपितामहप्रपितामहा मुकामुकशर्माणोवसुरुद्रादित्यरूपाः॥इदमासनंत्रेधाविभज्ययुष्मभ्यंस्वधा॥इत्युच्चार्य्यपितृतीर्थेनमोटकंदक्षिणाग्रमुत्सृजेत् एवमेवमात्रादिभ्यो मातामहादिभ्यः सपत्नीकेभ्यश्चापिदद्यात् ॥ ततःसव्येन ॐविश्वान्देवानावाहयिष्ये॥आवाहय इत्यनुज्ञातः सयवकरः॥ॐविश्वेदेवाःशृणुतेम ठंहवम् एदंबर्हिर्निषीदत ॥ इत्यावाह्य ॐयवोसियवयास्मद्द्वेषोयवयारातीरित्यनेनयवान् विकीर्य ॐ विश्वेदेवाः शृणुतेमठंहवम्मेयेऽअन्तारि क्षेयऽउपद्यविष्ठ ॥ येऽअग्निजिह्वाऽउतवायजत्राऽआसद्यास्मिन् बर्हिषिमादयध्वमितिजपेत् ॥ ॐआगच्छंतुमहाभागा विश्वेदेवामहाबलाः ॥ येयत्रयोजिताः श्राद्धेसावधानाभवंतुते ॥१॥ इति श्लोकमपिपठेत्॥ ततोऽपसव्यादिनाॐपितॄनावाहयिष्ये॥आवाहय इत्यनुज्ञातः॥सतिलक रोञ्जलिना॥ॐउशन्तस्त्वानिधीमह्युशन्तःसमिधीमहि॥उशन्नुशतऽआवहपितॄन्हविषेऽअत्तवे ॥ इत्यावाह्य ॐ अपहताऽअसुरारक्षाठंसिवे दिषदः ॥ इतितिलान्विकीर्य्य॥ एवंमातॄर्हविषेऽअत्तवे॥मातामहान्हविषेऽअत्तवे इतिमंत्रोहेनमात्रादीन् मातामहांश्चावाह्य तिलान् विकीर्य्य ॐआयन्तुनःपितरःसोम्यासोऽअग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेऽवन्त्वस्मान् इतिजपेत् ॥ ततःसव्या पसव्याभ्यांदेवपूर्वकंपात्रचतुष्टयेषुप्रतिपात्रंपवित्रमेकैकंनिधाय ॥ तत्र ॐशन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये॥ शंय्योरभिस्रवन्तुनः ॥ इति प्रत्येकंपात्रेष्वपोनिषिच्य ॥ ॐयवोसियवयास्मद्द्वेषोयवयारातीरितिदेवपात्रेयवान्निक्षिप्य ॥ पित्रादिपात्रेषु ॐ तिलोसिसोमदैवत्यो गोसवो देवनिर्मितः ॥ प्रत्नमद्भिः पृक्तःस्वधयापितॄँल्लोकान्प्रीणाहिनः स्वधा ॥ इतितिलान्प्रक्षिपेत् ॥ ततः सर्वत्रतूष्णींगंधपुष्पाणिदत्त्वासव्येन

ॐ अर्घपात्रं संपन्नम् ॥ सुसंपन्नमित्यनुज्ञातो देवार्घपात्रं वामहस्ते कृत्वा तत्रस्थं पवित्रं पलाशादिपत्रे पुरतः पूर्वाग्रं धृत्वाऽर्घपात्रं दक्षिणहस्तेनाच्छाद्य ॥ ॐ या दिव्या आपः पयसा संबभूवुर्य्या अन्तरिक्षा उत पार्थिवीर्य्याः ॥ हिरण्यवर्णा यज्ञियास्तान आपः शिवाः शꣳस्योनाः सुहवा भवन्तु ॥ इत्यभिमंत्र्य कुशत्रय यवजलान्यादाय ॐ अद्यास्मत्पित्रादित्रयमात्रादित्रयमातामहादित्रयश्राद्धसंबंधिनः धुरिलोचनसंज्ञका वा पुरूरवार्द्रवसंज्ञका विश्वेदेवा एष वोऽर्घस्ते नमः ॥ इति देवतीर्थेन पवित्रोपर्य्यर्घं दद्यात् ॥ अर्घपात्रं सपवित्रं पुरतः स्थापयेत् ॥ ततोऽपसव्यादिना ॐ अर्घपात्रं संपन्नम् ॥ सुसंपन्नमिति पठित्वा पितृपात्रं वामहस्ते कृत्वा ॥ पवित्रं पलाशादिपत्रे उत्तराग्रं दत्त्वा पात्रं दक्षिणकरेणाच्छाद्य ॥ ॐ या दिव्या आप इत्यभिमंत्र्य द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐ अमुकगोत्रास्मत्पितृपितामहप्रपितामहा अमुकाऽमुकशर्माणः वसुरुद्रादित्यरूपा एष हस्तार्घस्त्रेधा विभज्य युष्मभ्यं स्वधा इति पितृतीर्थेन पवित्रोपरि अर्घं दद्यात् ॥ एवमेव मात्रादिभ्यो मातामहादिभ्यः सपत्नीकेभ्यश्चापि दद्यात् ॥ अर्घपात्रत्रयं च सावशेषं पुरतः स्थापयेत् ॥ ततः सव्येन ॐ विश्वेभ्यो देवेभ्यः स्थानमसीत्युक्त्वा पवित्रजलयुतं देवार्घपात्रमासनदक्षिणपार्श्वे उत्तानमेव स्थापयेत् ॥ ततः पित्राद्यर्घपात्रजलेन ॐ आपः शिवाः शिवतमाः शांताः शांततमास्ते कृण्वन्तु भेषजम् १ इति मंत्रेण शिरः संमृज्य अपसव्येन ॐ पितृभ्यः स्थानमसीति पितृपात्रम् आसनवामपार्श्वे भूमावधोमुखं स्थापयेत् ॥ एवं मात्रादिभ्यः ॥ ॐ मातामहेभ्यश्च स्थानमसीति चोक्त्वा न्युब्जं कुर्यात् ॥ एतानि स्थापितानि पात्राणि दक्षिणादानपर्यंतं नोद्धरेन्न चालयेत् ॥ अथ गंधादिदानम् ॥ तत्र सव्यादि कृत्वा गंधपुष्पधूपदीपवस्त्रादि देवासने धृत्वा ॥ कुशत्रययवजलान्यादाय ॥ ॐ अद्यास्मत्पित्रादित्रयमात्रादित्रयमातामहादित्रयश्राद्धसंबंधिनः धुरिलोचनसंज्ञकाः वा पुरूरवार्द्रवसंज्ञका विश्वेदेवाः एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीताच्छादनानि वो नमः इत्युच्चार्य यथाविभवं दद्यात ॥ ततः कृतांजलिः कर्त्ता विश्वे

षदेवानामर्चनंसंपूर्णमस्त्विति अस्त्वर्चनसंपूर्णमितिचब्रूयात् ॥ ततोऽपसव्यादिना पित्राद्यासनत्रयेगंधपुष्पधूपदीपादिप्रत्येकंसन्निधायद्वि
गुणभुग्नकुशत्रयादीनिचादाय ॐअमुकगोत्राऽस्मत्पितृपितामहप्रपितामहाऽमुकामुकशर्माणःवसुरुद्रादित्यरूपाः॥ एतानिगंधपुष्पधूपदीपतां
बूलयज्ञोपवीताच्छादनानित्रेधाविभज्ययुष्मभ्यंस्वधा इतिपित्रादिभ्योगंधाद्युत्सृज्यएवमेवमात्रादिभ्यो मातामहादिभ्यःसपत्नीकेभ्य श्चोत्सृजे
त्॥ ततःकृताञ्जलिः ॐपितॄणामर्चनंसंपूर्णमस्त्विति ॥ अस्त्वर्चनंसंपूर्णमितिचब्रूयात् ॥ एवंगंधाद्यर्चनंविधायभोजनपात्रस्थापनदेशं संमा
र्ज्यपात्राणिदत्त्वागोरमृत्तिकया जलादिनावा मंडलंप्रत्येकंकुर्यात् ॥ ततोऽग्नौकरणम् ॥ तावत् सव्यादिना घृतप्लुतमन्नंव्यंजनक्षारवर्जि
तंकांस्यपात्रेकृत्वा ॐ अग्नौकरणंकरिष्य इतिश्राद्धकर्ता ब्राह्मणं पृष्ट्वाकुरुष्वेत्यनुज्ञातः आर्द्रामलकमात्रमन्नंगृहीत्वा रजतादिपात्रस्थ
जले प्राङ्मुखः ॐ अग्नयेकव्यवाहनायस्वाहा इदमग्नयेकव्यवाहनाय ॥ ॐ सोमायपितृमतेस्वाहा इदंसोमायपितृमते इत्याहुतिद्वयंजुहु
यात् ॥ ततोहुतशेषितमन्नं दैवपात्रेऽपसव्येनपित्रादिपात्रत्रयेचकिंचित्किंचिद्दत्त्वापिंडार्थंचावशेषयेत् ॥ [ अत्रपरकीयभूमौश्राद्धकरण
पक्षे ( अपसव्येन ) ॐ इदमन्नमेतद्भूस्वामिपितृभ्योनमइतिदर्भेष्वन्नमुत्सृजेत् ] ॥ ततः सव्येनदेवपात्रे अपसव्येनपित्रादिपात्रत्रयेच उष्ण
मन्नं सघृतम् अनेकव्यंजनयुतं पुरुषैकतृप्तिजनकंयथावत् प्रतिपात्रंपरिविष्यसजलंपात्रंचसंस्थाप्याऽन्नेमधुदत्त्वा ॐमधुवाताऽऋतायते इत्या
दिमंत्रत्रयेण ॐ मधुमधुमध्विति चाभिमंत्रयेत् ॥ ततः सव्येन उत्तानपाणिभ्यां देवपात्रमालभ्य ॐपृथिवीतेपात्रंद्यौरपिधानं ब्राह्मणस्यमुखे
ऽअमृतेऽअमृतंजुहोमिस्वाहा इति ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम्॥ समूढमस्यपाᳬंसुरेस्वाहा इतिचपठित्वा ॐविष्णोहव्यᳬंरक्षस्वेत्य
नयास्वाङ्गुष्ठमधोमुखमनखमन्नेऽवगाह्यॐ इदमन्नम्।ॐइमाआपःॐ इदमाज्यम्ॐइदंहविरित्युक्त्वा ॐअपहताऽअसुरारक्षाᳬंसिवेदिषदः॥

इतियवान् अन्नपात्रपरितोविकीर्य्य वामेनकरेणपात्रंस्पृशन् दक्षिणकरेणकुशत्रययवजलान्यादाय ॐ अद्याऽस्मत्पित्रादित्रयमात्रादित्रयमाता
महादित्रयश्राद्धसम्बंधिनः धुरिलोचनसंज्ञकाः वा पुरूरवार्द्रवसंज्ञका विश्वेदेवाः इदमन्नंहव्यं सोपस्करं परिविष्टम् अमृतरूपंवःस्वाहानमःइत्यु
दकंदक्षिणभागेभूमावेवोत्सृजेत्॥ततोऽपसव्यादिकृत्वा पितृपात्रंन्युब्जपाणिभ्यांव्यास्ताभ्यांस्पृष्ट्वाॐपृथिवीतेपात्रंद्यौरपिधानं ब्राह्मणस्यमुखेऽ
अमृतेऽअमृतंजुहोमिस्वधा इतिपठित्वाॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम्॥समूढमस्यपाᳬसुरे इत्येतामृचंचजप्त्वा स्वाङ्गुष्ठमनखमधोमुख
म् ॐ विष्णो कव्यᳬरक्ष इतियजुषाऽन्नेनिवेश्य॥ ॐइदमन्नम्ॐइमाआप ॐइदमाज्यम्ॐइदंहविरित्युक्त्वा ॐअपहताऽअसुरारक्षाᳬसिवे
दिषदःइतितिलानन्नपात्रपरितोवामावर्त्तेनविकीर्य्य॥वामकरेणपात्रमत्यजन्दक्षिणकरेण द्विगुणभुग्नकुशत्रयादीन्यादाय ॐअद्यामुकगोत्राऽस्म
त्पितृपितामहप्रपितामहाऽमुकामुकशर्माणःवसुरुद्रादित्यरूपाःइदमन्नंकव्यंसोपस्करंपरिविष्टममृतरूपंत्रेधाविभज्ययुष्मभ्यंस्वधा इत्युदकंपि
तृतीर्थेनवामभागेभूमौक्षिपेत्॥एवमेवमात्रादिभ्योमातामहेभ्यःसपत्नीकेभ्यश्चाप्युत्सृजेत् ॥ ततः ॐअन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत्॥त
त्सर्वमच्छिद्रमस्त्वितिप्रार्थ्य॥प्रणवव्याहृतिपूर्विकांसकृत्त्रिर्वागायत्रींजप्त्वा ॐमधुवाताऽऋतायतेइतित्र्यृचम् ॐमधुमधुमध्वितिचजपेत्॥ततः
सव्येनदक्षिणामुखः॥ॐकृणुष्वपाजःप्रसितिन्नपृथ्वींय्याहिराजेवामवाँऽइभेन॥तृष्वीमनुप्रसितिन्द्रूणानोस्तासिविद्ध्यरक्षसस्तपिष्ठैः॥१॥ तव
भ्रमासऽआशुया पतन्त्यनुस्पृशधृषताशोशुचानः॥तपूᳬष्यग्नेजुह्वापतङ्गानसंदितोविसृजविष्वगुल्काः॥२॥ प्रतिस्पशोविसृजतूर्णितमोभवा
पायुर्विशोऽअस्याऽअदब्धः॥योनोदूरेऽअघशᳬसोयोऽअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ ३ ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ २ऽओषता
तिग्महेते॥ योनोऽअरातिᳬसमिधानचक्रेनीचातंधक्ष्यतसन्नशुष्कम्॥४॥ऊर्ध्वोभवप्रतिविद्ध्याद्ध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने॥अवास्थिरा

तनुहियातुजूनाञ्जामिमजामिप्प्रमृणीहिशत्रून् ॥ अग्नेष्ठातेजसासादयामि ॥८॥ इतिरक्षोघ्नीर्ऋचःपठित्वा ॥ भूमौतिलान्विकीर्य्य ॥ ॐ उदी
रतामवर इत्यादित्रयोदशपितृमंत्रान्॥ ॐसहस्रशीर्षा इत्यादिपुरुषसूक्तंच॥ॐआशुःशिशानो इत्यादिसप्तदशमंत्रात्मकमप्रतिरथंच ॥ ॐसत्त
व्याधादशार्णेषु इत्यादिस्तोत्रंचपठित्वा॥सपात्रकपद्धत्युक्तं सप्तार्चिस्तोत्रंपठेत् ॥ ततः ॐनमस्येहंपितॄन्भक्त्या येचसन्त्यधिदेवताः ॥ देवै
रपिहि तर्प्यन्ते येचश्राद्धेस्वधोत्तरैः॥१॥ नमस्येहंपितॄन्स्वर्गे येतर्प्यन्तेमहर्षिभिः ॥ श्राद्धैर्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः॥२॥ नमः
स्येहंपितॄन्स्वर्गे सिद्धाःसंतर्पयन्तितान् ॥ श्राद्धेषुदिव्यैःसकलैरुपहारैरनुत्तमैः ॥ ३ ॥ इत्यादिरुचिस्तवंपठित्वा अन्यान्यपिवैष्णवादिस्तो
त्राणियथाशक्तिपठेत्॥ततोऽपसव्यादिना उच्छिष्टपात्रसन्निधौभूमिंप्रोक्ष्य तत्रदक्षिणाग्रंकुशत्रयमास्तीर्य्य दक्षिणहस्ते सर्वप्रकारमन्नंसव्यंजनमु
द्धृत्य सतिलमेकीकृत्य ॐअग्निदग्धाश्चयेजीवा येऽप्यदग्धाःकुलेमम॥भूमौदत्तेनतृप्यन्तु तृप्तायान्तुपरांगतिम्॥१॥इतिमंत्रेणकुशोपरिपितृती
र्थेनतदन्नं विकिरेत्॥ततः सव्यंकृत्वाहस्तौप्रक्षाल्य आचम्य हरिंस्मृत्वा अपसव्येन ॐमधुवाताऽऋतायते इतित्र्यृचं मधुमधुमध्वितिचजपेत्
ॐतृप्ताःस्थ ॐतृप्ताःस्मः इतिपठित्वापिंडानहंकरिष्ये इतिपृच्छेत्॥ कुरुष्वइत्यनुज्ञातः पित्रादिभोजनपात्रसन्निधावुत्तरतो हस्तांतरे वालुका
मिश्रचतुरस्रं दक्षिणप्लवंरमणीयंस्थानत्रयंनिर्माय तन्मध्येदर्भपिंजूलीमूलेन ॐअपहताऽअसुरारक्षाꣳसिवेदिषदः इति दक्षिणाग्रंरेखात्रयं कृत्वा
प्रत्येकंरेखोपरि ॐयेरूपाणिप्रतिमुंचमानाऽअसुराःसंतः स्वधयाचरन्ति ॥ परापुरोनिपुरोयेभरंत्यग्निष्टाँल्लोकात्प्रणुदात्यस्मादित्यंगारं भ्राम
यित्वादक्षिणतोनिदध्यात् ॥ ततः उपमूलसकृदाच्छिन्नदक्षिणाग्रकुशत्रयंप्रत्येकं रेखोपरिस्तीर्त्वा सव्येनदेवताभ्य इतित्रिर्जपेत् ॥ ततोऽपस
व्येन पुटकनवके जलतिलगंधपुष्पाणिकृत्वा एकंपात्रंवामहस्तेकृत्वा द्विगुणभुग्नकुशत्रयंतिलजलान्यादाय ॐ अद्यामुकगोत्रास्मत्पितर

मुकशर्मन्वसुरूपाऽत्रावनेनिक्ष्वतेस्वधा इतिकुशमूले पित्रेपितृतीर्थेनसावशेषमवनेजनंदद्यात् ॥ एवंपितामहायकुशत्रयमध्ये प्रपिताम हायकुशाग्रे अवनेजनं दद्यात्॥एवमेवमात्रादिभ्योमातामहादिभ्यश्चापिदद्यात्॥ततःसर्वस्माच्छ्राद्धशेषान्नाद्रुष्णंकिञ्चित्किञ्चिदन्नमुद्धृत्य हुतशे षान्नं मध्वाज्यतिलसर्वव्यञ्जनयुतं रजतादिपात्रेकृत्वा बिल्वोपमान् नवपिण्डान्निर्माय मधुघृताभ्यामभिघार्य्य पित्रादिभ्योदद्यात्॥तत्रप्रथम पिण्डमादाय ॐ अद्यामुकगोत्रास्मत्पितरमुकशर्मन् वसुरूप एतत्ते पिण्डंस्वधा इतिप्रथमावनेजनस्थाने सव्योपगृहीतदक्षिणहस्तेन पितृतीर्थेनदद्यात् ॥ एवमेवपितामहादिभ्योऽष्टभ्यः प्रत्येकं तत्तदवनेजनस्थानेपिण्डं दद्यात् ॥ ततःप्रपितामहादूर्ध्वत्रयाणां लेपभाग भुजां तृप्तिमुद्दिश्य पित्रादिकपिण्डाधारकुशमूले ॐ लेपभागभुजः पितरस्तृप्यन्तु इतिपठित्वा हस्तंप्रोञ्छ्य ॥ जलेन हस्तौ प्रक्षालयेत् ॥ ततः सव्यंकृत्वा त्रिराचम्य हरिंस्मरेत् ॥ ततोऽपसव्येन ॐ अत्रपितरोमादयध्वं यथाभागमावृषायध्वम् इति पितृद्देशेन पठित्वा वामावर्त्तेनोदङ्मुखीभूय प्रीतमनाः मनाक् श्वासंनियम्य तेनैव यथापरावृत्य ॐ अमीमदन्तपितरो यथाभागमावृषा यिषत इतिजपेत् ॥ एवमेवमातृमातामहपक्षे ॐअत्रमातरोमादयध्वमितिमंत्रोहेनश्वासधारणंकुर्यात् ॥ ततः पूर्वदत्तावनेजनजलेन ॐअद्या मुकगोत्राऽस्मत्पितरमुकशर्मन् वसुरूप अत्रप्रत्यवनेनिक्ष्व तेस्वधा इतिप्रथमपिण्डोपरि प्रत्यवनेजनंदत्त्वा एवमेवपितामहादिअष्टपिण्डो परि तत्तदवनेजनपात्रेण प्रत्येकं प्रत्यवनेजनं दद्यात्॥ततोनीवीं विस्रंस्य सव्येन आचम्य अपसव्यं कृत्वा ॥ ॐनमोवः पितरोरसाय नमो वः पितरः शोषाय नमोवः पितरोजीवाय नमोवः पितरः स्वधायै नमोवः पितरोघोराय नमोवः पितरो मन्यवे नमोवः पितरः पितरोनमोवो गृहान्नः पितरोदत्तसतोवः पितरो देष्म ॥ इतिकृताञ्जलिः पठेत् ॥ ततः ॐ एतद्वः पितरोवास इतिपठित्वानवसु पिण्डेषुसूत्राणि प्रतिपिण्डं

ऊर्णादशावा पञ्चाशदूर्ध्ववयस्कयजमानहृदयलोमानि वा दत्त्वा ततः कुशतिलजलान्यादाय ॥ ॐ अद्यामुकगोत्राऽस्मत्पितृपितामहप्रपितामहामुकामुकशर्म्माणः वसुरुद्रादित्यरूपा एतानिवासांसित्रेधाविभज्ययुष्मभ्यं स्वधा इत्युत्सृजेत् ॥ एवमेव मात्रादिभ्योमातामहादिभ्यश्चोत्सृजेत् ॥ ततः पित्रादीनुद्दिश्यतदीयपिंडेषु गंधपुष्पधूपदीपतांबूलदक्षिणादीनिदत्त्वा ॥ तच्छेषान्नंपिंडसमीपेविकीर्य्य ॐपिंडार्चनंसर्वं परिपूर्णमस्तु इतिब्रूयात् ॥ ततःसव्यापसव्याभ्यां भोजनपात्रेषु ॐशिवाआपः सन्तु इतिसकृत्सकृज्जलंदत्त्वाॐसौमनस्यमस्तु इतिपुष्पाणि ॐ अक्षतंचारिष्टंचास्त्वितियवान् पितृपात्रेषु तिलांश्चक्रमेणदद्यात्॥ततोऽपसव्येनॐअमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणां वसुरुद्रादित्यरूपाणां दत्तैतदन्नपानादिकमक्षय्यमस्त्वित्यक्षय्योदकंदद्यात्॥ एवमेवमात्रादिभ्योमातामहादिभ्यःसपत्नीकेभ्योऽपिदद्यात्॥ततः सव्यंकृत्वा प्राङ्मुखस्तन्मनाः सुमनाः कृतांजलिर्दक्षिणांदिशंपश्यन् आशिषोगृह्णीयात्॥ॐअघोराः पितरः संतु ॐअघोरामातरः संतु ॐअघोरामातामहाः सपत्नीकाश्चसंतु इतिवदेत्॥संत्वित्यनुज्ञातःॐगोत्रंनोवर्द्धतामितिवदेत् ॥ वर्द्धतामित्यनुज्ञातः॥दातारोनोभिवर्द्धन्तावेदाः संततिरेवच॥ श्रद्धाचनोमाव्यगमत्॥बहुदेयंचनोऽस्तु॥अन्नंचनोबहुभवेत्॥अतिथींश्चलभेमहि ॥याचितारश्चनःसंतु॥माचयाचिष्मकंचन ॥ एताः सत्या आशिषः संत्वितिवदेत्॥ ततोऽपसव्यं कृत्वा पिंडोपरिसपवित्रान्कुशानास्तीर्य स्वधांवाचयिष्ये इतिब्रूयात् ॥ वाच्यतामित्युक्ते ॐपितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातृपितामहीप्रपितामहीभ्योमातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यःसपत्नीकेभ्यश्चस्वधोच्यतामितिवदेत् ॥ अस्तुस्वधा इत्यनुज्ञातः ॥ ॐऊर्जंवहन्तीरमृतंघृतंपयःकीलालंपरिस्रुतम् ॥ स्वधास्थतर्प्पयतमेपितॄन्इतिसपवित्रकुशोपरिदक्षिणाग्रांजलधारांदद्यात् ॥ ततः स्वयंयजमानोऽर्घ्यपात्रत्रयमुत्तानीकृत्यसव्येनदेवदक्षिणांदद्यात् ॥ तत्रकुशत्रययवजलानि

हिरण्यंचादाय॥ ॐअद्याऽस्मत्पित्रादित्रयमात्रादित्रयमातामहादित्रयश्राद्धसंबंधिनांधुरिलोचनसंज्ञकानांवापुरूरवार्द्रवसंज्ञकानांविश्वेदेवानां श्राद्धप्रतिष्ठार्थमिदंहिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायदक्षिणात्वेनंदातुमहमुत्सृजे ॥ इतिसंकल्प्यदद्यात्॥ ततोऽपसव्यादिना ॐअमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणां वसुरुद्रादित्यरूपाणांकृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदंरजतं चंद्रदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणात्वेनदातुमहमुत्सृजे इतिपितृदक्षिणांदद्यात् ॥ एवमेवमात्रादिमातामहादिश्राद्धप्रतिष्ठार्थमपिरजतदक्षिणांदद्यात् ॥ दैवेरजतानिषेधः असंभवेफलमूलादिकंदद्यात् ॥ ततः ॐ पिंडानुत्थापयामि ॥ उत्थापय इत्युक्ते पिंडानुत्थाप्यस्थाल्यांनिधायाऽवघ्राणंकृत्वा सकृदाच्छिन्नान्दर्भानुल्मुकं च वह्नौ क्षिपेत् ॥ ततः सव्येन ॐ विश्वेदेवाः प्रीयंतामिति प्रार्थ्य ॥ अपसव्येन ॐ वाजेवाजेवतवाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः ॥ अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैरिति पितॄन्विसृजेत् ॥ ततः ॐ आमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे॥ आमागंतांपितरामातराचामासोमोऽअमृतत्वेनगम्यता॥दितिमंत्रंपठित्वाप्रदक्षिणीकृत्यसव्येन ॐदेवताभ्यः पितृभ्यश्चेतित्रिर्जपेत् ॥ ततः अपसव्येनरक्षादीपंनिर्वाप्यसव्येनहस्तौपादौप्रक्षाल्याऽऽचम्यॐप्रमादात्कुर्वतांकर्म०इतिपठित्वाकर्मपूर्त्तिकामोविष्णुंस्मरेत्॥ततः पिंडान् गामजं वायसान्वा खादयेत् ॥ अगाधेजलेवाक्षिपेत्॥ पुत्रकामःपितामहपिंडंसाध्व्यैधर्मपत्न्यैवादद्यात् ॥ साचशुचिर्वाग्यतापुत्रकामा ॐआधत्तपितरोगर्भंकुमारंपुष्करस्रजम् ॥ यथेहपुरुषोऽसत् ॥ इतिमंत्रेपठितेऽश्नीयात् ॥ततोदेशकालौसंकीर्त्य ॐअद्यामुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणां वसुरुद्रादित्यरूपाणां तथाचास्मन्मातृपितामहीप्रपितामहीनाममुकामुकदेवीनाममुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणांसपत्नीकानां

वसुरुद्रादित्यरूपाणांकृतैतन्म हालयनिमित्तपार्वणश्राद्धप्रतिष्ठार्थममुकसंख्याकान् ब्राह्मणान् भोजयिष्ये इतिसंकल्प्यदशाष्टौपट्चतुरो वाब्राह्मणान् पायसाद्यन्नेन भोजयेत् ॥ ततोवैश्वदेवबलिकर्मणीकृत्वासुतभृत्यबांधवातिथिसंयुक्तः पितृशेषितमन्नमश्नीयात ॥ तद्दिने श्राद्धकर्ताद्यूताध्वगमनमैथुनायासकलहपुनर्भोजनहिंसादीनिनकुर्यात् ॥ इत्यपात्रकनवदैवत्यपार्वणश्राद्धपद्धतिःसमाप्ता ॥ ॥ छ ॥ अथापात्रकषड्दैवत्यपार्वणश्राद्धपद्धतिः ॥ तत्रतावत्पूर्वदिनकृत्यम् ॥ कर्त्तापूर्वेद्युर्निरामिषमेकवारंभुक्त्वातद्दिनेरात्रौप्रदोषान्ते असंभवे प्रातर्वा श्राद्धारंभसमयेवा यथाऽवकाशं विप्रगृहं गत्वा ब्राह्मणनिमंत्रणंकुर्यात् । ततो निमंत्रितोविप्रःश्राद्धकर्ताच द्विर्भोजनं वेदाऽध्ययनं दूरगमनं मैथुनं भारोद्वहनं श्रमं हिंसां क्रोधं त्वरां प्रमादं कलहं क्षौरं च वर्जयेत शुचिः सत्यवादी क्षमी ब्रह्मचारी च स्यात् ॥ पूर्वमङ्गीकृतनिमंत्रणो नान्यन्निमंत्रणमिच्छेत् नान्यदन्नं प्रतिगृह्णीयात् ॥ नान्यत्रगमनादिनाकुतपादिश्राद्धकालातिक्रमंकुर्य्यात् नचास्नातः श्राद्धेभुञ्जीत ॥ अथश्राद्धदिनकृत्यम्॥ कर्ताब्राह्मेमुहूर्ते उत्थाययथोपदेशं शौचविधिंकृत्वा आचम्यदंतधावनं न कुर्यात् ॥ ततोनद्यादौस्नात्वा प्रक्षालिततनुः श्वेतवाससी परिधाय संध्यादि नित्यावश्यकं समाप्य पाकभूमिंगोमयादिना संस्कुर्यात् ॥ तत्रनूतनताम्रादिपात्रादिषुयथाशक्त्युत्कृष्टमन्नं भक्ष्यभोज्यादिनानाप्रकारमनेकव्यञ्जनयुतं स्वयं यजमानः पक्तुमारभेत अशक्तश्चेद्बांधवैः स्त्रीद्वारावापाचयेत् ॥ अमातृपितृवंशजां पाषंडां पुंश्चलीं पतितां वंध्यां अन्यगोत्रजाम् व्यंगकर्णीं चतुर्थदिने स्नातामपि गर्भिणीं चपाकार्थं वर्जयेत् ॥ एवंसमाप्ते च पाके श्राद्धभूमिं गोमयोदकेनोपलिप्य ज्वलदंगारैः संशोध्य गौरमृत्तिकयाच्छाद्य तिलैर्गौरसर्षपैश्चाविकिरेत् ॥ तत्र श्राद्धसामग्रीं संपाद्याऽपराह्णे स्नात्वा शुक्लवाससीद्वेपरिधाय ब्राह्मणैः सह श्राद्धभूमिमागत्य अन्नाभिप्रायेण सिद्धमित्युक्त्वा ॥ आसनानि उपस्पृश्य अत्राध्वमिति देवब्राह्मणान्प्राङ्मुखा

न्पितृब्राह्मणानुदङ्मुखानुपवेशयेत् [ तदभावे कुशमयाद्विजान्वा स्थापयेत् ] ततस्तेषांपादयोरधस्ताद्दक्षिणाग्रंकुशत्रयं प्रत्येकं दत्त्वा
प्रत्यासनसमीपेतिलतैलेन श्राद्धापवर्गस्थायिनो दीपान्दद्यात् ॥ तेषांरक्षा द्विजैरेवकार्य्या काककुक्कुटादीन्श्राद्धापहंतनपसारयेत् ॥ श्राद्धदे
शावरणं चकुर्यात् ॥ ततःकर्ता स्वासने प्राङ्मुखउपविश्य सव्येनाचम्य ॥ ॐअपवित्रः पवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीका
क्षंसबाह्याभ्यंतरःशुचिः ॥ ॐपुंडरीकाक्षःपुनात्वितिपठित्वाकुशत्रयानीतजलेन श्राद्धदेयद्रव्याणिस्वात्मानंचाभिसिंचेत् ॥ ततः ॐवैष्णव्यैनमः
ॐकाश्यप्यैनमः ॐअक्षय्यायैनमः ॐभूम्यैनमः ॥ इतिनत्वा ॥ श्राद्धदेशं गयात्मकत्वेन तदेकदेशस्थं गदाधरं चध्यात्वातयोः ॐभगव
त्यैगयायैनमः ॐभगवतेगदाधरायनमः ॥ इतिमनोवाक्कायैर्नमस्कारंकुर्य्यात्॥ ततःकुशत्रययवजलान्यादाय देशकालौ संकीर्त्य ॐअद्या
ऽमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्म्मणां सपत्नीकानां वसुरुद्रादित्यरूपाणां तथाऽस्मन्मातामहप्रमातामहवृद्धप्र
मातामहानाममुकामुकशर्म्मणां सपत्नीकानां वसुरुद्रादित्यरूपाणां सदैवं पार्वणश्राद्धं पितृतृप्तिकामोऽहंकरिष्ये॥ इतिसंकल्प्य ॥ गायत्रीं
त्रिर्जपित्वा ॐदेवताभ्यःपितृभ्यश्च महायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायै नित्यमेवनमोनमः ॥ इतित्रिर्जपेत् ततोयवतिलगौरसर्षपां
श्चगृहीत्वा ॐनमोनमस्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः॥ १॥ इतिपठित्वा॥ ॐतिलारक्षंत्वसुराद्भोरक्षंतुरा
क्षसात् ॥ वह्निर्वैश्रोत्रियंरक्षेदतिथिःसर्वरक्षकः ॥ इतिमंत्रेण तिलकुशान्द्वारदेशेक्षिप्त्वा ॥ ॐअग्निष्वात्तापितृगणाः प्राचींरक्षंतुमेदिशम् ॥ इति
मंत्रेणप्राच्याम् ॥ ॐतथाबर्हिषदःपान्तुयाम्यांयेपितरःस्थिताः॥ इतिमंत्रेणयाम्याम् ॥ ॐप्रतीचीमाज्यमापास्तद्वत् ॥ इत्यनेनप्रतीच्याम् ॥
ॐउदीचीमपिसोमपाः ॥ इत्यनेनोदीच्याम् ॥ ॐअधोर्ध्वमपिकोणेषु हविष्मंतश्चसर्वदा । इति॥ ॐरक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥

सर्वतश्चाधिपस्तेषांयमोरक्षांकरोतुवै ॥ वायुभूतापितॄणांच तृप्तिर्भवतुशाश्वती ॥ इत्यनेनअधस्तादूर्ध्वंकोणेषु चसर्वत्रतिलान्गौरसर्षपांश्च विकीर्य्य अपसव्येन वामेदक्षिणकटिभागे वा यथाचारं नीवीबंधोविधेयः । ततः सव्येनकस्मिंश्चित्पात्रे जलंगृहीत्वा दर्भैरालोडच ॥ ॐ यद्देवादेवहेडनंदेवासश्चकृमावयम् ॥ अग्निर्मातस्मादेनसोविश्वान्मुंचत्वर्ठंहसः ॥ १ ॥ यदिदिवायदिनक्तमेनांसिचकृमावयम् ॥ वायुर्म्मा तस्मादेनसोविश्वान्मुञ्चत्वर्ठंहसः ॥ २ ॥ यदिजाग्रद्यदिस्वप्नएनार्ठंसिचकृमावयम् ॥ सूर्य्योमातस्मादेनसोविश्वान्मुञ्चत्वर्ठं हसः ॥ ३ ॥ इतिकूष्मांडसूक्तेनाभिमंत्र्य ॥ ॐउदक्यादिदुष्टदृष्टिपातात् शूद्रादिसंपर्कदोषाच्चपाकादीनांपवित्रताऽस्तु ॥ इतिपाकादीन्संप्रोक्ष्यहरयेनिवेद येत् ॥ अथआसनादिदानम् ॥ तत्रतावत् उदङ्मुखःसजवनंदक्षिणं जान्वाच्य यज्ञोपवीत्यन्तर्जानुकरो जलयवसमन्वितं कुशत्रयमृज्वेवा दाय ॐ अद्याऽस्मत्पित्रादित्रयश्राद्धसंबंधिनः पुरूरवार्द्रवसंज्ञकाविश्वेदेवाइदमासनंवोनमः ॥ इत्युच्चार्यदेवतीर्थेनपूर्वाग्रं कुशत्रयमुत्सृजेत् ॥ एवंमातामहादिदेवेभ्योऽपिदद्यात् ॥ ततोदक्षिणामुखःप्राचीनोपवीतीःपातितवामजानुःद्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐअद्यामुक गोत्रास्मत्पितरमुकशर्म्मन्सपत्नीक वसुरूपइदमासनं तुभ्यंस्वधा इत्युच्चार्य पितृतीर्थेन मोटकं दक्षिणाग्रमुत्सृजेत् ॥ एवमेवपितामहा दिपञ्चभ्योऽपिदर्भासनानिदद्यात् ॥ ततःसव्यादिना सयवकरः ॥ ॐपुरूरवार्द्रवसंज्ञकान्विश्वान्देवानहमावाहयिष्ये इत्युच्चार्य ॐ विश्वेदेवा सऽआगत शृणुतामऽइमर्ठंहवम् ॥ एदंबर्हिर्निषीदत ॥ इत्यनेनावाह्य ॐयवोसियवयास्मद्द्वेषोयवयारातीः इत्यनेनयवान्विकीर्य ॥ ॐविश्वे देवाः शृणुतेम ठं हवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥ येऽअग्निजिह्वाऽउतवायजत्राऽआसद्याऽस्मिन्बर्हिषिमादयध्वम् ॥ इतिजपेत् ॥ विश्वेदेवोत्पत्तिनाम्नोरज्ञाने ॐआगच्छन्तुमहाभागा विश्वेदेवामहाबलाः ॥ येयत्रयोजिताःश्राद्धे सावधानाभवन्तुते ॥ १ ॥ इतिश्लोको

ध्युच्चारणीयः ॥ ततोऽपसव्यादिना सतिलहस्तः ॥ ॐ पितॄनहमावाहयिष्ये ॥ इत्युच्चार्य्य ॥ ॐउशन्तस्त्वानिधीमह्युशन्तः समिधीमहि ॥
उशन्नुशतऽआवहपितॄन्हविषेऽअत्तवे ॥ इत्यावाह्य ॥ ॐअपहताऽअसुरारक्षाᳬसिवेदिषदः ॥ इतितिलान् श्राद्धदेशेविकीर्य्य॥ॐआयन्तुनः
पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेवन्त्वस्मान् इति जपेत् ॥ ततः सव्यापसव्याभ्या
मर्घ्यपात्रेष्वष्टसुदर्भपवित्रमेकैकमुपरिधृत्वा ॥ ॐशन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये॥शंयोरभिस्रवन्तुनः॥ इतिप्रत्येकंजलंप्रक्षिप्य देवपात्रे
षुॐयवोसियवयास्मद्द्वेषोयवयारातीः ॥ इतियवान्विकीर्य पित्रादिपात्रषट्के ॐतिलोसिसोमदैवत्यो गोसवोदेवनिर्मितः॥ प्रत्नमद्भिःप्रक्तःस्व
धयापितॄँल्लोकान्प्रीणाहिनः स्वधानमः इतितिलान्प्रक्षिपेत् ॥ ततोऽष्टसुपात्रेषुतूष्णीमेवगंधपुष्पादि निक्षिपेत् ॥ ततः सव्येनदेवार्घपात्रसंप
त्तिरस्तु इतिपठित्वा प्रथमंदेवार्घपात्रं वामहस्तेकृत्वा ॥ तत्रस्थंपवित्रंदेवपात्रेपूर्वाग्रंदत्त्वा किंचिदुदकंचदत्त्वा ॐ यादिव्याआपः पयसासंब
भूवुर्य्याऽअन्तरिक्षाऽउतपार्थिवीर्य्याः हिरण्यवर्णायज्ञियास्तानऽआपः शिवाःशᳬस्योनाःसुहवाभवन्तु ॥ इतिमंत्रेणाभिमंत्र्यकुशत्रययवजला
न्यादाय ॥ ॐअद्याऽस्मत्पित्रादित्रयश्राद्धसंबंधिनः पुरूरवार्द्रवसंज्ञकाविश्वेदेवाएषवोहस्तार्घः स्वाहानमः॥ इतिदक्षिणहस्तेनदेवतीर्थेनपवि
त्रोपरि अर्घ्यंदत्त्वापवित्रसहितमर्घ्यपात्रंदेवपुरतः स्थापयेत् ॥ एवमेवमातामहादिदेवेभ्योऽप्यर्घ्यंदद्यात् ॥ ततोऽपसव्यादिना॥ॐपित्रार्घपा
त्रसंपत्तिरस्तुइतिपठित्वा ॥ पितृपात्रंगृहीत्वा पवित्रंभोजनपात्रेदक्षिणाग्रं दत्त्वा ॐयादिव्याऽआपइत्यनेनाभिमंत्र्य ॥ द्विगुणभुग्नकुशत्रयति
लजलान्यादाय ॐअद्यामुकगोत्र अस्मत्पितरमुकशर्मन् सपत्नीक वसुरूप एषतेहस्तार्घः स्वधानमः इतिदक्षिणहस्तस्थपितृतीर्थेन यथाज
लंपतितितथापवित्रोपरिसावशेषमर्घंदद्यात् अर्घपात्रंचपितृपुरतः स्थापयेत् एवमेव पितामहादिपञ्चभ्योपिदद्यात । ततः सव्यंकृत्वा ॐ विश्वे

भ्योदेवेभ्यःस्थानमसीत्युक्त्वापवित्रजलयुतदेवा र्घपात्रद्वयंमासनदक्षिणपार्श्वेउत्तानं क्रमेण स्थापयेत्॥ ततोऽपसव्यादिनापितामहप्रपितामहा
र्घपात्रस्थजलादीनि पितृपात्रेकृत्वा एवमेववृद्धप्रमातामहप्रमातामहयोः पात्रस्थजलादीनिचमातामहपात्रेकुर्यात् ततःसव्यंकृत्वाप्राङ्मुखः
पुत्रकामःपितृपात्रस्थजलेनमुखमार्ज्जनम् आयुष्कामोदक्षिणपाणिना नेत्राञ्जनञ्चकुर्यात् ॥ अथवा ॐआपःशिवाःशिवतमाःशांताःशांततमा
स्तेकृण्वन्तु भेषजमित्यनेनाभिषेकं कुर्यात् ततोऽपसव्यंकृत्वाॐ पितृभ्यः स्थानमसीतिपठित्वा प्रथमं पितृपात्रंपित्रासनवामप्रदेशभूमा
वधोमुखं संस्थाप्य तदुपरि पितामहपात्रंतदुपरि प्रपितामहपात्रंचदद्यात् ॥ एवं मातामहेभ्यः स्थानमसीत्युक्त्वा मातामहपात्रंन्युब्जीकृत्य
प्रमातामहवृद्धप्रमातामहपात्राभ्यामाच्छादयेत्। एतानिषट्कपात्राणिदक्षिणादानपर्य्यंतंनोद्धरेन्नचालयेत् । अथगंधादिदानम् । सव्यादिकृत्वा
गंधपुष्पधूपादिकंधृत्वा कुशत्रययवजलान्यादाय ॐ अद्यास्मत्पित्रादित्रयश्राद्धसंबंधिनः पुरूरवार्द्रवसंज्ञकाविश्वेदेवाएतानिगंधपुष्पधूपदीप
तांबूलयज्ञोपवीतवासांसिवोनमः इत्युच्चार्यगंधाद्युत्सृजेत् एवमेवमातामहादिदेवेभ्योऽपिदद्यात् ॥ ततः कृतांजलिः कर्ताविश्वेषांदेवानामर्च्चनं
संपूर्णमस्त्वितिब्रूयात् ॥ ततःअपसव्यादिनापितृपक्षेगंधादिकंधृत्वा द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐ अद्यामुकगोत्रास्मत्पितर
मुकशर्मन्सपत्नीकवसुरूपएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितुभ्यंस्वधा ॥ इति पित्रेगंधादिदत्त्वा एवमेवमातामहादिपंचभ्योपि
दद्यात्॥ततःकृतांजलिर्भूत्वा ॐपितॄणामर्च्चनंसंपूर्णमस्त्वितिब्रूयात् । एवंगंधाद्यर्चनंविधायसव्यापसव्याभ्यांभोजनपात्रस्थापनदेशं संमार्ज्यः
पात्राणिदत्त्वा गौरमृत्तिकयाजलेनवाब्राह्मणादिषुचतुरस्रत्रिकोणवर्तुलमंडलानि आसनानिवेष्टयित्वा कुर्य्यात् ॥ अथाग्नौकरणम् ॥ तत्रव्यंज
नक्षारवर्जितंघृताक्तमुष्णंश्राद्धान्नाग्रभागंकांस्यपात्रेसमुद्धृत्य ॥ सव्येन ( अपसव्येनवा ) ॐ अग्नौकरणंकरिष्ये इतिपठित्वा कुरुष्वेति ब्राह्म

णानुज्ञातो भयक्रोधत्वरारहितः स्वदक्षिणकरेण रजतादिपात्रस्थजले ॐ अग्नयेकव्यवाहनायस्वाहा इदमग्नयेकव्यवाहनाय ॥ ॐसो
मायपितृमतेस्वाहा इदंसोमायपितृमते ॥ इत्याहुतिद्वयंजुहुयात् ततोहुतशेषमन्नंदेवपात्रद्वये पित्रादिपात्रेषुचदत्त्वा पिंडार्थमवशेषयेत्
[ अत्रपरकीयभूमौश्राद्धकरणे ॐइदमन्नमेतद्भूस्वामिपितृभ्योनमः इतिघृताक्तमन्नंदर्भेषुदद्यात् ] ततः सव्येनदेवपात्रयोः अपसव्येनापितृ
पात्रेषुच उष्णमन्नंसघृतमनेकव्यंजनयुतंसुशीतलजलसहितंयथावत्परिविष्य मधुनाभिघार्य्य ॐमधुव्वाताऽऋतायते मधुक्षरंतिसिंधवः ॥
माध्वीर्न्नः संत्वोषधीः॥१॥ॐमधुनक्तमुतोषसो मधुमत्पार्थिवर्ठंरजः मधुद्यौरस्तुनः पिता ॥२॥ ॐमधुमान्नोव्वनस्पतिर्म्मधुमाँऽअस्तुसूर्य्यः मा
ध्वीर्गावोभवन्तुनः ॥३॥ ॐमधुमधुमध्वित्यभिमंत्रयेत् ॥ ततः सव्येन उत्तानपाणिभ्यां पित्रादिदेवपात्रमालभ्य ॥ ॐ पृथिवीतेपात्रंद्यौ
रपिधानं ब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमि स्वाहा ॥ इतिजप्त्वा ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपार्ठंसुरेस्वाहा इत्येतां
वैष्णवीमृचमुच्चार्य्याऽधोमुखंस्वांगुष्ठमनखम् ॥ ॐविष्णोहव्यर्ठंरक्ष इतियजुषाऽन्नेनिवेश्य ॥ इदमन्नम् इमाआपः इदमाज्यम् एतत्सर्वंहवि
रित्युक्त्वा ॐअपहताऽअसुरारक्षार्ठंसिवेदिषद इतियवान् अन्नपात्रपरितोविकीर्य्य वामेनकरेण पात्रंस्पृन्दक्षिणकरेण कुशत्रययवजलान्या
दाय ॐअद्याऽस्मत्पित्रादित्रयश्राद्धसंबंधिनः पुरूरवार्द्रवसंज्ञकाविश्वेदेवाइदमन्नं हव्यंसोपस्करंपरिविष्टममृतरूपं वः स्वाहानमः इत्युदकंदेव
तीर्थेनदेवदक्षिणभागेभूमौनिक्षिपेत् । एवमेव मातामहादिदेवेभ्योऽप्युत्सृजेत्॥ ततोऽपसव्यादिना पितृपात्रंन्युब्जपाणिभ्यां न्यस्ताभ्यांस्पृष्ट्वा
ॐपृथिवीतेपात्रंद्यौरपिधानं ब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वधा इतिपठित्वा ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपार्ठं
सुरे॥ इत्येतामृचंचजप्त्वास्वाङ्गुष्ठमधोमुखमनखम् ॐविष्णोकव्यर्ठंरक्ष इतियजुषाऽन्नेनिवेश्य इदमन्नम् इमाआपः इदमाज्यम् एतत्सर्वंकव्यम्

इतिपठित्वा ॐअपहताऽअसुरा रक्षाꣳसिवेदिषद इतितिलानन्नपात्रपरितोऽप्रदक्षिणेन विकीर्य्य वामकरेण पात्रंस्पृशन् दक्षिणकरेण द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐअद्यामुकगोत्र अस्मत्पितरमुकशर्मन्सपत्नीकवसुरूप इदमन्नंकव्यं सोपस्करं परिविष्टममृतरूपंतुभ्यं स्वधाइत्युदकंपितृतीर्थेन पित्रासनवामभागेभूमौ निक्षिपेत् । एवमेव पितामहादिपंचभ्योऽप्युत्सृजेत् ॥ ततः ॐअन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्तुइतिप्रार्थ्य सव्येन व्याहृतित्रयपूर्वां सप्रणवां गायत्रीं त्रिः सकृद्वाजपेत् ॥ तथा पवित्रपाणिर्दर्भेष्वासीनः ॥ ॐमधुव्वाताऽऋतायतेमधुक्षरंतिसिंधवः॥ माध्वीर्नः संत्वोषधीः ॥१॥ ॐ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनः पिता ॥ २ ॥ ॐमधुमान्नोवनस्पतिर्मधुमाँऽअस्तुसूर्य्यः माध्वीर्गावोभवन्तुनः ॥३॥ इतित्र्यृचम् ॥ ॐमधुमधुमध्विति च जपेत् ॥ ततः ॐकृणुष्वपाजःप्रसितिन्नपृथ्वींय्याहि राजेवामवाँऽइभेन तृष्वीमनुप्रसितिन्द्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥१॥ तवभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः ॥ तपूꣳष्यग्नेजुह्वापतंगानसंदितोविसृजव्विष्वगुल्काः ॥२॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोऽअस्याऽअदब्धः॥योनोदूरेऽअघशꣳसोयोऽअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत्॥३॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ२ऽओषतात्तिग्महेते योनोऽअरातिꣳसमिधानचक्रे नीचातं धक्ष्यतसन्नशुष्कम् ॥४॥ ऊर्ध्वोभवप्रतिविद्ध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने। अवस्थिरातनुहियातुजूनाञ्जामिमजामिम्प्रमृणीहिशत्रून्॥ अग्नेष्ट्वातेजसा सादयामि॥५॥इतिरक्षोघ्नीःपंचऋचःपाठित्वा भूमिंतिलैरास्तीर्य्यपित्रादीन्ध्यायेत् ॥ ततःॐउदीरतामवरऽउत्परासऽउन्मध्यमाःपितरःसोम्यासः॥असुंय्यईयुरवृकाऽऋतज्ञास्तेनोऽवन्तुपितरोहवेषु॥१॥आङ्गिरसोनःपितरोनवग्वाऽअथर्व्वाणोभृगवः सोम्यासः ॥ तेषांवयꣳसुमतौयज्ञियानामपिभद्रे सौमनसे स्याम ॥२॥ येनःपूर्वेपितरः सोम्यासोनूहिरे सोमपीथं वसिष्ठाः ॥ तेभिर्यमः ॥

सर्ठं राणोहवीठं ष्युशन्तुशाद्भिः प्रतिकाममत्तु॥३॥त्वठं सोमप्रचकितोमनीषात्वठं रजिष्ठमनुनेषिपंथाम् ॥ तवप्रणीतीपितरोनऽइंदोदेवेषुरत्न
मभजन्तधीराः॥४॥त्वयाहिनः पितरः सोमपूर्वेकर्म्माणिचक्रुः पवमानधीराः ॥ वन्वन्नवातः परिधींठंरपोर्णुवीरोभिरश्वैर्मघवाभवानः॥५॥ त्व
ठं सोमापितृभिः संविदानोनुद्यावा पृथिवीऽआततंथ॥ तस्मैतऽइन्दोहविषाविधेम॥वयठं स्यामपतयोरयीणाम्॥६॥ बर्हिषदः पितरऽऊत्यर्व्वा
गिमावोहव्याचकृमाजुषध्वम् ॥ तऽआगतावसा शन्तमेनाथानः शंय्योररपोदधात॥७॥ आहम्पितॄन्त्सुविदत्रा ँ ऽअवित्सिनपातञ्चविक्रमणं
चविष्णोः॥बर्हिषदोयेस्वधया सुतस्यभजन्तापित्वस्तऽइहागमिष्ठाः॥८॥उपहूताः पितरः सोम्यासोबर्हिष्येषुनिधिषुप्रियेषु ॥ तऽआगमन्तुतऽइह
श्रुवन्त्वधिब्रुवन्तुतेवन्त्वस्मान् ॥ ९ ॥ आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुते
वन्त्वस्मान्॥ १०॥अग्निष्वात्ताः पितरऽएहगच्छतसदः सदःसदतसुप्रणीतयः ॥ अत्ताहवीठं षिप्रयतानिबर्हिष्यथारयिठं सर्ववीरंदधातन॥ ११॥
येऽअग्निष्वात्तायेऽअनग्निष्वात्तामध्येदिवः स्वधयामादयन्ते॥तेभ्यः स्वराडसुनीतिमेतांयथावशन्तन्वङ्कल्पयाति॥ १२॥अग्निष्वात्तानृतुमतो
हवामहेनाराशठं ससोमपीथंय्यऽआशुः॥तेनोविप्रासः सुहवाभवन्तुवयठं स्यामपतयोरयीणाम् ॥१३॥ इतिपितृमंत्रान्॥ ॐसहस्रशीर्षापुरुषः
सहस्राक्षः सहस्रपात् ॥ सभूमिठं सर्वतस्पृत्वात्यतिष्ठद्दशांगुलम् ॥ इत्यादिषोडशऋचात्मकं पुरुषसूक्तम् ॥ ॐआशुः शिशानोवृषभोनभीमो
घनाघनः क्षोभणश्चर्षणीनाम् ॥ संक्रंदनोनिमिषऽएकवीरःशत ठं सेनाऽअजयत्साकमिन्द्रः इत्यादिसप्तदशमंत्रात्मकमप्रतिरथंचपठेत् ॥ ततः
ॐसप्तव्याधादशार्णेषु मृगाःकालंजरेगिरौ ॥ चक्रवाकाःशरद्वीपे हंसाः सरसिमानसे ॥१॥ तेभिजाताःकुरुक्षेत्रे ब्राह्मणावेदपारगाः ॥ प्रस्थि
तादूरमध्वानं यूयंतेभ्योऽवसीदत॥२॥ इतिहविःस्तोत्रम् ॐयोगीश्वरंयाज्ञवल्क्यं संपूज्यमुनयोब्रुवन् ॥ वर्णाश्रमेतराणांनो ब्रूहिधर्मानशेषतः॥

मन्वात्रिविष्णुहारीतयाज्ञवल्क्योशनोङ्गिराः ॥ यमापस्तंबसंवर्ताः कात्यानबृहस्पती ॥ पराशरव्यासशंखालिखितादक्षगौतमौ ॥ शातातपोव
सिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥ इतियाज्ञवल्कीयगाथां चपठित्वा सप्तार्चिस्तवं च पठेत् ॥ ॐअमूर्त्तानांचमूर्त्तानां पितॄणांदीप्ततेजसाम् ॥
नमस्यामिसदातेषां ध्यायिनांदिव्यचक्षुषाम् ॥ १ ॥ इंद्रादीनांचनेतारो दक्षमारीचयोस्तथा ॥ सप्तर्षीणां तथान्येषां तान्नमस्या
मिकामदान् ॥ २ ॥ मन्वादीनांमुनींद्राणां सूर्याचंद्रमसोस्तथा ॥ तान्नमस्याम्यहंसर्वान्पितरश्चार्णवेषुच ॥ ३ ॥ नक्षत्राणांग्रहाणांच
वाय्वग्न्योर्नभसस्तथा ॥ द्यावापृथिव्योश्चतथा नमस्यामिकृताञ्जलिः ॥ ४ ॥ देवर्षीणांग्रहाणांच सर्वलोकनमस्कृतान् ॥ अभयस्य
सदादातॄन्नमस्येहंकृताञ्जलिः ॥ ५ ॥ प्रजापतयेकश्यपाय सोमायवरुणायच ॥ योगीश्वरेभ्यश्चसदा नमस्यामिकृताञ्जलिः ॥ ६ ॥
नमोगणेभ्यःसप्तभ्यस्तथालोकेषुसप्तसु ॥ स्वयंभुवेनमस्यामि ब्रह्मणेयोगचक्षुषे ॥७॥ सोमाधारान्पितृगणान्योगमूर्तिधरांस्तथा ॥ नमस्या
मितथासोमं पितरंजगतामहम् ॥ ८ ॥ अग्निरूपांस्तथैवान्यान्नमस्यामिपितॄनहम् ॥ अग्नीषोममयंविश्वं यतएतदशेषतः ॥ ९ ॥ येतुतेजसि
येचैते सोमसूर्याग्निमूर्त्तयः ॥ जगत्स्वरूपिणश्चैव तथाब्रह्मस्वरूपिणः ॥१०॥ तेऽभ्योखिलेभ्योयोगिभ्यः पितृभ्योयतमानसः ॥ नमोनमो
नमस्तेमेप्रसीदंतु स्वधाभुजः ॥ ११ ॥ पितर ऊचुः ॥ स्तोत्रेणानेनचनरो योस्मान्स्तोष्यतिभक्तितः ॥ तस्यतुष्टावयंभोगानात्मज्ञा
नंतथोत्तरम् ॥ १२ ॥ शरीरारोग्यमर्थंच पुत्रपौत्रादिकंतथा ॥ प्रदास्यामोनसंदेहो यच्चान्यदपिवांछितम् ॥ १३ ॥ तस्मात्पुण्यफलंलोके
वाञ्छद्भिःसततंनरैः ॥ पितॄणांचाक्षयांतृप्तिं स्तव्यास्स्तोत्रेणमानवैः ॥ १४ ॥ पठिष्यंतिद्विजाग्र्याणां भुंजतांपुरतःस्थिताः ॥ अस्माक
मक्षयंश्राद्धं तद्भविष्यत्यसंशयम् ॥१५॥ इति ॥ ततोन्यान्यपिरुचिस्तोत्रब्रह्मविष्णुस्तवप्रभृतीनियथारुचियथाशक्तिपठेत् ॥ ततोऽपसव्या

दिनाउच्छिष्टसन्निधौभूमिंप्रोक्ष्यतत्रदक्षिणाग्रंकुशत्रयमास्तीर्यसर्वप्रकारमन्नंसव्यंजनमुद्धृत्यसतिलमेकीकृत्य ॐ अग्निदग्धाश्चयेजीवा येऽप्य
दग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यंतु तृप्तायांतुपरांगतिम् ॥ इति मंत्रेणकुशोपरिअन्नंविकिरेत् ॥ ततः सव्यंकृत्वा आचम्यहरिंस्मृत्वा पूर्व
वद्गायत्रीं मधुव्वाताऽऋतायते इत्यादिऋचं मधुमधुमध्वितिचपठेत् ततोऽपसव्येन पित्राद्युच्छिष्टसन्निधौचतुरस्रंदक्षिणप्लवं रमणीयं हस्त
मात्रंचतुरंगुलोच्छ्रितंपित्रादित्रयपिंडपातनार्थं सिकताभिः स्थानंनिर्माय तथामातामहाद्युच्छिष्टसन्निधौ मातामहादिपिंडपातनार्थं तादृश
मेवस्थानं कुर्यात् तत्रउभयत्र मध्यदेशेदर्भपिंजुलीमूलेन ॥ ॐअपहताऽअसुरारक्षाꣳसिवेदिषद इतिमंत्रेण सव्योपगृहीतदक्षिणहस्तेन
दक्षिणाग्रांरेखां सकृत्सकृल्लिखित्वा दर्भपिंजुलीमुत्तरस्यांदिशिनिक्षिप्य ॥ ॐ येरूपाणिप्रतिमुंचमानाऽअसुराःसंतःस्वधयाचरंति ॥ परापुरो
निपुरोयेभरंत्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ इतिमंत्रेणज्वलदुल्मुकं प्रत्येकंरेखोपरिभ्रामयित्वादक्षिणतोनिदध्यात्तत उपमूलसकृदाच्छिन्न
दक्षिणाग्रकुशत्रयंरेखोपरिस्तीर्त्वासव्येनदेवताभ्य इतित्रिर्जपेत् ॥ ततोऽपसव्येनपुटकषट्केजलतिलगंधपुष्पाणिकृत्वाएकंपात्रंवामहस्ते
कृत्वा द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रास्मत्पितरमुकशर्मन्सपत्नीकवसुरूप अत्राऽवनेनिक्ष्वतेस्वधा इति कुश
मूले पित्रे पितृतीर्थेन अवनेजनंदद्यात् ॥ एवं पितामहायकुशत्रयमध्येप्रपितामहायकुशाग्रेअवनेजनंचदद्यात् ॥ एवमेवमातामहादिभ्योऽपि
दद्यात् ॥ ततःसर्वस्माच्छ्राद्धशेषान्नाद्युष्णंकिंचित्किंचिदन्नमुद्धृत्यमध्वाज्यतिलसर्वव्यंजनयुतंरजतादिपात्रे कृत्वा बिल्वोपमान्षट्पिंडान्निर्माय
मधुघृताभ्यामाभिघार्यपित्रादिभ्योदद्यात् ॥ तत्र प्रथमपिंडं द्विगुणभुग्नकुशत्रयादीनिचादाय ॐअद्यामुकगोत्र अस्मत्पितरमुकशर्मन्सपत्नीक
वसुरूपएतत्तेपिंडंस्वधाइतिप्रथमावनेजनस्थाने सव्योपगृहीतदक्षिणहस्तेनापितृतीर्थेनदद्यात् एवमेवपितामहादिभ्यः पंचभ्यः प्रत्येकं तत्त

दवनेजनस्थाने पिंडंदद्यात् ततः प्रपितामहादूर्ध्वंत्रयाणांलेपभुजांतृप्तिमुद्दिश्यपित्रादिकपिंडाधारकुशमूले ॐलेपभागभुजःपितरस्तृप्यन्तु इतिपठित्वाहस्तंप्रोञ्छ्य जलेनहस्तौप्रक्षालयेत् ततः सव्यंकृत्वा त्रिराचम्य हरिंस्मरेत् ततोऽपसव्येन ॐ अत्रपितरो मादयध्वं यथाभागमावृषायध्वम् ॥ इतिपित्रुद्देशेनपठित्वावामावर्त्तेनोदङ्मुखीभूयप्रीतमनाः मनाक् श्वासं नियम्य तेनैव यथापरावृत्त्य ॐ अमीमदंतपितरो यथा भागमावृषायिषत इति जपेत् एवंमातामहपक्षेपिमंत्रोहेन कुर्यात् ततः पूर्वदत्तावनेजनपात्रस्थजलेन ॐअद्यामुकगोत्र अस्मत्पितरमुकशर्मन्सपत्नीक वसुरूप अत्रप्रत्यवनेनिक्ष्वतेस्वधा इतिप्रथमपिंडोपरि प्रत्यवनेजनं दत्त्वा एवमेव पितामहादिपिंडोपरि तत्तदवनेजनपात्रेणप्रत्येकं प्रत्यवनेजनंदद्यात् ततोनीवींविस्रंस्य सव्येनआचम्य अपसव्यंकृत्वा ॐनमोवः पितरो रसाय नमोव पितरः शोषाय नमोवः पितरो जीवाय नमोवः पितरः स्वधायै नमोवः पितरो घोराय नमोवः पितरोमन्यवे नमोवः पितरः पितरोनमोवो गृहान्नः पितरो दत्तसतोवः पितरोदेष्म इतिकृताञ्जलिःपठेत् । ततः ॐ एतद्वः पितरोवास इति पठित्वा षट्सुपिंडेषुसूत्राणि प्रतिपिंडमूर्णादशा वा पंचाशदूर्ध्ववयस्कयजमानहृदयलोमानि वा दद्यात् ॥ततो द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐअद्यामुकगोत्र अस्मत्पितरमुकशर्मन् सपत्नीकवसुरूप एतत्तेवासः स्वधा इति सूत्रमुत्सृजेत् एवमेव पितामहादिपंचस्वपिपिंडेषु तत्तन्नाम्नोत्सृजेत् ततः पित्रादीनुद्दिश्य तदीयपिंडेषु तूष्णींगंधपुष्पधूपदीपतांबूलदक्षिणादीनिदद्यात् पिंडशेषान्नंचपिंडसमीपे विकिरेत्॥ततः सव्यापसव्याभ्यां देवपितृभोजनपात्रेषु ॐ शिवाआपः संतु इति सकृत्सकृज्जलं दद्यात ॥ ॐ सौमनस्यमस्तु इतिपुष्पाणि ॥ ॐ अक्षतंचारिष्टमस्त्वितियवांश्चदद्यात् ( नतंडुलान् ) ॥ ततः ॐअमुकगोत्रस्य अस्मत्पितुरमुकशर्मणः सपत्नीकस्यवसुरूपस्यदत्तैतदन्नपानादिकमक्षय्यमस्त्वितिसतिलमक्षय्योदकं भोजनपात्रेदद्यात् ॥

एवमेवपितामहीनांनामगोत्राभ्यांतदीयभोजनपात्रेषु अक्षय्योदकं दद्यात्॥ ततः सव्यंकृत्वा प्राङ्मुखस्तन्मनाः कृतांजलिर्दक्षिणां दिशंपश्यन् ॐ अघोराः पितरः संत्वितिपठित्वासमाचारात्पूर्वाग्रां जलधारांदत्त्वा आशिषोगृह्णीयात्॥ॐ गोत्रंनोवर्द्धताम् दातारोनोभिवर्द्धताम् वेदाः सततिरेवच श्रद्धाचनोमाव्यगमत् बहुदेयंचनोऽस्तु अन्नंचनो बहुभवेत् अतिथींश्चलभेमहि याचितारश्चनः सन्तु माचयाचिष्मकंचन ॥ एताः सत्याआशिषःसंतुइतिवदेत् ॥ ततोऽपसव्यंकृत्वापिंडोपरिसपवित्रान्कुशानास्तीर्य स्वधांवाचयिष्ये इतिब्रूयात् ॥ ॐ पितृभ्यःपितामहेभ्यः प्रपितामहेभ्यः सपत्नीकेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यः सपत्नीकेभ्यश्च स्वधोच्यतामित्युक्त्वा ॥ ॐउर्ज्जं वहंतीरमृतंघृतंपयः कीलालंपरिस्रुतम् ॥ स्वधास्थतर्पयतमेपितॄनितिसपवित्रकुशोपरिदक्षिणाग्रांजलधारांदद्यात् ॥ ततः स्वयंयजमानोऽर्घ्यपात्राण्युत्तानीकृत्यसव्येनदेवदक्षिणांदद्यात् ॥ हिरण्यंकुशत्रयादीनिचादाय ॥ ॐ अद्याऽस्मत्पित्रादित्रयश्राद्धसंबंधिनांपुरूरवार्द्रवसंज्ञकानां विश्वेषांदेवानां कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदंहिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणात्वेनदातुमहमुत्सृजे ॥ इति संकल्प्य दद्यात् ॥ एवमेवमातामहादिदेवश्राद्धदक्षिणामपिदद्यात् ॥ ततोऽपसव्यंकृत्वारजतदक्षिणांजलकुशादीनिचादाय ॥ ॐअद्यामुकगोत्रस्यअस्मत्पितुरमुकशर्मणः सपत्नीकस्यवसुरूपस्य कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणात्वेनदातुमहमुत्सृजे॥इतिपितृदक्षिणांदद्यात् एवमेव पितामहादिपंचभ्योपिश्राद्धदक्षिणामपिदद्यात्[दैवेरजतानिषेधःरुद्राश्रुसंभवात्] असंभवेफलमूलादिकंदद्यात् ततःब्राह्मणानुज्ञातः पिंडानुत्थाप्य स्थाल्यां निधायावघ्राणंकृत्वा पिंडाधःस्थान्सकृदाच्छिन्नान्दर्भानुल्मुकद्वयंचवह्नौक्षिपेत् ॥ ततः सव्येन ॐविश्वेदेवाःप्रीयंतामितिप्रार्थ्य ॥ अपसव्यंकृत्वा ॥ कुशत्रयेण ॐ वाजेवाजेऽवतवाजिनो नोधनेषुविप्राअमृताऋतज्ञाः ॥

अस्यमद्धः पिबत मादयध्वंतृप्तायातपथिभिर्देवयानैः॥१॥ इतिमंत्रेणापितॄन्विसृज्य ॥ ॐ आमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमागंतांपितरामातरासोमोऽमृतत्वेनगम्यतात् ॥२॥ इतिप्रदक्षिणीकृत्यनमस्कृत्योपविशेत् ॥ ततः सव्येन ॐ देवताभ्यइतित्रिर्जपित्वा अपसव्येन रक्षादीपंनिर्वाप्यहस्तौपादौप्रक्षाल्यसव्येनआचम्य ॥ ॐ प्रमादात्कुर्वतांकर्म० इतिपठित्वाकर्म्मपूर्तिकामोविष्णुंस्मरेत् ॥ ततः पिंडान् गां वायसान् अजंवाखादयेत् अग्नौजलेवाक्षिपेत् ॥ पुत्रकामः पितामहपिंडम् ॐ अपांत्वौषधीनांरसंप्राशयामि भूतकृतंगर्भंधत्स्व ॥ इतिमंत्रेणऋतुस्नातायैपितृभक्षायैसाध्व्यैधर्म्मपत्न्यैदद्यात ॥ साशुचिर्वाग्यता पुत्रकामा ॐ आधत्तपितरोगर्भंकुमारंपुष्करस्रजम् ॥ यथेहपुरुषोसत् ॥ इतिमंत्रेपठितेऽश्नीयात् ॥ ततोवैश्वदेवबलिकमणीकृत्वा ॥ दशाऽष्टौ संख्याकान् ब्राह्मणान्भोजयेत् ॥ ततः॥ यस्यस्मृत्याचनामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयाति सद्योवंदेतमच्युतम् ॥ इतिपठित्वा अतिथिसुतभृत्यबांधवादिभिः सहस्वयमपिभोजनंकुर्यात् ॥ तद्दिनेश्राद्धकर्ताद्यूताध्वगमनं मैथुनायासस्वाध्यायकलहंपुनर्भोजनहिंसादीनिचनकुर्यात् ॥ इतिगौडीयश्राद्धप्रकाशे अपात्रकषड्दैवत्यपार्वणश्राद्धपद्धतिः समाप्ता ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ अथ महालयादिषु जीवत्पितृककर्तृकमातृपार्वणश्राद्धप्रयोगः॥ कर्त्तापूर्वेद्युर्निरामिषमेकवारंभुक्त्वा तद्दिनेरात्रौ प्रदोषांते विप्रगृहेषुगत्वाब्राह्मणेभ्योनिमंत्रणंकुर्यात् ॥ ततःश्राद्धदिनेप्रातर्नित्यावश्यकं समाप्य पाकभूमिंमृद्गोमयोदकेनसंस्कृत्य ॥ तत्रस्वयंसुस्नातबांधवैर्वास्त्रीद्वारावापाकंकुर्यात् ॥ ततोदिनस्यषण्मुहूर्त्तानंतरं श्राद्धभूमिंगोमयोदकेनोपलिप्य ज्वलदंगारैः संशोध्यगौरमृत्तिकयाच्छाद्य तिलैर्गौरसर्षपैश्चविकीर्य्यतत्रश्राद्धसामग्रींसंपाद्यतिलतैलेनदीपंप्रज्वाल्य संस्थाप्यश्राद्धस्थानं वस्त्रेणवेष्टयेत् ॥ ततोऽपराह्णेपुनःस्नात्वा शुक्लधौतवाससीपरिधाय

श्राद्धदेशमागत्य स्वासनेप्राङ्मुखउपविश्य सव्येन आचम्य प्राणानायम्य ॐअपवित्रः पवित्रोवा ॐपुंडरीकाक्षःपुनात्विति पठित्वाश्राद्धी यद्रव्याणिस्वात्मानं च सिंचेत्। ततः ॐ वैष्णव्यैनमः ॥ ॐ काश्यप्यैनमः॥ॐअक्षय्यायैनमः ॥ ॐभूम्यैनमः॥ इति नत्वा ॥ ॐभगवत्यै गयायैनमः ॥ ॐ भगवतेगदाधरायनमः ॥ इतितयोर्नमस्कारंकुर्यात् ॥ ततः कुशत्रययवजलान्यादाय देशकालौसंकीर्त्य ॐ अद्यामुक गोत्राणामस्मन्मातृपितामहीप्रपि तामहीनाममुकामुकदेवीनां गंगायमुनासरस्वतीरूपाणां विश्वेदेवपूर्वकं सपिंडकंपार्वणश्राद्धमहंकरिष्ये ॥ इतिसंकल्प्य ॥ गायत्रींत्रिर्जपित्वा ॐ देवताभ्यःपितृभ्यश्च महायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायै नित्यमेवनमोनमः ॥ इतित्रिर्जपेत् ॥ ततोयवांस्तिलगौरसर्षपांश्चगृहीत्वा ॥ ॐ तिलारक्षंत्वसुराद्दर्भारक्षंतु राक्षसात् ॥ वह्निश्रोत्रियंरक्षेदतिथिःसर्वरक्षकः इतितिलकुशान् द्वारदेशे क्षिप्त्वा ॥ ॐअग्निष्वात्ताः पितृगणाः प्राचींरक्षंतुमेदिशम्॥ तथाबर्हिषदःपांतु याम्यांयेपितरः स्थिताः॥ १ ॥प्रतीचीमाज्यपास्तद्वदुदीचीमपिसोमपाः ॥ अधोर्ध्वमपिकोणेषु हविष्मंतश्चसर्वदा ॥ २ ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥ सर्वतश्चाधिपस्तेषां यमोरक्षां करोतुवै ॥ ३ ॥ वायुभूतपितॄणांच तृप्तिर्भवतुशाश्वती ॥ इतिमंत्रैर्दिक्षुअधस्तादूर्ध्वंकोणेषुचसर्वत्रतिलान्गौरसर्षपांश्चविकीर्य्य अपसव्ये नवामेदक्षिणेवाकटिभागे नीवीबंधोविधेयः ॥ ततः सव्येनकस्मिंश्चित्पात्रे जलंगृहीत्वा दर्भैरालोड्य ॐयद्देवादेवहेडनंदेवासश्चकृमावयम् ॥ अग्निर्मातस्मादेनसोविश्वान्मुञ्चत्वंहसः ॥ १ ॥ यदिदिवायदिनक्तमेनांसिचकृमावयम् ॥ वायुर्मातस्मादेनसोविश्वान्मुञ्चत्वंहसः ॥ २ ॥ यदिजाग्रद्यदि स्वप्नएनांसिचकृमावयम् ॥ सूर्योमातस्मादेनसोविश्वान्मुञ्चत्वंहसः ॥ ३ ॥ इतिकूष्मांडसूक्तेनाभिमंत्र्य ॐउदक्यादिदुष्टदृष्टिनिपातात् शूद्रादिसंपर्कदोषाच्चपाकादीनांपवित्रताऽस्तु इतिपाकादीन्संप्रोक्षयेत् ॥ अथआसनादिदानम् ॥ तत्रादौ

उदङ्मुखः पातितदक्षिणाजानुः सव्यंकृत्वाजलयवसमन्वितमृजुकुशत्रयमादाय ॥ ॐ अद्यास्मन्मात्रादित्रयश्राद्धसंबंधिनःपुरूरवार्द्रव संज्ञकाविश्वेदेवाइदमासनंवोनमः ॥ इतिदेवतीर्थेनपूर्वाग्रंकुशत्रयमुत्सृजेत् ॥ ततोऽपसव्यंकृत्वादक्षिणामुखः पातितवामजानुः द्विगुणभुग्न कुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रेऽस्मन्मातरमुकदेविगंगारूपेइदमासनंतुभ्यंस्वधाइति सर्वतः पश्चिमगतं पितृतीर्थेन द्विगुण भुग्नकुशत्रयंदक्षिणाग्रमुत्सृजेत् ॥ एवमेवपितामहीप्रपितामहीभ्यांदद्यात् ॥ ततः सव्यादिना सयवकरः ॥ ॐ पुरूरवार्द्रवसंज्ञकान्विश्वा न्देवानहमावाहयिष्ये ॥ इत्युच्चार्य ॥ ॐ विश्वेदेवासऽआगतशृणुतामऽइमᳬहवम् ॥ एदंबर्हिर्निषीदत ॥ इत्यनेनावाह्य ॥ ॐयवो सियवयास्मद्द्वेषोयवयारातीः इत्यनेनयवान्विकीर्य्य ॥ ॐविश्वेदेवाः शृणुतेमᳬहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥ येऽअग्निजिह्वाऽउतवाय जत्राऽआसद्यास्मिन्बर्हिषिमादयध्वम् ॥ इतिजपेत् ॥ ॐआगच्छंतुमहाभागा विश्वेदेवामहाबलाः ॥ येयत्रयोजिताःश्राद्धे सावधानाभवंतुते इतिश्लोकोऽप्युच्चारणीयः ॥ ततोऽपसव्यादिनातिलहस्तः ॐमातॄरावाहयिष्ये॥ इत्युच्चार्य्य॥ ॐउशन्तस्त्वानिधीमह्युशन्तः समिधीमहि ॥ उशन्नुशतऽआवहमातॄन्हविषेऽअत्तवे ॥ इत्यावाह्य ॥ ॐअपहताऽअसुरारक्षाᳬसिवेदिषदः ॥ इतितिलान्श्राद्धदेशेविकीर्य्य॥ ॐआयन्तुनः पितरःसोम्यासोऽअग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदंतोधिब्रुवंतुतेवन्त्वस्मान् ॥ इतिजपेत्॥ ततः सव्यादिनादे वार्घ्यपात्रेपूर्वाग्रंपवित्रंधृत्वा ॥ ॐशन्नोदेवीरभिष्टयऽआपोभवंतुपीतये॥शंयोरभिस्रवंतुनः ॥ इतिजलंप्रक्षिप्य ॥ ॐयवोसियवयास्मद्द्वेषोयव यारातीः ॥ इतियवान् तूष्णीमेवगंधपुष्पाणि चनिक्षिपेत् ॥ ततोदेवार्घपात्रसंपत्तिरस्तु ॥ इतिपठित्वा ॥ देवार्घपात्रंवामहस्ते कृत्वातत्र स्थंपवित्रंपलाशपत्रेपुरतः पूर्वाग्रंधृत्वा किंचिदुदकंचदत्त्वा॥ॐयादिव्याऽआपःपयसासंबभूवुर्य्याऽअन्तरिक्षाऽउतपार्थिवीर्याः ॥ हिरण्यवर्णा

यज्ञियास्तानऽआपः शिवाःशर्ठस्योनाःसुहवाभवंतु ॥ इत्यभिमन्त्र्य ॥ कुशत्रययवजलान्यादाय ॐ अद्यास्मन्मात्रादित्रयश्राद्धसंबंधिनः पुरूरवार्द्रवसंज्ञकाविश्वेदेवाएषवोहस्तार्घःस्वाहानमः ॥ इतिदेवतीर्थेनपवित्रोपरिअर्घ्यंदत्त्वापवित्रसहितमर्घ्यपात्रंदेवपुरतःस्थापयेत् ॥ ततोऽपसव्यादिना मात्रादिपात्रत्रयेषुप्रत्येकंदक्षिणाग्रंपवित्रंधृत्वा ॥ ॐ शन्नोदेवीरितिजलंक्षिप्त्वा ॐ तिलोसिसोमदैवत्यो गोसवोदेवनिर्मितः प्रत्नमद्भिः पृक्तःस्वधयापितॄँल्लोकान्प्रीणाहिनःस्वधा ॥ इतितिलान् तूष्णींमेवगंधपुष्पाणिचनिक्षिपेत् ॥ ततोमात्राद्यर्घपात्रसम्पत्तिरस्तु इतिपठित्वा मातृपात्रंगृहीत्वातत्रस्थं पवित्रंदक्षिणाग्रंपलाशपत्रेधृत्वा किंचिदुदकंचदत्त्वा ॥ ॐ यादिव्याऽआपइत्यभिमंत्र्यद्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐ अद्यामुकगोत्रेऽस्मन्मातरमुकदेविगंगारूपेएषतेहस्तार्घःस्वधानमः ॥ इतिपितृतीर्थेनपवित्रोपरि सावशेषमर्घंदद्यात्॥ अर्घपात्रंचपुरतःस्थापयेत् ॥ एवमेवपितामहीप्रपितामहीभ्यांदद्यात्॥ ततः सव्यंकृत्वा ॐ विश्वेभ्योदेवेभ्यः स्थानमसीत्युक्त्वापवित्रजलयुतमासनदक्षिणपार्श्वे उत्तानं पात्रंस्थापयेत् ॥ ततोऽपसव्यादिना ॥ वृद्धप्रपितामहीप्रपितामह्योःपात्रस्थजलादीनिमातृपात्रेकृत्वा [ सव्येन प्राङ्मुखःपुत्रकामोमुखमार्जनमायुष्कामोनेत्रांजनंचकुर्यात् ] ततोऽपसव्येन ॥ ॐ मातृभ्यः स्थानमसीति आसन वामप्रदेशभूमावधोमुखंस्थापयेत् ॥ एतत्पात्रत्रयंदक्षिणादानपर्यंतंनोद्धरेन्नचालयेत् ॥ अथगंधादिदानम् ॥ सव्यादिनागंधादिकंधृत्वा कुशत्रययवजलान्यादाय ॥ ॐ अद्यास्मन्मात्रादित्रयश्राद्धसंबंधिनःपुरूरवार्द्रवसंज्ञकाविश्वेदेवाएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसिवोनमः ॥ इत्युच्चार्यगंधाद्युत्सृजेत् ॥ ततःकृतांजलिः कर्ता ॐ विश्वेषांदेवानामर्चनंसंपूर्णमस्त्वितिब्रूयात् ॥ ततोऽपसव्यादिना पितृपगंधादिकंधृत्वाद्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐ अद्यामुकगोत्रेऽस्मन्मातरमुकदेविगंगारूपेएतानिगंधपुष्पधूपदीपतांबूलसिंदूरवासां

सितृभ्यंस्वधानमः ॥ इत्युत्सृजेत् ॥ ततः ॐ मातृणामर्चनंसंपूर्णमस्त्वितिप्रार्थयेत् ॥ एवंगंधाद्यर्चनंविधायसव्यापसव्याभ्यां भोजनपात्र स्थापनदेशं सम्मार्ज्यपात्राणिदत्त्वा जलादिनाविप्रादिषुचतुरस्रत्रिकोणवर्तुलमंडलमासनादिवेष्टयित्वाप्रत्येकंकुर्य्यात् ॥ अथाग्नौकरणम् ॥ तत्रव्यंजनक्षारवर्जितंघृताक्तमुष्णंश्राद्धान्नाग्रभागंकांस्यपात्रेसमुद्धृत्यसव्यंकृत्वाप्राङ्मुखः ॐअग्नौकरणंकरिष्येइतिपठित्वा ॥ कुरुष्वेतिब्राह्म णानुज्ञातोस्वदक्षिणकरेण रजतादिपात्रस्थजले ॥ ॐ अग्नयेकव्यवाहनायस्वाहा ॥ इदमग्नयेकव्यवाहनाय ॥ ॐ सोमायपितृमतेस्वाहा ॥ इदंसोमायपितृमते ॥ इत्याहुतिद्वयंजुहुयात् ॥ ततोहुतशेषमन्नंदेवपात्रे [ अपसव्यादिना ] मात्रादिपात्रत्रयेषुचापितृतीर्थेन किंचित्किंचिद्दत्वा पिंडार्थमवशेषयेत् ॥ [ परकीयभूमौश्राद्धकरणे ॐइदमन्नमेतद्भूस्वामिपितृभ्योनमः ॥ इति घृताक्तमन्नंदर्भेषुदद्यात् ] ततः सव्यंकृत्वा आचम्य उभाभ्यांकराभ्यांपात्रांतरेणदेवपात्रे उष्णमन्नं सघृतमनेकव्यंजनयुतंसुशीतलजलसहितंयथावत्परिविश्य मधुनाभिघार्य्य ॐमधुव्वाताऽऋतायते०इतिमंत्रत्रयंपठित्वा ॐमधुमधुमध्वित्यभिमंत्रयेत् ॥ ततः उत्तानपाणिभ्यांदेवपात्रमालभ्य ॐ पृथिवीतेपात्रंद्यौरपि धानंब्राह्मणस्यमुखेऽअमृतेऽअमृतं जुहोमिस्वाहा॥ॐइदंविष्णुर्विचक्रमे त्रेधानिदधेपदम् ॥ समूढमस्यपाᳪसुरेस्वाहा इत्युच्चार्य्य ॥ ॐविष्णो हव्यᳬरक्ष ॥ इतियजुषाऽन्नेस्वांगुष्ठमधोमुखमनखंनिवेश्य ॐइदमन्नमित्यन्ने ॥ ॐइमाआपइतिजले ॥ॐइदमाज्यमितिघृते ॐएतत्सर्वंह विरितिपुनरन्नेचांगुष्ठंनिवेश्य ॥ ॐ अपहताऽअसुरारक्षाᳪसिवेदिषदइत्यन्नपात्रपरितोयवान्विकीर्यवामकरेणपात्रंस्पृशन् ॥ दक्षिणकरेण कुशत्रययवजलान्यादाय ॥ ॐ अद्यास्मन्मात्रादित्रयश्राद्धसंबंधिनः पुरूरवार्द्रवसंज्ञकाविश्वेदेवा इदमन्नंहव्यंसोपस्करंपरिविष्टममृतरूपंवः स्वाहानमः॥ इत्युदकंदेवतीर्थेनदेवदक्षिणभागेभूमौनिक्षिपेत्॥ततोपसव्यादिनामात्रादिपात्रत्रयेप्रत्येकमुष्णमन्नंसघृतमनेकव्यंजनयुतंब्राह्मणतृ

तिक्षमंसुशीतलजलयुतंचयथावत्परिविष्यमधुनाभिघार्य्य ॥ ॐ मधुव्वाताइतिमंत्रत्रयेण ॐ मधुमधुमध्विितिचाभिमंत्रयेत् ॥ ततोमातृपात्रं न्युब्जाभ्यांव्यस्ताभ्यांपाणिभ्यांस्पृष्ट्वा ॐपृथिवीतेपात्रंद्यौरपिधानं ब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वधा ॥ १ ॥ ॐइदंविष्णुर्विचक्रमेत्रे धानिदधेपदम् ॥ समूढमस्यपा छंसुरेस्वधा ॥ २ ॥ इतिजप्त्वा स्वांगुष्ठमधोमुखमनखम् ॥ ॐ विष्णोकव्यछंरक्षइतियजुषाऽन्नेनिवेश्य ॥ ॐ इदमन्नम् ॐइमाआपः ॐइदमाज्यम् ॐएतत्सर्वंकव्यमित्युक्त्वा ॥ ॐअपहताऽअसुरारक्षा छंसिवेदिषदः ॥ इत्यन्नपात्रपरितस्तिलान्विकी र्य्य ॥ वामकरेणपात्रमत्यजन् दक्षिणकरेण द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐअद्यामुकगोत्रेऽस्मन्मातरमुकदेविगंगारूपे इदमन्नं कव्यंसोपस्करंपारिविष्टममृतरूपंतुभ्यंस्वधानमः ॥ इत्युदकंपितृतीर्थेनमातृवामभागेभूमौक्षिपेत् ॥ एवमेवपितामहीप्रपितामहीभ्यामुत्सृजेत्॥ ततः ॥ ॐ अन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमास्त्वितिप्रार्थ्यगायत्रींत्रिर्जपित्वा ॥ ॐ मधुव्वाताइतित्र्यृचम् ॥ ॐ मधुमधुमध्विितिचजपेत् ॥ ततःॐकृणुष्वपाजइत्यादिरक्षोघ्नीः ॥ पंचऋचः पठित्वा भूमौतिलान्विकीर्य ॥ ॐ उदीरतामवर इतित्रयोद शपितृमंत्रान् ॥ ॐसहस्रशीर्षाइतिपुरुषसूक्तम् ॥ ॐआशुःशिशानोइत्यादिसप्तदशमंत्रात्मकमप्रतिरथंच ॥ अन्यान्यपिपूर्वोक्तरुचिस्त वप्रभृतीनियथाशक्तिपठेत् ॥ ततः उच्छिष्टपात्रसन्निधौ भूमिंप्रोक्ष्य तत्रदक्षिणाग्रंकुशत्रयमास्तीर्य्य दक्षिणहस्तेसर्वप्रकारमन्नंसव्यंजनंजल तिलसहितंगृहीत्वा ॐअग्निदग्धाश्चयेजीवा येऽप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यंतु तृप्तायांतुपरांगतिम् ॥ इतिमंत्रेणपितृतीर्थेनकुशोप रितदन्नंविकिरेत् ॥ ततः सव्यंकृत्वा हस्तौप्रक्षाल्य आचम्य हरिंस्मृत्वा अपसव्येन मधुव्वाताइतित्र्यृचं मधुमधुमध्विति चजपेत् ॥ तत उच्छिष्टसन्निधौ हस्तांतरेवालुकाभिश्चतुरस्रंदक्षिणप्लवंस्थानमेकंनिर्माय तन्मध्येदर्भपिंजूलीमूलेन ॐ अपहताऽअसुरारक्षा छंसिव्वेदिषदः

इतिदक्षिणाग्रांसकृद्रेखां कृत्वातदुपरि ॐ येरूपाणिप्रतिमुंचमानाऽअसुराःसंतः स्वधयाचरंति ॥ परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकान् प्रणुदात्वस्मादित्यंगारंभ्रामयित्वादक्षिणतोनिदध्यात् ॥ ततःउपमूलसकृदाच्छिन्नदक्षिणाग्रकुशत्रयंरेखोपरिस्तीर्त्वा सव्येनदेवताभ्यइतित्रिर्जपेत् ॥ ततोऽपसव्येनपुटकत्रये जलतिलगंधपुष्पाणिकृत्वाएकंपात्रंवामहस्तेकृत्वाद्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐअद्यामुकगोत्रेऽस्मन्मातरमुकदेविऽअत्रावनेनिक्ष्वतेस्वधा ॥ इतिकुशमूलेमात्रेअवनेजनंदत्त्वा एवमेवकुशत्रयमध्येपितामह्यै कुशाग्रे प्रपितामह्यै चावनेजनंदद्यात् ॥ ततः सर्वस्माच्छ्राद्धशेषान्नादुष्णांकिंचित्किंचिदन्नमुद्धृत्यहुतशेषान्नमध्वाज्यतिलसर्वव्यंजनयुतं रजतादिपात्रेकृत्वाबिल्वोपमान् त्रिपिंडान्निर्माय मधुघृताभ्यामभिघार्यप्रथमपिंडमादाय द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐअद्यामुकगोत्रेऽस्मन्मातरमुकदेविगंगारूपेएषतेपिंडः स्वधानमः ॥ इतिप्रथमावनेजनस्थानेसव्योपगृहीतदक्षिणहस्तेनपितृतीर्थेनापिंडंदद्यात् ॥ एवमेवपितामही प्रपितामहीभ्यांक्रमेणतत्तदवनेजनस्थानेपिंडंदद्यात् ॥ ततः पिंडाधारकुशमूले ॐ लेपभागभुजोमातरस्तृप्यंतु इतिपठित्वा हस्तंप्रोञ्छ्य जलेनहस्तौप्रक्षालयेत् ॥ ततः सव्येनत्रिराचम्यहरिंस्मरेत् ततोऽपसव्यंकृत्वा ॥ ॐअत्रमातरोमादयध्वमितिपठित्वावामावर्तेनोदङ्मुखीभूय प्रीतमनाः मनाक्श्वासंनियम्यतेनैवयथापरावृत्त्य ॥ ॐअमीमदंतमातरोयथाभागमावृषायिषतइतिजपन्श्वासमुत्सृजेत् ॥ ततः पूर्वदत्तावनेजनपात्रजलेन ॥ ॐअद्यामुकगोत्रेऽस्मन्मान्तरमुकदेविगंगारूपेऽत्रप्रत्यवनेनिक्ष्वतेस्वधा इतिप्रथमपिंडोपरिप्रत्यवनेजनंदत्त्वाएवमेवपितामहीप्रपितामह्योः पिंडोपरिप्रत्यवनेजनंक्रमेणदद्यात् ॥ ततोनीवींविस्रंस्यसव्येनाऽऽचामेत् ॥ ततोऽपसव्यंकृत्वा ॐनमोवोमातरोरसायनमोवोमातरः शोषायनमोवोमातरोजीवायनमोवोमातरःस्वधायैनमोवोमातरोघोरायनमोवोमातरोमन्यवे नमोवोमातरोमातरो

नमोवोगृहान्नोमातरोदत्तसतोवोमातरोदेष्म ॥ १ ॥ इतिकृतांजलिःपठेत् ॥ ॐएतद्वोमातरोवासः इतिपठित्वा ॥ त्रिषुपिंडेषुसूत्राणि दत्त्वा द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्योऽमुकामुकदेव्योगंगायमुनासरस्वतीरूपाएतानिवासांसियुष्मभ्यंस्वधाइत्युत्सृजेत् ॥ ततः पिंडेषुगंधपुष्पधूपदीपतांबूलदक्षिणादीनिदत्त्वापिंडशेषान्नंपिंडसमीपेविकीर्य्य ॐपिंडार्चनंसर्वंपरिपूर्णमस्तु इतिप्रार्थयेत् ॥ ततःसव्येनदेवपात्रे अपसव्येनमात्रादिभोजनपात्रेषुचक्रमेण ॥ ॐशिवाआपः संतुइतिजलम् ॥ ॐसौमनस्यमस्तु इतिपुष्पाणि ॥ ॐअक्षतंचारिष्टंचास्त्वितिदैवेयवान् ॥ मात्रादिपात्रेषुचयवतिलांश्चक्रमेणदद्यात् ॥ ततोऽपसव्येन ॐअद्यामुगोत्रायाअस्मन्मातुरमुकदेव्यागंगारूपायाःदत्तैतदन्नपानादिकमक्षय्यमस्त्वित्यक्षय्योदकंदद्यात् ॥ एवमेवपितामहीप्रपितामह्योरप्यक्षय्योदकंदद्यात् ॥ ततः सव्यंकृत्वा प्राङ्मुखस्तन्मनाःसुमनाःकृतांजलिर्दक्षिणांदिशंपश्यन् ॐअघोरामातरः संतु इतिपठित्वासमाचारात्पिंडोपरिपूर्वाग्रांजलधारांदत्त्वाऽऽशिषोगृह्णीयात् ॥ ॐगोत्रंनोवर्द्धतां दातारोनोभिवर्द्धतांवेदाःसंततिरेवच ॥ श्रद्धाचनोमाव्यगमद्बहुदेयंचनोऽस्तु ॥ अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनःसंतु माचयाचिष्मकंचन ॥ एताः सत्याआशिषः संतुइतिवदेत् ॥ ततोऽपसव्यंकृत्वा पिंडोपरिसपवित्रान्कुशानास्तीर्य्य स्वधांवाचयिष्ये इतिब्रूयात् ॥ वाच्यतामित्युक्ते ॐमातृपितामहीप्रपितामहीभ्यः स्वधोच्यतामितिवदेत् ॥ अस्तुस्वधाइत्यनुज्ञातः ॥ ॐऊर्ज्जंवहंतीरमृतंघृतम्पयःकीलालंपरिस्रुतम् ॥ स्वधास्थतर्पयतमेमातॄरितिसपवित्रकुशोपरिदक्षिणाग्रांजलधारांदद्यात् ॥ ततोऽर्घपात्राण्युत्तानीकृत्य॥ सव्येनदेवदक्षिणांदद्यात् ॥ कुशत्रययवजलानिहिरण्यंचादाय ॥ देशकालौसंकीर्त्य ॥ ॐअद्यास्मन्मात्रादित्रयश्राद्धसंबंधिनांपुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानांकृतैतच्छ्राद्धकर्मणः प्रतिष्ठार्थमिदंहिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे

ब्राह्मणायदक्षिणात्वेनतुभ्यमहंसंप्रददे इतिसंकल्प्यदद्यात् ॥ ततोऽपसव्यंकृत्वा ॐअद्याऽमुकगोत्रायाअस्मन्मातुरमुकदेव्या गंगारूपिण्याः कृतैतत्पार्वणश्राद्धकर्मणः प्रतिष्ठार्थमिदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणात्वेनतुभ्यमहंसंप्रददे इतिसंकल्प्यमातृदक्षिणां दद्यात् ॥ एवमेव पितामहीप्रपितामहीभ्यांषष्ठ्याविभक्त्यासंकल्प्यक्रमेणरजतदक्षिणांदद्यात् ॥ दैवेरजतनिषेधः॥ असंभवेफलमूलादिकंदद्यात्॥ततः पिंडानुत्थापयामि ॥ उत्थापय इत्युक्ते पिंडानुत्थाप्यस्थाल्यांनिधायावघ्राणं कृत्वा सकृदाच्छिन्नान्दर्भान् उल्मुकंचवह्नौक्षिपेत् ॥ ततः सव्येन ॐविश्वेदेवाः प्रीयंतामितिप्रार्थ्य अपसव्येन ॐवाजेवाजेवतवाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः ॥ अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैरितिमात्रादीन्विसृजेत् ततः ॐ आमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमागंतांपितरामातराचामासोमोऽअमृतत्वेनगम्यतादितिप्रदक्षिणीकृत्य नमस्कृत्योपविशेत् ॥ ततः सव्येन ॐदेवताभ्य इतित्रिर्जपित्वा ॥ अपसव्येनहस्ताभ्यांरक्षादीपंनिर्वाप्य हस्तौपादौप्रक्षाल्यसव्येनाचम्य ॥ ॐप्रमादात्कुर्वतांकर्म प्रच्यवेताध्वरेषुयत्॥ स्मरणादेवतद्विष्णोः संपूर्णंस्यादितिश्रुतिः १ इतिपठित्वाकर्मपूर्तिकामोविष्णुंस्मरेत् ॥ ततः पिंडान् गवादिभ्योदत्त्वा दशाष्टौचतुरोवाब्राह्मणान् भोजयेत् ॥ ततोवैश्वदेवबलिकर्मणीकृत्वासुतभृत्यबांधवातिथिसंयुतः श्राद्धशेषितमन्नमश्नीयात् ॥ तद्दिनेश्राद्धकर्ताद्यूताध्वगमनमैथुनायासकलहपुनर्भोजनहिंसादीनिनकुर्यात् ॥ एवमेव प्रसंगतोगयांगत्वा अर्घ्यावाहनादिवर्ज्यंसर्वंत्रिदैवत्यंपार्वणंकुर्यात् ॥ एषएवविधिर्दौहित्रोप्याश्विनशुक्लप्रतिपदिमातामहश्राद्धंत्रिदैवत्यंकुर्यात् ॥ तत्रपुंल्लिंगेनसर्वत्रोच्चारः कार्यः ॥ ॥ इतिगौडीयश्राद्धप्रकाशेजीवत्पितृककर्तृकत्रिदैवत्यमातृपार्वणश्राद्धप्रयोगः ॥ ६९ ॥

॥ अथाऽपात्रकनांदीश्राद्धपद्धतिः ॥ तत्रतावद्ब्राह्ममुहूर्त्तेउत्थाययथोपदेशंस्नानसंध्यादिनित्यकर्मसमाप्यप्रातरष्टौचतुरोवाब्राह्मणान्निमंत्र
येत् ॥ ततोवेद्यांगणपतिसहितागौर्य्यादिषोडशमातृकाः प्रतिमाक्षतपुंजलेखान्यतमेष्वधिष्ठानेषुस्थापयेत् ॥ तद्यथा ॥ कर्त्ताप्रक्षालित
करचरणः स्वाचान्तःसकुशोपग्रहपाणिः शुद्धासनेप्राङ्मुख उपविश्यकुशत्रययवजलान्यादाय देशकालौसंकीर्त्य ॥ ॐअद्यामुककर्माङ्ग
भूतगणपतिसहितषोडशमातृपूजनमहंकरिष्ये इतिसंकल्पयेत् ॥ ततःपुष्पाक्षतानादाय ॥ ॐगणानान्त्वागणपतिर्ठंहवामहेप्रियाणान्त्वा
प्रियपतिर्ठंहवामहे निधीनान्त्वानिधिपतिर्ठंहवामहेव्वसोमम ॥ आहमजानिगर्ब्भधमात्वमजासिगर्ब्भधम् ॥ ॐभूर्भुवःस्वर्गणपतेइहागच्छ
इहतिष्ठ इतिगणपतिंस्थापयेत्॥ततःप्रदक्षिणक्रमेणगौर्य्यादिस्थापनम् ॥ ॐभूर्भुवःस्वर्गौरिइहागच्छइहतिष्ठ॥१॥ॐभूर्भुवःस्वःपद्मेइहागच्छ
इहतिष्ठ२॥ॐभूर्भुवःस्वःशचिइहागच्छइहतिष्ठ॥३॥ॐभूर्भुवःस्वर्मेधेइहा०॥४॥ॐभूर्भुवःस्वःसावित्रीहा०॥५॥ॐभूर्भुवःस्वर्विजयेइहा०॥६॥
ॐभूर्भुवःस्वर्जयेइहा०॥७॥ॐभूर्भुवःस्वर्देवसेने०॥८॥ॐभूर्भुवःस्वःस्वधेइहा०॥९॥ॐभूर्भुवःस्वःस्वाहेइहा० ॥१०॥ ॐभूर्भुवःस्वर्मातरइहा
गच्छतइहतिष्ठत ॥११॥ ॐभूर्भुवःस्वर्लोकमातर इहागच्छतइहतिष्ठत॥१२॥ ॐभूर्भुवःस्वःहृष्टेइहा०॥१३॥ॐभूर्भुवःस्वःपुष्टेइहा० ॥१४॥
ॐभूर्भुवःस्वस्तुष्टेइहा०॥१५॥ ॐभूर्भुवःस्वरात्मकुलदेवतेइहागच्छइहतिष्ठ १६ ॐभूर्भुवःस्वःश्रीरिहागच्छइहतिष्ठ १७ इतिगणपतिसहि
ताएतामातृःप्रत्येकमोंकारव्याहृतिपूर्वकमावाह्यस्थापयित्वा॥ ॐमनोजूतिर्जुषतामाज्यस्येतिप्रतिष्ठांकृत्वा ॥ प्रणवादिनमोंतेनस्वस्वनाम्नाषो
डशोपचारैः पूजयेत् ॥ ततः केनचित्पात्रेणसगुडंविलीनघृतमादाय ॐव्वसोःपवित्रमसिशतधारंव्वसोः पवित्रमसिसहस्रधारंदेवस्त्वास
वितापुनातुव्वसोः पवित्रेणशतधारेणव्वाः कामधुक्षः ॥ १ ॥ इतिमंत्रेणमातणामुपरिभित्तिलग्नाः सप्तपंचवाधारारुत्तरोत्तरक्रमेणपातयेत्

ताश्चपूजयेत् ॥ ततः ॐआयुष्यंवर्चस्यꣳरायस्पोषमौद्भिदम् ॥ इदꣳहिरण्यं वर्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥ नतद्र
क्षाꣳसिनपिशाचास्तरन्तिदेवानामोजःप्रथमजꣳह्येतत् ॥ योबिभर्तिदाक्षायणꣳ हिरण्यꣳ सदेवेषु कृणुतेदीर्घमायुः ॥ २ ॥ य
दाबध्नन्दाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः॥ तन्मऽआबध्नामिशतशारदायायुष्मान् जरदष्टिर्यथासम् ॥३॥ इतिवृद्धिसूक्तं पठेत् ॥
अथ नांदीश्राद्धप्रयोगः ॥ तत्रादौ गोमयोपलिप्तेदेशेश्राद्धसामग्रींसंपाद्य प्रागग्रकुशोत्तरेष्वासनेषु प्राङ्मुखान् दक्षिणाप
क्रमानुदगपवर्गान्षट्दर्भबटून्निवेश्य प्रत्यासनसमीपे तिलतैलेनदीपंप्रज्वालयेत् ॥ ततः कर्त्ताप्रक्षालितकरचरणः स्वास
नेउदङ्मुखउपविश्यसपवित्रोपकुशः सव्येन आचम्यप्राणानायम्य ॥सजघनंदक्षिणंजान्वाच्य ॥ तांबूलादिकमादाय ॥ ॐअद्यकरि
ष्यमाणामुककर्मनिमित्तकाभ्युदयिकश्राद्धे अस्मन्मात्रादित्रयश्राद्धसंबंधिनःसत्यवसुसंज्ञकाविश्वेदेवाः अनेनतांबूलादिद्रव्येण कुशब
टुरूपा भवन्तोमयानिमंत्रिताः ॥ ॐआमंत्रिताःस्मः ॥ इति सर्वतोदक्षिणगतं मात्रादिदेवदर्भबटुंनिमंत्र्य एवमेव तदुत्तरगौ पित्रादिमाता
महादिदेवदर्भबटूच क्रमेण निमंत्र्य ततः ॐअक्रोधनैःशौचपरैरितिपठित्वास्वागतंभवतां सुस्वागतमितिप्रार्थयेत् ॥ ततःपुनस्तांबूलादिक
मादाय ॐअद्यामुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्योऽमुकामुकदेव्योनांदीमुख्यः अनेन तांबूलादिद्रव्येण कुशबटुरूपाभवत्योमयानि
मंत्रिताः ॥ ॐआमंत्रिताःस्मः इतिनिमंत्र्य एवमेव पित्रादिमातामहादिदर्भबटुद्वयंक्रमेणनिमंत्रयेत् ॥ ततः ॐअक्रोधनैः शौचपरैरितिप
ठित्वा ॥ स्वागतंभवतां सुस्वागतमितिप्रार्थयेत् ॥ ततोगंधपुष्पादियुतंपाद्यंगृहीत्वा ॐअद्याऽस्मन्मात्रादित्रयसंबंधिनःसत्यवसुसंज्ञका
विश्वेदेवा एतत्पादार्घं वः स्वाहानमः ॥ इति दत्त्वा एवमेवपित्रादिमातामहादिदेवेभ्योप्यर्घंदद्यात् ॥ पुनः ॐअमुकगोत्राऽस्मन्मातृपिता

महीप्रपितामह्योऽमुकामुकदेव्योनांदीमुख्य एतत्पादार्घंत्रेधाविभज्य वः स्वाहानमः इतिमातृवर्गेऽर्घंदत्त्वा पित्रादिमातामहादिवर्गद्वयेप्य
र्घंक्रमेणदद्यात् ॥ ततः ॐ अद्याऽस्मन्मात्रादित्रयसंबंधिनः सत्यवसुसंज्ञकाविश्वेदेवाः इदमाचमनंवःस्वाहानमः इतिमातृवर्गदेवेभ्यआच
मनार्थंजलंदत्त्वा एवमेव पितृवर्गमातामहवर्गदेवेभ्योप्याचमनंदद्यात् ॥ पुनः ॐ अमुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्योऽमुकामुकदे
व्योनांदीमुख्य इदमाचमनंत्रेधाविभज्यवःस्वाहानमः इतिमात्रादिभ्यआचमनंदत्त्वा पित्रादिभ्योमातामहेभ्यश्चाचमनंदद्यात्॥ ततः ॐअत्रा
सध्वमितिपठेत्॥इतिनिमंत्रणम्॥ततः कर्त्तास्वपुरतः कर्म्मपात्रंजलेनापूर्य्यगंधपुष्पदूर्वादधियवहरितकुशांस्तत्रनिक्षिप्य॥ ॐकर्मपात्रंसंपन्न
मितिब्रूयात् ॐ सुसंपन्नमित्यनुज्ञातः ॐ अपवित्रः पवित्रोवा० ॐपुंडरीकाक्षः पुनात्वितिपठित्वाकुशानीतजलेन श्राद्धीयोपकरणानिप्रोक्ष्य
ॐवैष्णव्यैनमः ॥ ॐकाश्यप्यैनमः ॥ ॐभूम्यैनमः ॥ इति भूमिंसंपूज्य ॐविष्णवेनमः इति विष्णुंमनोवाक्कायैर्नमस्कारंकुर्यात्॥ततो दूर्वा
कुशयवजलान्यादाय॥देशकालौसंकीर्त्य ॐअद्यामुकगोत्राणामस्मन्मातृपितामहीप्रपितामहीनाममुकामुकदेवीनांनांदीमुखीनां अमुकगोत्रा
णामस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणांनांदीमुखानाम् तथाच अमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममु
कामुकशर्मणां सपत्नीकानाममुककर्मनिमित्तकं सत्यवसुसंज्ञकविश्वेदेवपूर्वकं सापिंडकमाभ्युदयिकश्राद्धमहं करिष्ये इतिसंकल्प्य ॥
ॐकुरुष्वेति ब्राह्मणानुज्ञातः सप्रणवव्याहृतिकां गायत्रींत्रिर्जपित्वा विष्णुंस्मरेत् ॥ ततः ॐ नमोनमस्ते गोविंद पुराणपुरुषोत्तम॥इदंश्राद्धं
हृषीकेश रक्षतांसर्वतोदिशः इतिसर्वत्रयवान्गौरसर्षपांश्चविकीर्य ॥ वामकटिसंलग्नवस्त्रांचलेनीवींबध्नीयात् ॥ ततःकूष्मांडसूक्तेनपावमानेनच
जलमभिमंत्र्यतेनहरितैःकुशैः पाकंप्रोक्षयेत्॥अथासनादिदानम्॥तत्रतावदुदङ्मुखःकुशत्रययवजलान्यादाय॥ॐअद्याऽस्मन्मात्रादित्रयश्रा

द्धसंबंधिनः सत्यवसुसंज्ञका विश्वेदेवाः इदमासनं वो नमः इतिकुशत्रयरूपं सयवं सर्वतोदक्षिणगतमासनं पूर्वाग्रमुत्सृजेत् ॥ एवमेव पित्रादि मातामहादिदेवेभ्योप्यासनमुत्तरोत्तरं दद्यात्॥ ततः ॐ अद्यामुकगोत्रास्मन्मातृपितामहीप्रपितामह्यो नांदीमुख्य इदमासनं त्रैवाविभज्य वः स्वाहा इत्युच्चार्य्य मातृवर्गे देवतीर्थेन पूर्वाग्रं कुशत्रयमुत्सृजेत्॥ एवमेव पित्रादिमातामहादिवर्गद्वयोरपि दद्यात्॥ ततः ॐ सत्यवसुसंज्ञकविश्वान्देवानावाहयिष्ये इतिब्रूयात् आवाहय इत्यनुज्ञातः सयवकरः॥ ॐ विश्वेदेवासऽआगतशृणुतामऽइमठंहवम्॥ एदंबर्हिर्निषीदत इत्यावाह्य ॐ यवोसियवया स्मद्द्वेषोयवयारातीरित्यनेनयवान्विकीर्य, ॐ विश्वेदेवाः शृणुतेमठंहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठयेऽअग्निजिह्वाऽउतवायजत्राऽआसद्याऽस्मिन्न बर्हिषिमादयध्वम् इति जपेत्॥ विश्वेदेवोत्पत्तिनाम्नो रज्ञाने॥ आगच्छंतुमहाभागा विश्वेदेवामहाबलाः॥ येयत्रयोजिताः श्राद्धे सावधानाभवंतुते॥ इति श्लोकंपठेत् ॥ ततः ॐ नांदीमुखीर्मातॄरावाहयिष्ये इत्युच्चार्य्य आवाहयेत्यनुज्ञातः सयवकरः ॐ उशन्तस्त्वानिधीमह्युशन्तः समिधीमहि॥ उशन्नुशतऽ आवह मातॄन्हविषेऽअत्तवे ॥ इत्यावाह्ययवान्विकिरेत् ॥ एवमेव ॐ पितॄन्हविषेऽअत्तवे ॐ मातामहान्हविषेऽअत्तवे इतिमंत्रोहेनयथाक्रमं पित्रादीन्मातामहादींश्चावाह्य॥ प्रदक्षिणं यवान्विकिरेत्॥ ततोदेवपूर्वकं षट्सुस्वर्णादिपात्रेषु प्रतिपात्रं पवित्रद्वयं पवित्रं वानिधाय ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये॥ शंय्योरभिस्रवन्तुनः ॥ इतिप्रत्येकंपात्रेष्वपोनिषिच्य॥ ॐ यवोसियवयास्मद्द्वेषोयवयारातीरितिदेवपात्रत्रयेषुयवान्निक्षिप्य ॐ यवोसि सोमदैवत्योगोसवोदेवनिर्मितः॥ प्रत्नमद्भिः पृक्तः पुष्ट्यानांदीमुखाँल्लोकान् प्रीणाहिनः स्वाहा इतिमंत्रेणमात्राद्यर्घपात्रेषुयवान्क्षिपेत् ॥ ततः सर्वत्र तूष्णींगंधपुष्पाणिचदत्त्वा ॥ ॐ अर्घपात्रसंपत्तिरस्त्विति ॥ अस्त्वर्घपात्रसंपत्तिरित्यनुज्ञातोदेवार्घपात्रंवामहस्तेकृत्वा पवित्रे पलाशादिपत्रे पूर्वाग्रेविन्यस्य ॐ यादिव्याऽआपः पयसासंबभूवुर्याऽअन्तरिक्षाऽउतपार्थिवीर्य्याः॥

हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः सᳪं स्योनाः सुहवाभवंतु इत्यभिमंत्र्य कुशत्रययवजलान्यादाय ॥ ॐअद्यास्मन्मात्रादित्रयश्राद्ध संबंधिनः सत्यवसुसंज्ञकाविश्वेदेवा एषवोऽर्घोनमः इतिदैवतीर्थेनार्घंपवित्रोपरिदत्त्वा ॥ एवमेव पित्रादिमातामहादिदेवेभ्योपिदद्यात् ॥ ततो मात्राद्यर्घपात्रंवामहस्तेकृत्त्वापवित्रं पलाशादिपत्रेपूर्वाग्रंधृत्वा ॐयादिव्याऽआपःपयसाइत्यभिमंत्र्यॐअद्यामुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्योनांदीमुख्यएषोऽर्घस्त्रेधाविभज्यवः स्वाहानमः ॥ इति देवतीर्थेनार्घ्यंपवित्रोपरिदत्त्वातेनैवक्रमेणपित्रादिभ्योमातामहेभ्यःसपत्नीकेभ्यश्चपवित्रदानपूर्वकंप्रत्येकमर्घ्यंदद्यात्॥ ततःॐविश्वेभ्योदेवेभ्यःस्थानमसीत्युक्त्वापवित्रजलयुतंदेवार्घपात्रत्रयंप्रत्येकमासनदक्षिणपार्श्वेउत्तानं स्थापयेत् ॥ ततः ॐनांदीमुखीभ्योमातृभ्यः स्थानमसीतिमात्रादिपात्रम् ॐनांदीमुखेभ्यः पितृभ्यः स्थानमसीतिपित्राद्यर्घपात्रम् ॐ नांदीमुखेभ्योमातामहेभ्यः स्थानमसीतिचोक्त्वामातामहाद्यर्घपात्रंचस्वस्वाऽऽसनदक्षिणपार्श्वेक्रमेणन्युब्जंकुर्यात् ॥ एतानिस्थापितान्यर्घपात्राणिदक्षिणादानपर्यंतंनोद्धरेन्नचालयेत्॥ततोगंधादिदानम् ॥ ततःषट्स्वासनेषुप्रत्येकंगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवस्त्राणिसन्निधाय॥कुशत्रयादीन्यादाय ॥ ॐअद्यास्मन्मात्रादित्रयश्राद्धसंबधिनःसत्यवसुसंज्ञकाविश्वेदेवाएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसिवोनमः इत्युत्सृजेत्॥एवमेवपित्रादिमातामहादिदेवेभ्योप्युत्सृजेत् ॥ ततःकुशत्रययवजलान्यादाय ॐअद्यामुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्योनांदीमुख्यएतानिगंधपुष्पधूपदीपतांबूलसिंदूरवासांसित्रेधाविभज्यवःस्वाहानमः॥इत्युत्सज्य॥एवमेव पित्रादिमातामहादिभ्यःसपत्नीकेभ्यश्चगोत्राद्युच्चारणपूर्वकं सकुशयवजलेनगंधाद्युत्सृजेत् ॥ एवंगंधाद्यर्चनंविधाय कृतांजलिर्भूत्वा ॐअर्चनंसंपूर्णमस्त्विति ब्रूयात्॥अस्त्वर्चनंसंपूर्णमितिविप्रावदेयुः ॥ ततो भोजनपात्रस्थापनदेशं संमार्ज्यपात्राणिदत्त्वागौरमृत्तिकयाजलादिनावामंडलंप्रत्येकंकुर्यात् ॥ अथाग्नौकरणम्

तत्रादौ घृतप्लुतमन्नंपात्रेकृत्वा ॐ अग्नौकरणंकरिष्येइतिपृष्ट्वा ॥ कुरुष्वेतिब्राह्मणानुज्ञातःआर्द्रामलकमात्रमन्नंगृहीत्वा ताम्रादिपात्रस्थितजले प्राङ्मुखःदक्षिणंजान्वाच्यॐअग्नयेकव्यवाहनायस्वाहा इदमग्नयेकव्यवाहनाय॥ ॐसोमायपितृमतेस्वाहा इदंसोमायपितृमते इत्याहुतिद्वयं हुत्वाशेषंदैवपात्रत्रयेमात्रादिपात्रेषुचाकिंचित्किंचिद्दद्यात् ॥ अत्र परकीयगृहश्राद्धकरणपक्षे सव्येनएव ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नमइतिघृतादियुक्तमन्नंदर्भैःपूत्सृजेत् ॥ ततः पट्स्वपिपात्रेषु यथासंभवमन्नं परिविष्य पात्रांतरस्थंजलंघृतंव्यंजनंचोपनीय ॥ उत्ता नपाणिभ्यां प्रथमान्नपात्रमालभ्यजपति ॥ ॐ पृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेऽअमृतं जुहोमिस्वाहा इति ॥ ॐ इदंविष्णु र्विचक्रमेत्रेधानिदधेपदम्॥समूढमस्यपाᳫंसुरेस्वाहा इतिचपठित्वा ॥ ॐविष्णोहव्यᳫंरक्षइत्यनयास्वा ङ्गुष्ठमधोमुखमनखमन्नेऽवगाह्य इदम न्नम्इमाआपःइदमाज्यम् इदंहविरित्युक्त्वा ॥ ॐअपहताऽअसुरारक्षाᳫंसिवेदिषदः॥इतियवान् विकीर्य वामकरेणपात्रंस्पृशन् कुशत्रययवज लान्यादाय ॐअद्यास्मन्मात्रादित्रयश्राद्धसंबंधिनःसत्यवसुसंज्ञकाविश्वेदेवा इदमन्नंघृताद्युपस्करसहितंपरिविष्टंहव्यममृतरूपंवोनमः ॥ इति संकल्प्यासनदक्षिणभागेजलमुत्सृजेत् ॥ एवमेवपित्रादिमातामहादिदेवेभ्योप्यन्नमुत्सृजेत् ॥ पुनःमात्रादिपात्रमालभ्यॐपृथिवीतेपात्रंद्यौरपि धानंब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वाहा॥ ॐइदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳫंसुरेस्वाहा इतिपठित्वा ॐविष्णो हव्यᳫंरक्ष इत्यन्नेऽङ्गुष्ठंनिवेश्य ॐ अपहता इत्यन्नपात्रपरितोयवान्विकीर्य कुशयवजलान्यादाय ॐअमुकगोत्राऽस्मन्मातृपितामहीप्रपिता मह्योऽमुकामुकदेव्योनांदीमुख्य इदमन्नंघृताद्युपस्करसहितंपरिविष्टंहव्यममृतरूपंत्रेधाविभज्यवःस्वाहानमःइत्युत्सृजेत् ॥ एवमेवपित्रादिपा त्रं मातामहादिपात्रंचक्रमेणपात्रालंभनादिपूर्वकंसंकल्प्यदद्यात् ॥ ततः ॐ अन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्तु

इतिप्रार्थ्य नांदीमुखान्मात्रादीन्ध्यायन् दैवपूर्वकं भोजनपात्रेषु किंचित्किंचिदपोदत्त्वा यथासुखंजुषध्वमितिब्रूयात् ॥ ततःप्रागग्रकुशो
त्तरासनोपविष्टः प्रणवव्याहृतिपूर्विकांसकृत्त्रिर्वागायत्रींजप्त्वा ॐ मधुमधुमध्वितिचजपेत् ॥ नमधुवाताइतित्र्यृचंनापितृमंत्रान् ॥ ततः ॐ
कृणुष्वपाजःप्प्रसितिन्नपृथ्वींय्याहिराजेवामवाँऽइभेन ॥ तृष्वीमनुप्प्रसितिन्द्रूणानोस्तासिव्विद्ध्यरक्षसस्तापिष्ठैः ॥ १ ॥ तवभ्रमासऽआ
शुयापतन्त्यनुस्पृशधृषताशोशुचानः ॥ तपूंष्यग्नेजुह्वापतङ्गानसन्दितोव्विसृजविष्वगुल्काः ॥ २ ॥ प्रतिस्पशोव्विसृजतूर्णितमोभवा
पायुर्व्विशोऽअस्याऽअदब्धः ॥ योनोदूरेऽअघशꣳसोयोऽअन्त्यग्नेमाकिष्टे व्व्यथिरादधर्षीत् ॥३॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यामित्राँ२ऽओष
तात्तिग्महेते॥योनोऽअरातिꣳसमिधानचक्रेनीचातंधक्ष्यतसन्नशुष्कम्॥४॥ऊर्द्ध्वोभवप्प्रतिविद्ध्याद्ध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अव
स्थिरातनुहि यातुजूनाञ्जामिमजामिम्प्रमृणीहिशत्रून् ॥ अग्नेष्ट्वातेजसासादयामि ॥५॥ इतिरक्षोघ्नसूक्तम्॥ॐ पुनंतुमादेवजनाःपुनन्तुमनसा
धियः ॥ पुनन्तुव्विश्वाभूतानिजातवेदः पुनीहिमा ॥ १॥ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यं भवावाजस्यसङ्गथे ॥२॥ शिरोमेश्रीर्यशो
मुखंत्विषिः केशाश्चश्मश्रूणि ॥ राजामेप्राणोऽअमृतꣳसम्म्राट्चक्षुर्व्विराट्श्रोत्रम् ॥३॥ जिह्वामेभद्रंवाङ्महोमनोमन्युः स्वाराड्भामःमोदाः
प्रमोदाऽअङ्गुलीरंगानिमित्रम्मेसहः ॥ ४ ॥ बाहूमेबलमिन्द्रियꣳहस्तौमेकर्म्मवीर्यम् ॥ आत्माक्षत्रमुरोमम ॥ ५ ॥ पृष्ठीर्म्मेराष्ट्रमुदरमꣳ
सौग्रीवाश्चश्रोणी ॥ ऊरूऽअरत्नीजानुनीविशोमेंगानिसर्वतः ॥ ६ ॥ नाभिर्म्मेचित्तंविज्ञानम्पायुर्म्मेऽपाचितिर्भसत् ॥ आनंदनंदावांडौमेभगः
सौभाग्यंपसः जंघाभ्यांपद्भ्यांधर्मोऽस्मिविशिराजाप्रतिष्ठितः ॥७॥ पयःपृथिव्यांपयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः॥ पयस्वतीःप्प्रदिशः
संतुमह्यम्॥८॥इतिपवमानसूक्तम्॥ॐसहस्रशीर्षापुरुष इत्यादि षोडशर्चंपुरुषसूक्तमन्यानि शिवसंकल्पप्रभृतीनिपवित्राणिमङ्गलानिचजपेत्

ततः सर्वव्यंजनोपेतमन्नाद्यंसयवमादाय वारिणाप्लाव्य प्रागग्रास्तृतकुशोपरि ॥ ॐ अग्निदग्धाश्चयेजीवा येप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यन्तु तृप्तयान्तुपरांगतिमितिविकीर्य॥आचम्यविष्णुंस्मृत्वापुनः किंचित्किंचिदपोदत्त्वा गायत्रींमधुमधुमध्वितिच जप्त्वाॐसंपन्नमितिब्रूयात् सुसंपन्नमित्यनुज्ञातःपिंडानहं करिष्ये ॥ इतिपृच्छेत् ॥ कुरुष्वेत्यनुज्ञातोवालुकाभिश्चतुरस्रंप्राक्प्लवमुदक्प्लवंवामंडलत्रयंकृत्वातन्मध्ये ॥ ॐअपहताऽअसुरारक्षाꣳसिवेदिषद इतिप्रागग्रंरेखात्रयंकृत्वा प्रत्येकंरेखोपरि ॐयेरूपाणिप्रतिमुंचमानाऽअसुराःसंतःस्वाहया चरन्ति॥ परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकान्प्रणुदात्यस्मादित्यंगारान् भ्रामयेत् ॥ तत्र रेखात्रयोपरि समूलान्प्रागग्रानुदगग्रान्वाकुशानास्तीर्य ॐ देवताभ्यइतित्रिर्जपेत्॥ततो नवपुटकेषु जलयवगंधपुष्पाणिकृत्वा एकंपुटकं वामहस्तेकृत्वा कुशादीन्यादाय ॥ ॐअद्यामुकगोत्रेऽस्मन्मातरमुकदेविनांदीमुखि अत्रावनेनिक्ष्वतेस्वाहा इतिदर्भमूलेमात्रेअवनेजनंदत्त्वा एवमेवपितामहीप्रपितामहीभ्यांमध्याग्रयोःक्रमेणदद्यात् ॥ ततः ॐ अद्यामुकगोत्राऽस्मत्पितरमुकशर्मन् नांदीमुखाऽत्रावनेनिक्ष्वतेस्वाहा इतिद्वितीयमंडलस्थितकुशत्रयमूले पित्रेऽवनेजनंदत्त्वाएवमेव पितामहप्रपितामहयोस्तत्तत्कुशमध्याग्रयोरवनेजनंदद्यात् ॥ एवमेवमातामहादिवर्गदर्भमूलमध्याग्रेषुदद्यात् ॥ ततःसर्वव्यंजनोपेतं सर्वविधमन्नमुद्धृत्यहुतशेषान्नंदधिबदरयवैःसंमिश्र्यनवपिंडान् बिल्वोपमान्निर्माय एकंपिंडंकुशादींश्चादाय ॐ अमुकगोत्रेऽस्मन्मातरमुकदेविनांदीमुखिएषदधिबदराक्षतामिश्रः पिंडस्तेनमः ॥ इत्यवनेजनक्रमेणावनेजनस्थानेषुमात्रादिभ्यः पिंडान्दद्यात् ॥ ततः ॐ अमुकगोत्राऽस्मत्पितरमुकशर्मन्नांदीमुखएषदधिबदराक्षतामिश्रः पिंडस्तेनमः ॥ इतिपितृस्थानेदद्यात् एवमेवपितामहादिभ्यः पंचभ्यस्तत्तदवनेजनस्थानेपिंडान्दद्यात् ॥ ततोदर्भमूलेषुपाणिस्थंपिंडलेपंनिमृज्य हस्तौप्रक्षाल्याचम्यहरिंस्मरेत् ॥ ततोमात्रादिपिंडाभि-

मुखोंजलिंबद्ध्वा ॥ ॐ अत्रमातरोमादयध्वंयथाभागमावृषायध्वमितिजपित्वा उदङ्मुखीभूयश्वासंनियम्यप्रदक्षिणंपरावृत्य ॐ अमीम
दन्तमातरोयथाभागमावृषायिषत इतिजपेत् ॥ एवंपित्रादिपिंडाभिमुखोभूत्वा ॐ अत्रपितरोमादयध्वमित्यादिजपित्वा मातामहादि
पिंडाभिमुखोभूत्वा ॐ अत्रमातामहादयोमादयध्वमित्यादिजपित्वाऽसूनियम्य ॐ अमीमदन्तपितरो यथाभागमावृषायिषत ॥ ॐ अमी
मदंतमातामहाययथाभागमावृषायिषतेतिजपेत् ॥ ततोऽवनेजनपात्रजलेन ॐ अमुकगोत्रेमातरमुकदेविनांदीमुखिअत्रप्रत्यवनेनिक्ष्वतेस्वा
हा ॥ इतिमातृपिंडोपरिप्रत्यवनेजनंदत्त्वा ॥ एवमेवपितामहीप्रपितामहीभ्यां तथा ॐ अमुकगोत्र पितरमुकशर्मन्नांदीमुख अत्रप्रत्यवनेनि
क्ष्वतेस्वाहा इतिपितृपिंडोपरिदद्यात् ॥ एवमेव पितामहादिभ्यः पंचभ्यस्तत्तत्पिंडोपरिदद्यात् ॥ ततोनीवींविस्रंस्य आचम्य ॐ नमो
वोमातरोरसायनमोवोमातरः शोषायनमोवो मातरोजीवायनमोवोमातरः स्वाहायै नमोवोमातरोघोरायनमोवोमातरोमन्यवेनमोवोमातरो
मातरोनमो वोगृहान्नो मातरोदत्तसतोवोमातरोदेष्म ॥ इतिमात्रादिवर्गंनमस्कृत्य ॥ ॐ नमोवः पितरोरसायनमोवः पितरः शोषायनमोवः
पितरोजीवायनमोवः पितरःस्वाहायैनमोवः पितरोघोरायनमोवः पितरोमन्यवेनमोवः पितरः पितरोनमोवोगृहान्नः पितरोदत्तसतोवः पित
रोदेष्म इतिपित्रादिमातामहादिवर्गद्वयंनमस्कुर्यात् ॥ ततः ॐ एतद्वोमातरोवास इतिमात्रादिपिंडेषुसूत्राणिदत्त्वा ॐ एतद्वः पितरोवास
इतिपित्रादिषट्पिंडेषुप्रतिपिंडं सूत्रत्रयंदद्यात् ॥ ततोगंधपुष्पधूपदीपद्राक्षामलकमूलयवतांबूलदक्षिणादिभिः प्रत्येकं पिंडानभ्यर्च्य ॥ ॐ
शिवाआपः संतु इति भोजनपात्रेषुकिंचित्किंचिज्जलंदत्त्वा ॐ सौमनस्यमस्त्विति पुष्पाणि ॥ अक्षतंचारिष्टंचास्तु इतियवांश्चदद्यात् ॥
ततः ॐ नांदीमुख्योमातरः पितामह्यः प्रपितामह्यः प्रीयंतामितिक्षीरयवोदकमक्षय्यस्थानेदत्त्वा ॥ एवमेव पितरः पितामहाः प्रपितामहाः
प्रीयंतामितिपित्रादिवर्गे ॥ मातामहाः प्रमातामहाः वृद्धप्रमातामहाःसपत्नीकाश्चप्रीयन्तामितिमातामहादिवर्गेचप्रत्येकमक्षय्योदकंदद्यात् ॥ ततः

कृतांजलिः प्रार्थयेत् ॥ ॐ अघोरा मातरः संतु ॐ अघोराः पितरः संतु ॥ ॐ अघोरा मातामहाः सपत्नीकाः संत्विति चोक्ता ॥ संत्वित्यनु
ज्ञातः ॥ ॐ गोत्रंनोवर्द्धतां दातारोनोभिवर्द्धंतां वेदाः संततिरेवच ॥ श्रद्धाचनोमाव्यगमत् बहुदेयंचनोऽस्तु ॥ अन्नंचनोबहुभवेदतिथीं
श्चलभेमहि॥याचितारश्चनः संतुमाचयाचिष्मकंचन॥ एताः सत्याआशिषः संत्वितिब्रूयात् संत्वित्युक्ते सपवित्रान्कुशान्प्रत्येकंमात्रादित्रय
पिंडे पित्रादित्रयपिंडेमातामहादित्रयपिंडेचधृत्वा ॥ नांदीमुखीर्मातृपितामहीप्रपितामहीः नांदीमुखान् पितृपितामहप्रपितामहान् नांदीमुखा
न्मातामहप्रमातामहवृद्धप्रमातामहान् सपत्नीकान् स्वाहावाचयिष्य इतिपृष्ट्वा वाच्यतामित्यनुज्ञातः ॐ नांदीमुख्योमातृपितामहीप्रपिता
मह्यो नांदीमुखाः पितृपितामहप्रपितामहाः नांदीमुखामातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाश्चप्रीयन्तामितिप्रार्थ्य प्रीयंतामितिद्विजै
रुच्यमाने पिंडेषुजलंनिषिंचेत् ॥ ततः संस्रवपात्राण्युत्तानीकृत्यदेवदक्षिणांदद्यात् कुशत्रययवजलान्यादाय ॐ अद्यास्मन्मात्रादित्रयश्राद्ध
संबंधिवैश्वदेविकश्राद्धप्रतिष्ठार्थमिमांद्राक्षामलकार्द्रकमूलकादिरूपांदक्षिणांविष्णुदैवत्यामसुकगोत्रायामुकशर्मणेब्राह्मणायदातुमहमुत्सृजे ॥
इत्युच्चार्य्यदद्यात् एवमेवपित्रादिमातामहादिवर्गदेवदक्षिणांदद्यात् ॥ ततः ॐ अद्यामुकगोत्राणांमातृपितामहीप्रपितामहीनांनांदीमुखीनांकृतै
तदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमांद्राक्षामलकार्द्रकमूलकादिरूपांदक्षिणां विष्णुदैवत्याममुकगोत्रायामुकशर्मणेब्राह्मणायदातुमहमुत्सृजे॥ इति
मात्रादिवर्गदक्षिणांदद्यात्॥ एवमेवपितृवर्गमातामहवर्गयोरपिदक्षिणांचदद्यात्॥ ततःपिंडानुत्थापयामि इतिपृष्ट्वाउत्थापय इत्यनुज्ञातःपिंडानु
त्थाप्यपात्रेकृत्वाऽऽघ्रायदर्भानुल्मुकंचवह्नौक्षिपेत् ॥ ततोजलदानपूर्वकम् ॐविश्वेदेवाःप्रीयंतामित्युक्त्वा प्रीयन्तामित्यनुज्ञातः स्वस्तिभवंतो
ब्रुवन्तु इतिब्रूयात् स्वस्तीत्युक्ते प्रणिपत्य ॐ वाजेवाजेवतवाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः ॥ अस्यमध्वः पिबतमादयध्वंतृप्तायात

पथिभिर्देवयानैः॥ इतिमात्रादीन्पित्रादीन् मातामहादींश्चविसृजेत् ॥ ततः ॥ ॐआमावाजस्य प्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमागंतांपितरामातराचामासोमोऽअमृतत्वेनगम्यतात् ॥ इतिपठित्वाप्रदक्षिणीकृत्यरक्षादीपनिर्वापणंपाणिभ्यांकृत्वा हस्तौ पादौप्रक्षाल्याचम्यपिंडान्गवादिभ्योदत्त्वाऽष्टौषड्वाविप्रान्प्रभूतघृतान्नेनभोजयेत्॥ततउच्छिष्टमार्जनादिकरणानन्तरंवैश्वदेवबलिकर्मणीकृत्वा ॐप्रमादात्कुर्वतांकर्मइतिपठित्वा कर्मपूर्त्तिकामोविष्णुंस्मरेत् ॥ ततोवैश्वदेवान्तेसुतभृत्यबांधवातिथिसंयुक्तोऽश्नीयात् ॥ इत्यपात्रकाभ्युदयिक श्राद्धपद्धतिः॥ अथसांकल्पिकनांदीश्राद्धपद्धतिः ॥ तत्रतावत् गणपतिसहितषोडशमातृकापूजनंघृतधारापूजनंचपूर्वोक्तवत् कृत्वा ॐआयुष्यं वर्चस्यमितिमंत्रत्रयंपठेत्॥ततः उदङ्मुखउपविश्य आचम्य प्राणानायम्य ॥ देशकालौसंकीर्त्यअद्यकर्त्तव्यामुककर्मनिमित्तकसांकल्पिकनां दीमुखश्राद्धंकरिष्ये ॥ इतिसंकल्पयेत् ॥ ततः दक्षिणोत्तरक्रमेण ॐसत्यवसुसंज्ञकाःविश्वेदेवानांदीमुखाः ॐभूर्भुवःस्वः इदंवःपाद्यं पादावने जनंपादप्रक्षालनंवृद्धिः ॥ ततः ॐअमुकगोत्रामातृपितामहीप्रपितामह्यः नांदीमुख्यः ॐभूर्भुवःस्वःइदंवःपाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॐ अमुकगोत्राःपितृपितामहप्रपितामहाः नांदीमुखाः ॐ भूर्भुवःस्वःइदंवः पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ ॐ अमुकगोत्रामाता महप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नांदीमुखाः ॐभूर्भुवःस्वःइदंपाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ अथासनदानम् ॥ सत्यवसुसंज्ञकानां विश्वेषांदेवानांनांदीमुखानाम् ॐभूर्भुवःस्वः इदमासनंसुखासनंस्वाहा इतिकुशत्रयं सर्वतोदक्षिणगतं पूर्वाग्रमुत्सृजेत् ॥ एवंसर्वत्र ॥ ॐनांदीश्राद्धेक्षणौ क्रियेताम् तथाप्राप्नुतांभवंतौ प्राप्नवाव इतिपठेत् ॥ ततः ॐअमुकगोत्राणांमातृपितामहीप्रपितामहीनां नांदीमुखीनाम् ॐभूर्भुवःस्वः इदमासनम् सुखासनंस्वाहा ॐ नांदीश्राद्धेक्षणौक्रियेतांतथाप्राप्नुतांभवंतौप्राप्नवाव ॥ ॐअमुकगोत्राणांपितृ

पितामहप्रपितामहानांनांदीमुखानाम् ॐभूर्भुवःस्वः इदमासनंसुखासनंस्वाहा ॐनांदीश्राद्धेक्षणौक्रियेतां तथा प्राप्नुतां भवंतौ प्राप्नवाव ॥
ॐअमुकगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानांसपत्नीकानां नांदीमुखानाम् ॐभूर्भुवःस्वः इदमासनंसुखासनं स्वाहा ॐनांदीश्राद्धे
क्षणौक्रियेतां तथाप्राप्नुतांभवंतौप्राप्नवाव ॥ ततोगंधादिदानम् ॥ ॐसत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्यः नांदीमुखेभ्यः ॐभूर्भुवः स्वः इदं
गंधाद्यर्चनंस्वाहासंपद्यतांवृद्धिः ॥ ॐअमुकगोत्राभ्योमातृपितामहीप्रपितामहीभ्यः नांदीमुखीभ्यः ॐभूर्भुवः स्वः इदंगंधाद्यर्चनंस्वाहासं
पद्यतांवृद्धिः ॥ ॐअमुकगोत्रेभ्यःपितृपितामहप्रपितामहेभ्योनांदीमुखेभ्यः ॐभूर्भुवः स्वःइदंगंधाद्यर्चनंस्वाहा संपद्यतांवृद्धिः ॥ ॐअमुक
गोत्रेभ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्योनांदीमुखेभ्यः ॐभूर्भुवःस्वः इदंगंधाद्यर्चनंसंपद्यतांवृद्धिः ॥ ततोभोजननिष्क्रय
द्रव्यदानम् ॥ ॐसत्यवसुसंज्ञका विश्वेदेवाः नांदीमुखाः ॐभूर्भुवः स्वः इदंवोयुग्मब्राह्मणभोजनपर्याप्तं दास्यमानमन्नं वा तन्निष्क्रयीभूत
किंचिद्धिरण्यममृतरूपेणस्वाहासंपद्यतांवृद्धिः ॥ ॐअमुकगोत्रामातृपितामहीप्रपितामह्यः नांदीमुख्यः ॐभूर्भुवःस्वः इदं वोयुग्मब्राह्मण
भोजनपर्याप्तंदास्यमानमन्नं वा तन्निष्क्रयीभूतंकिंचिद्धिरण्यममृतरूपेणस्वाहा संपद्यतांवृद्धिः ॥ ॐअमुकगोत्रापितृपितामहप्रपितामहाः नां
दीमुखाः ॐभूर्भुवः स्वः इदंवोयुग्मब्राह्मण० ॥ ॐअमुकगोत्रामातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाःनांदीमुखाः ॐभूर्भुवः
स्वः इदंवोयुग्मब्राह्मण० ॥ ततः सक्षीरसुदकदानम् ॐनांदीमुखाः सत्यवसुसंज्ञका विश्वेदेवाः प्रीयंताम् ॐअमुकगोत्रामातृपितामहीप्र
पितामह्योनांदीमुख्यः पितृपितामहप्रपितामहानांदीमुखाः द्वितीयगोत्रा मातामहप्रमातामहवृद्धप्रमातामहाः नांदीमुखाः सपत्नीकाश्च
प्रीयंताम् ॥ ततः ॐस्वस्तिनऽइन्द्रोवृद्धश्रवाइतिमंत्रंपठेत् ॥ अथदक्षिणादानम् ॥ ॐसत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्यो

नांदीमुखेभ्यः कृतस्यनांदीश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतांदक्षिणांदातुमहमुत्सृजे ॥ ॐअमुकगोत्राभ्योमातृ
पितामहीप्रपितामहीभ्योनांदीमुखीभ्यः कृतस्यनांदीश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थंद्राक्षामलकयवमूलनिष्क्रयोभूतांदक्षिणांदातुमहमुत्सृजे ॐ
अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः नांदीमुखेभ्यः कृतस्यनांदीश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतांदक्षि
णांदातुमहमुत्सृजे ॥ ॐ अमुकगोत्रेभ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः नांदीमुखेभ्यः कृतस्यनांदीश्राद्धस्यफल
प्रतिष्ठासिद्ध्यर्थंद्राक्षामलकयवमूलनिष्क्रयीभूतांदक्षिणांदातुमहमुत्सृजे ॥ ॐ मातापितामहीचैव तथैवप्रपितामही ॥ पितापितामहश्चैव तथै
वप्रपितामहः ॥१॥ मातामहस्तत्पिताच प्रमातामहकादयः ॥ एतेभवंतुमेप्रीताः प्रयच्छंतुसुमंगलम् ॥२॥ इतिप्रार्थयेत् ॥ अस्यनांदीश्राद्ध
स्यकर्माङ्गदेवताः प्रीयन्ताम् ॥ अस्मिन्नांदीश्राद्धेन्यूनातिरिक्तोयोविधिः सउपविष्टब्राह्मणानांवचनात् नांदीमुखप्रसादात्सर्वः परिपूर्णोऽस्तु
अस्तुपरिपूर्ण इतिविप्राः ॥ इतिसांकल्पिकनांदीश्राद्धपद्धतिः समाप्ता ॥ ॥ छ ॥ ॥ छ ॥ ॥

अथ नित्यश्राद्धपद्धतिः ॥ तत्रादौ आचम्य प्राणानायम्य कुशपवित्रादिधारणंकृत्वा प्राङ्मुखः सव्येन ॐ अपवित्र इतिमंत्रेण ॐपुण्डरी
काक्षःपुनातु इत्यनेनच कुशैः श्राद्धद्रव्याणिजलेन सिक्त्वा ॐ भूम्यैनमः ॐगयायैनमः ॐ गदाधरायनमः इतिनमस्कारंकुर्य्यात् ॥ ततः
कुशत्रयतिलजलान्यादाय देशकालौ संकीर्त्य ॐ अद्याऽमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकाऽमुकशर्म्मणां सपत्नीकानां
तथाच अमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां तृप्तिकामो नित्यश्राद्धमहं करिष्ये इति संकल्प्य
गायत्रींत्रिर्जपित्वा देवताभ्य इतित्रिर्जपेत्॥ततोऽपसव्यंकृत्वा दक्षिणामुखः पातितवामजानुः द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐ अद्या
मुकगोत्राऽस्मत्पितृपितामहप्रपितामहाऽमुकामुकशर्माणः सपत्नीकाः इदमासनंत्रेधाविभज्ययुष्मभ्यंस्वधा इत्युच्चार्य्य पितृतीर्थेनजलति

लसमेतंद्विगुणभुग्नकुशत्रयरूपं पित्रादिभ्यआसनंदद्यात् ॥ पुनः ॐ अद्यामुकगोत्राऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहाऽमुकामुकशर्माणः सपत्नीकाइदमासनंत्रेधाविभज्ययुष्मभ्यंस्वधा इतिमातामहादिभ्यः पूर्ववदासनंदद्यात् ॥ ततः ॐ अपहताऽअसुरारक्षाᳬंसिव्वेदिषदः ॥ इति तिलान् विकीर्य्य ॐ आयंतुन इतिपठेत्नत्वा ॥ ततोगंधपुष्पधूपदीपवस्त्रादि आसनद्वयेप्रत्येकंधृत्वा कुशतिलजलान्यादाय ॐ अद्यामुकगोत्राऽस्मत्पितृपितामहप्रपितामहामुकामुकशर्माणः सपत्नीकाः एतानिगंधपुष्पधूपदीपवासांसित्रेधाविभज्ययुष्मभ्यंस्वधा इति संकल्प्ययथासंभवंदद्यात् ॥ पुनः ॐअद्यामुकगोत्रास्मन्मातामहप्रमातामहवृद्धप्रमातामहाऽमुकामुकशर्माणः सपत्नीकाः एतानिगंधपुष्पधूप दीपवासांसि त्रेधाविभज्य युष्मभ्यंस्वधा इत्युच्चार्य्यदद्यात् ॥ ततः ॐअर्चनंसंपूर्णमस्त्वितिवाचयित्वा ॥ पात्रयोरन्नंतदभावे द्विगुणमामान्नं वाप्रत्येकंसंस्थाप्यजलपात्रंचधृत्वाप्रथमपात्रमालभ्य ॐ पृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेऽअमृतं जुहोमिस्वधा इति ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्यपाᳬंसुरे इतिचपठित्वा ॐ विष्णोकव्यᳬं रक्ष इत्यन्नेस्वाङ्गुष्ठमनखमधोमुखंनिवेश्य ॐ अप हताऽअसुरारक्षाᳬंसिव्वेदिषदः ॥ इत्यन्नपात्रपरितस्तिलान् विकीर्य वामकरेणपात्रंस्पृशन् ॐ अद्यामुकगोत्राऽस्मत्पितृपितामहप्रपि तामहाऽमुकामुकशर्माणः सपत्नीका इदमन्नं कव्यं सोपस्करम् अमृतरूपं युष्मभ्यंस्वधा इत्युत्सृजेत् ॥ पुनः द्वितीयपात्रमालभ्य ॐपृथिवी ते० इदंविष्णु० इत्यभिमंत्र्यांगुष्ठंनिवेश्यतिलान् विकीर्य्य ॐ अद्यामुकगोत्राऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहाऽमुकामुकशर्माणः स पत्नीका इदमन्नं कव्यं सोपस्करम् अमृतरूपं युष्मभ्यंस्वधा इत्युत्सृजेत् ॥ ततो गायत्रींत्रिर्जपित्वायथाशक्तिमधुव्वाताइत्यादिकंचपठेत् ॥ ततस्तदन्नेकिंचिद्दक्षिणाद्रव्यं चब्राह्मणायप्रतिपादयेत् ॥ ब्राह्मणोपवेशनपक्षेतुस्वागतप्रश्नाद्यधिकंकुर्यात्॥इतिनित्यश्राद्धप्रयोगःसमाप्तः॥७॥

अथतीर्थश्राद्धपद्धतिः ॥ तत्रतावत्तीर्थप्राप्तिदिने पादचारेणयावद्गंतुंशक्यते तावतः स्थानात् यानोपानहौपरित्यज्यगच्छेत् ॥ ततस्तीर्थेसं प्राप्ते पाणिपादौप्रक्षाल्याचम्य ॐ अमुकतीर्थायनमः इतिसाष्टाङ्गं प्रणम्यगंधपुष्पादिभिः संपूज्य देशकालौसंकीर्त्य अमुकगोत्रोऽमुकशर्मा ममेहजन्मनि जन्मान्तरेवाकृतकायिकवाचिकमानसिकसांसर्गिकदोषपरिहारार्थं श्रीपरमेश्वरप्रीत्यर्थममुकतीर्थप्राप्तिनिमित्तकंस्नानमहं करिष्ये ॥ इतिसंकल्प्य ॥ यथाविधिनासूर्याभिमुखः स्थित्वास्नानंकुर्यात् ॥ ततः स्नानानन्तरं धौतवाससीपरिधाय ॥ चंदनभस्मादिना तिलकंकृत्वा॥संध्यांब्रह्मयज्ञंचविधायतत्रस्थोदर्भवत्यां भूमौस्वशाखोक्तं देवर्षिपितृतर्पणंकुर्यात् ॥ तत्रकातीयतर्पणप्रयोगः॥ तत्रादौकुशत्रय तिलजलान्यादाय ॥ देशकालौसंकीर्त्य अद्यसमस्तपितॄणां विष्णुलोकादिप्राप्तये आत्मनश्चमुक्तिप्राप्तये अमुकतीर्थप्राप्तिनिमित्तंनि त्यंच देवऋषिपितृतर्पणं तंत्रेणाहंकरिष्ये इतिसंकल्प्य उपवीतीप्राङ्मुख उदङ्मुखो वादैवतीर्थेनयवोदकेन ब्रह्मादींस्तर्प्पयेत् ॥ यथा ॐ ब्रह्मातृप्यताम् १ ॐविष्णुस्तृप्यताम् १ ॐरुद्रस्तृप्यताम्१ ॐप्रजापतिस्तृप्यताम्१ॐदेवास्तृप्यन्ताम् १ ॐछंदांसितृप्यंताम् १ ॐवे दास्तृप्यन्ताम् १ ॐऋषयस्तृप्यंताम् १ ॐपुराणाचार्यास्तृप्यंताम् १ ॐगंधर्वास्तृप्यंताम् १ ॐइतराचार्यास्तृप्यंताम् १ ॐ संवत्सरः सावयवस्तृप्यंताम् १ ॐदेव्यस्तृप्यंताम् १ ॐअप्सरसस्तृप्यंताम् १ॐदेवानुगास्तृप्यंताम् १ ॐनागास्तृप्यंताम् १ ॐ साग रास्तृप्यंताम् १ ॐपर्वतास्तृप्यंताम् १ ॐसरितस्तृप्यंताम् १ ॐमनुष्यास्तृप्यंताम् १ ॐयक्षास्तृप्यंताम् १ ॐरक्षांसितृप्यंताम् १ ॐ पिशाचास्तृप्यंताम् १ ॐसुपर्णास्तृप्यंताम् १ ॐभूतानितृप्यंताम् १ ॐपशवस्तृप्यंताम् १ ॐवनस्पतयस्तृप्यंताम् १ ॐऔषधयस्तृप्यं ताम् १ ॐभूतग्रामश्चतुर्विधस्तृप्यताम् १ एवमेव ॐ मरीचिस्तृप्यताम् १ ॐअत्रिस्तृप्यताम् १ ॐ अंगिरास्तृप्यताम् १ ॐ पुलस्त्यस्तृ

प्यताम् १ ॐ पुलहस्तृप्यताम् १ ॐ क्रतुस्तृप्यताम् १ ॐ प्रचेतास्तृप्यताम् १ ॐ वसिष्ठस्तृप्यताम् १ ॐ भृगुस्तृप्यताम् १ ॐ नारदस्तृप्यताम् १ ततोनिवीती उदङ्मुखउत्तराग्रेणकुशेनप्रजापतितीर्थेनयवोदकेनचसनकादीन् प्रत्येकंद्विवारम् ॐ सनकस्तृप्यताम् २ ॐ सनंदनस्तृ० २ ॐ सनातनस्तृप्यताम् २ ॐ कपिलस्तृप्यताम् २ ॐ आसुरिस्तृ० २ ॐ वोढुस्तृ० २ ॐ पंचशिखस्तृप्यताम् २ ततः प्राचीनावीतीदक्षिणामुखः पितृतीर्थेनद्विगुणभुग्नकुशत्रयेणतिलचंदनोदकेनकव्यवाडादीन् प्रत्येकंत्रिः ॐ कव्यवाडस्तृप्यतामिदंतिलोदकंतस्मैस्वधानमः ३ ॐ अनलस्तृप्यतामिदंतिलोदकंतस्मैस्वधानमः ३ ॐ सोमस्तृप्यतामिदं० ३ ॐ यमस्तृप्यतामिदं० ३ ॐ अर्य्यमातृप्यतामिदं० ३ ॐ अग्निष्वात्तास्तृप्यंतामिदंतिलोदकंतेभ्यः स्वधानमः ३ ॐ सोमपास्तृप्यंतामिदं तिलोदकंतेभ्यः स्वधानमः ३ ॐ बर्हिषदस्तृप्यंतामिदंतिलोदकंतेभ्यः स्वधानमः ३ ततः ॐ यमायनमः ३ ॐ धर्मराजायनमः ३ ॐ मृत्यवेनमः ३ ॐ अंतकायनमः ३ ॐ वैवस्वतायनमः ३ ॐ कालायनमः ३ ॐ सर्वभूतक्षयायनमः ३ ॐ उद्दुंबरायनमः ३ ॐ दध्नायनमः ३ ॐ परमेष्ठिनेनमः ३ ॐ वृकोदरायनमः ३ ॐ चित्रायनमः ३ ॐ चित्रगुप्तायनमः ३ इतिचतुर्दशयमांस्तर्पयेत् ॥ ततः ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः॥ असुंयऽईयुरवृकाऽऋतज्ञास्तेनोऽवन्तु पितरो हवेषु ॥ ॐ अमुकगोत्रोस्मत्पिताऽमुकशर्मावसुरूपस्तृप्यतामिदं तिलोदकं तस्मैस्वधानमः ३ इतिमंत्रेणवाक्येन चप्रथमाञ्जलिं पित्रेदद्यात् १ ॐ अङ्गिरसोनः पितरोनवग्वाऽअथर्वाणोभृगवः सोम्यासः ॥ तेषां वयꣳ सुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥ इतिमंत्रेणवाक्येनचद्वितीयांजलिम्० २ ॐ आयंतुनः पितरः सोम्यासोग्निष्वात्ताः

पृथिमिंदेंवयानैः ॥ अस्मिन् यज्ञेस्वधयामदंतोधिंब्रुवन्तुतेवन्त्वस्मान् ॥ इतिमंत्रेणवाक्येनचतृतीयांजलिंपित्रेदद्यात् ३ ॐऊर्जंवहतीरमृतंघृतंपयः कीलालंपरिस्रुतम् ॥ स्वधास्थतर्पयतमेपितॄन् ॐअमुकगोत्रोऽस्मत्पितामहोऽमुकशर्मारुद्ररूपस्तृप्यतामिदंतिलोदकं तस्मैस्वधानमः ॥ इतिमंत्रेणवाक्येनचपितामहाय प्रथमांजलिंदद्यात १ ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यःस्वधानमः प्रपितामहेभ्यःस्वधायिभ्यःस्वधानमः॥अक्षन् पितरोमीमदन्तपितरोतीतृपन्तपितरःपितरःशुंधध्वम् इति पितामहाय द्वितीयांजलिंदद्यात् २ येचेहपितरोयेचनेहयाँश्चविद्मयाँऽउंचनप्रविद्म॥त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञंसुकृतंजुषस्व इतिपितामहाय तृतीयांजलिंदद्यात् ३ ॐमधुवाताऽऋतायते मधुक्षरंतिसिंधवः माध्वीर्नःसंत्वोषधीः॥ॐअमुकगोत्रोऽस्मत्प्रपितामहोऽमुकशर्मा आदित्यरूपस्तृप्यतामिदंतिलोदकंतस्मैस्वधानमः ॥ इतिमंत्रेणवाक्येनचप्रपितामहायप्रथमांजलिंदद्यात् १ ॐ मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः मधुद्यौरस्तुनःपिता ॥ इतिप्रपितामहायद्वितीयांजलिं० २ ॐमधुमान्नोवनस्पतिर्मधुमाँऽअस्तुसूर्यः माध्वीर्गावोभवंतुनः ॥ इतिप्रपितामहायतृतीयांजलिंदद्यात् ३ ॐ तृप्यध्वं तृप्यध्वं तृप्यध्वमिति पित्रादिभ्योऽजलित्रयंदद्यात ॥ ततः ॐ अमुकगोत्रास्मन्माताऽमुकदेवीगंगारूपातृप्यतामिदंजलं सतिलंतस्यैस्वधानमः इतिमातरं० १ ॐअमुकगोत्राऽस्मत्पितामही अमुकदेवीयमुनारूपातृप्यतामिदंजलंसतिलं तस्यैस्वधानमः इतिपितामहीं० १ ॐ अमुकगोत्राऽस्मत्प्रपितामही अमुकदेवीसरस्वतीरूपातृप्यतामिदंजलंसतिलंत

स्यैस्वधानमः १ इतिप्रपितामहींचतर्पयेत् ॥ एवंसापत्नमातरम् ॥ ततः ॐनमोवःपितरोरसाय नमोवःपितरःशोषाय नमोवःपितरोजीवाय नमोवःपितरःस्वधायै नमोवःपितरोघोराय नमोवःपितरोमन्यवे नमोवःपितरःपितरोः नमोवोगृहान्नः पितरोदत्तसतोवः पितरोदेष्मैतद्वः पितरोवासः ॥ ॐ अमुकगोत्रोऽस्मन्मातामहोऽमुकशर्मावसुरूपस्तृप्यतामिदं जलंसतिलंतस्मैस्वधानमः ॥ इति मातामहायांजलित्रयंदद्यात् ३ ॐअमुकगोत्रोऽस्मत्प्रमातामहोऽमुकशर्मारुद्ररूपस्तृप्यतामिदंजलंसतिलंतस्मैस्वधानमः॥इतिप्रमातामहायांजलित्रयदद्यात्॥ ३ ॥ ॐ अमुकगोत्रोऽस्मद्वृद्धप्रमातामहोऽमुकशर्मा आदित्यरूपस्तृप्यतामिदंजलंसतिलंतस्मैस्वधानमः ॥ इतिवृद्धप्रमातामहायांजलित्रयं दद्यात्३ ॐतृप्यध्वमित्यंजलित्रयंमातामहादिभ्योपिदद्यात् ॥ ततःॐअमुकगोत्राऽस्मन्मातामही अमुकदेवीगंगारूपातृप्यतामिदंजलंसतिलंतस्यैस्वधानमः १ इति मातामह्यै० ॐअमुकगोत्राऽस्मत्प्रमातामही अमुकदेवीयमुनारूपातृप्यतामिदंजलं सतिलंतस्यैस्वधानमः १ इति प्रमातामह्यै० ॥ ॐ अमुकगोत्राऽस्मद्वृद्धप्रमातामहीअमुकदेवीसरस्वतीरूपातृप्यतामिदंजलं सतिलंतस्यैस्वधानमः १ इतिवृद्धप्रमातामह्यैचदद्यात्॥ॐअमुकगोत्राऽस्मत्पत्नी अमुकदेवीलक्ष्मीरूपा तृप्यतामिदंजलं सतिलं तस्यैस्वधानमःइति १स्वपत्नींतर्पयेत् ॥ ॐ अमुकगोत्रोऽस्मत्पितृव्योऽमुकशर्मावसुरूपः सपत्नीकस्तृप्यतामिदंजलं सतिलंतस्मैस्वधानमः ३ ॐ अमुकगोत्रोऽस्मद्भ्राता अमुकशर्मा वसुरूपः सपत्नीकस्तृप्यतामिदंजलं सतिलंतस्मैस्वधानमः ३ ॐ अमुकगोत्राऽस्मत्पितृष्वसाऽमुकदेवी सभर्तृका तृप्यतामिदंजलं सतिलंतस्यैस्वधा० १ ॐ अमुकगोत्रोऽस्मन्मातुलोऽमुकशर्मावसुरूपः सपत्नीकस्तृप्यतामिदंजलं

सतिलंतस्मैस्वधा० ३ ॐ अमुकगोत्राऽस्मन्मातृष्वसाऽमुकदेवी सभर्तृका तृप्यतामिदंजलं सतिलंतस्यैस्वधा० १
ॐ अमुकगोत्रोऽस्मच्छ्वशुरोऽमुकशर्मावसुरूपस्तृप्यतामिदंजलं सतिलंतस्मैस्वधा० ३ ॐ अमुकगोत्रोऽस्मच्छ्वश्रूरमुकदेवी
गंगारूपातृप्यतामिदंजलं सतिलंतस्यैस्वधा० १ ॐ अमुकगोत्रोऽस्मदाचार्योऽमुकशर्मावसुरूपः सपत्नीकस्तृप्यतामिदंजलं सतिलं
तस्मैस्वधा० ३ ॐ अमुकगोत्रोऽस्मत्पुत्रोऽमुकशर्मा सपत्नीकस्तृप्यतामिदंजलं सतिलंतस्मैस्वधा० ३ ॐ अमुकगोत्राऽस्मत्पुत्रीअमुक
देवीतृप्यतामिदंजलं सतिलंतस्यैस्वधा० १ ॐ अमुकगोत्राऽस्मद्भगिनी अमुकदेवीयमुनारूपा तृप्यतामिदंजलं सतिलंतस्यैस्वधा० १
ॐ अमुकगोत्रोऽस्मदुपाध्यायोऽमुकशर्मावसुरूपः सपत्नीकस्तृप्यतामिदंजलं सतिलंतस्मैस्वधानमः ३ ॥ इत्युपाध्यायंचतर्पयेत् ॥
एवंपितृव्यपुत्रं० भ्रातृपुत्रं० मातुलपुत्रं० श्यालकं० गुरुपुत्रं० जामातरं० पौत्रं० भागिनेयं० दौहित्रं० शिष्यं० मित्रं तत्पत्नीपुत्रादीं
श्चमृतानपितर्पयेत् ॥ ततः [विष्णुपुराणोक्तंकाम्यतर्पणंयथाचारंकार्यम्] ॐ देवासुरास्तथायक्षा नागागंधर्वराक्षसाः ॥ पिशाचागुह्यकाःसिद्धाः
कूष्मांडास्तरवःखगाः ॥१॥ जलेचराभूनिलया वाय्वाधाराश्चजंतवः ॥ प्रीतिमेतेप्रयान्त्वाशु मद्दत्तेनाम्बुनाखिलाः ॥ २ ॥ नरकेषुसमस्तेषु
यातनासुचयेस्थिताः ॥ तेषामाप्यायनायैतद्दीयतेसलिलंमया॥३॥ येऽबांधवाबांधवाये येऽन्यजन्मनिबांधवाः ॥ तेतृप्तिमखिलायांतु यश्चा
स्मत्तोभिवांञ्छति ॥ ४ ॥ येमेकुलेलुप्तपिंडाः पुत्रदारविवर्जिताः ॥ तेषांहिदत्तमक्षय्यमिदमस्तुतिलोदकम् ॥ ५ ॥ आब्रह्मस्तंबपर्य्यंतं देवर्षि
पितृमानवाः ॥ तृप्यन्तुपितरःसर्वे मातृमातामहादयः ॥ ६ ॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ॥ आब्रह्मभुवनाल्लोकादिदमस्तुति
लोदकम् ॥ ७ ॥ एतैर्मंत्रैःपृथक्पृथक्सतिलजलंदद्यात् ॥ ततः ॥ येकेचास्मत्कुलेजाता अपुत्रागोत्रिणोमृताः ॥ तेगृह्णंतुमयादत्तं वस्त्रनिष्पी

डनोदकम् ॥ इतिस्नानवस्त्रंबहिःस्थलेनिष्पीड्यसव्येनाऽऽचम्यतर्पणोत्तरकर्मकुर्यात् ॥ तद्यथा ॐनमोविवस्वतेब्रह्मन्भास्वतेविष्णुतेजसे ॥ जगत्सवित्रेशुचयेनमस्तेकर्मदायिने ॥ १ ॥ इतिमंत्रेणसूर्यायार्घ्यंदत्त्वाब्रह्मादीन्पुष्पांजलिभिरर्चयेत् ॥ ॐ ब्रह्मजज्ञानं०ॐब्रह्मणेनमः ॥१॥ ॐइदंविष्णु० ॐविष्णवेनमः ॥ २ ॥ ॐनमस्तेरुद्र० ॐरुद्रायनमः ॥ ३ ॥ ॐआकृष्णेन० ॐसूर्यायनमः ॥ ४ ॥ ॐमित्रस्यचर्षणी० ॐमित्राय० ॥ ५ ॥ ॐइमम्मे० ॐवरुणायनमः ॥ ६ ॥ ततउत्थाय ॐअदृश्रमस्य० ॥ १ ॥ हꣳसःशुचि० ॥ २ ॥ इतिसूर्यमुपस्थाय ॐआदित्यायनमः ॐदिग्भ्योनमः ॐदिग्देवताभ्योनमः ॐब्रह्मणे० ॐपृथिव्यै० ॐओषधिभ्योनमः ॐवाचेनमः ॐवाचस्पतये० मरुद्भ्यो०अद्भ्योन०इतिनमस्कृत्योदकंचदत्त्वा ॐसंवर्चसा०॥१॥देवागातु०॥२॥इतिजपेत् ॥ इतितर्पणप्रयोगः ॥ एवंतर्पणंविधाय श्रीमहाविष्णुंषोडशोपचारैः संपूज्यमाध्याह्निककर्मसमाप्यतीर्थप्राप्तिनिमित्तकं पित्रादीनांनवदैवतं द्वादशदैवतंवापार्वणं पितृव्यादीनांचैकोद्दिष्टंपिंडमन्त्रंवा अन्नेन आमान्नेनहेम्नावाब्राह्मणेषुदर्भबटुष्वायथासंभवंकुर्य्यात् ॥ तत्रब्राह्मणपरीक्षानकार्य्या ॥ तत्रत्याविप्रदेवमातृकानाऽवमंतव्याः॥ श्राद्धंचपित्रादिषड्दैवत्यंनवदैवत्यं वा यथासंभवंकुलाचारानुसारेणपूर्वोक्तपार्वणविधिनाकर्त्तव्यम् परंतुएतद्वर्ज्यम् ॥ अर्घ्यदानम् आवाहनं द्विजाङ्गुष्ठनिवेशनं तृप्तिप्रश्नं विकिरं दिग्बंधनं दृष्टिदोषकृताऽपवित्रताशोधनार्थंकूष्मांडादिसूक्तजपं विसर्जनंचनकुर्यात् ॥ अत्रकृतपादिकालावश्यकताऽपि न इति ॥ अथतीर्थनिमित्तनवदैवत्यश्राद्धप्रयोगः ॥ तत्रतावत्कर्त्तास्वासनेप्राङ्मुखउपविश्यदर्भपवित्रादिधारणंकृत्वासव्येनाचम्यप्राणानायम्य ॥ ॐअपवित्रः पवित्रोवा इति ॐपुंडरीकाक्षःपुनात्वितिपठित्वाकुशत्रयानीतजलेनश्राद्धद्रव्याणिस्वात्मानंचाभिसिंचेत् ॥ ततःॐभूम्यैनमः ॐभगवत्यैगयायैनमः ॐभगवतेगदाधरायनः ॐअमुकतीर्थायनमःॐतीर्थदेवताभ्योनमः ॥ इति नत्वा ॥ कुशत्रयतिलज

लान्यादायदेशकालौ संकीर्त्य ॐअमुकगोत्रोऽमुकशर्मा ममसमस्तपितॄणांविष्णुलोकप्राप्तये अमुकतीर्थप्राप्तिनिमित्तकममुकगोत्राणामस्म त्पितृपितामहप्रपितामहानाममुकामुकशर्मणां वसुरुद्रादित्यरूपाणाम् अमुकगोत्राणामस्मन्मातृपितामहीप्रपितामहीनाममुकामुकदेवीनांगं गायमुनासरस्वतीरूपिणीनां तथा अमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणांसपत्नीकानां वसुरुद्रा दित्यरूपाणां सदैवंपार्वणश्राद्धंपितृतृप्तिकामोहंकरिष्ये ॥ इतिसंकल्प्य ॥ ॐ कुरुष्वइत्यनुज्ञातोगायत्रींत्रिर्जपित्वा ॥ ॐ देवताभ्यःपितृभ्यश्च महायोगिभ्यएवच ॥ नमः स्वाहायैस्वधायै नित्यमेवनमोनमः ॥ इतित्रिःपठेत् ॥ ततउदङ्मुखो दक्षिणंजान्वाच्य सव्येनजलयवसमन्वितमृजुकुशत्रयमादाय ॥ ॐ अद्यास्मत्पित्रादित्रयमात्रादित्रयमातामहादित्रयश्राद्धसंबंधिनांविश्वेषां देवानामिदमासनमस्तु इतिजलयवसहितं कुशत्रयरूपमासनंपूर्वाग्रमुत्सृजेत् ॥ १ ॥ ततोदक्षिणामुखःप्राचीनावीती पातितवामजानुः द्विगु णमुग्नकुशत्रयतिलजलान्यादाय ॐ अमुकगोत्रास्मत्पितृपितामहप्रपितामहाअमुकामुकशर्माणोवसुरुद्रादित्यरूपाः इदमासनंयुष्मभ्यंस्व धाइत्युच्चार्य्यपितृतीर्थेनमोटकरूपंदक्षिणाग्रमुत्सृजेत् ॥ १ ॥ ततः ॐ अमुकगोत्रास्मन्मातृपितामहीप्रपितामह्यःअमुकामुकदेव्योगंगाय मुनासरस्वतीरूपिण्यः इदमासनंयुष्मभ्यंस्वधा इतिमोटकरूपासनंदद्यात् ॥ २ ॥ पुनः ॐ अमुकगोत्राऽस्मन्मातामहप्रमातामह वृद्धप्रमातामहाअमुकामुकशर्माणः सपत्नीकाः वसुरुद्रादित्यरूपाः इदमासनंयुष्मभ्यंस्वधा इतितृतीयंमोटकरूपमासनंसर्वतः पूर्वगतमुत्सृजे त् [द्वादशदैवत्यपक्षेमातामह्यादीनांपृथगासनदानम्] ॥३॥ ततः सव्यादिकृत्वा गंधादिकंधृत्वा कुशत्रययवजलान्यादाय॥ॐअद्यास्मत्पित्रा दित्रयमात्रादित्रयमातामहादित्रयश्राद्धसंबंधिविश्वेभ्योदेवेभ्यः एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसिवोनमः ॥ इत्युच्चार्य्य गंधादी

न्युत्सृजेत् ॥ ततः कृतांजलिः कर्त्ता विश्वेषांदेवानामर्चनंसंपूर्णमितिब्रूयात् अस्त्वर्चनंसंपूर्णमितिद्विजाब्रूयुः ॥ ततोऽपसव्यादिना पित्राद्यासनेषुगंधादिधृत्वा ॥ द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐ अमुकगोत्राऽस्मत्पितृपितामहप्रपितामहाअमुकामुकशर्माणोवसुरुद्रादित्यरूपाः एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि युष्मभ्यंस्वधा इतिपित्रादिभ्यउत्सृज्य ॥ १ ॥ ॐ अमुकगोत्राऽस्मन्मातृपितामहीप्रपितामह्योऽमुकामुकदेव्य एतानिगंधपुष्पधूपदीपतांबूलसिंदूरवासांसियुष्मभ्यंस्वधा इतिमात्रादिभ्यः० ॥ २ ॥ ॐ अमुकगोत्राऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहाअमुकामुकशर्माणः सपत्नीकाः वसुरुद्रादित्यरूपाः एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसियुष्मभ्यंस्वधा इतिमातामहेभ्यश्चगंधादीन्युत्सृजेत् ॥ ३ ॥ ततः कृताञ्जलिर्भूत्वा ॐ पितॄणामर्चनंसंपूर्णमस्त्विति पठेत् ॐ अस्त्वर्चनंसंपूर्णमितिप्रतिवचनम् ॥ ततो गौरमृत्तिकयाजलेनवाप्रत्येकंमंडलंकृत्वा भोजनपात्राणिदद्यात् ॥ अथाग्नौकरणम् ॥ व्यंजनक्षारवर्जितं घृताक्तमुष्णमन्नं श्राद्धीयान्नाग्रभागं कांस्यपात्रेकृत्वा ॐ अग्नौकरणंकरिष्ये इतिपृष्ट्वा ॥ कुरुष्व इत्यनुज्ञातोऽपसव्यादिनाएव:सपात्रके पितृब्राह्मणहस्ते अपात्रकेताम्रपात्रादिस्थजलेवा ॐ अग्नयेकव्यवाहनायस्वाहा ॥ इदमग्नयेकव्यवाहनाय ॥ ॐ सोमाय पितृमतेस्वाहा॥इदं सोमाय पितृमते॥इत्याहुतिद्वयं जुहुयात् ॥ ततोहुतशेषमन्नंपित्रादिपात्रेषुकिंचिद्दत्त्वापिंडार्थं चावशेषयेत्॥ततः सव्यादिना देवपात्रे अपसव्यादिनापित्रादिपात्रत्रयेषु उष्णमन्नंसघृतमनेकव्यंजनयुतं सुशीतलजलसहितं यथावत् परिविष्य मधुमयंकृत्वा ॐ मधुव्वाताऽऋतायते इतित्र्यृचेन ॐ मधुमधुमध्विति चाभिमंत्रयेत्॥ततः सव्यादिना उत्तानपाणिभ्यां देवपात्रमालभ्य ॐपृथिवीतेपात्रं

द्यौरपिधानं ब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वाहा॥ ॐ इदंविष्णुर्विचक्रमे त्रेधानिदधेपदम्॥समूढमस्यपा ँ सुरेस्वाहा॥इतिपठित्वा॥

ॐ अपहताऽअसुरारक्षा ँ सिवेदिषदः-इतियवान् पात्रपरितोविकीर्य ॥ दक्षिणकरेणकुशत्रयादीन्यादाय ॥ ॐ अद्यास्मत्पित्रादित्रयमात्रादित्रयमातामहादित्रयश्राद्धसंबंधिनोविश्वेदेवाः इदमन्नं सोपस्करं हव्यम् अमृतरूपं वः स्वाहानमः ॥ इत्युदकंदेवतीर्थेनदक्षिणभागेभूमौ क्षिपेत् ॥ ततोऽपसव्यादिनापित्रादिपात्रंन्युब्जपाणिभ्यां व्यस्ताभ्यांस्पृष्ट्वा ॥ ॐ पृथिवीतेपात्रं० ॐ इदंविष्णुर्विचक्रमे इतिजप्त्वा ॥

ॐ अपहताऽअसुरारक्षा ँ सिवेदिषदः-इतितिलान् अन्नपात्रपरितो विकीर्य्य वामकरेणपात्रंस्पृशन् दक्षिणकरेण द्विगुणभुग्नकुशत्रयादीन्यादाय॥ॐ अद्यामुकगोत्राऽस्मत्पितृपितामहप्रपितामहाअमुकामुकशर्माणोवसुरुद्रादित्यरूपाः इदमन्नंसोपस्करं कव्यम् अमृतरूपंयुष्मभ्यं स्वधा॥इत्युदकंपितृतीर्थेन वामभागेभूमौक्षिपेत् ॥ ततोमात्रादिपात्रमालभ्यपूर्ववज्जप्त्वा ॐ अमुकगोत्रास्मन्मातृपितामहीप्रपितामह्योमुकामुकदेव्यः इदमन्नं सोपस्करं कव्यम् अमृतरूपंयुष्मभ्यंस्वधा इत्युत्सृजेत् ॥ एवं मातामहादिपात्रमपिस्पृष्ट्वापूर्ववज्जप्त्वा ॐ अद्यामुकगोत्राऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहाअमुकामुकशर्माणःसपत्नीकाःवसुरुद्रादित्यरूपाः इदमन्नंसोपस्करं कव्यम् अमृतरूपं युष्मभ्यं स्वधा इत्युत्सृजेत् ॥ ततः ॐ अन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्तु इतिप्रार्थ्य प्रणवव्याहृतित्रयपूर्वांगायत्रींत्रिः सकृद्वा जपेत्॥ततःॐ मधुव्वाताऽऋतायतेमधुक्षरन्ति सिंधवः माध्वीर्नःसन्त्वोषधीः ॥१॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः-मधुद्यौर

स्तुनः पिता ॥२॥ मधुमान्नोवनस्पतिर्मधुमाँऽअस्तुसूर्य्यः॑ माध्वीर्गावोभवन्तुनः॥३॥इतित्र्यृचम् ॥ ॐमधुमधुमध्वितिचपठेत्॥ ततःसव्ये न ॥ ॐकृणुष्वपाजः प्रसितिंनपृथ्वीमित्यादिपंचऋचः पठित्वा ॐ उदीरतामवर इत्यादिपितृमंत्रान् पुरुषसूक्तमप्रतिरथं रुचिस्तवादिकं चयथाशक्तिपठेत् ॥ ततः उच्छिष्टसन्निधौ अपसव्यादिना चतुरस्रंदक्षिणप्लवं हस्तमात्रं चतुरङ्गुलोच्चंरमणीयंपित्रादित्रयपिंडपातनार्थं स्थानं निर्माय तत्प्राङ्मात्रादित्रयमातामहादित्रयपिंडपातनार्थं तादृशमेवस्थानद्वयंकुर्यात् ॥ ततः सर्वत्र अनन्तर्गर्भसाग्रपत्रद्वयरूपदर्भपिंजुलीमूलेन ॐ अपहता इतिमंत्रेण दक्षिणाग्रां रेखांसकृत्सकृदुल्लिख्यदर्भपिंजुलीमुत्तरस्यांदिशिनिक्षिप्य ॥ ॐ येरूपाणिप्रतिमुंचमानाऽअसुराःसन्तःस्वधयाचरन्ति॥ परापुरोनिपुरोयेभरंत्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ इतिमंत्रेण उल्मुकंप्रत्येकंरेखोपरिभ्रामयित्वा दक्षिणतोनिदध्यात् ॥ ततः उपमूलसकृदाच्छिन्नंदक्षिणाग्रकुशत्रयंरेखोपरिस्तीर्त्वा नवसुपात्रेषु जलतिलगंधपुष्पाणिक्षिप्त्वा एकंपात्रंगृहीत्वा ॐ अमुकगोत्र अस्मत्पितरमुकशर्मन् अत्रावनेनिक्ष्वतेस्वधाइतिकुशमूले पितृतीर्थेन अवनेजनंदद्यात् ॥ एवंपितामहाय कुशत्रयमध्ये प्रपितामहाय कुशाग्रे अवनेजनंसावशेषंदद्यात् ॥ एवमेव मात्रादिभ्योमातामहेभ्यश्चदद्यात् ॥ ततः सर्वस्मात्पायसादि श्राद्धशेषान्नात्किंचित्किंचिदन्नमुद्धृत्यरजतादिपात्रेकृत्वाहुतशेषान्नं मध्वाज्यतिलव्यंजनादिनासंयोज्य ॥ अथवा चरुणा सक्तुना वा पिण्याकगुडतंडुलयवगोधूमपिष्टकानामन्यतमेनवा नवपिंडान् बिल्वोपमान्निर्माय मधुघृताभ्यामवघार्य्य पित्रादिभ्योदद्यात् ॥ तत्रप्रथमंपिंडंमोटकादिचादाय ॐ अमुकगोत्र अस्मत्पितरमुकशर्मन् वसुरूप एतत्त पिंडंस्वधा इतिप्रथमाऽवनेजनस्थाने सव्योपगृहीतदक्षिणहस्तेनपितृतीर्थेन दद्या

त् ॥ एवंपितामहायप्रपितामहायचदद्यात् ॥ ततः ॐ अमुकगोत्रेऽस्मन्मातरमुकदेवि एतत्ते पिंडंस्वधा ॥ इतिद्वितीयवेदिकायांप्रथमाऽवने जनस्थानेमात्रे पिंडंदत्त्वा पितामह्यैप्रपितामह्यैचदद्यात् ॥ पुनः ॐ अमुकगोत्र अस्मन्मातामहामुकशर्मन् वसुरूप एतत्तेपिंडंस्वधा इति तृतीयवेदिकायांमातामहायपिंडंदत्त्वा प्रमातामहायवृद्धप्रमातामहायचदद्यात् ॥ ततः सर्वत्रपिंडाधारकुशमूले ॐ लेपभागभुजः पितर स्तृप्यन्तु इतिपठित्वा हस्तंप्रोञ्छ्यजलेनहस्तौप्रक्षालयेत् ॥ ततः सव्येनत्रिराचम्याविष्णुंस्मृत्वा अपसव्यादिना ॐ अत्रपितरोमादय ध्वंयथाभागमावृषायध्वम् ॥ इतिपित्राद्युद्देशंपठित्वावामावर्त्तेनोदङ्मुखोभूत्वाप्रीतमनाः॥ मनाक्श्वासंनियम्य तेनैवयथापरावृत्य ॐ अमी मदंतपितरोयथाभागमावृषायिषत इतिजपेत् ॥ एवंमात्राद्युद्देशेन ॐ अत्रमातरोमादयध्वंयथाभागमावृषायध्वं इतिपठित्वाश्वासंनियम्यपू र्ववत् ॥ ॐ अमीमदंतमातरोयथाभागमावृषायिषत इतिजपित्वाएवमेव ॥ ॐ अत्रमातामहादयो मादयध्वं यथाभागमावृषायध्वमिति ॐ अमीमदंतमातामहाः यथाभागमावृषायिषत इतिजपेत् ॥ ततः पूर्वदत्तावनेजनपात्रस्थजलेन ॐ अमुकगोत्र अस्मत्पितरमुक शर्मन् वसुरूप अत्रप्रत्यवनेनिक्ष्वतेस्वधा इतिप्रथमपिंडोपरिप्रत्यवनेजनंदत्त्वा एवमेव पितामहायप्रपितामहायचदद्यात् ॥ ततः ॐ अमुकगोत्रेऽस्मन्मातरमुकदेवि अत्रप्रत्यवनेनिक्ष्वतेस्वधाइतिमातृपिंडोपरि प्रत्यवनेजनंदत्त्वा पितामह्यादिपंचपिंडोपरि क्रमेणप्र त्येकं दद्यात् ॥ ततो नीवींविस्रस्य सव्येनाचम्य अपसव्यं कृत्वा ॥ ॐ नमोवःपितरो रसायनमोवःपितरःशोषायनमोवःपितरोजीवाय नमोवःपितरः स्वधायै नमोवः पितरो घोरायनमोवः पितरोमन्यवेनमोवः पितरःपितरो नमोवोगृहान्नः पितरोदत्तसतोवः पितरो

देष्मइतिकृतांजलिः पठित्वा ॐ नमोवोमातरोरसाय इत्यादिमंत्रोहेन मात्रादीमातामहादींश्चप्रणमेत् ॥ ततः ॐ एतद्वः पितरो
वासः ॥ ॐएतद्वोमातरोवासः ॥ ॐ एतद्वोमातामहादयो वासः ॥ इतिपठित्वा नवसुपिंडेषुसूत्राणिदद्यात् ॥ ॐ अमुकगोत्र
अस्मत्पितरमुकशर्मन् वसुरूप एतत्तेवासः स्वधा ॥ इतिसूत्रमुत्सृजेत् ॥ एवमेव पितामहादिपिंडेषु तत्तन्नाम्नोत्सृजेत ॥ ततः पितॄनु
द्दिश्य तदीयपिंडेषु तूष्णीं गंधपुष्पतुलसीधूपदीपतांबूलपूगीफलदक्षिणादीनिदद्यात् ॥ पिंडशेषान्नंपिंडसमीपे विकिरेत् ॥ ततः
सव्याऽपसव्याभ्यां देवपितृभोजनपात्रेषु ॐ शिवाआपः संतु इतिजलम् ॐ सौमनस्यमस्तु इतिपुष्पाणि ॐ अक्षतंचारिष्टंचास्तु इति
यवांश्चदद्यात् नतंडुलान् ॐ अमुकगोत्रस्यास्मत्पितुरमुकशर्मणोवसुरूपस्य दत्तैतदन्नपानादिकमक्षय्यमस्तु इतिसतिलमक्षय्योदकंपि
त्रेदत्त्वा एवंपितामहाय प्रपितामहायचदद्यात ततः ॐ अमुकगोत्रायास्मन्मातुरमुकदेव्या दत्तैतदन्नपानादिकमक्षय्यमस्तु इतिमात्रे
दत्त्वा पितामह्यादीनांमातामहादीनांचप्रत्येकमक्षय्योदकंदद्यात्॥ततः सव्यंकृत्वाप्राङ्मुखस्तन्मनाःकृतांजलिर्दक्षिणांदिशंपश्यन्ॐअघोरा
पितरः संतु ॐअघोरामातरः संतुॐअघोरामातामहादयश्चसंतु इतिवदेत्॥ततःॐगोत्रंनोवर्द्धताम् दातारोनोऽभिवर्द्धताम् वेदाः संततिरेवच॥
श्रद्धाचनोमाव्यगमत् बहुदेयंचनोऽस्तु अन्नंचनोबहुभवेत् अतिथींश्चलभेमहि॥याचितारश्चनःसन्तु माचयाचिष्मकंचन॥एताःसत्या आशि
षः सन्तु इति प्रार्थयेत्॥ततोऽपसव्यंकृत्वा पिंडोपरिसपवित्रान्कुशानास्तीर्य स्वधांवाचयिष्ये इतिब्रूयात् ॐपितृभ्यः पितामहेभ्यः प्रपिता
महेभ्यो मातृभ्यः पितामहीभ्यः प्रपितामहीभ्यो मातामहेभ्यः सपत्नीकेभ्यः प्रमातामहेभ्यः सपत्नीकेभ्योवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यश्च

स्वधोच्यतामितिपठेत् ॥ ततः ॐ ऊर्ज्जंवहन्तीरमृतं घृतंपयः कीलालंपरिस्रुतम् ॥ स्वधास्थतर्पयतमेपितृन् इतिसपवित्रकुशोपरि दक्षिणाग्रांजलधारांदद्यात् ॥ मात्रादिपिंडेषु स्वधास्थतर्प्पयतमेमातृः॥स्वधास्थतर्पयत मे मातामहादीन् इतिमंत्रोहेनदद्यात् ॥ ततोदक्षिणा दानम् ॥ तत्र उदङ्मुखः सव्येन हिरण्यदक्षिणामादाय ॐ अद्यास्मत्पित्रादित्रयमात्रादित्रयश्राद्धसंबंधिनां विश्वेषांदेवानांकृतै तत्तीर्थप्राप्तिनिमित्तकपार्वणश्राद्धप्रतिष्ठार्थमिदं हिरण्यमग्निदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणात्वेनदातुमहमुत्सृजे इति देवे भ्योदद्यात् ॥ ततोऽपसव्यादिनारजतद्रव्यंगृहीत्वा ॥ ॐअद्यामुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणां वसुरुद्रादित्य रूपाणां कृतैतत्तीर्थप्राप्तिनिमित्तकपार्वण श्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवत्यममुकगोत्रायामुकशर्मणेब्राह्मणाय दक्षिणात्वेनदातुमहमुत्सृजे ॥ इति पित्रादिभ्योरजतदक्षिणांदत्त्वा ॥ ॐअमुकगोत्राणामस्मन्मातृपितामहीप्रपितामहीनां गंगायमुनासरस्वतीरूपिणीनां कृतैतत्तीर्थप्रा प्तिनिमित्तकपार्वणश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणायदक्षिणात्वेनदातुमहमुत्सृजे इतिमात्रादिभ्यः ॥ ॐअ मुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहनांसपत्नीकानां वसुरुद्रादित्यरूपाणां कृतैतत्तीर्थप्राप्तिनिमित्तकपार्वणश्राद्धप्रतिष्ठार्थम् इदंरजतंचंद्रदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणायदक्षिणात्वेनदातुमहमुत्सृजे ॥ इतिमातामहादिभ्यश्चदक्षिणांदद्यात् ॥ दैवेरजतनिषेधः ॥ ततः पिंडानुत्थाप्यस्थाल्यांनिधाय अवघ्राणंकृत्वा सकृदाच्छिन्नकुशानुल्मुकंचवह्नौक्षिपेत् ॥ ततः ॐ देवताभ्यः पितृभ्यश्च इतित्रिर्जपि त्वादीपान्निर्वाप्य सव्येनहस्तौपादौप्रक्षाल्य आचम्य ॐ प्रमादात्कुर्वतांकर्म्म प्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोः संपूर्णंस्यादितिश्रु तिः ॥ इतिपठित्वा कर्म्मपूर्त्तिकामोविष्णुंस्मरेत् ॥ ततः पिंडान् तीर्थजलेदक्षिणाभिमुखः क्षिप्त्वा उच्छिष्टमार्जनादिकंकुर्यात् ततोवैश्वदेव

बालिकर्मणीकृत्वा यथाशक्तितीर्थब्राह्मणान्भोजयित्वातेभ्योदक्षिणांदत्त्वा ॐ अमुकतीर्थप्राप्तिनिमित्तंपार्वणश्राद्धंपरिपूर्णमस्तु इति तान् प्रार्थ्य ॥ अस्तुपरिपूर्णमित्यनुज्ञातः स्वयंभोजनंकुर्यात् ॥ द्वादशदैवत्यश्राद्धकरणेतुमातामह्यादिपक्षः पृथक्कार्यः ॥ अन्यत्सर्वंसमानम् ॥ एवमेव पितृव्यादीनामेकोद्दिष्टविधिनाकुर्यात् ॥ पार्वणाद्यसंभवे सर्वेषांपिंडदानमात्रमपितीर्थश्राद्धंकर्त्तव्यम् ॥ इतिश्राद्धप्रकाशेतीर्थनिमित्तकनवदैवत्यपार्वणश्राद्धपद्धतिः समाप्ता ॥७॥ अथपिंडमात्रतीर्थश्राद्धपद्धतिः ॥ तत्रतावत्स्वासनेप्राङ्मुखउपविश्य दर्भपवित्रधारणं कृत्वा सव्येन आचम्य प्राणानायम्य पुंडरीकाक्षस्मरणं द्रव्यप्रोक्षणंचकुर्यात् ॥ ततः ॐभूम्यैनमः ॥ ॐ तीर्थदेवताभ्योनमः ॥ ॐभगवत्यैगयायैनमः ॐ भगवतेगदाधरायनमः ॥ इति नमस्कारः ॥ ततोदेशकालौ संकीर्त्य ॐ अद्यममसमस्तपितॄणामसद्गतीनांसद्गतिप्राप्तये सद्गतीनांचविष्णुलोकावाप्तये अमुकतीर्थप्राप्तिनिमित्तकं पिंडदानमात्रश्राद्धमहंकरिष्ये ॥ इतिसंकल्प्य ॥ गायत्रींत्रिर्जपित्वा ॐ देवताभ्य इति त्रिः पठेत् ॥ ततोऽपसव्यंकृत्वा दक्षिणामुखः पातितवामजानुः स्वपुरतः पिंडदानार्थं चतुरस्रं दक्षिणाप्लवंहस्तमात्रं चतुरङ्गुलोच्छ्रितंस्थानं निर्माय ॥ तन्मध्येदर्भपिंजूलीमूलेन ॐ अपहताऽअसुरारक्षाꣳसिवेदिषद इति रेखाकरणम् ॐ येरूपाणि प्रतिमुंचमानाऽअसुराःसन्तः स्वधयाचरन्ति । परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकान्प्रणुदात्यस्मादिति मंत्रेण उल्मुकंभ्रामयित्वाउपमूलसकृदाच्छिन्नदक्षिणाग्रकुशास्तरणंकुर्यात् ॥ ततः पत्रपुटकेषु जलतिलगंधपुष्पाणिक्षिप्त्वा एकंपुटकंगृहीत्वा ॐ अद्यामुकगोत्र अस्मत्पितरमकशर्मन्वसुरूप अत्रावनेनिक्ष्वतेस्वधा इतिकुशमूलेपितृतीर्थेनपित्रे अवनेजनंदद्यात् ॥ १ ॥ पुनः द्वितीयपुटकंगृहीत्वा ॐ अमुकगोत्र अस्मत्पितामहामुकशर्मन्रुद्ररूपअत्रावनेनिक्ष्वतेस्वधा इतिकुशमध्येपितामहायदद्यात् ॥ २ ॥ पुनः ॐ अमुकगोत्र अस्मत्प्र

पितामहामुकशर्मन् आदित्यरूपअत्रावनेनिक्ष्वतेस्वधाइतिकुशाग्रेप्रपितामहायदद्यात् ॥ ३ ॥ एवं द्वितीयादिकुशेषुमातृपितामहीप्रपितामही मातामहप्रमातामहवृद्धप्रमातामहमातामहीप्रमातामहीवृद्धप्रमातामहीभ्योपिदद्यात्॥ एवमेव–स्वपत्नी–पितृव्य–तत्पत्नी–भ्रातृ–भ्रातृपत्नी पितृष्वसृ–तद्भर्तृ–मातुल–मातुलानी–मातृष्वसृ–तत्पति–श्वशुर–श्वश्रा–ऽऽचार्या–ऽऽचार्यान्युपाध्याय–पुत्र–स्नुषा–पुत्री–जामातृ–भगिनी–भाम–भागिनेय–पौत्र–दौहित्र–शिष्य–श्यालक–मित्र–तत्पत्नीप्रभृतीनां पृथक्पृथक्कुशेष्ववनेजनंदद्यात् ॥ ततःपायसेन चरुणावा सक्तुना तंडुलैस्तंडुलपिष्टकेनवा यवगोधूमचूर्णगुडतिलफलमूलपिण्याकानामन्यतमेनवा तिलघृतमधुदधिशर्करामिश्रितेन आर्द्रामलकमात्रान्पिंडान्कृत्वाक्रमेणदर्भेषुतत्तदवनेजनस्थानेदद्यात् ॥ तत्रएकंपिंडंवामहस्तेकृत्वा दक्षिणहस्तेनद्विगुणभुग्नकुशत्रयादीन्यादाय ॐ अमुकगोत्र अस्मत्पितरमुकशर्मन्वसुरूप एतत्तेपिंडंस्वधानमः इति प्रथमकुशमूले पितृतीर्थेनपित्रेदद्यात् १ पुनः पिंडं कुशादींश्चादाय ॐ अमुकगोत्रास्मत्पितामहामुकशर्मन्रुद्ररूपएतत्तेपिंडंस्वधानमः इतिकुशमध्येपितामहायदद्यात् २ पुनः ॐ अमुकगोत्र अस्मत्प्रपितामहामुकशर्मन्नादित्यरूपएतत्तेपिंडंस्वधानमः इतिकुशाग्रेप्रपितामहायदद्यात् ३ एवंद्वितीयादिकुशेषुक्रमेण ॐ अमुकगोत्रेऽस्मन्मातरमुकदेविगंगारूपे एतत्तेपिंडंस्वधानमः इतिदद्यात् ४ एवंसापत्नमात्रेऽपिदद्यात्॥ॐ अमुकगोत्रेऽस्मत्पितामहि अमुकदेवि यमुनारूपे एतत्ते पिंडंस्वधानमः ५ ॐअमुकगोत्रेऽस्मत्प्रपितामहि अमुकदेविसरस्वतीरूपे एतत्ते पिंडंस्वधानमः ६ ॐ अमुकगोत्र अस्मन्मातामहामुकशर्मन्वसुरूप एतत्ते पिंडंस्वधानमः ७ ॐ अमुकगोत्रअस्मत्प्रमातामहामुकशर्मन्रुद्ररूपएतत्तेपिंडंस्वधानमः ८ ॐ अमुकगोत्रास्मद्वृद्धप्रमातामहामुकशर्मन् आदित्यरूपएतत्तेपिंडंस्वधानमः ९ ॐ अमुकगोत्रेऽस्मन्मातामहि अमुकदेवि एतत्तेपिंडं

स्वधानमः १० ॐ अमुकगोत्रेऽस्मत्प्रमातामहि अमुकदेविएतत्तेपिंडंस्वधानमः ११ ॐ अमुकगोत्रेऽस्मद्वृद्धप्रमातामहि अमुकदेवि एतत्तेपिंडंस्वधानमः १२ ॐ अमुकगोत्रेऽस्मत्पत्निअमुकदेविश्रीरूपिणिएतत्ते पिंडंस्वधानमः १३ ॐ अमुक० पितृव्यामुकशर्मन् एतत्ते० १४ ॐ अमुकगोत्रेऽस्मत्पितृव्यपत्नि० एतत्ते० १५ ॐ अमुक० भ्रातरमुकशर्मन् एतत्ते० १६ ॐ अमुकगोत्रे० भ्रातुः पत्नि अमुकदेविएतत्ते० १७ ॐ अमुकगोत्रेऽस्मत्पितृष्वसरमुकदेविएतत्ते० १८ ॐ अमुक० पितृष्वसुर्भर्तरमुकशर्मन् एतत्ते० १९ ॐ अमुकगोत्र अस्मन्मातुलामुकशर्मन् एतत्ते० २० ॐ अमुकगोत्रेऽस्मन्मातुलानि०एतत्ते० २१ ॐ अमुकगोत्रेऽस्मन्मातृष्वसरमुकदेवि एतत्ते०२२ ॐ अमुक० मातुः स्वसुर्भर्तरमुकशर्मन् एतत्ते० २३ ॐ अमुकगोत्र अस्मच्छ्वशुर अमुकशर्मन् वसुरूप एतत्ते० २४ ॐ अमुकगोत्रेऽस्मच्छ्वश्रोऽमुकदेविएतत्ते० २५ ॐ अमुक० आचार्यामुकशर्मन् वसुरूपएतत्ते० २६ ॐ अमुकगोत्रे आचार्यानि अमुकदेवि एतत्ते० २७ अमुक० उपाध्यायगुरोऽमुकशर्मन् वसुरूप एतत्ते० २८ ॐ अमुक० पुत्रामुकशर्मन् एतत्ते० २९ ॐ अमुकगोत्रेऽस्मत्स्नुषेऽमुकदेविएतत्ते पिंडंस्वधा० ३० ॐ अमुकगोत्रेऽस्मत्पुत्रि अमुकदेविएतत्ते० ३१ ॐ अमुक० जामातरमुकशर्मन् एतत्ते० ३२ अमुकगोत्रेऽस्मद्भगिनिअमुकदेविएतत्ते० ३३ ॐ अमुक० भाम अमुकशर्मन् एतत्ते० ३४ ॐ अमुक० भागिनेयामुकशर्मन् एतत्ते०३५ॐ अमुकगोत्रास्मत्पौत्रामुकशर्मन् एतत्ते० ३६ ॐ अमुक० दौहित्र अमुकशर्मन् एतत्ते० ३७ ॐ अमुकगोत्र शिष्यामुकशर्मन् एतत्ते० ३८ ॐ अमुक० श्यालकअमुकशर्मन्नेतत्ते० ३९ ॐ अमुकगोत्रास्मन्मित्रामुकशर्मन्नेतत्तेपिंडंस्वधा ४० एवंमित्रपत्नीप्रभृतीनांमृतानामपिपिंडान्दद्यात् ॥ ततः पिंडाधारकुशमूले ॐलेपभागभुजस्तृप्यन्तु इतिहस्तंप्रोञ्छ्यजलेनहस्तौप्रक्षा

लयेत् ॥ ततः सव्येन आचमनंविष्णुस्मरणंचकृत्वा अपसव्यादिना ॐ अत्रपितरोमादयध्वंयथाभागमावृषायध्वम् इतिपठित्वा वामावर्तेनोदङ्मुखोभूत्वाप्रीतमनाः मनाक्श्वासंनियम्य तेनैवयथापरावृत्य ॐअमीमदन्तपितरोयथाभागमावृषायिषतइतिजपेत् ॥ एवंमात्रादिपक्षेषुज्ञेयम् ततःप्रत्यवनेजनम् ॐअमुकगोत्रअस्मत्पितरमुकशर्मन् अत्रप्रत्यवनेनिक्ष्वतेस्वधा इतिप्रथमपिंडोपरिप्रत्यवनेजनंदत्त्वा एवमेवपितामहादिपिंडेषुप्रत्यवनेजनंक्रमेणपूर्ववद्द्यात्॥ ततोनीवीविस्रंसनम् ॥ ॐनमोवःपितरोरसायनमोवःपितरःशोषायनमोवःपितरोजीवायनमोवःपितरःस्वधायैनमोवःपितरोघोरायनमोवःपितरोमन्यवे नमोवःपितरःपितरोनमोवोगृहान्नःपितरोदत्तसतोवःपितरोदेष्म इति कृतांजलिः प्रार्थयेत् ॥ ततः ॐएतद्वःपितरोवासः ॥ ॐएतद्वोमातरोवासः ॥ ॐएतद्वोमातामहादयोवासः ॥ ॐएतद्वोमातामह्यादयोवासः ॥ ॐएतद्वःपितृव्यादयोवासः ॥ इतिप्रतिपिंडंसूत्रदानंकृत्वा ततःपिंडान् गंधपुष्पतुलसीधूपदीपतांबूलपूगीफलदक्षिणाभिः संपूज्य ॥ ॐऊर्जंवहन्तीरमृतंघृतंपयःकीलालंपरिस्रुतम् ॥ स्वधास्थतर्प्पयतमेपितॄन् ॥ इतिपिंडेष्वपोनिषिच्यदक्षिणांदद्यात् ॥ तत्रदक्षिणाद्रव्यंमोटकादीनिचादाय ॐअद्यामुकगोत्राणांममसमस्तपितॄणामसद्गतीनांस्वर्गतये सद्गतीनांचविष्णुलोकप्राप्तये अमुकतीर्थप्राप्तिनिमित्तकपित्रादीनां पितृव्यादीनांच कृतैतच्छ्राद्धप्रतिष्ठार्थम् इदं रजतं चंद्रदैवत्यममुकगोत्राय अमुकशर्मणे ब्राह्मणाय दक्षिणात्वेन दातुमहमुत्सृजे इतिसंकल्प्ययथाशक्तिरजतद्रव्यंब्राह्मणायदद्यात् ॥ ततः पिंडोद्धरणम् अवघ्राणंचकृत्वादक्षिणामुखः पिंडान्तीर्थजलएवनिक्षिपेत्॥ततोदेशकालौसंकीर्त्य ॐअमुकगोत्रोऽमुकशर्माहमद्यकृतैतदमुकतीर्थनिमित्तकास्मत्समस्तपित्रादीनांपितृव्यादीनांचश्राद्धकर्मणःसाङ्गतासिद्ध्यर्थं

ममुकसंख्याकान् ब्राह्मणान् भोजयिष्ये॥इतिसंकल्प्ययथाशक्तितीर्थब्राह्मणान् भोजयेत् ॥ततस्तेभ्योदक्षिणांदत्त्वाप्रणम्य ॐअमुकतीर्थप्राप्तिनिमित्तंपिंडदानंपरिपूर्णमस्तुइतिप्रार्थ्य ॥ ॐअस्तुपरिपूर्णमित्यनुज्ञातः ॥ ॐ देवताभ्यइतित्रिर्जपित्वा ॥ यस्यस्मृत्याचनामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयाति सद्योवंदेतमच्युतमिति कर्मपूर्तिकामोविष्णुंस्मरेत् ॥ इतिपिंडमात्रतीर्थश्राद्धपद्धतिः ॥ ॥ छ ॥

॥ अथगयाश्राद्धपद्धतिः ॥ तत्रतावत् गयायात्राप्रयोगः ॥ यात्रादिनात्प्राक् तृतीयादिनेएकभक्तहविष्यभोजनब्रह्मचर्यादिनियमांविधाय तदुत्तरदिनेप्रातः कृतस्नानादिनित्यक्रियः ॥ देशकालौसंकीर्त्य ॥ अद्यकरिष्यमाणगयायात्राङ्गतयोपवासंकरिष्ये ॥इतिसंकल्प्य उपवासंच कृत्वा तत्परदिनेचंद्रताराद्यनुकूलेश्राद्धनिषिद्धव्यतिरिक्तेकाले स्नानादिनित्यकर्मसमाप्यपूजोपकरणंसंपाद्य आसनेप्राङ्मुखउपविश्य आचम्य प्राणानायम्य देशकालौस्मृत्वा ॐअद्यकरिष्यमाणगयायात्रानिर्विघ्नपरिसमाप्त्यर्थं गणेशनवग्रहेष्टदेवतानांयथाशक्तिपूजनमहंकरिष्ये इतिसंकल्प्य ॐ सुमुखश्चैकदंतश्च इत्यादियथाविधिना गणेशनवग्रहान्स्वेष्टदेवतांचपूजयेत् ॥ ततः कुशत्रययवजलान्यादाय देशकालौसंकीर्त्य ॐ अद्यममसमस्तपितॄणांनिष्कृतिकामोगयातीर्थयात्राङ्गभूतम् आभ्युदयिकंश्राद्धंकरिष्ये इति संकल्प्य प्रभूतघृतान्नेनमातृपूजापूर्वकमाभ्युदयिकं नवदैवत्यंश्राद्धंविधायब्राह्मणान्हिरण्यादिभिः संतोष्य यात्रासंकल्पंकुर्यात् ॥ तद्यथा अद्येत्यादिदेशकालौस्मृत्वाममसमस्तपितॄणां सप्तसुगोत्रेषुचैकोत्तरशतपुरुषाणांदशपूर्वदशाऽपरस्ववंश्यानांचपदेपदेस्वर्गारोहणसिद्ध्येनरकोद्धारपूर्वकशाश्वतब्रह्मभावप्राप्तयेचगयाश्राद्धाधिकरणाय गयायात्रामहंकरिष्ये ॥ इतिसंकल्प्य ॥ काषायादिवस्त्रपरिधानरूपंकार्पटीवेषंविधायश्राद्धशेषंसघृतमन्नमादायज्योतिषोक्तयात्रासमयेग्रामान्निर्गत्यतंग्रामं प्रदक्षिणीकृत्यक्रोशाभ्यन्तरस्थं ग्रामांतरमासाद्यश्राद्ध

शेषघृतान्नेनपारणंकुर्यात् ॥ ततोद्वितीयदिने तमपि ग्रामं प्रदक्षिणीकृत्य प्रातः स्नानसंध्यादिनित्यकर्म्मसमाप्य प्रतिग्रहनिवृत्त्यादि नियमवान् तीर्थाभिमुखमामध्याह्नंगच्छेत् ॥ ततोमध्याह्नसमयेनद्यादिकमवगाह्यमाध्याह्निकसंध्यादिकंविधायपाकानुष्ठानपूर्व्वकंपंचमहायज्ञभोजनादिकंकृत्वासायंसंध्यामुपास्य तत्रैवतिष्ठेत् ॥ ततस्तृतीयदिनेऽपितथैवसर्व्वंकुर्यात् ॥ एवंप्रतिदिनमातीर्थप्राप्ति गच्छेत् मार्गेयदिप्रयागोवाराणसीपुनःपुनाशोणोवाप्राप्यते तदातत्रस्नानतर्पणे विधायपूर्वोक्ततीर्थश्राद्धवत् नवदैवत्यंश्राद्धंकुर्यात्॥ अथगयाप्राप्तिदिनकृत्यम् ॥ यदियानारूढः सोपानत्कोवागच्छेत् तदागयाप्राप्तिदिनेपादचारेण यावद्गंतुंशक्यते तावतः स्थानात् यानोपानहौपरित्यज्यगच्छेत् ॥ तीर्थेदृष्टिगोचरतांगते साष्टाङ्गंप्रणम्य शिरोऽवगुंठनशस्त्रमाल्यकंचुकादिकंपरित्यज्यतीर्थं गच्छेत् ॥ तत्रतावत् गयापूर्वतः फल्गुतीर्थेसंप्राप्ते उद्धृतोदकेनतीर्थदूरे पाणीपादौप्रक्षाल्याचम्य ॐ गयातीर्थायनमः ॥ इतिगंधपुष्पादिभिरभ्यर्च्य तत्रजलान्ततः पंचवालुकापिंडान्बहिर्निष्कास्यतीर्थजलंप्रणवेनालोड्यसचैलस्नानंकुर्यात् ॥ ततोजलाद्बहिरागत्यपवित्रेकुशांश्चधृत्वा आचम्य नारिकेलंससुवर्णंगृहीत्वा ॐदेवदेवजगन्नाथ शङ्खचक्रगदाधर ॥ देहिविष्णो अनुज्ञांमे तवतीर्थावगाहने ॥१॥ फल्गुतीर्थनमस्तुभ्यं सर्वतीर्थोत्तमोत्तम ॥ गृहाणेदंनारिकेलं सुवर्णेनसमन्वितम् ॥ २ ॥ इतितीर्थंनत्वासंस्पृश्य ब्राह्मणहस्तेदद्यात् ॥ ततः कुशत्रयतिलजलान्यादाय देशकालौ संकीर्त्य अद्यसमस्तपितॄणां विष्णुलोकावाप्तये आत्मनश्चभुक्तिमुक्तिप्राप्तयेफल्गुतीर्थेस्नानमहंकरिष्ये ॥ इतिसंकल्प्य ॥ ॐ फल्गुतीर्थे विष्णुजले करोमिस्नानमादृतः ॥ पितॄणांविष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये ॥ १ ॥ इति पठित्वा यथाविधि स्नात्वा धौते वाससीपरिधाय चंदनादिनातिलकंकृत्वा संध्यांकुर्यात् ॥ ततोदेशकालौस्मृत्वा ॐ अद्यसमस्तपितॄणामसद्गतीनांसद्गतिप्राप्तये सद्गतीनांचशाश्वतब्रह्मलो

कादिप्राप्तयेगयातीर्थप्राप्तिनिमित्तं नित्यंचदेवऋषिपितृतर्पणं तंत्रेणाहंकरिष्ये इतिवाक्यंकृत्वा ॥ पूर्वोक्तंकातीयतर्पणंकृत्वा स्नानवस्त्रंजला द्बहिःस्थलेनिष्पीड्य आचम्य ब्रह्मादीन्प्रणमेत् ॥ ततः श्रीमहाविष्णुंषोडशोपचारैः संपूज्य तत्रैव गयाप्राप्तिनिमित्तकंपूर्वोक्ततीर्थश्राद्धवत् द्वादशदैवत्यंनवदैवत्यंवापार्वणं तदसंभवेपिंडदानमात्रंवापूर्वोक्तरीत्यैव अर्घावाहनादिरहितं कुर्यात् ॥ इतिगयाप्राप्तिदिनकृत्यम् ॥ ॥ अथ द्वितीयदिनकृत्यम् ॥ तत्रादौफल्गुतीर्थेप्रातः स्नानादिकृत्वा गयावायव्यदिशिस्थितंप्रेतपर्व्वतं गत्वातन्मूलसंलग्ने ईशानकोणस्थिते ब्रह्मकुंडे ॐ पितॄणांसंभावितप्रेतत्वनाशपूर्व्वकशाश्वतब्रह्मलोकप्राप्तये स्नानमहंकरिष्ये इतिसंकल्प्य स्नानतर्पणंविधाय पूर्वोक्ततीर्थश्राद्धं नवदैवत्यं पिंडमात्रंवाकार्य्यम् ॥ ततःश्राद्धार्थंजलादिकमादाय प्रेतपर्वतमवरुह्यसुवर्णरेखाङ्कितशिलासन्निधौगत्वापादशौचादिविधाय उपविश्य तत्रशिलायां पंचगव्यैः श्राद्धपर्य्याप्तंस्थानं शोधयेत् ॥ ततः आचम्य अपसव्यंकृत्वा दक्षिणामुखोभूत्वा पितॄन्ध्यायन् ॐकव्यवाडोनलः सोमो यमश्चैवार्य्यमातथा ॥ अग्निष्वात्ताबर्हिषदः सोमपाः पितृदेवताः ॥ आगच्छंतुमहाभागा युष्माभीरक्षितास्त्विह ॥ मदीयाः पितरोयेच कुलेजाताः सनाभयः ॥ तेषांपिंडप्रदानाय आगतोऽस्मिगयामिमाम् ॥ तेसर्व्वेतृप्तिमायान्तु श्राद्धेनानेनशाश्वतीम्॥इति पठित्वा॥देशकालौ संकीर्त्य ॐअद्यपित्रादीनांपुनरावृत्तिरहितब्रह्मलोकप्राप्तिकामः प्रेतपर्वतश्राद्धमहंकरिष्ये ॥ इति संकल्प्यपूर्वोक्तंपार्वणं पिंडदानमात्रंवा कुर्यात् ॥ एवंपार्वणंविधाय तद्वेदीदक्षिणतःकुशानास्तीर्य ॐकव्यवाडोनलः सोम इत्यादि श्राद्धेनानेनशाश्वतीमित्यंतंप्रार्थ्य ॥ ॐपित्रादिभ्योनम इति पंचोपचारैः संपूज्य ॥ ॐआब्रह्मस्तंबपर्य्यंतं देवर्षिपितृमानवाः ॥ तृप्यंतुपितरःसर्व्वे मातृमातामहादयः ॥१॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ॥ आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥ २ ॥ इतिद्वाभ्यां कुशेषुतिलोदकंदत्त्वा ॐ पितापितामहश्चैव

१ अत्र यद्यपि मैथिलवाचस्पतिना प्रेतशिला (रामशिला) श्राद्धमुक्तं तथापि मूलभूतवायुपुराणोक्तक्रमोऽस्माभिरंगीकृत एवमेववङ्गदेशीयतारानाथैरपिस्वकृतगयाश्राद्धपद्धतावुक्तम्।

तथैवप्रपितामहः ॥ मातापितामहीचैव तथैवप्रपितामही ॥ मातामहस्तत्पिताच प्रमातामहकादयः॥ तेषांपिंडोमयादत्तो ह्यक्षय्यमुपतिष्ठतु॥ इत्युच्चार्य्य तिलघृतदधिमधुयुतमुष्टिमितसक्तुकृतंपिंडं मिलितेभ्योद्वादशभ्योदद्यात् ॥ ततः प्रेतत्वविमुक्तिकामनयायथास्मृतिबंधुवर्गादीनां पिंडदानंकुर्यात् ॥ ॥ अथषोडशीकर्म ॥ तद्यथा ॥ ऊनविंशतिदास्यमानपिंडस्थानानि निर्मायतेषुपंचगव्यं लिम्पाप्रत्येकं दक्षिणाग्रं कुशत्रयंदद्यात् ॥ ततः ॐ अस्मत्कुलेमृतायेच गतिर्येषांनविद्यते ॥ आवाहयिष्येतान्सर्व्वान्दर्भपृष्ठेतिलोदकैः ॥ १ ॥ मातामहकुलेयेच गतिर्येषांनविद्यते ॥ आवाहयिष्येतान्सर्व्वान्दर्भपृष्ठेतिलोदकैः ॥ २ ॥ बंधुवर्गकुलेयेच गतिर्येषांनविद्यते ॥ आवाहयिष्येतान्सर्व्वान् दर्भपृष्ठेतिलोदकैः ॥ ३ ॥ इतित्रिभिमंत्रैरावाह्य गंधादिभिरभ्यर्च्य पिंडान्दद्यात् ( तत्रमंत्रा )ॐ अस्मत्कुलेमृतायेच गतिर्येषांनविद्यते ॥ तेषामुद्धरणार्थाय इमंपिंडंददाम्यहम् ॥ १ ॥ मातामहकुलेयेच गतिर्येषांनविद्यते ॥ तेषामुद्धरणार्थाय इमंपिंडंददाम्यहम् ॥ २ ॥ बंधुवर्गकुलेयेच गतिर्येषांनविद्यते ॥ तेषामुद्धरणार्थाय इमंपिंडंददाम्यहम् ॥ ३ ॥ अजातदन्तायेकेचिद्येचगर्भेप्रपीडिताः ॥ तेषामुद्धरणार्थाय इमंपिंडंददाम्यहम् ॥ ४ ॥ अग्निदग्धाश्चयेकेचिन्नाग्निदग्धास्तथापरे ॥ विद्युच्चौरहतायेच तेभ्यः पिंडंददाम्यहम् ॥ ५ ॥ दावदाहेमृतायेच सिंहव्याघ्रहताश्चये ॥ दंष्ट्रिभिः शृङ्गिभिर्वापि तेभ्यःपिंडंददाम्यहम् ॥ ६ ॥ उद्बंधनमृतायेच विषशस्त्रहताश्चये ॥ आत्मापघातिनोयेच तेभ्यःपिंडंददाम्यहम् ॥ ७ ॥ अरण्यवर्त्मनिवने क्षुधयातृष्णयाहताः ॥ भूतप्रेतपिशाचाद्यैस्तेभ्यःपिंडंददाम्यहम् ॥ ८ ॥ रौरवेचांधतामिस्रे कालसूत्रेचयेगताः ॥ तेषामुद्धरणार्थाय इमंपिंडंददाम्यहम् ॥ ९ ॥ असिपत्रवनेघोरे कुंभीपाकेचयेगताः ॥ तेषामुद्धरणार्थाय इमंपिंडंददाम्यहम् ॥ १० ॥ पशुयोनिगतायेच पक्षिकीटसरीसृपाः ॥ अथवावृक्षयोनिस्थास्तेभ्यःपिंडंददाम्यहम् ॥११॥ अनेकयातनासंस्थाः प्रेतलो

केचयेगताः ॥ तेषामुद्धरणार्थाय इमंपिंडंददाम्यहम् ॥ १२ ॥ नरकेषुसमस्तेषु यातनासुचयेस्थिताः ॥ तेषामुद्धरणार्थाय इमंपिंडंददाम्यहम् ॥ १३ ॥ जात्यन्तरसहस्रेषु भ्रमन्तःस्वेनकर्मणा ॥ मानुष्यंदुर्लभंयेषां तेषांपिंडंददाम्यहम् ॥ १४ ॥ दिव्यन्तरिक्षभूयिष्ठाः पितरोबांधवादयः ॥ मृताअसंस्कृतायेच तेभ्यःपिंडंददाम्यहम् ॥ १५ ॥ येकेचित्प्रेतरूपेण वर्ततेपितरोमम ॥ तेसर्व्वेतृप्तिमायन्तु पिंडेनानेनसर्व्वदा ॥ येऽबांधवाबांधवावा येऽन्यजन्मनिबांधवाः ॥ तेषांपिंडोमयादत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ १६ ॥ पितृवंशेमृतायेच मातृवंशेतथैवच ॥ गुरुश्वशुरबंधूनां येचान्येऽबांधवामृताः ॥ येमेकुलेलुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैव जात्यंधाःपङ्गवस्तथा ॥ विरूपाआमगर्भाश्च ज्ञाताज्ञाताःकुलेमम ॥ तेषांपिंडोमयादत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ १७ ॥ आब्रह्मणोयेपितृवंशजाता मातुस्तथावंशभवामदीयाः ॥ वंशद्वयेस्मिन्ममदासभूता भृत्यास्तथैवाश्रितसेवकाश्च ॥ १८ ॥ मित्राणिसर्व्वेपशवश्ववृक्षाः स्पृष्टाश्चदृष्टाश्चकृतोपकाराः ॥ जन्मान्तरेयेममसंगताश्च तेभ्यःस्वधापिंडमहंददामि ॥ १९ ॥ इति ऊनविंशतिमंत्रैरूनविंशतिपिंडान्पुरुषेभ्योदत्त्वा तैरेवमंत्रैः स्त्रीलिंगतयासमूहितैश्चस्त्रीभ्योदद्यादिति ॥ तद्यथा ॥ अस्मत्कुलेमृतायाश्च गतिर्यासांनविद्यते ॥ तासामुद्धरणार्थाय इमंपिंडंददाम्यहम् इत्यादि ॥ ये इत्यत्र या इतिविशेषः ॥ येषामित्यत्रयासामिति ॥ तेभ्य इत्यत्रताभ्यः ॥ घातिन इत्यत्रघातिन्यः इतिविशेषः ॥ अन्यत्सर्वंपुंषोडशीवत् ॥ अथमातृषोडशीलिख्यते ॥ ॐआगर्भज्ञानपर्यंतं पालितोयत्त्वयाह्यहम् ॥ आवाहयामितामातृर्दर्भपृष्ठे तिलोदकैः ॥ इतिप्रार्थ्य ॥ गर्भोद्गमनेदुःखं विषमेभूमिमर्त्मनि ॥ तस्यानिष्क्रमणार्थाय मातृपिंडंददाम्यहम् ॥ १ ॥ मासिमासिकृतंकष्टं वेदनाप्रसवेषुच ॥ तस्य निष्क्रमणार्थाय मातृपिंडंददाम्यहम् ॥ २ ॥ संपूर्णेदशमेमासि चात्यन्तंमातृपीडनम् ॥ तस्य० ॥ ३ ॥ पश्चांप्रजायतेपुत्रो जनन्याः परिवेदनम् ॥

तस्य०॥४॥शैथिल्येप्रसवेप्राप्ते माताविंदतिदुष्कृतम् ॥ तस्य०॥५॥ पिबेच्चकटुद्रव्याणि क्वाथानिविविधानिच॥तस्य०॥६॥ अग्निनाशोषये देहं त्रिरात्रोपोषणेनच॥तस्य०॥७॥रात्रौमूत्रपुरीषाभ्यां भिद्यन्ते मातृकर्पटाः॥तस्य०॥८॥दिवारात्रौयदामाता तदाऽतिनिर्भरस्तनम्॥तस्य० ॥९॥माघेमासिनिदाघेच शिशिरेऽत्यन्तदुःखिता॥तस्य० ॥१०॥ क्षुधयाविह्वलंपुत्रं ह्यन्नंमाताप्रयच्छति ॥ तस्य० ॥११॥ पुत्रोव्याधिसमायुक्तो माताहाक्रन्दकारिणी ॥ तस्य०॥ १२ ॥यमद्वारेमहाघोरे पथिमाताचशोचति ॥ तस्य० ॥ १३ ॥ पिंडैःषोडशभिर्विद्वान्यः पुत्रःश्राद्धमाचरेत् ॥ तस्य०॥ १४ ॥ अल्पाहारस्यकरणी यावत्पुत्रश्चबालकः ॥ तस्य०॥१५॥गात्रभङ्गाभवेन्माता मृत्युरेवनसंशयः ॥ तस्यनिष्क्रमणार्थाय मातृपिंडंददाम्यहम् ॥ १६ ॥ इतिषोडशपिंडान्मात्रेदद्यात् ॥ यस्याःपुत्रोगयांगत्वा श्राद्धंकुर्यात्स्वभक्तितः ॥ तस्यपुत्रस्यपौत्रस्य माताचाशीःप्रयच्छति ॥ इतिमातृषोडशीसमाप्ता ॥ पुत्रकामश्चेत्तदा ॐ:योमेप्रजांनाशयति जीवोनश्यतिवास्वयम् ॥ तस्यकाश्यपगोत्रस्य वायुरूपस्यदेहिनः ॥ प्रेतस्योद्धारविषये तस्मै पिंडंददाम्यहम् ॥ १ ॥ योमेप्रजांनाशयति जीवोनश्यतिवास्वयम् ॥ तस्यप्रेतस्यदत्तोत्र पिंडोऽयमुपतिष्ठताम् ॥ २ ॥ योमेप्रजांनाशयति जीवोनश्यतिवास्वयम् ॥ विष्णुरूपःसलभतां यस्मैपिंडार्पणाहुतिः ॥ ३ ॥ ॐ तस्यकाश्यपगोत्रस्य वसुरूपस्यदेहिनः ॥ अयंपिंडोमयादत्तो यःपीडांकुरुतेमम ॥ ४ ॥ ॐ इमंतिलमयंपिंडं मधुसर्पिःसमन्वितम् ॥ ददामितस्मैप्रेताय यःपीडांकुरुतेमम ॥ ५ ॥ इति मंत्रैश्चतुरः पिंडान्दद्यात् ॥ ततः सर्वेषुपिंडेषु तिलजलपूर्णपात्रेणप्रदक्षिणंवारत्रयं परिषेचनंकृत्वा ॐ येचवोयेचास्मांश्वासन्याश्चवोयाश्चास्मांश्चास्मांश्चासंस्ते चावाहंतां ताश्चावाहतांतृप्यन्तुभवंतस्तृप्यंतु भवन्त्यस्तृप्यतगोत्रान्पुत्रानभितर्पयन्तीरापोमधुमतीरिमाः स्वधापितृभ्योमातृभ्योऽ

अमृतंदुहाना आपोदेवीरमयास्तपर्यंतुतृप्यततृप्यत इति प्रणिपत्य ॐ पित्रादयः क्षमध्वम् इति क्षमाप्य विसृजेत् ॥ ततः सव्येनाचम्य ॐ साक्षिणःसंतुमेदेवा ब्रह्मेशानादयस्तथा ॥ मयागयांसमासाद्य पितॄणांनिष्कृतिःकृता ॥ आगतोस्मिगयांदेव पितृकार्येगदाधर ॥ त्वमेव साक्षीभगवन्ननृणोऽहमृणत्रयात् ॥ इति साक्षितया ब्रह्मादीन्कल्पयित्वाश्रावयेत् ॥ एवं प्रेतपर्वतेश्राद्धंपिंडदानमात्रंकृत्वा ॐ अद्यपित्रादीनांप्रेतत्वविमुक्तिस्वगतप्रेतत्वाभावकामः प्रेतपर्वते तिलमिश्रसक्तुनिक्षेपं तिलमिश्रजलांजलिदानंचकरिष्ये इतिसंकल्प्य ॐ येकेचित्प्रेतरूपेण वर्त्ततेपितरोमम ॥ तेसर्वेतृप्तिमायांतु सक्तुभिस्तिलमिश्रितैः ॥ इतिदक्षिणामुखः तिलमिश्रसक्तून् क्षिप्त्वा ॐ आब्रह्मस्तंबपर्यंतं यत्किंचित्सचराचरम् ॥ मयादत्तेनतोयेन तृप्तिमायांतुसर्वशः ॥ इतिमंत्रेण तिलसंयुतजलांजलीन्दद्यात् ॥ ततोयथाशक्ति ब्राह्मणायदक्षिणांदद्यात् ॥ इतिप्रेतपर्वतकृत्यम् ॥ ततः प्रेतपर्वतादवरुह्यमहानदीपश्चिमतीरस्थां गयोत्तरस्थांप्रेतशिलांगत्वापादशौचादिकृत्वा ॐ अद्यसमस्तपितृणांप्रेतत्वविमुक्तिकामः प्रेतशिलायांश्राद्धमहंकरिष्य इतिसंकल्प्य पूर्वोक्तंपार्वणं पिंडदानमात्रं वा श्राद्धंकुर्यात् ॥ ततः प्रेतशिलायांपंचगव्यशोधितायामुपविश्य अपसव्येनदक्षिणाभिमुखोभूत्वा ॐ कव्यवाडनलः सोमो यमश्चैवार्य्यमातथा ॥ अग्निष्वात्ता बर्हिषदः सोमपाःपितृदेवताः ॥ आगच्छंतुमहाभागा युष्माभीरक्षितास्त्विह ॥ मदीयाःपितरोयेद्य कुलेजाताःसनाभयः ॥ तेषांपिंडप्रदानार्थमागतोऽस्मिगयामिमाम् ॥ तेसर्वेतृप्तिमायांतु श्राद्धेनानेनशाश्वतीम् ॥ इतिपठित्वा प्रेतपर्वतप्रकरणदर्शितेनप्रयोगेण साक्षिश्रवणान्तं कृत्वा प्रेतशिलायांसमाचारादेवनवभांडस्फोटनं कुर्य्यात् ॥ अथप्रेतशिलाधः प्रभासाद्रिसङ्गतायांमहानद्यां रामतीर्थत्वेनप्रसिद्धेरामह्रदे प्रभासह्रदे देशकालादिकीर्त्तनांते ॐ जन्मान्तरकृतदुष्कृतविनाशकामो रामतीर्थे स्नानमहंकरिष्ये इतिसंकल्प्य ॐ जन्मान्तर

शतं साग्रं यन्मयादुष्कृतं कृतम् ॥ तत्सर्व्वंविलयंयातु रामतीर्थाभिषेचनादिति मंत्रेणस्नानंविधाय पितॄन्संतर्पयेत् ॥ ततोदेशकालौ संकीर्त्य ॐ स्वस्यविष्णुलोकप्राप्तिकामः पितॄणांचप्रेतत्वविमुक्तिपूर्व्वकपितृपदप्राप्तिकामो रामतीर्थे श्राद्धं पिंडदानमात्रंवाहंकरिष्ये इतिसंकल्प्यपूर्वोक्तं पार्वणं पिंडदानमात्रंवाश्राद्धंकुर्यात् ॥ ततः कव्यवाडनल इत्याद्यावाहनादिसाक्षिश्रवणान्तं कृत्वा ततः स्वगतपापनाशकामः ॐ रामराममहाबाहो देवानामभयंकर ॥ त्वांनमाम्यत्रदेवेश ममनश्यतुपातकम् ॥ इतिमंत्रेणरामंनत्वा ॐ अद्यभासमानस्वकर्तृकशिवपुरगमनकामः प्रभासेशनमस्कारमहंकरिष्ये इतिवाक्यंकृत्वाप्रभासेशंप्रणमेत् ॥ ततः मानसवाचिककायिककर्म्मजपापनाशकामः ॐ आपस्त्वमसिदेवेश ज्योतिषांपतिरेवच ॥ पापंनाशयदेवेश मनोवाक्कायकर्म्मजम् ॥ इतिमंत्रेण रामंप्रभासेशंचयुगपन्नत्वा तत्र ॐ यमराजधर्मराजौ निश्चलार्थंहिसंस्थितौ ॥ ताभ्यांबलिंप्रयच्छामि पितॄणांमुक्तिमुक्तये ॥ इतिमंत्रान्ते ॥ ॐ यमराजधर्म्मराजाभ्यामेषतिलजलमिश्रितो बलिर्नमम इत्युक्त्वाभक्तादिरूपंबलिंदद्यात् ॥ ततः प्रभासपर्वतदक्षिणदिगवस्थितप्रेतशिलाजघनस्थलगतनगनाम्निपर्वते ॐ द्वौश्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ ॥ ताभ्यांबलिंप्रयच्छामि रक्षेतांपथिसर्व्वदा इति ॥ ॐ एषबलिर्यमराजधर्म्मराजानुचराभ्यांश्वभ्यांनममइतिश्वबलिंदद्यात्॥इदंचबलिदानंनित्यंकार्यम् । अकरणेऽनिष्टश्रवणात्॥ इतिद्वितीयदिनकृत्यम्॥ अथतृतीयदिनेपंचतीर्थीकृत्यमुच्यते ॥ ततोगयाप्राप्तितृतीयदिने फल्गुतीर्थेप्रातःस्नानादिदेवार्चनान्तंकर्म्मकृत्वाउत्तरमानसं गत्वादर्भपाणिस्तीर्थोदकेनाचम्यशिरस्यभ्युक्ष्य ॐ आत्मशुद्धिसूर्य्यलोकादिप्राप्तिपितृमुक्तिकाम उत्तरमानसेस्नानंकरिष्येइतिसंकल्प्यस्नानीयमंत्रान्पठित्वा ॐ उत्तरेमानसेस्नानं करोम्यात्मविशुद्धये ॥ सूर्य्यलोकादिसंसिद्धिसिद्धयेपितृमुक्तये ॥ १ ॥ इतिमंत्रेणस्नायात् ॥ ततस्तर्पणंकु

त्वातर्पणांते ॥ आब्रह्मस्तंबपर्य्यंतं देवर्षिपितृमानवाः॥ तृप्यन्तुपितरःसर्व्वे मातृमातामहादयः॥अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ॥
आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकम् ॥ इत्यनेनैकोऽञ्जलिर्देयः ॥ ततः ॐ पितृणामक्षय्यतृप्तिकामउत्तरमानसेश्राद्धंपिंडदानमात्रंवाक
रिष्ये इतिसंकल्प्यपूर्वोक्तंश्राद्धंकृत्वा तद्दक्षिणदिशिउपविश्यसमूलान् दक्षिणाग्रान्कुशानास्तीर्य्य ॐ कव्यवाडनलइत्यादिनावाहनादिसा
क्षिश्रवणांतंकृत्वाॐ पितृणांसूर्य्यलोकनयनकाम उत्तरार्कस्यपूजनंप्रणामंचकरिष्ये इतिसंकल्प्य ॐ नमोभगवतेभर्त्रे सोमभौमज्ञरूपिणे ॥
जीवभार्गवसौरेयराहुकेतुस्वरूपिणे ॥ इतिमंत्रेण उत्तरार्कस्यनतिपूजनेकुर्यात ॥ ततोमौनेनदक्षिणमानसंगत्वातत्रोदीच्याम् ॐ
आत्मविशुद्धिसूर्य्यलोकादिप्राप्तिब्रह्महत्यादिपापसमूहनाशकामः पितृमुक्तिकामश्च उदीचीतीर्थेस्नानमहंकरिष्ये इतिसंकल्प्य ॐ
ब्रह्महत्यादिपापौघयातनायाविमुक्तये ॥ दिवाकरकरोमीह स्नानंदक्षिणमानसे ॥ नमामिसूर्य्यंतृप्त्यर्थं पितृणांतारणायच ॥ पुत्रपौत्र
धनैश्वर्य्यायायुरारोग्यवृद्धये ॥ इतिमंत्रेणदक्षिणमानसेस्नात्वा पितन्संतर्प्य ॐ पितृमुक्तिकाम उदीचीतीर्थेश्राद्धमहंकरिष्ये इतिसंकल्प्य
पार्वणं पिंडदानमात्रंवाश्राद्धंकृत्वा ॐ कव्यवाडनलइत्यादिसाक्षिश्रवणांतंकुर्यात् ॥ ततोमध्यमंकनखलतीर्थंगत्वातत्रापि ॐ अद्यपितृ
विमुक्तिकामः कनखलतीर्थेस्नानमहंकरिष्ये इतिसंकल्प्य स्नानतर्पणे कृत्वापितृमुक्तिकामनयातत्रश्राद्धंपिंडमात्रंकुर्य्यात् ॥ ततोदक्षिण
मानसे ॐ अद्यपितृमुक्तिकामोदक्षिणमानसेस्नानमहंकरिष्ये इतिसंकल्प्यस्नानीयमंत्रांते ॐ दाक्षिणेमानसेस्नानं करोम्यात्मविशुद्धये ॥
सूर्य्यलोकादिसंसिद्धिसिद्ध्येपितृमुक्तये इतिमंत्रेणस्नात्वापूर्ववत्तर्पणंश्राद्धंचकृत्वापितृमुक्त्यादिकामनया ॐ नमामिसूर्य्यंतृप्त्यर्थं
पितृणांतारणायच ॥ पुत्रपौत्रधनैश्वर्य्यायायुरारोग्यवृद्धये ॥ इतिमंत्रेणमौनेनदक्षिणार्कस्यनतिःपूजनंचकार्यम् ॥ [ मौनेनपूजनीयत्वादयमे

यमौनार्कः ] ततः कव्यवाडनल इत्यादिश्लोकद्वयंदक्षिणमानसाग्रएवपठेत् ॥ ततोगदाधरपूर्व्वदेशेसर्व्वतीर्थोत्तमंफल्गुतीर्थंगत्वा ॐ पितॄणांविष्णुलोकप्राप्तये आत्मनश्चभुक्तिमुक्तिसिद्ध्येफल्गुतीर्थेस्नानमहंकरिष्ये इतिसंकल्प्य ॥ फल्गुतीर्थेविष्णुजले करोमिस्नानमाहतः ॥ पितॄणांविष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये ॥ इतिमंत्रेणस्नात्वातर्प्पणंकुर्य्यात् ॥ ततः ॐपितॄणांमोक्षप्राप्तिकामःफल्ग्वांश्राद्धमहंकरिष्येइतिसंकल्प्यपूर्व्ववदेवश्राद्धंपिंडदानमात्रंवाकुर्य्यात् ॥ ततोमधुस्रवादक्षिणकूलस्थंपितामहम् ॐनमःशिवायदेवाय ईशानपुरुषायच ॥ अघोरवामदेवाय सद्योजातायशंभवे ॥ इतिमंत्रेणप्रणमेत्पूजयेच्च ॥ ततःपुनःफल्गुतीर्थमागत्य ॐअद्यपित्रादिसहितात्मवैष्णवपदनयनकामोगदाधरपूजाङ्गतयापुनःफल्गुतीर्थेस्नानंगदाधरदर्शनंचकरिष्ये इतिसंकल्प्य यथाविधिस्नानतर्पणंकृत्वागदाधरदर्शनंचविधेयम् ॥ [ गदाधरस्यप्रतिमारूपस्तदधिकरणीभूतोमुंडपृष्ठाद्रिरूपश्चेति ] ततोदर्शनानंतरंपंचामृतैःस्नपनम् ॐनमोवासुदेवाय नमःसंकर्षणायच ॥ प्रद्युम्नायानिरुद्धाय श्रीधरायचविष्णवे॥ इतिपठित्वागंधपुष्पवस्त्राद्यलंकारादिभिर्यथाशक्तिपूजनंचकृत्वाप्रणमेत् ॥ ततःउत्तरमानसंगत्वापंचतीर्थ्यांस्नानंकृत्वायथाविधितर्पणंकुर्यात् ॥ [ इदंचगदाधरपूजनंनित्यमकरणेगयाश्राद्धानर्थक्यश्रवणात् ] इतितृतीयदिनेपंचतीर्थीकृत्यम् ॥ अथचतुर्थदिनकृत्यम् ॥ तत्रफल्ग्वांस्नानादिप्रातःकृत्यंकृत्वाधर्म्मारण्यंगत्वा ॐसर्व्वपापविशुद्धिकामोमतङ्गवाप्यांस्नानमहंकरिष्येइतिसंकल्प्यस्नानतर्पणंकृत्वा ॐ अद्याक्षय्यतृप्तिकामोमतङ्गवाप्यांश्राद्धमहंकरिष्येइतिसंकल्प्यप्रेतपर्व्वतत्पार्वणंपिंडमात्रंवाश्राद्धंकुर्यात् ॥

१ ॐपितापितामहश्चैव तथैवप्रपितामहः । माता पितामही चैव तथैव प्रपितामही । मातामहस्तत्पिता च प्रमातामहकादयः । तेषांपिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठतु । इत्येकं पिंडं सर्वत्र दद्यात् ।

ततोमतङ्गवाप्यामेव उत्तरदिग्वस्थितंमतङ्गेशंदृष्ट्वा प्रणम्य ॐ प्रमाणंदेवताः संतु लोकपालाश्चसाक्षिणः ॥ मयागत्यमतङ्गेऽस्मिन्पितॄणांनिष्कृतिः कृता ॥ इति पठित्वा ततो ब्रह्मतीर्थसंज्ञकंब्रह्मकूपंगत्वापित्राद्युद्धारकामनया स्नानतर्पणश्राद्धानिपूर्ववत्कार्य्याणि ॥ कूपश्चायमेतद्वाप्या आग्नेयकोणेक्षेत्रमध्येरहःकूपोऽस्ति तत्तीरे श्राद्धंपिंडदानंवापतितस्यापिकिंतु गर्भहंतृगुरुगतिनिर्देशात् ॥ ततोब्रह्मकूपयूपयोर्मध्येपितृतारणकामनयाप्रेतपर्व्वतवच्छ्राद्धंकार्य्यम् ॥ ततो धर्म्मस्यधर्म्मेश्वरस्यचप्रणामः ॥ ततोमहाबोधितरोरधः स्वस्यस्वर्गलोकप्राप्तिकामनयाप्रेतपर्व्वतवच्छ्राद्धं पिंडदानमात्रंवाकृत्वा ॐचलद्दलायवृक्षाय सर्व्वदास्थितिहेतवे ॥ बोधितत्त्वाययज्ञाय अश्वत्थायनमोनमः॥ ॥ १ ॥ एकादशोऽसिरुद्राणां वसूनांपावकस्तथा ॥ नारायणोऽसिदेवानां वृक्षराजोऽसिपिप्पल ॥२॥ अश्वत्थयस्मात्त्वयिवृक्षराज नारायणस्तिष्ठतिसर्व्वकालम् ॥ अतःशुभस्त्वंसततंतरूणां धन्योऽसिदुःस्वप्नविनाशनोऽसि ॥ ३ ॥ अश्वत्थरूपिणंदेवं शंखचक्रगदाधरम् ॥ नमामिपुंडरीकाक्षं वृक्षरूपवरंहरिम् ॥ ४ ॥ बोधिरूपंमहावृक्षं नारायणमनःप्रियम् ॥ गयांसमागत्यमया पितृभ्योनिष्कृतिंकुरु ॥ ५ ॥ येऽस्मत्कुलेमातृवंशे बांधवादुर्गतिंगताः ॥ त्वद्दर्शनात्स्पर्शनाच्च स्वर्गतिंयांतुतेऽक्षयाम् ॥ ६ ॥ ऋणत्रयंमयादत्तं गयामागत्यवृक्षराट् ॥ त्वत्प्रसादान्महापापाद्विमुक्तोऽहंभवार्णवात् ॥ ७ ॥ इतिमंत्रैर्विष्णुंप्रणमेत् ॥ इतिचतुर्थदिनकृत्यम् ॥ अथपंचमदिनकृत्यम् ॥ तत्रफल्ग्वांप्रातःस्नानादिनित्यंकर्म्मकृत्वा ब्रह्मसरो गत्वा ॐ ऋणत्रयविमुक्तिकामः करिष्यमाणतर्पणश्राद्धपिंडदानोपयोग्यात्मशुद्धिकामश्चब्रह्मसरसिस्नानमहंकरिष्ये इतिसंकल्प्य ॐ स्नानंकरोमितीर्थेऽस्मिन्नृणत्रयविमुक्तये ॥ श्राद्धायपिंडदानाय तर्पणायात्मशुद्धये ॥ इतिमंत्रेणस्नानंकृत्वा तर्पणंकार्य्यम् ॥ ततः ॐ पितॄणांब्रह्मलोकनयनकामनया ब्रह्मकूपयूपयोर्मध्येश्राद्धमहंकरिष्ये इतिसंकल्प्य पार्वणंपिंडदानमात्रंवाश्राद्धं

कृत्वाऽक्षय्यपिंडंदत्त्वा ॐ पितॄणांमोक्षप्राप्तिकामो ब्रह्मकल्पिताम्रवृक्षसेचनंकरिष्ये इतिसंकल्प्य ॐ आम्रं ब्रह्मसरोभूतं सर्व्वदेवमयंतरुम् ॥ विष्णुरूपंप्रसिंचामि पितॄणांचविमुक्तये ॥ इतिमंत्रेण कुशयुतेन ब्रह्मसरोजलेन गोप्रचारसमीपस्थान्ब्रह्मकल्पितानाम्रान्सिंचेत् ॥ ततः ॐ वाजपेयजन्यफलप्राप्तिकामनया ब्रह्मयूपप्रदक्षिणांकरिष्ये इतिसंल्प्य तत्प्रदक्षिणांकुर्यात् ॥ ततः ॐ अद्यपितॄणां ब्रह्मपुरनयनकामो ब्रह्मनमस्कारमहंकरिष्ये इतिसंकल्प्य ॐनमोब्रह्मणेऽजाय जगज्जन्मादिकारिणे॥भक्तानांचपितॄणांच तारणायनमोनमः॥इतिब्रह्मसरोवायव्य कोणस्थं ब्रह्माणंप्रणमेत्॥ततः पितृमुक्तये यमबलिदानंकरिष्ये इतिसंकल्प्य ॐ यमराजधर्म्मराजौ निश्चलार्थंस्थिरीकृतौ ॥ ताभ्यांबलिंप्रयच्छामि पितॄणांमुक्तिहेतवे॥इति पठित्वा एषबलिर्यमराजधर्म्मराजाभ्यांनमः॥इतिमंत्रेणसव्येनाऽपसव्येनवादर्भोदकसहितभक्तादिनाबलिंदद्यात् ॥ ततः द्वौश्वानौश्यामशबलौ वैवस्वतकुलोद्भवौ ॥ ताभ्यांबलिंप्रयच्छामि स्यातामेतावहिंसकौ ॥ इतिपठित्वा एषबलिः श्वभ्यांनमः इतिश्वभ्यां बलिंदत्त्वा ॐ ऐंद्रवारुणवायव्या याम्यावैनैर्ऋतास्तथा ॥ वायसाःप्रतिगृह्णंतु भूमौपिंडमयोज्झितम् ॥ इतिमंत्रेण काकेभ्यो बलिदानं कार्य्यम् ॥ काकबल्यनन्तरं स्नानं कर्त्तव्यमितिपंचमदिनकृत्यम् ॥ अथषष्ठदिनकर्म्म ॥ तत्र ॐ दशलक्षाश्वमेधजन्यफलकामः फल्गुतीर्थे स्नानमहंकरिष्ये इतिसंकल्प्य ॐ फल्गुतीर्थे इत्यादिमंत्रेणस्नात्वा तर्पणंकृत्वा पदेषुश्राद्धानिकुर्य्यात्। तत्रयद्यपिब्रह्मविष्णुरुद्रकश्यपपदानामन्यतमपदे आरंभसमाप्ती कार्य्ये मध्येषुत्वनियम एव तथापि वायुपुराणान्तर्गतगयामाहात्म्यपाठक्रममनुसृत्यक्रमेणश्राद्धान्युच्यंते ॥ तत्रादौविष्णुपदसमीपंगत्वा ॐ आत्मनः सर्व्वपापनाशकामो विष्णुपददर्शनंकरिष्ये इतिसंकल्प्य ॥ अत्रविष्णुपदंदिव्यं दर्शनात्पापनाशनम् ॥ स्पर्शनात्पूजनाच्चैव पितॄणांमुक्तिहेतवे ॥ इतिमंत्रेणविष्णुपद

स्यदर्शनंकृत्वा ॐ पितृविमुक्तिकामो विष्णुपूजनंकरिष्ये इतिसंकल्प्य विष्णुं पंचोपचारैः पूजयेत् ॥ ततः आत्मसहितसहस्रकु
लोद्धारपूर्व्वकविष्णुलोकनयनकामोविष्णुपदेश्राद्धंकरिष्ये इतिसंकल्प्य पार्वणं पिंडदानमात्रंवाश्राद्धंकृत्वा कव्यवाडनल इत्यावाह
नादिसाक्षिश्रवणांतंकुर्यात् ॥ १ ॥ ततोरुद्रपदे ॐआत्मसहितकुलशतस्य शिवपुरनयनकामोरुद्रपदेश्राद्धंकरिष्ये इतिसंकल्प्यपूर्ववद्रुद्र
श्राद्धंकुर्य्यात् ॥ २ ॥ एवं ब्रह्मपदे कुलशतसमुद्धारपूर्व्वकब्रह्मलोकनयनकामो० ॥ ३ ॥ दक्षिणाग्निपदे स्वस्यवाजपेययागफलसमफल
प्राप्तिकाम० ॥ ४ ॥ गार्हपत्यपदे स्वस्यअश्वमेधयज्ञसमफलप्राप्ति० ॥ ५ ॥ आहवनीयपदेस्वस्यराजसूययज्ञफल० ॥ ६ ॥ सभ्याग्निपदे
स्वस्यज्योतिष्टोमयज्ञसमफल० ॥ ७ ॥ आवसथ्याग्निपदेस्वस्य सोमलोकप्राप्ति० ॥ ८ ॥ सूर्य्यपदेपंचशतकुलानां सूर्य्यपुरनयनकाम०॥
॥ ९ ॥ कार्त्तिकेयपदेपितॄणांशिवलोकनयन० ॥ १० ॥ इंद्रपदे पितॄणामिंद्रलोकप्राप्ति० ॥११॥ अगस्त्यपदे पितॄणां ब्रह्मलोकनयन० ॥
॥ १२ ॥ चंद्रगणेशक्रौंचमातंगपदेषु पितॄणां ब्रह्मपुरनयन० ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ कश्यपपदे पितॄणां ब्रह्मपुरनयनकामः कश्य
पपदेश्राद्धंकरिष्ये ॥ १७ ॥ इति संकल्प्य सप्तदशसुपदेषु तत्तत्फलोद्देशेनश्राद्धानिकार्य्याणि तत्तद्देवतानांपूजाचकार्य्या ॥ ततःपदशि
लायामेवोत्तरभागस्थायां गजकर्णिकायां पितॄणां स्वर्गनयनकामनया शुद्धोदकेनपितृतर्पणं पूर्व्वोक्तविधानेनकार्य्यम् ॥ ततः पितॄणांता
रणार्थं पदशिलोत्तरभागस्थमार्गसमीपस्थानां कनकेश्वरकेदारेश्वरनारसिंहवामनानांपंचोपचारैः पूजाकार्य्या ॥ संन्यासिभिस्तुगयां
गत्वाविष्णुपदेदंडस्पर्शनमात्रंकार्य्यम् ॥ इतिषष्ठदिनकर्म्म ॥ अथसप्तमदिनकृत्यम् ॥ तत्रफल्गुतीर्थे स्नानानि प्रातःकृत्यंनिर्वर्त्य गदा
लोलंतीर्थंगत्वा ॐआत्मनः शुद्धये अक्षय्यस्वर्गप्राप्तयेचगदालोलेस्नानमहंकरिष्य इति संकल्प्य ॥ गदालोलमितिख्यातं सर्व्वेषामुत्तमोत्त

मम् ॥ गदालोले महातीर्थे गदाप्रक्षालनाद्धरेः ॥ स्नानंकरोमितीर्थेऽस्मिन्नक्षय्यंपदमाप्नुयाम् ॥ इतिपठित्वास्नानतर्पणंकृत्वा ॐपितॄणां तृप्ति ब्रह्मलोकावाप्तिकामो गदालोलेश्राद्धमहंकरिष्ये इतिसंकल्प्य पूर्ववत् श्राद्धं पिंडदानमात्रंवाकुर्य्यात् ॥ ततोऽक्षयवटेगत्वा तन्मूलसान्नि हिते आचारादुत्तरदिग्भागे ॐपि णां ब्रह्मलोकप्राप्तिकामोऽक्षयवटच्छायायां श्राद्धंकरिष्ये इति संकल्प्य अन्नेनैवपूर्व्ववच्छ्राद्धं कृत्वा ॐपितॄणां ब्रह्मलोकनयनकामोऽक्षयतृप्तिकामश्च ब्रह्मकल्पितान्ब्राह्मणान्भोजयिष्य इति संकल्प्य त्रीन्विप्रान्भोजयेत् ॥ तदलाभे एकंब्राह्मणमपिभोजयेत् ॥ ततः ॐ पितृब्रह्मलोकनयनकामोवटेशदर्शनं करिष्य इति संकल्प्य ॥ वटेशंप्रतिमारूपंपश्यन् ॥ एकार्णवेवट स्याग्रे यः शेतेयोगनिद्रया ॥ बालरूपधरस्तस्मै नमस्तेयोगशायिने॥इति प्रणम्यसंपूज्य ॐसंसारवृक्षशस्त्राय सर्व्वपापक्षयायच॥अक्षयाय ब्रह्मदात्रे नमोऽक्षयवटायते ॥ इति मंत्रेणाक्षयवटंनमस्कुर्यात् ॥ततः शक्तौसत्यां तत्र षोडशदानानि गयातीर्थपुरोधसे दत्त्वावस्त्रगंधादिभिः सम्यक् संपूज्य ॐपितृबंधनमोचनकामःप्रपितामहनमस्कारंकरिष्ये इति संकल्प्य ॐकलौमाहेश्वरालोका येनतस्माद्गदाधर ॥ लिंगरूपो भव त्वंच वंदे श्रीप्रपितामहम् ॥ १ ॥ इतिमंत्रेण तंनमस्कुर्यात् ॥ इति सप्तदिनात्मकगयाकार्यकृत्यम् ॥ छ ॥ छ ॥ छ ॥
अथ मासेसार्द्धमासे वा वासेतु अनियतदिनकृत्यानि लिख्यंते॥तत्रादौ पूर्वदिने उपोष्य पराह्ने प्रातर्गयास्थगायत्रीसंमुखस्थं गायत्रीतीर्थं गत्वा तत्कूलेप्रातः स्नात्वा प्रातःसंध्योपासनंकृत्वा तर्पणंविधाय ॐअद्यकुलब्राह्मण्यतानयनकामोगायत्रीतीर्थे श्राद्धमहं करिष्ये इति संकल्प्य पूर्वोक्तप्रकारेण सपिंडकंश्राद्धं कुर्य्यात् ॥ ततः सावित्र्याः पुरतःसमुद्यंतनामकेतीर्थे मध्याह्ने यथाविधिस्नात्वा तत्रैव कुलशत स्वर्गनयनकामनया मध्याह्नसंध्योपासनतर्पणश्राद्धानि कार्य्याणि ॥ ततः एवमेव सरस्वत्याः पुरतः सायाह्नेप्राच्यांसरस्वत्यांस्नात्वा

कुलसहस्रमुक्तिकामनया सायंसंध्योपासनतर्पणश्राद्धानि कार्याणि ॥ एवमेव धर्म्मशिलायां, लेलिहाने, भरताश्रमे, मुंडपृष्ठे, गदाधरसमीपे, आकाशगंगायां, गिरिकर्णमुखेच क्रमेण कुलशतब्रह्मलोकनयनकामनया श्राद्धं पिंडदानमात्रंवा कार्य्यम् ॥ ततः ॐत्रिसप्तकुलोद्धारकामो वैतरण्यां स्नानमहं करिष्ये इति संकल्प्य स्नानं तर्पणंच कृत्वा पूर्वोक्तं श्राद्धं कुर्यात् ॥ ततः यमद्वारे महाघोरे यासावैतरणीनदी ॥ तामहं तर्त्तुमिच्छामि कृष्णांगांप्रददन्निमाम् ॥ इति मंत्रेण तत्र गोदानंकार्य्यम् ॥ तद्यथा ॥ यासावैतरणीनाम नदीत्रैलोक्यविश्रुता ॥ सावतीर्णामहाभागा पितृणांतारणायच ॥ १ ॥ इतितांस्मृत्वागांपुरतः संस्थाप्य ॐ गवेनमः इतित्रिः संपूज्य ॐब्राह्मणायनमः इति ब्राह्मणंत्रिःसंपूज्य गां प्रोक्ष्य कुशत्रयतिलजलान्यादाय ॥ ॐ अद्यत्रिसप्तकुलोद्धारणकाम इमां गांरुद्रदैवत्याम् अमुकगोत्रायामुकशर्मणे ब्राह्मणायतुभ्यमहं संप्रददे इतिदद्यात् ॥ ततो दाता ॐ अद्यकृतैतद्गोदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवत्यममुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे इतिदक्षिणांदद्यात् ॥ ग्रहीताच गृहीतसुवर्णो गोपुच्छंगृहीत्वायथाशाखम् ॐ कोदात्कामइत्यादिकामस्तुतिंपठेत् ॥ ततः ॐ अद्यपितृस्वर्गलोकनयनकामो देवनद्यांपिंडदानमहंकरिष्ये ॥ इतिसंकल्प्यपूर्वोक्तंपार्वणम् पिंडदानमात्रंवाश्राद्धंकुर्यात् ॥ एवमेव गोप्रचारे घृतकुल्यांमधुकुल्यां गदालोले कोटितीर्थे रुक्मिणीकुंडेच पितृस्वर्गकामनयाश्राद्धंपिंडदानमात्रं वा कार्य्यम् ॥ ततः ॐअद्यपितृतारणकामोमार्कंडेयेश्वरकोटीश्वरयोर्नमस्कारंकरिष्ये ॥ इतिसंकल्प्य तयोर्नमस्कारं कुर्यात् ॥ ततः पितामहसन्निहितपारिजातवनस्थपांडुशिलायांपितॄणामक्षय्यतृप्तिकामनयाश्राद्धंपिंडदानमात्रंवा कार्य्यम् ॥ एवमेव घृतकुल्यामधुकुल्यादेविकामहानदी सरस्वती चेतिचतस्रो यत्र पांडुशिलयामिलिताः सा मधुस्रवा तस्यांस्नानतर्पणे अश्वमेधफलके ॥

श्राद्धंचकुलसहस्रस्यनरकाद्युद्धारपूर्व्वकविष्णुपुरनयनफलकम् ॥ एवं पितामहादक्षिणस्यांमहानद्यां दशाश्वमेधहंसतीर्थे प्रणमेत् ॥ ततः
उद्यंतपर्वतसमीपस्थे मखकुंडेमुक्तिकामनयास्नानं पितृतृप्तिकामनयातर्पणश्राद्धेकार्य्ये ॥ संगमे तारकेश्वरप्रणामे पितृस्वर्गः ॥ अश्वमेध
फलकामनया गयाकूपे श्राद्धम् ॥अत्रपतितदुर्म्मरणादिमृतानामपिस्वर्गकामनया वर्षोत्तरंश्राद्धंकार्य्यम् ॥ ततः पितृसंतारणकामनयाभस्म
कूपे भस्मनास्नानम्॥गयाग्राममध्येसुषुम्णायां महाकालीसमीपे ॐ त्रिः सप्तकुलसमुद्धारकामः सुषुम्णायांश्राद्धमहंकरिष्ये ॥ इतिसंकल्प्य
श्राद्धंकार्य्यम् ॥ ततो गृध्रवटोत्तरभागस्थेवसिष्ठाश्रमेवसिष्ठतीर्थे स्नात्वा वसिष्ठेश्वरंनमस्कृत्य धेनुकारण्यजलाशयेस्नात्वाकामधेनुंप्रणम्य
पितृब्रह्मलोकनयनकामनया कामधेनुपदे श्राद्धंकार्य्यम् ॥ एवं कर्दमाले गयानाभौ मुंडपृष्ठसमीपेचस्नानश्राद्धेकार्य्ये ॥ ततः फल्गुचंडी
श्मशानाक्षीमंगलादीनांपितृस्वर्गकामनयानतिपूजनेकार्य्ये ॥ ततो गयागजे गयादित्ये गायत्र्यां गदाधरसमीपे गयायां गयाशिरसि
चेतिगकारवतिस्थानषट्के मुक्तिकामनया पूजापितृश्राद्धादिकंचकार्य्यम् ॥ ततोगयायां यत्रक्वापियदाकदाचित् ॥ ॐएकविंशतिकुलो
द्धारकामनया वृषोत्सर्गमहंकरिष्ये ॥ इतिसंकल्प्य वृषोत्सर्गःकार्य्यः ॥ ततो गयायामादिगदाधरंध्यात्वापितॄणां कुलशतस्यनरकाद्युद्धार
ब्रह्मलोकनयनकामनया श्राद्धंपिंडदानमात्रंवाकार्य्यम् ॥ भस्मकूटस्थितं जनार्दनंनत्वातत्समीपे वामजानुनिपात्यात्मनो विष्णुलोकका
मनयापितॄणांश्राद्धंकृत्वा तंचषोडशोपचारैः पंचोपचारैर्वासंपूज्यदध्योदनं नैवेद्यंदत्त्वातच्छेषेणातिलंविना ॐ विष्णुलोककामनया अपुत्र
स्यासंभावितपुत्रस्यममवाऽन्यस्यमरणोत्तराक्षय्यसुखप्राप्त्यर्थमेभिर्मंत्रैर्जनार्दनहस्तेपिंडदानमहंकरिष्ये ॥ इतिसंकल्प्य ॥ एषपिंडो मयादत्त
स्तवहस्ते जनार्दन॥गयाशीर्षेत्वयादेयो मह्यंपिंडोमृतेमयि ॥१ ॥ यस्तुपिंडोमयादत्तो यमुद्दिश्यजनार्दन ॥ देहिदेवगयाशीर्षे तस्मैतस्मैमृतेतु

तम् ॥ २ ॥ जनार्द्दननमस्तुभ्यं नमस्तेपितृरूपिणे ॥ पितृपित्रेनमस्तुभ्यं नमस्ते मुक्तिहेतवे ॥ ३॥ गयायांपितृरूपेण स्वयमेवजनार्द्दनः॥ तंदृष्ट्वापुंडरीकाक्षं मुच्यतेचऋणत्रयात् ॥ ४ ॥ एतैर्मंत्रैर्जनार्दनवामहस्ते पिंडंदद्यात् ॥ (अग्निपुराणेतु पिंडत्रयदानमुक्तम्) तत्रत्योयं मंत्रः ॥ त्रयःपिंडा मयादत्तास्तवहस्तेजनार्दन ॥ परलोकगतेमह्यमक्षय्यमुपतिष्ठताम् ॥ १ ॥ इत्येकंमंत्रंपठित्वापिंडत्रयंदद्यात् ॥ ततस्तदधोभागे पुंडरीकाक्षमर्चयेत् ॥ ॐ ऋणत्रयमुक्तिकामनयास्वर्गकामनयाच पुंडरीकाक्षस्यदर्शनपूजनंकरिष्ये ॥ इतिसंकल्प्य ॐ नमस्तेपुंडरीकाक्ष ऋणत्रयविमोचन ॥ लक्ष्मीकान्तनमस्तेऽस्तु नमस्तेपितृमोक्षद ॥ १ ॥ इतिमंत्रेणदर्शनंकृत्वासंपूज्यनतिंकुर्यात् ॥ तदधोभागेभीमगयास्थलमुपगत्यपितृमुक्तिकामः श्राद्धंपिंडदानंवाकृत्वा प्रेतकुंडे पितॄणांप्रेतत्वविमुक्तिकामः श्राद्धंपिंडदानंवाकुर्य्यात् ॥ ततोमहानदीपरपारगतभरताश्रमसन्निधौमहानद्यांस्नात्वा रामेश्वरं सीतासहितंरामंच ॐ रामराममहाबाहो देवानामभयंकर ॥ त्वांनमस्येऽत्रदेवेशं ममनश्यतुपातकम् ॥ इतिमंत्रेणनत्वातत्रस्थेरामपदे ॐ पितृकुलशतसहितस्यात्मनोविष्णुपुरगमनकामोरामेशसन्निधानेरामपदेश्राद्धमहंकरिष्येइतिसंकल्प्यश्राद्धंपिंडदानमात्रंवाकुर्यात् ॥ ततोधर्म्मशिलादक्षिणहस्तस्थापितकुंडपर्व्वतेपितॄणांब्रह्मपुरनयनकामनयाश्राद्धंकार्य्यम् ॥ धर्म्मशिलावामहस्तस्थापितेउद्यन्तपर्व्वतेपितॄणांब्रह्मलोकप्राप्तिकामनयाश्राद्धम् ॥ तत्रैवोद्यन्तकुंडेमध्याह्नेस्नात्वामध्याह्नसंध्योपासनं ततः स्वस्यकोटिजन्मावधिधनाढ्यवेदवेदाङ्गपारगविप्रत्वकामनया तत्रत्यसावित्रीपूजाकार्य्या ॥ ततःअगस्त्यपदेस्नात्वातत्रश्राद्धंकृत्वा ॐ जन्मनिवारणपूर्व्वकब्रह्मभावप्राप्तिकामोब्रह्मयोनिप्रवेशनिर्गमावहंकरिष्ये ॥ इतिसंकल्प्य ॥ ब्रह्मयोनिंप्रविश्यततोनिर्गमंकार्य्यम् ॥ ततोगयाकुमारंनमस्कृत्य पितॄणांचंद्रलोकप्राप्तिकामनया सोमकुंडेस्नानतर्पणश्राद्धानि

कार्य्याणि ॥ ततः ऋणमोक्षकामनया ॐयमोऽसियमदूतोऽसि वायसोसिमहाबल ॥ सप्तजन्मकृतंपापं बलिंभुक्त्वाविनाशय ॥ १ ॥ इतिमं
त्रेणकाकशिलायांकाकबलिदानम् ॥ ततःस्वर्गप्राप्तिपूर्व्वकब्रह्मलोकगमनकामनयास्वर्गद्वारेशस्यप्रणामः ॥ पितृनिष्पापतार्थमाकाश
गंगायांश्राद्धंकार्य्यम्॥धर्मशिलादक्षिणहस्तगतेभस्मकूटाद्रौस्वर्गप्राप्तिकामनयातत्रत्यभस्मनास्नानम् ॥अक्षयवटसमीपेवटेश्वरःप्रपितामहश्च
तदग्रेरुक्मिणीकुंडं तत्पश्चिमतः कपिलानदी तत्तीरेकपिलेश्वरश्चैतेपूज्याः ॥ कपिलायांसोमामायोगेस्वर्गकामनयास्नानश्राद्धेकार्य्ये
स्वर्गकामनयामाहेश्वरीकुंडसमीपेमंगलागौरीपूज्या ॥ धर्म्मशिलादक्षिणपादस्थापितप्रेतकूटाद्रौ पितृमुक्तिकामनयाश्राद्धंकार्य्यम्॥ तत्रत्य
एवप्रेतकुंडेपितॄणांप्रेतत्वमुक्तिकामनयाश्राद्धादिकार्य्यम् ॥ पितॄणांब्रह्मपुरप्राप्तिकामनयावैकुंठस्यहेमकटपर्व्वतेगयायांलोहदंडतयाख्याते
गिरौश्राद्धंकार्य्यम् धर्म्मशिलादक्षिणभागस्थगृध्रकूटागिरौशिवपुरप्राप्तिकामनयागृध्रेश्वरदर्शनम् ॥ स्वर्गकामनयातत्रत्यगृध्रवटप्रणामः ॥
पितृलोकप्राप्तिकामनयातत्रत्यायांगृध्रगुहायांश्राद्धम्॥तत्रत्यायांमाहेश्वरीधारायांचपितृस्वर्गकामनयाश्राद्धम् ॥ ब्रह्मलोकप्राप्तिकामनयामूल
क्षेत्रसरसिस्नानम् ॥स्वस्यशिवत्वकामनयाऋणमोक्षेश्वरपापमोक्षेश्वरदर्शनंकार्य्यम् ॥ धर्म्मशिलायामुत्तरस्थदिक्पालस्थितस्यगजरूपिविघ्ने
शस्यनिजमुक्तिपितृशिवपुरप्राप्तिकामनयादर्शनंकार्य्यम् ॥ स्वर्गकामनयास्नात्वागायत्रीगयादित्योर्दर्शनम्॥पितृतारणकामनयातत्पर्वत
स्थब्रह्मदर्शनम् ॥पितॄणांब्रह्मपुरप्राप्तिकामनयागयानाभौश्राद्धंपापनाशकामनयामुंडपृष्ठाद्रौरवीरिंद्रादेश्वदर्शनम् ॥ क्रौंचपादाद्रिगतजलाशये
पितृमातामहश्वशुरकुलानांस्वर्गकामनयाश्राद्धंकार्य्यम् ॥ततोगयाप्रदक्षिणाकार्य्या ॥ ततोवित्तानुसारेणगदाधरंसंपूज्य ॥ ॐगदाधरंकलिग
तकल्मषापहं गयागतंविदितगुणंगुणातिगम् ॥ गुहागतंगिरिवरगेहगोपितं सुरार्च्चितंवरदमहंनमामितम्॥१॥शुभाश्रियंत्रिदशगणादिसुश्रियं

यशःश्रियंदितिभयदारणश्रियम् ॥ कलागतंकालिकलमर्दनाश्रियं दृढादृढंपारिवृढगाढशक्तिभिः ॥ २ ॥ विदेहकंकरणकलाविवर्जितं विय न्मरुद्धिमकरवारिभूषितम् ॥ गदाधरंध्वनिमुखवर्ज्जितंपरं नमाम्यहंपरममनादिदेवम् ॥ ३ ॥ मनोगतंमतिगतिवर्ज्जितंत्वजं शमात्मकंश्रुति शिरसिस्थितंबुधम ॥ चिदात्मकंकलिगतकारणातिगं गदाधरंहृदयगतंनमाम्यहम् ॥ ४ ॥ इतिब्रह्मकृतेनस्तोत्रेण ॥ ॐअव्यक्तरूपोयोदेवो मुंडपृष्ठाद्रिरूपकृत् ॥ फल्गुतीर्थादिरूपेण तंनमामिगदाधरम् ॥ १ ॥ व्यक्तरूपोहियोदेवो जनार्दनस्वरूपतः ॥ मुंडपृष्ठेस्वयंह्यस्ति तंनमामिगदाधरम् ॥ २ ॥ शिलायांब्रह्मरूपिण्यां स्थितंब्रह्मादिभिःसुरैः ॥ पूजितंसत्कृतंदेवैस्तंनमामिगदाधरम् ॥ ३ ॥ महादेवंचजगतो व्यक्तस्यैकंहिकारणम् ॥ अव्यक्तज्ञानरूपंतं नमाम्यादिगदाधरम् ॥ ४ ॥ यंचदृष्ट्वातथास्पृष्ट्वा पूजयित्वाप्रणम्यच ॥ श्राद्धादौब्रह्मलोकाप्ति स्तंनमामिगदाधरम् ॥ ५ ॥ देहेंद्रियमनोबुद्धिप्राणाहंकारवर्ज्जितम् ॥ जाग्रत्स्वप्नविनिर्मुक्तं नमाम्यादिगदाधरम् ॥६॥ नित्यानित्यविनि र्मुक्तं सामान्यानंदवर्ज्जितम् ॥ तुरीयंज्योतिरात्मानं तंनमामिगदाधरम् ॥ ७ ॥ इतिरुद्रकृतेनचस्तवेनस्तुवीत ॥ ततः ॐआगतोस्मिगयां देव पितृकार्य्येगदाधर ॥ त्वमेवसाक्षी भगवन्ननृणोऽहमृणत्रयात् ॥ इतिप्रार्थयेत्॥एवंगयायात्रां कृत्वास्वगृहमागत्यकृतायागयायात्रायाःपरि पूर्णकामोगणेशस्वेष्टदेवतानांपूजनंविधायप्रभूतघृतान्नेनवृद्धिश्राद्धंकुर्य्यात् ॥ ततोब्राह्मणान्भोजयित्वादक्षिणाभिस्तान्संतोष्यइष्टैःसहस्वयंभो जनंकुर्य्यात्॥ ॐतत्सच्छ्रीगदाधरायनमः ॥ इतिवाय्वग्निपुराणवाचस्पतिमिश्रादिकृतपद्धत्युक्तगयाश्राद्धपद्धतिःसमाप्ता ॥ इतिश्रीबीकानेर विषयांतर्गतश्रीरत्नगढनगरनिवासिनाश्रीवसिष्ठकुलोद्भवश्रीरामकृष्णपौत्रेण श्रीकस्तूरीचंद्रसूनुनाश्रीमहादेवभक्तवाजसनेयिनागौडपण्डित श्रीचतुर्थीलालशर्मणाविरचितेगौडीयश्राद्धप्रकाशेमहानिबंधेपद्धतिखंडस्यपूर्वार्धेचतुर्थप्रकरणंसमाप्तम्॥४॥समाप्तोयंपद्धतिखंडस्यपूर्वार्द्धः॥

अथ प्रेततृप्तिकरः पद्धतिकल्पः ॥ ॥ अत्रमरणसमयादारभ्यसांवत्सरिकान्तंकर्म्मउच्यते ॥ तत्रतावत्पुत्रादिरासन्नमृत्युं पित्रादिकंज्ञात्वा पापानुसारेण षडब्दं वात्र्यब्दं सार्द्धाब्दंवा प्राजापत्यं वा तत्प्रत्याम्नायांश्चप्रतिप्राजापत्यंगायत्र्ययुतजपं वा सहस्रगायत्र्यातिलहोमं धेनुदानं पादचारेण तीर्थयात्रा वाद्वादशब्राह्मणभोजनं सुवर्णरूप्ययोर्निष्कं तदर्द्धंवा गोवृषमूल्यं यथाशक्त्यनुरूपंप्रायश्चितं तद्वाराकारयेत् ॥ तदशक्तौस्वयंवाकुर्यात्॥तत्रप्रयोगः॥गंगादितीर्थेगत्वा यथाविधि स्नात्वाशुद्धेशुक्लवाससीपरिधाय॥बद्धशिखः कृततिलकः सपवित्रकरः पूर्वाभिमुखउपविश्य॥आचम्यप्राणानायम्य॥देशकालौसंकीर्त्यसकलपातकनिवृत्तिकामःश्रीविष्णुपूजनपूर्वकंदेहशुद्ध्यर्थंप्रायश्चित्तमहंकरिष्ये ॥ इति संकल्प्य॥ॐ सहस्रशीर्षापुरुष इतिपुरुषसूक्तेनदेहन्यासंकृत्वाषोडशोपचारैःश्रीमहाविष्णुंसंपूज्याग्निप्रपूजांकुर्यात् ॥ ततःपुनर्देशकालौसंकीर्त्य ॥ ॐ अमुकगोत्रोऽमुकशर्माहंममजन्मप्रभृतिअद्यदिनंयावत् ज्ञाताऽज्ञातकामाऽकामसकृदसकृत्कायिकवाचिकमानसिकसांसर्गिकस्पृष्टाऽस्पृष्टभुक्ताऽभुक्तपीताऽपीतमहापातकोपपातकसंकरीकरणमलिनीकरणाऽपात्रीकरणजातिभ्रंशकरणप्रकीर्णानां सकलपातकानां निरासार्थंश्रीपरमेश्वरप्रीत्यर्थममुकप्रायश्चित्तममुकप्रत्याम्नायद्वारायथाकालंकरिष्ये ॥ इतिसंकल्प्य॥यथाशक्तिषडब्दादिपूर्वोक्तंप्रायश्चित्तं कुर्यात् ॥ अस्मिन्दिनेउपवासः ॥ अशक्तस्यहविष्यान्नेननक्तव्रतम् ॥ ततोदशदानानिकुर्यात् ॥यथा॥ गोभूतिलहिरण्याज्यवासोधान्यगुडानिच॥रौप्यंलवणमित्याहुर्दशदानान्यनुक्रमात् ॥१॥ एतानिदशदानानि विप्रेभ्योयथाशक्तिदद्यात् ॥ निर्द्धनश्चेत्तीर्थयात्रादिकुर्यात् ॥ ततो वैतरणीधेनुदानम् ॥ तद्यथा ॥ देशकालौसंकीर्त्य ॥ ममयमद्वारस्थितवैतरणीनद्याः सुखोत्तारणार्थं वैतरणीधेनुदानंकरिष्ये ॥ इतिसंकल्प्य

१ षडब्दे प्राजापत्यानि १८० त्र्यब्दे ९० सार्द्धाब्दे ४५ अब्दे प्राजापत्यानि ३०

द्रोणप्रमाणकार्पासशिखरोपरिताम्रपात्रे हैमंयमंस्थाप्य षोडशोपचारैः संपूज्य तत्रेक्षुदंडमयींनौकां पट्टसूत्रेण बद्धातत्रस्थांकृष्णांधेनुंसवत्सांसं
पूज्यब्राह्मणंवृत्वासंपूज्यप्राङ्मुखोगोपुच्छंसतिलजलयुतंगृहीत्वादेशकालौ संकीर्त्य ॐअमुकगोत्रोऽमुकशर्माहं ममपरलोके वैतरणीतरणार्थमि
मांगांसवत्सांसुवर्णशृङ्गरौप्यखुरकांस्यपानीयपात्रपैत्तलदोहनकृष्णवस्त्रयुगसप्तधान्यच्छत्रोपानदुपस्करयुताम् अमुकगोत्रायामुकशर्मणे ब्राह्म
णायतुभ्यमहंसंप्रददे ॥ इत्युक्त्वाविप्रहस्तेजलंक्षिप्त्वामंत्रौपठेत् ॥ ॐयमद्वारेमहाघोरे कष्टांवैतरणींनदीम्॥ तर्तुकामोददाम्येतांतुभ्यंवैतरणीं
चगाम् ॥ १ ॥ विष्णुरूपद्विजश्रेष्ठ भूदेवपङ्क्तिपावन ॥ सदक्षिणामयातुभ्यं दत्तावैतरणीचगौः॥ इतिप्रार्थ्य॥ॐ अद्यकृतैतद्धेनुदानप्रतिष्ठासि
द्ध्यर्थमिदंहिरण्यमग्निदैवत्यममुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ इतिसुवर्णदक्षिणांदत्त्वानमस्कृत्यप्रदक्षिणांकुर्यात् ॥ ततः
ॐ धेनुकेत्वंप्रतीक्षस्व यमद्वारेमहाभये ॥ उत्तितीर्षुरहंदेवि वैतरण्यैनमोनमः ॥ इतिनत्वा यमप्रतिमादि सर्वांनिवेद्य अनुगत्वा विसृजेत् ॥
स्वयमशक्तोपुत्रादिद्वारावाकारयेत्॥ इति वैतरणीधेनुदानम् ॥ अथमहाष्टौदानानि ॥ तिलालोहं हिरण्यंच कार्पासं लवणं तथा॥ सप्तधान्यं
क्षितिर्गावो महादानानिचाष्टवै ॥१॥ तत्र विधिः ॥ देशकालौसंकीर्त्य ॥ अमुकगोत्रोऽमुकशर्माहं इमानितिलादीन्यष्टौमहादानानिसोमादि
दैवतानिसदक्षिणाकानि तत्तत्प्रदानफलावाप्तये श्रीविष्णोः प्रीतये नानानामगोत्रेभ्योब्राह्मणेभ्योऽहंसंप्रददे ॥ इतिसंकल्प्ययथाचारंदद्यात् ॥
ततः ॥ शक्तौसत्यां तिलपूर्णताम्रपात्रं मोक्षधेनुम् ऋणधेनुम् पापधेनुम् उत्क्रान्तिधेनुंचदद्यात् दुर्मरणमृतप्रायश्चित्तंसंकल्प्यकुर्यात् ॥
अथदुर्मरणनिमित्तप्रायश्चित्तानि ॥ शृङ्गि, दंष्ट्रि, नखि, शस्त्रघात, सर्प, जलेमग्न, कंठग्राह, विषभक्षण, अग्निदग्ध, विप्रमारित, आत्मघात,
चांडालहस्तमरण, चौरशत्रुम्लेच्छादिनामारित, वृक्षारोहणादि, बंदिगृहेमरण, पाशमरण, विषूचिकाभूतशाकिनीक्षेत्रपालादिग्र

हैर्ग्रस्त, गजशकटादिभिर्हत, कुष्ठक्षयापस्मारभगंदरजलोदरगंडमालापांडुरोगादिमहारोगैः पीडितमरण, मूत्रपुरीषस्थाशौच मरणाद्यअनेकदुष्टमरणान्यतममरणे कृच्छ्रचांद्रायणद्वयम् ॥ अथवा पंचदशप्राजापत्यं शक्तौसत्यां प्रतिप्राजापत्यमेकैकांवा गाम् ॥ अथवाप्रतिप्राजापत्यमयुतगायत्रीजपं प्राणायामशतद्वयंवा तीर्थयात्रायोजनं ब्राह्मणभोजनादिद्वारावाशुद्धिंसंपाद्य दाहादिकं कुर्यात् ॥ एवमेव ऊर्द्ध्वोच्छिष्टाधोच्छिष्टोभयोच्छिष्टास्पृष्टाऽस्पृष्टे खड्गान्तरिक्षमरणे चांडालक्रव्यादस्पर्शे रात्र्यन्तरितेशवेक्रामिकीटोद्भवे दोषशक्त्य नुसारेणत्रीन्षट् द्वादश पंचदश वाप्राजापत्यानि चांद्रायणत्रयंवातत्प्रत्याम्नायभूतधेन्वादिकं प्रायश्चित्तं संकल्प्य ॥ सूतकान्तेकुर्यात् ॥ एवंकर्तार्प्यधिकाराभावेयथाशक्तिकृच्छ्ररूपप्रायश्चित्तप्रत्याम्नायेनआत्मनःशुद्धिंसंपाद्यदहनादि कुर्यात् ॥ तत्रैवंप्रयोगः ॥ अमुकगोत्रस्य अमुकप्रेतस्य सर्पदष्टमृतस्यसर्पदष्टमरणजनितपापनिवृत्त्यर्थं दाहाद्यौर्द्ध्वदेहिककर्मयोग्यताप्राप्त्यर्थं पंचदशप्राजापत्यानां प्रत्याम्नायेन प्रतिप्राजापत्यमयुतगायत्रीजपं ब्राह्मणभोजनादिद्वारावाप्रायश्चित्तंसूतकान्तेकरिष्यामि इतिमनस्युद्दिश्यसूतकान्ते कुर्यात् ॥ एवमेवपूर्वो क्तशृंग्यादिदुर्मरणेषुज्ञेयम् ॥ एवंपुत्रादिर्मृतस्यदक्षिणपार्श्वेदक्षिणामुखउपविश्य देशकालौ संकीर्त्य ॥ अमुकगोत्रस्यामुकप्रेतस्यऊर्द्ध्वो च्छिष्टाऽधोच्छिष्टोभयोच्छिष्टस्पृष्टास्पृष्टमरणखड्गान्तरिक्षमरणादिजनितदोषप्रत्यवायपरिहारार्थंपंचदश द्वादश षट्त्रीन् वाकृच्छ्रान् यथाशक्ति प्रायश्चित्तममुकप्रत्याम्नायेनसूतकान्ते करिष्यामि ॥ इति संकल्प्य सूतकान्तेकुर्यात्॥इतिदुर्मरणप्रायश्चित्तम् ॥ अथमरणसमय कृत्यम् ॥ तत्र तावत्स्वयं गोमयोपलिप्तायांभूमौतिलकुशगंगादितीर्थरजऊर्णावस्त्रादियुतायाम् उपविष्टो दक्षिणशिरःशायितोवा गोपी चंदनादिकृततिलकःश्रीविष्णुंस्मरन् ईशावास्यं पुरुषसूक्तंगीतांसहस्रनामादिस्तोत्राणिपठेत् शृणुयाद्वा ॥ तद्यथा ॥ देशकालौ संकीर्त्य

मम अमृतत्वप्राप्त्यर्थं पुरुषसूक्तस्तोत्रादीनांपाठं श्रवणंवा करिष्ये ॥ इति संकल्पः ॥ श्रोतुःसंकल्पाशक्तौ ॥ श्रावयिता ॥ ॐअस्यामुकशर्मणोऽमृतत्वप्राप्तये अमुकंश्रावयिष्ये इति संकल्प्य पुरुषसूक्तम् ईशावास्यमुपनिषद्भागवतानि गीतासहस्रनामादीनिपुण्यस्तोत्राणिरामकृष्णमाधवनारायणादिनामानिच श्रावयेत् ॥ ततः प्राणोत्क्रमणसमये पुत्रादिरधिकारी गंगादितीर्थसमीपे अथवास्वगृहे तुलसीशालग्रामसमीपे गोमयोपलिप्तायांभूमौ गंगोदकादिशुद्धजलेनसंस्नाप्य ॥ अहतधौतशुक्लवाससीपरिधाप्य नूतनयज्ञोपवीतपुष्पमालारुद्राक्षधात्रीतुलसीपत्राद्यैरलंकृत्यचंदनगंगामृत्तिकादिनाऽनुलेपयेत् ततःपुत्रादिःस्वोत्संगस्थापितशिरसः अपगतप्राणस्य मुखे नासिकाद्वये चक्षुर्द्वये श्रोत्रद्वयेच पंचरत्नानिसुवर्णशकलानिवा तदभावेघृतबिंदून्वाक्षिप्त्वा वस्त्रेणाच्छाद्यदर्भवत्यांभूमौतिलान् विकीर्य तत्र उदक्शिरसंस्थापयेत् ॥ अथ प्राणोत्क्रमणानन्तरं कर्त्ताऽन्येचकनिष्ठपुत्रादयो दक्षिणमुखाः स्वनखकक्षोपस्थवर्जलोमानिवापयेयुः ॥ कर्तृव्यतिरिक्तानां दशमेऽहनिवापनम् ॥ ततोवपनानन्तरंस्नात्वा ॥ अहतेवाससीपरिधाय ( गतासुंघृतेनाभ्यज्य ) नूतनजलयुतेकुंभे ॥ ॐगयादीनिचतीर्थानि येचपुण्याःशिलोच्चयाः॥कुरुक्षेत्रंचगंगांचयमुनांचसरिद्वराम्॥कौशिकींचंद्रभागांच सर्वपापप्रणाशिनीम् ॥ भद्रावकाशांसरयूंगंडकींतमसांतथा॥वैणवंचवराहंच तीर्थंपिंडारकंतथा ॥ पृथिव्यांयानितीर्थानि चतुरःसागरांस्तथा ॥ एतानि मनसा ध्यायञ्जले सर्वतीर्थान्यावाह्यतेनजलेनशवंसंस्नाप्य॥अहतवस्त्रपरिधानं गंगोदकमिश्रितचंदनादिनासर्वाङ्गप्रोक्षणं पुष्पैरलंकरणंचकृत्वाशुचिदेशेविहितकाष्ठरचितचितायामास्तीर्णकुशायामुत्तानं शवंस्थापयेत् ॥अथ पिंडप्रयोगः॥ पुत्रादिरपसव्यादिकृत्वामृतदक्षिणपार्श्वे दक्षिणाभिमुख उपविश्यदेशकालौ संकीर्त्य ॥अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्त्याउत्तमलोकप्रात्यर्थंमौर्ध्वदेहिकंकरिष्ये इत्युक्त्वादक्षिणाग्रंकुशत्रयमास्तीर्य ॥अद्यामुकगोत्रामुकप्रेतअत्रावनेनि

क्ष्वतेमयादीयतेतवोपतिष्ठतामित्यवनेजनंदत्त्वा॥यवादिचूर्णनिर्मितं पिंडंगृहीत्वाअद्यामुकगोत्रअमुकप्रेतमृतिस्थानेशवनिमित्तब्रह्मदैवतोवा॥ एषतेपिंडोमयादीयतेतवोपतिष्ठताम् इत्येकंपिंड प्रत्यवनेजनंचदत्त्वा प्रेतवस्त्रेपिंडंबद्धागृहद्वारानयेत्॥ तत्रपूर्ववत्कुशास्तरणमवनेजनंचदत्त्वा ॥ अद्यामुकगोत्राऽमुकप्रेत द्वारदेशेपांथनिमित्तविष्णुदैवतोवा एषतेपिंडोमयादीयतेतवोपतिष्ठतामितिपिंडंदद्यात् ॥ अथानन्तरंपुत्राऽनुजाद यश्च कृतापसव्यामुक्तकेशाबालपुरःसराः मृन्मयादिस्थालीस्थं यथाचारं लौकिकाग्नियवपिंडादिकंचगृहीत्वा यमगाथांगायन्तः शवंप्रच्छा दितमुखंप्राक्शिरसमूर्ध्वमुखम् अरण्येश्मशानदेशंप्रतिनयेयुः॥ अथचत्वरेखेचरनिमित्तपिंडदानम्॥तत्रदक्षिणाग्रंकुशत्रयास्तरणमवनेजनंच कृत्वा॥ अद्यामुकगोत्राऽमुकप्रेत चत्वरेखेचरनिमित्तएषतेपिंडोमयादीयतेतवोपतिष्ठतामितिपिंडंप्रत्यवनेजनंचदद्यात्॥ एवमेवग्रामश्मशा नयोर्मध्येविश्रामे ॥ अद्यामुकगोत्रामुकप्रेतविश्रान्तौ भूतनाम्ना रुद्रदैवतोवा एषतेपिंडोमयादीयतेतवोपतिष्ठतामितिविश्रामपिंडं दद्यात्॥ ततः सर्वेबांधवाः अप्रावरणा वृद्धादयः प्रेतमनुगच्छेयुः ॥ मृतद्विजंसजातीयेषुतिष्ठत्सुनशूद्रानयेयुः ॥ नमृतंशूद्रंद्विजाश्च ॥ अनाथविप्रप्रेतनिर्हरणेपदेपदेऽश्वमेधयज्ञसमफलम्॥ द्विजसंस्कारोपयुक्ताग्नितृणकाष्ठघृतादिशूद्रानयनंनिषिद्धम् ॥ द्विजशवंशूद्रोनस्पृ शेत्॥ स्वगृहेमृते ब्राह्मणोनगरपश्चिमद्वारेण क्षत्रियः उत्तरेण वैश्यः पूर्वेण शूद्रोदक्षिणेनद्वारेणनेयः॥ अथश्मशानदेशंप्राप्यशुचिदेशे शनै र्दक्षिणशिरसंशवंस्थापयेत्॥ ततश्चितास्थाने वायुनाम्ना पिंडदानम्॥ तत्रादौकुशत्रयंधृत्वा ॥ अद्यामुकगोत्र अमुकप्रेत अत्रावनेनिक्ष्वते

१ ( यमस्मृतौ ) यस्यानयति शूद्रोऽग्निं तृणकाष्ठहवींषि च ॥ प्रेतत्वं च सदा तस्य स चाधर्मेण लिप्यते ॥(देवलः) चाण्डालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित् ॥ पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचितः ॥ ( मनुः ) अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंपर्कदूषिता ॥ इति ॥ अत्र प्रायश्चित्तं कृच्छ्रत्रयम् ।

मयादीयतेतवोपतिष्ठतामित्यवनेज्य ॥ अद्यामुकगोत्राऽमुकप्रेतचितास्थानेवायुनिमित्तकयमदैवतोवा एषपिंडोमयादीयतेतवोपतिष्ठतामितिपिंडंदत्त्वाप्रत्यवनेजनंदद्यात् ॥ ततः खननसंप्लवनादिभिः शोधनोपायैर्भूमिंसंशोध्य गोमयोदकेनप्रोक्ष्य तत्रगंगादीनितीर्थानिमनसाध्यात्वातदुपरिकुशतिलानास्तीर्य तत्रचंदनादियज्ञियकाष्ठैः श्रीफलादिभिश्चदहनपर्याप्तंदक्षिणोत्तरायतं दारुचयंकारयेत् ॥ ततश्चिताकाष्ठंजलेनप्रोक्ष्यतत्रदक्षिणशिरसं सवस्त्रमुत्तानमुखंशवंचितौनिदध्यात् ॥ ततः शिरःप्रदेशेशुद्धभूमौवेदींकृत्वा पंचसंस्कारान्संपाद्यतत्रक्रव्यादसंज्ञकमग्निंप्रज्वाल्य ॥ क्रव्यादायनम इतिगंधमाल्यादिभिः संपूज्य ॥ लोमभ्यइत्याद्यनुवाकेनप्राचीनावीतिनाएवआज्यहोमंकुर्यात्[1] ॥ लोमभ्यः स्वाहा २ इदंलोमभ्योनमम । त्वचेस्वाहा २इदंत्वचे०। लोहिताय० २इदं०। मेदोभ्यः०२इदं० । मांसेभ्यः०२इदं०।स्नायुभ्यः०२ इदं० । अस्थिभ्यः० २ इदं० । मज्जाभ्यः० २ इदं० । रेतसे० १ इदं० । पायवे० १ आयासाय० १ प्रायासाय० १ संय्यासाय० १ वियासाय० १ उद्यासाय० १ शुचे० १ शोचते० १ शोचमानाय० १ शोकाय० १ तपसे० १ तप्यते० १ तप्यमानाय० १ तप्ताय० १ घर्माय० १ निष्कृत्यै० १ प्रायश्चित्यै० १ भेषजाय० १ यमाय० १ अन्तकाय० १ मृत्यवे० १ ब्रह्मणे० १ ब्रह्महत्यायै० १ विश्वेभ्योदेवेभ्यः० १ द्यावापृथिवीभ्याᳪस्वाहा १ इदंद्यावापृथिवीभ्यांनमम ३४ इत्याज्याहुतीर्हुत्वा शवहस्तेसाधकनाम्नापिंडदानम् ॥ अद्यामुकगोत्रअमुकप्रेतशवहस्तेसाधकनिमित्तप्रेतदैवतोवा एषतेपिंडोमयादीयतेतवोपतिष्ठतामितिदद्यात् ॥ ततः पुत्राः पौत्राश्चयथाचारं बहुलतृणानिगृहीत्वा अग्नौप्रज्वाल्यप्रदक्षिणंपरिक्रम्यमंत्रद्वयेनाशिरःस्थानेअग्निंदद्यात् ॥ तत्रमंत्रः ॥ कृत्वातुदु

१ अयं होमः कासुचित्पद्धतिषु नोक्तस्तथाऽपि दाल्भ्यकृतपद्धतावुक्तत्वाच्छिष्टैरङ्गीकृतत्वाच्चाऽस्माभिर्लिखितः ॥

ष्कृतंकर्म्मजानतावाप्यजानता ॥ मृत्युकालवशंप्राप्य नरंपंचत्वमागतम् ॥ १ ॥धर्माधर्मसमायुक्तं लोभमोहसमावृतम् ॥ दहेयंसर्वगात्राणि दिव्याँल्लोकान्सगच्छतु ॥ २ ॥ इतिप्रज्वाल्य ॥ त्वंभूतकृज्जगद्योने त्वंलोकपरिपालकः ॥ उक्तःसंहारकस्तस्मादेनंस्वर्गंमृतंनय ॥ इतिप्रार्थ्य गाढंरोदनंकुर्यात्॥ततोऽर्धंदग्धे काष्ठेन शवमस्तकंभित्त्वा अस्मात्त्वमधिजातोऽसि त्वदयंजायतांपुनः ॥ असौस्वर्गायलोकाय स्वाहाज्वलतुपावके ॥ इतिसतिलाज्याहुतिंदत्त्वासजलंकुंभमादाय पादतोऽप्रदक्षिणंत्रिःपरिक्रम्ययथाचारमश्मनाकुंभंभित्त्वा ततःप्रेतदाहानन्तरंसर्वेशवस्पृशः शवानुगमनकर्त्तारश्चचितांवामावर्तेन पराङ्मृत्यव्यावर्त्यप्रेतमनवेक्ष्यमाणाः कनिष्ठपूर्वाः स्नानार्थं नद्यादिकेगच्छेयुः ॥ तत्रोदकसमीपंगत्वा परिहितवस्त्रंप्रक्षाल्यतदेवपरिधाय समीपस्थंश्यालकमन्यंवा उदकंकरिष्यामहे इत्युदकंयाचेत् ॥ कुरुध्वमितिप्रत्युक्ते पुत्रादयः सपिंडाः सामानोदकाश्चयथावृद्धमुदकंप्रविश्य एकवस्त्राः प्रकीर्णकेशाः प्राचीनावीतिनः वामानामिकया अपनःशोशुचदघमिति जलमालोड्यदक्षिणमुखास्तूष्णींसकृन्निमज्जेयुः अंगंचनविधर्षेयुः ॥ अथसूक्तम् ॥ अपनः शोशुचदघमग्नेशुशुग्ध्यारयिम् ॥ अपनः शोशुचदघम् १ सुक्षेत्रियासुगतुयावसूयाचयजामहे ॥ अप० २ प्रयद्भन्दिष्ठएषांप्रास्माकासश्चसूरयः ॥ अप० ३ प्रयत्तेअग्नेसूरयोजायेमहिप्रतेवयम् ॥ अप० ४ प्रयदग्नेः सहस्वतोविश्वतोयांतिभानवः ॥ अप० ५ त्वंहिविश्वतोमुखविश्वतःपरिभूरसि ॥ अप० ६ द्विषोनोविश्वतोमुखातिनावेवपारय ॥ अप० ७ सनःसिंधुमिवनावयातिपर्षास्वस्तये ॥ अपनः शोशुचदघमिति ८ ऋग्वेदोक्तम् ॥ ततोद्विवाससआचम्य ॥ जलेपाषाणपृष्ठेनाशुचितीरदेशेदक्षिणाग्रकुशत्रयोपरिऋजुदर्भतिलपूर्णांजलिनापितृतीर्थेनप्रेतम्

१ मैथिलरुद्रधरेणात्र मोटकं लिखितं तन्निर्मूलत्वादसत् ॥ प्रेतश्राद्धेषु भ्रांत्यापि मोटकं न ग्राह्यम् ॥

दिश्य ॥ अद्यामुकगोत्राऽमुकप्रेतएषतिलतोयांजलिस्तेमयादीयतेतवोपतिष्ठतामितिसर्व्वेएकैकमंजलित्रयोदशवायथाचारंनिषिंचेयुः ॥
गोत्रस्त्रियोऽपिदद्युः ॥ इयंजलदानक्रियादशमपुरुषपर्यंतंकर्त्तव्या॥समानग्रामवासेयावद्वासस्संबंधमनुस्मरेयुस्तावत्तर्प्पयेयुः ॥ श्वशुरमातामह
मातुलाचार्यशिष्यसहाध्यायिमित्रदुहितृभगिनीभागिनेयराजर्त्विजांतद्धितैर्षिभिः काम्यमुदकदानंकर्त्तव्यम् ॥ क्लीबभर्तृगर्भहर्तृस्त्रीपतितैरुद
कंनकार्य्यम् ॥ ततः सव्यंकृत्वाऽऽचम्यशिखांबद्ध्वाउदकादुत्तीर्य्यस्नानवस्त्रंनिष्पीड्यशुचौदेशेशाड्वलवत्युपविष्टान् सपिंडान् अन्येसुहृदः ॥
इतिहासपुराणादिविविधकथाभिः संसाराऽनित्यतांदर्शयन्तोवदेयुः ॥ माशोकंकुरुतानित्ये सर्वस्मिन्प्राणधर्मिणि॥ धर्म्मंकुरुतयत्नेन योवःसह
गमिष्यति ॥ १ ॥ मानुष्येकदलीस्तंभनिःसारेसारमार्गणम् ॥ यःकरोतिससंमूढो जलबुद्बुदसन्निभे ॥ २ ॥ गंत्रीवसुमतीनाशमुदधिर्दैवता
नि च ॥ फेनप्रख्यःकथंनाशं मर्त्यलोकोनयास्यति ॥ ३ ॥ पंचधासंभृतःकायो यदिपंचत्वमागतः ॥ कर्मभिःस्वशरीरोत्थैस्तत्रकापरिदेव
ना ॥ ४ ॥ सर्वेक्षयान्तानिचयाः पतनांताःसमुच्छ्रयाः ॥ संयोगाविप्रयोगांता मरणांतंहिजीवितम् ॥ ५ ॥ ततः पश्चादनवलोकयंतोऽधोमु
खाः कनिष्ठानग्रतःकृत्वा ॥ अहरहर्नयमानो गामश्वंपुरुषंपशून् ॥ वैवस्वतोनतृप्यति सुरापइवदुर्मतिरिरिति यमगाथांगायन्तोयमसूक्तंचजपंतः
पङ्क्तीभूताःग्रामंप्रत्यायान्ति ॥ ( रात्रौमृतानां रात्रावेवदाहः रात्र्यन्तरितेदोषश्रवणात् ) ॥ ततोगृहद्वारसमीपेस्थित्वा निंबपत्राणिदंतैर्विदश्या
चम्यगोमयसर्षपवृषांबुदूर्वाग्नीन्स्पृष्ट्वापादेनपाषाणमाक्रम्यगृहंप्रविशेयुः॥वृद्धाःशोकापनोदनंकुर्युः ॥ अथज्ञातीनांयमनियमाः ॥ ब्रह्मचारिण
अधःशायिनः अधउपवेशिनःपरस्परमसंस्पृष्टाःदानाध्ययनवर्जिताःमलिना दीनाः अधोमुखाःसर्वभोगवर्जिताः अंगसंवाहनं केशसंमार्जनं

१ अपेताध्यायो यमसूक्तम् ॥ २ रात्रौदाहो देशाचाराऽविरोधेन कार्यः ।

चाकुर्वंतः प्रेतक्रियावर्जमनावश्यकंनकिंचित्कुर्युः ॥ शक्त्यात्रिरात्रमेकरात्रंवाउपवसेयुः ॥ अशक्तौएकान्नव्रीहियवाद्यक्षारलवण
माषान्नापूपपायसवर्जितम् एकवारं कृत्वालब्ध्वावादिनात्ययेदिवैवाल्पमश्नीयुः नरात्रौ ॥ भोजनकालेभोज्यौदनाद्भुक्तमुच्छिष्टमादाय प्रेत
स्यनामगोत्रमुच्चार्य प्रेतोद्देशेनभूमौक्षिपेत् ॥ एतेनियमाः त्रिरात्रपर्यंतंसपिंडानांभवंति ॥ पुत्रादीनान्तु मातापिताऽऽचार्यनिपातनेदशरात्र
मेतेनियमाभवंति ॥ इच्छयाप्रथमादिदशाहपर्यंतंकुटुंबैःसहभोजनं चतुष्पथश्मशानगृहेषुदीपदानम् ॥ प्रथमदिनमारभ्यदशदिनपर्य्यंतंग्रामा
द्बहिररण्यादिषु प्रेतस्यमूर्द्धादिनिष्पत्त्यर्थंपिंडदानंकुर्यात् ॥ अथसूर्यास्तमयादूर्ध्वंरात्रावन्तरिक्षेक्षीरोदकदानम् ॥ तत्रत्रिकाष्ठिकायामेक
स्मिन्नपक्वेमृन्मयेपात्रेउदकंद्वितीयेचक्षीरंकृत्वाप्राचीनावीतीदक्षिणामुखउपविश्य ॥ अमुकगोत्रस्यामुकप्रेतस्यआप्यायनार्थंतापोपशमनार्थं
चाकाशेमृन्मयेपात्रेक्षीरोदकयोर्निधानमहंकरिष्ये इतिसंकल्प्य ॥ श्मशानानलदग्धोसि परित्यक्तोसिबांधवैः ॥ इदंनीरमिदंक्षीरमत्रस्नाहि
इदंपिब ॥ इतिपठित्वा ॥ अमुकगोत्र अमुकप्रेत अनेनजलेनस्नाहि ॥ अमुकगोत्र अमुकप्रेत अत्रक्षीरंपिब इतिनिवेदयेत् ॥ एतत्क्षीरो
दकंनिधानमेकाहंवादिनत्रयंवादशाहंयथाचारंप्रत्यहंरात्रौकर्त्तव्यम् ॥ ततोगृहागमनम् ॥ इतिदाहप्रकरणम् ॥ अथप्रथमदिनमारभ्यदशाह
पर्य्यंतंकर्म्मोच्यते ॥ तत्रतावदस्थिसंचयनम् ॥ तच्चप्रथमतृतीयचतुर्थसप्तमनवमेषु भौमार्कमंदतिथियुग्मैकपादद्विपादत्रिपादकर्तृ
नक्षत्रधनिष्ठादिपंचकवर्जंदिनेषुकार्यम् ॥ तत्राविप्राणांविशेषतश्चतुर्थेऽह्नि राज्ञांपंचमेविशानांनवमेशूद्राणांदशमादिनेकार्यम् ॥ असंभवेसर्वेषां
प्रथमादिदिवसेष्वप्यस्थिसंचयः कर्त्तव्यः ॥ ( त्र्यहाशौचेतुद्वितीयेह्निसर्वेषांसद्यःशौचेदाहानन्तरमेवकर्त्तव्यः ) ॥ अथास्थिसंचयानिमित्तकं

कोद्दिष्टंश्राद्धम् ॥ तत्र श्राद्धदिनेसामग्रींसंपाद्य श्मशानसमीपेगत्वा शुचिभूमौश्राद्धस्थानंप्रकल्प्य गोमयोदकाभ्यामुपलिप्य गौरमृत्ति कयाऽऽच्छाद्यतिलरविकिरणंकुर्यात् ततोनद्यादिकेस्नात्वाचरुश्रपणं कृत्वा सिद्धेऽन्नेतिलतैलेनदीपंप्रज्वाल्य स्थापयेत् ॥ ततः प्राङ्मुख उपविश्य आचम्य तूष्णींप्राणानायम्य कुशोपग्रहः ॥ अपवित्रः पवित्रोवा० पुंडरीकाक्षः पुनात्वितिजलेनश्राद्धसामग्रींस्वात्मानंचप्रोक्ष येत् ॥ ततोऽपसव्यंकृत्वा दक्षिणामुखः पातितवामजानुः ॥ कुशत्रयतिलजलान्यादाय ॥ अमुकगोत्रस्य अमुकप्रेतस्यप्रेतत्वनिवृत्तिपूर्वक सद्गतिप्राप्त्यर्थं अस्थिसंचयननिमित्तकश्राद्धमहंकरिष्ये इति संकल्प्य ॥ कुशबटुंनिधाय० ॥ इहलोकंपरित्यज्य गतोसिपरमांगतिम् ॥ मन सावायुरूपेण चटेत्वाहंनिमंत्रये ॥इति नियोजयेत्॥ततःकुशत्रयादीन्यादाय ॥ अमुकगोत्र अमुकप्रेत इदमासनं ते मयादीयते तवोपतिष्ठता मित्यासनार्थम् ऋजुकुशत्रयमुत्सृजेत् [ न मोटकरूपम् ] ततस्तिलान्विकीर्य एकस्मिन्पत्रपुटे पवित्रंधृत्वातत्रजलतिलगंधपुष्पाणिप्र क्षिप्य तदर्घपात्रंवामहस्तेकृत्वा पवित्रम् आसनसमीपेपलाशपत्रेधृत्वा ॥ अमुकगोत्र अमुकप्रेत एषते हस्तार्घोमयादीयतेतवोपतिष्ठता मितिपवित्रोपरि अर्घ्यंदत्त्वा अर्घपात्रं पवित्रयुतम् आसनवामपार्श्वेस्थापयेत् ( न न्युब्जम् ) ततोगंधादिकमासनेधृत्वा॥ अमुकगोत्राऽमुक प्रेत एतानिगंधपुष्पधूपदीपतांबूलवासांसितेमयादीयंतेतवोपतिष्ठंतामित्युत्सृजेत् ॥ ततोघृताक्तमन्नमुद्धृत्यपात्रेपरिविष्यजलेनाभिषिच्य ( नपात्रालंभागार्हो० नात्रपात्रालंभो नाशिषः प्रार्थयेदितिप्रचेतस्स्मरणात् ) तिलान्विकीर्य वामकरेणपात्रंस्पृशन् ॥ अमुकगोत्र अमुक प्रेत इदमन्नंघृताद्युपस्करसहितंतेमयादीयतेतवोपतिष्ठतामित्युत्सृजेत् ( नात्रपैतृकोजपः ॥ नपैतृकोजपः कार्यः इति प्रचेतस्स्मरणात् )



१ इदमेकोद्दिष्टं मंत्ररहितं कार्य्यम् ॥ मैथिलरुद्रधरेण श्राद्धविवेके समंत्रकमुक्तं तन्निर्मूलम् (तथा च हेमाद्र्यादित्यपुराणयोः) तिलमिश्रेषु दर्भेषु कर्त्ता वै दक्षिणामुखः॥ नामगोत्रप्रमाणेन दद्यात्पिंडं त्वमंत्रकम् ॥ अशुद्धस्त्रिषु वर्णेषु इदं दद्यान्न संशयः ॥

ततोऽन्नपात्रसमीपेपिंडदानार्थंसिकताभिः वेदींनिर्माय गोमयोदकेनोपलिप्य कुशत्रयास्तरणंकृत्वा पत्रपुटके जलतिलगंधपुष्पाणिक्षिप्त्वा पुटकं गृहीत्वा ॥ अमुकगोत्र अमकप्रेत अत्रावनेनिक्ष्वतेमयादीयते तवोपतिष्ठतामित्यवनेजनजलंकुशत्रयोपरिकिंचिद्दद्यात् ॥ ततो घृतमधुतिलयुक्तेनान्नेनपिंडंनिर्माय वामहस्तेकृत्वा दक्षिणहस्तेकुशत्रयादीन्यादाय अद्यामुकगोत्राऽमुकप्रेत अस्थिसंचयनिमित्तकश्राद्धे एष तेपिंडोमयादीयतेतवोपातिष्ठतामिति कुशोपरिवामान्वारब्धदक्षिणहस्तेनपिंडंदद्यात् ॥ ततोहस्तौप्रक्षाल्य ॥ अमुकगोत्र अमुकप्रेत अत्र प्रत्यवनेनिक्ष्वतेमयादीयतेतवोपातिष्ठतामिति पूर्ववत्प्रत्यवनेजनंदद्यात् ॥ ततः पिंडोपरिसूत्रंदत्त्वा ॥ अमुक० प्रेत अत्र पिंडे एतद्वासस्ते मयादीयते तवोपतिष्ठतामित्युत्सृजेत् ॥ ततः पिंडं गंधपुष्पधूपदीपतांबूलपूगीफलनैवेद्यादिभिः संपूज्य ॥ अमुकगोत्राऽमुकप्रेत अत्र पिंडे एतानि गंधपुष्पधूपदीपपूगीफलादीनितेमयादीयंतेतवोपतिष्ठंतामित्युत्सृजेत् ॥ ततः एकस्मिन्पत्रपुटे शिवाआपः सन्तु इतिजलं सौमनस्यमस्त्वितिपुष्पम् अक्षतंचारिष्टंचास्तु इतितिलांश्चदत्त्वा ॥ कुशत्रयादीन्यादाय ॥ अमुकगोत्रस्याऽमुकप्रेतस्ययद्दत्तमन्नपानादिकं तदुपतिष्ठतामित्यक्षय्योदकंदद्यात ॥ ततः सपवित्रकुशत्रयंपिंडोपरिनिधाय ॥ सतिलदुग्धेनजलेनधारांदद्यात् ॥ अनादिनिधनोदेवः शंखचक्रगदाधरः ॥ अक्षय्यःपुंडरीकाक्ष प्रेतमोक्षप्रदोभव ॥ १ ॥ अतसीपुष्पसंकाशं पीतवाससमच्युतम् ॥ येनमस्यंति गोविंदं नतेषां विद्यतेभयम् ॥ २ ॥ कृष्णकृष्ण कृपालुस्त्वमगतीनांगतिर्भव ॥ संसारार्णवमग्नानां प्रसीदपुरुषोत्तम ॥ ३ ॥ नारायणसुरश्रेष्ठ लक्ष्मीकान्तवरप्रद ॥ अनेनतर्पणेनाथ प्रेतमोक्षप्रदोभव ॥ ४ ॥ हिरण्यगर्भपुरुष व्यक्ताव्यक्तस्वरूपिणे ॥ अस्यप्रेतस्यमोक्षार्थं सुप्रीतोभवसर्वदा ॥ ५ ॥ इति पठित्वा अमुकगोत्र अमुकप्रेत अत्रपिंडेजलधारातेमयादीयतेतवोपातिष्ठतामिति दक्षिणाग्रांजलधारांदद्यात् ॥

ततो दक्षिणाद्रव्यंकुशत्रयादीनिचादाय ॥ अमुकगोत्रस्य अमुकप्रेतस्य कृतैतदस्थिसंचयनिमित्तकश्राद्धप्रतिष्ठार्थम् इमां रजतद
क्षिणांतन्मूल्योपकल्पितंवा द्रव्यम् अमुकगोत्रायामुकशर्मणे ब्राह्मणायदातुमहमुत्सृजे इतिदद्यात् ॥ ततः पिंडोद्धरणंचटविसर्जनं
चकृत्वा ॥ अनेनश्राद्धेन अमुकगोत्रस्यप्रेतस्यप्रेतत्वनिवृत्तिः सद्गतिप्राप्तिश्चभवतु इतिपठित्वापिंडंगवादिभ्योदत्त्वा कर्मपूर्त्तिका
मोविष्णुंस्मरेत् ॥ ततः श्राद्धवस्तूनिविप्रायदद्यात्॥जलेवाक्षिपेत्॥एवमस्थिसंचयनिमित्तकम् एकोद्दिष्टंविधायगंधपुष्पधूपदीपनैवेद्यादिकं
सर्वंगृहीत्वा श्मशानसमीपमागत्य चितायाउत्तरतउपविश्य ॥ क्रव्यादमुखेभ्योदेवेभ्योनमः ॥ इतिमंत्रेण श्मशानवासिदेवान्
गंधपुष्पधूपदीपादिभिः श्मशानेपूजयेत् ॥ ततोबलिदानम् ॥ तत्रतावदष्टौपात्राणिनानाविधफलमूलभक्ष्यभोज्यपानादिभिः पूर
यित्वाप्रत्येकं गंधपुष्पधूपदीपादिभिरभ्यर्च्यबलीन्दद्यात् ॥ तत्रमंत्रः ॥ येऽस्मिन्श्मशानेदेवाः स्युर्भगवंतःसनातनाः ॥ तेऽस्मत्सकाशा
द्गृह्णन्तु बलिमष्टाङ्गमक्षयम् ॥ प्रेतस्यास्यशुभाँल्लोकान्प्रयच्छंतुचशाश्वतान् ॥ अस्माकमायुरारोग्यं सुखंचददताक्षयम् ॥ इतिपठि
त्वा ॥ एषोऽष्टांगबलिः शंकरादिश्मशानवासिदेवताभ्योनमः ॥ इत्युत्तरस्यामेकंबलिंदत्त्वा ॥ एवंप्रदक्षिणक्रमेण अपरबलित्रयंपूर्वादिषु
दिक्षुदद्यात् ॥ ततस्तान्बलीन्क्रमेण क्षीरेणाभ्युक्ष्य शंकरादिदेवताः स्वीयंस्वीयंस्थानंगच्छंतु इतिविसृज्यततोऽपसव्यंकृत्वावाग्यतःक्षीरो
दकेनचितिंप्रोक्ष्य शमीपलाशशाखाभ्यांचितेर्भस्मापोह्यांगुष्ठकनिष्ठाभ्यां शिरसो वक्षसोः पाण्योः पार्श्वयोः पादयोश्च अस्थीन्यादाय पंच
गव्येनप्रोक्ष्य गंगोदकेनसुगंधवारिणाचप्रक्षाल्यगंधाद्यार्चितानि ॥ पलाशपुटेनिक्षिप्यपीतक्षौमवस्त्रेणावेष्टयमृन्मयेनूतनकुंभेनिधायशरावेण

१ अथ ब्रह्मपुराणे पिंडत्रयदानमुक्तम् ॥ एकंश्मशानवासिभ्यः प्रेतायमध्यमं तृतीयं तत्सखिभ्यश्च इतितद्यथाचारं ज्ञेयम् ॥

पिधायतद्भांडमरण्ये वृक्षमूलेवाशैवाल्युतगर्त्तेधारयेत् ॥ ततश्चितामस्मादिसर्व्वंनद्यादितोयेनिक्षिप्यचिताभूमिंगामयेनविलिप्य तत्र पूर्वो क्तप्रकारेणगंधादिपूजांकृत्वा बलिमंत्रेण बलिचतुष्टयंदद्यात् ॥ तान्बलीन्क्षीरेणाभ्युक्ष्य देवताविसृजेत् ॥ ततश्चिताभूमेराच्छादनार्थं लोकाचारात्कुटीं विश्रामार्थंवृक्षंवापाषाणकाष्ठादिभिः स्थानंकारयेत् ॥ ततोगृहमागत्यसचैलोबंधुभिः सहस्नायात् ॥ अथगंगायामस्थिक्षे पणविधिः ॥ तत्र कदाचित्तद्दिनेवा पुत्रपौत्रसहोदरादिः अस्थिकुंभमुत्पाट्यादायगंगां गत्वास्नात्वातान्यस्थीनि पंचगव्येनप्रोक्ष्य हिरण्यमु क्तारूप्यमृगचर्मप्रवालमध्वाज्यतिलैः संयोज्य मृत्पिंडपुटेनिधाय दक्षिणांदिशंपश्यन्॥ॐ नमोस्तुधर्मराजाय पितुःप्रेतत्वमुक्तये॥ सममेप्रीतः शुभंदद्यादस्मिल्लोकेपरत्रच ॥ इतिवदन् जलंप्रविश्य सममेप्रीतोऽस्तु इत्युक्त्वागंगाभसिनिक्षिपेत् ॥ ततः स्नात्वा जलान्निष्क्रम्य ॥ सूर्यायन म इति सूर्यंपश्यन् आचम्यविप्रमुख्यायथाशक्तिहिरण्यदक्षिणांदद्यात् ॥ तद्यथा ॥ ॐअद्यामुकगोत्रस्य अमुकप्रेतस्यस्वर्गलोकप्राप्त्यर्थं कृतैतदस्थिप्रक्षेपप्रतिष्ठार्थम् इदंहिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणात्वेन दातुमहमुत्सृजे इतिसंकल्प्यदद्यात् ॥ ततो गृहमागत्ययथाचारंश्राद्धतर्पणब्राह्मणभोजनादिकुर्यात् ॥ एवंकृतेप्रेतक्रियाकर्त्रोः स्वर्गः स्यात् ॥ एवंचमातृकुलपितृकुलवर्ज्यान्यकुलोत्थ स्यास्थिनयने धर्मबुद्ध्यादोषाऽभावः द्रव्यादिलोभेननयतश्चांद्रायणाच्छुद्धिः इत्यस्थिसंचयनविधिःसमाप्तः ॥छ॥ अथदशगात्रश्राद्धानि॥ तत्रप्रयोगः ॥ पुत्रादिर्ग्रामाद्बहिर्देवतायतने नदीतीरे अन्यतीर्थेवातडागादितीरेवाऽरण्ये गृहद्वारिवा शुचिदेशे यथाचारं यत्रेच्छाभव तितत्र प्रेतस्य मूर्द्धादिनिष्पत्त्यर्थं पिंडदानंकुर्य्यात् ॥ तत्रादौ नूतनमृन्मयभांडेननद्यादिकंजलमानीय स्नात्वा शुद्धवस्त्रेपरिधाय कुशो पग्रहः शुचिभूमौ पिंडदानस्थानाद्दैशान्यां दिशिअग्निंप्रज्वाल्य तत्रतंडुलप्रसृतिद्वयं प्रक्षाल्यसुशृतंपचेत् ॥ ततः आचम्य ॥

अद्येत्यादिदेशकालौसंकीर्त्य अपसव्यं कृत्वा दक्षिणाभिमुखउपविश्य पातितसजघनवामजानुः ॥ अद्यामुकगोत्रस्य अमुकप्रेतस्य प्रथमेहनि शिरोनिष्पत्त्यर्थम् अवयवश्राद्धमहंकरिष्ये इतिसंकल्प्य ॥ गौरमृत्तिकयापिंडार्थं दक्षिणप्लवंस्थानंनिर्माय गोमयोदकेनोपलिप्य तत्रदक्षिणाग्रंकुशत्रयास्तरणंकुर्यात् ॥ ततः पत्रपुटके जलतिलगंधपुष्पाणिकृत्वा तत्पुटकंवामहस्ते कृत्वा दक्षिणहस्ते ऋजुकुशत्रयतिलजलान्यादाय अद्यामुकगोत्र अमुकप्रेतशिरःपूरकप्रथमपिंडस्थाने अत्रावनेनिक्ष्वते मयादीयते तवोपतिष्ठतामिति कुशत्रयोपरि अवनेजनंदद्यात् ॥ ततस्तिलघृतमधुदुग्धसिक्तंतमेवपिंडं कुशत्रयादीनिचादाय ॥ अमुकगोत्र अमुकप्रेत शिरःपूरकएषप्रथमपिंडस्ते मयादीयतेतवोपतिष्ठातामितिकुशोपरि पिंडंदद्यात् ॥ ततः प्रत्यवनेजनदानम् ॥ अमुकगोत्रामुकप्रेत शिरःपूरकप्रथमपिंडे अत्रप्रत्यवनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिपिंडोपरिपूर्ववद्दद्यात् ॥ ततः प्रेतमुद्दिश्य तूष्णीमेवोर्णासूत्रं गंधपुष्पधूपदीपनैवेद्यतांबूलपूगीफलानिपिंडेदत्त्वा अमुक० प्रेत शिरःपूरकप्रथमपिंडे एतानि ऊर्णासूत्रगंधपुष्पधूपदीपनैवेद्यतांबूलानितेमयादीयंतेतवोपतिष्ठंतामित्युत्सृजेत् ॥ ततः पिंडार्चनविधेःपरिपूर्णतास्तु इतिपठित्वा ततस्ताम्रादिपात्रेजलदुग्धतिलगंधपुष्पाणिकृत्वा अमुकगोत्रप्रेतदाहजनिततृषोपशमनार्थम् एषतिलतोयांजलिस्तेमयादीयतेतवोपतिष्ठतामित्येकं त्र्यंवादशकंपिण्डोपरि अंजलीःदद्यात् ॥ ततस्तिलतोयपात्रं पिंडसमीपेधृत्वा अमुकगोत्रप्रेत एतत्तेतिलतोयपात्रंतेमयादीयते तवोपतिष्ठतामित्येकंतिलतोयपूर्णपात्रंदद्यात् ॥ ततः शेषजलेन पिंडोपरिजलधारांदद्यात् ॥ अनादिनिधनोदेवः शंखचक्रगदाधरः ॥ अक्षय्यःपुंडरीकाक्ष प्रेतमोक्षप्रदोभव ॥ १ ॥ अतसीपुष्पसंकाशं पीतवाससमच्युतम् ॥ येनमस्यंतिगोविंदं नतेषांविद्यतेभयम् ॥ कृष्णकृष्णकृपालुस्त्वमगती

नांगतिर्भव ॥ संसारार्णवमग्नानां प्रसीदपरमेश्वर ॥ ३ ॥ नारायणसुरश्रेष्ठ लक्ष्मीकान्तवरप्रद ॥ अनेनतर्पणेनाथ प्रेतमोक्षप्रदोभव ॥ ४ ॥ हिरण्यगर्भपुरुष व्यक्ताव्यक्तस्वरूपिणे ॥ अस्यप्रेतस्यमोक्षार्थं सुप्रीतोभवसर्वदा ॥ ५ ॥ इतिप्रार्थ्य काकेभ्योबलिंदद्यात् ॥ काकोसियमदूतोसि गृहाणबलिमुत्तमम् ॥ इति । यमद्वारेगतेप्रेते तमाप्यायितुमर्हसि ॥१॥ बलिंदत्त्वापिंडमुदकेक्षिपेत् ॥ गवादिभ्योवादद्यात् ॥ ततः पुनः स्नात्वागृहमागत्यगोग्रासंदत्त्वा ब्राह्मणमेकंभोजयेत् ॥ इतिप्रथमदिनकृत्यम् ॥ एवमेवद्वितीयादिदिवसेषु द्वितीयादिपिंडदानम् ॥ (तत्र विशेषः) ॥ द्वितीयदिने अमुकगोत्र अमुकप्रेत कर्णाक्षिनासिकपूरकोद्वितीयः पिंडस्ते मयादीयतेतवोपतिष्ठताम् ॥ अमुकगोत्र अमुकप्रेत द्वितीयदिनेद्वेतिलतोयांजली द्वेतिलतोयपात्रेचतेमयादीयेतेतवोपतिष्ठेतामिति० २ ॥ तृतीयदिने गलांसभुजवक्षःपूरकस्तृतीयः पिंडस्तेमयादीयतेतवोपतिष्ठताम् ॥ अमुक० प्रेततृतीयदिनेत्रयस्तिलतोयांजलयस्तेमयादीयंतेतवोपतिष्ठंताम् ॥ अमुक०प्रेत त्रीणिं तिलतोयपात्राणि ते मयादीयन्ते०३ ॥ चतुर्थदिने० अमुक० प्रेत नाभिलिंगगुदपूरकश्चतुर्थःपिंडस्तेमयादीयते० ॥ अमुक० प्रेत चत्वारस्तिलतोयांजलयस्तेमयादीयन्ते० ॥ अमुक० प्रेतचत्वारितिलतोयपात्राणितेमयादीयन्ते० ४ ॥ पंचमदिने० ॥ अमुक० प्रेत पंचमदिने जानुजंघापादपूरकः पंचमः पिंडस्तेमया० ॥ अमुक० प्रेतपंचतिलतोयांजलयस्तेमया० ॥ अमुक० प्रेत पंचतिलतोयपात्राणिते मयादीयंते ०५॥षष्ठदिने० ॥ अमुक० प्रेत सर्वमर्मपूरकः षष्ठः पिंडस्तेमयादीयते०॥ अमुक०प्रेत षट्तिलतोयांजलयस्ते० ॥ अमुक० प्रेत०षट्तिलतोयपात्राणितेमयादीयंते० ६॥ सप्तमदिने०अमुक० प्रेत सर्वनाडीपूरकः सप्तमः पिंडस्तेमया० ॥ अमुक० प्रेत सप्त तिलतोयांजलयस्तेमयादीयन्ते० ॥ अमुक० प्रेतसप्ततिलतोयपात्राणितेमयादीयंते० ७ ॥ अष्टमदिने प्रेअमुक० प्रेत दंतलोमादिपूरकोऽष्टमःपिंडस्ते

मयादीयते० ॥ असुकप्रेत अष्टौतिलतोयांजलयस्तेमयादीयंते० ॥ असुक० प्रेत अष्टौ तिलतोयपात्राणितेमयादीयंते० ॥ ८ ॥ नवमदिने० ॥ असुक० प्रेत वीर्यपूरको नवमः पिंडस्तेमयादीयते० ॥ असुक० प्रेत नवतिलतोयांजलयस्तेमयादीयंते० ॥ असुक० प्रेत नवतिलतोयपात्राणितेमयादीयंतेतवोपतिष्ठंताम्० ९ ॥ दशमादिने० असुक० प्रेत क्षुत्पिपासापूरकोदशमः पिंडस्तेमयादीयते० ॥ असुक० प्रेत दशतिलतोयांजलयस्तेमयादीयन्ते० ॥ असुक० प्रेत दशतिलतोयपात्राणितेमयादीयंतेतवोपतिष्ठंतामिति दद्यात् ॥ १० ॥ अन्यत्सर्वसमानम् ॥ त्र्यहाशौचेतुप्रथमदिवसेत्रीन्पिंडान्द्वितीयदिने चतुरः तृतीयदिनेपि त्रीन्पिपिंडान्दद्यात्॥सद्यःशौच पक्षेएकस्मिन्नेवदिनेदशपिंडान्दद्यात् ॥ पाकाभावेफलमूलशाकगुडदुग्धसक्तुयवपिष्टानामन्यतमेनापिंडादेयाः ॥ येनद्रव्येणप्रथमःपिंडोदत्तस्तत्सजातीयेनएवपिंडान्तरंदद्यात् ॥ येनपुत्रादिनाप्रथमः पिंडोदत्तःसएवपिंडान्तरमपिदद्यात् ॥ अत्रकेचिन्नवश्राद्धंविषमदिवसेदशाहमध्येकुर्वंति॥तत्राधिकफलंभवति ॥ अकरणेप्रत्यवायोनास्ति इच्छाचेत्कर्त्तव्यम्॥विधिस्तुपर्व्ववत् ॥ इतिदशगात्रश्राद्धानि॥ अथाशौचान्तदिनकृत्यम् ॥ आशौचान्तदिनेदशमंपिंडंसमाप्यप्रेतस्पृष्टवासांसिअन्त्यानामाश्रितानांचदत्वामृन्मयपाकादिभाण्डानित्यक्त्वागृहशुद्धिंविधायस्नात्वाकेशलोमनखान्यथाचारं वापयित्वा तिलगौरसर्षपकल्केनशिरश्चोन्मृज्यशुद्धस्नानंचकृत्वावासोयुगंपरिधायआचम्यवाग्यतो वृषभं गां सुवर्णं गोरोचनं दधि दूर्वां च स्पृष्ट्वा ब्राह्मणोऽग्निं क्षत्रियोवाहनायुधं वैश्यःप्रतोदंरश्मीन्वा शूद्रोयष्टिंच संस्पृश्यशुद्धोभवेत् ॥ अथैकादशाहदिनकर्म ॥ तत्रतावद्वृषोत्सर्गः ॥ तस्यप्रयोगः ॥ तत्रादौप्रागुदक्प्रवणेविविक्ते निर्जनेवनेगोमध्येवत्सतरीचतुष्टयेन द्वाभ्यामेकेनवासहितंत्रिहायनं मनोज्ञंदर्शनीयमुक्तगुणविशिष्टंवृषभंवस्त्रमाल्यकिंकिणीघंटाहेमपट्टिकादिभिर्वृषोचितभूषणैर्भूषयित्वा

तत्रानयेत् ॥ ततः आचम्य प्राणानायम्य पूर्वाभिमुखः कुशत्रयतिलजलान्यादायदेशकालौसंकीर्त्य ॥ अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तिपूर्वकाक्षय्यस्वर्गकामोमरणदिनादेकादशेह्निवृषोत्सर्गंकरिष्ये ॥ ( कार्त्तिक्यांपौर्णमास्यामाश्वयुज्यांचैत्र्यां वा रेवत्यां वृषोत्सर्गकरणे तुमातृपूजापूर्वकमाभ्युदयिकंकृत्वा ॐ अद्यकार्त्तिक्याममुकगोत्रस्यास्मत्पितुरमुकशर्मणः स्वर्गलोकप्राप्तिकामोवृषोत्सर्गंकरिष्ये इत्येवंसंकल्पः कर्तव्यः॥सपिंडनात्प्राक्एकादशाहेवृषोत्सर्गकरणेवृद्धिश्राद्धंनकुर्यात्॥सपिंडनंविनाकाम्याभ्युदयिकयोर्निषेधात् ) इतिसंकल्प्य ॥ गणेशंसंपूज्य ॥ ईशान्यांकलशंस्थापयेत् ॥ तद्यथा ॥ ॐभूरसिभूमिरसीतिभूमिंस्पृष्ट्वा ॥ॐ धान्यमसिधिनुहि इतिधान्यंक्षिप्त्वा तस्योपरि ॐआजिघ्रकलशमितिमंत्रेणताम्रमयंमृन्मयंवाकलशंस्थापयेत् ॥ ततः ॐवरुणस्योत्तम्भनमसीतिजलेनापूर्य ॥ ॐयाऽओषधीःपूर्वाजाता इतिसर्वौषधीः॥ॐकाण्डात्काण्डादितिदूर्वाः॥ॐअश्वत्थेवोनिषदनमितिपंचपल्लवान्॥ॐस्योनापृथिवीनो इतिसप्तमृदः ॥ ॐयाःफलिनीरितिपूगीफलम्॥ॐपरिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे इतिपंचरत्नानि॥ॐहिरण्यगर्भइतिहिरण्यंचक्षिपेत् ॥ ततः ॐवसोःपवित्रमसीतिवस्त्रंरक्तसूत्रंवावेष्टयेत्॥ ॐपूर्णादर्विपरापत इतितंडुलपूरितपात्रंन्यस्य॥ॐ मनोजूतिर्जुषतामितिप्रतिष्ठांकृत्वा तत्र ॐ तत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशंसमानऽआयुःप्रमोषीः ॥ १ ॥ ॐ भूर्भुवः स्वःवरुण इहागच्छइहतिष्ठ वरुणंसांगमावाहयामि इत्यावाह्य ॐवरुणायनमः इतिषोडशोपचारैः संपूज्य ॐ कलशस्यमुखेविष्णुरित्यादिप्रार्थयेत् ॥ ततस्तदुपरिताम्रमयींरुद्रमूर्तिम् अग्न्युत्तारणपूर्वकंरुद्राध्यायंजपन्स्थापयेत ॥ अथावाहनम् ॥ ॐनमस्तेरुद्रमन्यवऽउतोतऽ

इषवेनमः बाहुभ्यामुततेनमः १ ॐ भूर्भुवःस्वः रुद्र इहागच्छइहतिष्ठ रुद्रमावाहयामि ॥ इत्यावाह्य ॥ ॐ मनोजूतिर्जुषतामितिप्र
तिष्ठाप्य ॐरुद्रायनमः ॥ इतिषोडशोपचारैःपूजयेत् ॥ अथाग्निस्थापनम् ॥ तत्रादौ हस्तेपुष्पचंदनतांबूलवासांस्यादाय देशकालौसंकीर्त्य
अद्यकर्त्तव्यवृषोत्सर्गाङ्गभूतहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्म्मकर्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्म
त्वेनत्वामहंवृणेइतिब्रह्माणंवृणुयात ॥ ॐ वृतोस्मीतिप्रतिवचनम् ॥ यथाविहितंकर्म्मकुरुइतियजमानोवदेत् ॥ ॐ करवाणीतितत्प्रतिवच
नम् ॥ पुनः पुष्पचंदनतांबूलवासांस्यादाय ॐ अद्यकर्त्तव्यवृषोत्सर्गाङ्गभूतहोमकर्म्मकर्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिःपुष्पचंदनतांबू
लवासोभिर्होतृत्वेनत्वामहंवृणे इतिहोतारंवृणुयात्॥ ॐ वृतोस्मीतिप्रतिवचनम्॥ ॐयथाविहितंकर्म्मकुरुइतिवदेत् ॥ ॐकरवाणीतिप्रतिवच
नम् ॥ ततोहोतारुद्रकलशात्पश्चिमेवालुकाभिर्हस्तमात्रंचतुरस्रंस्थंडिलंकृत्वादेशकालौसंकीर्त्य॥ ॐअद्यकर्त्तव्यवृषोत्सर्गकर्मणिपंचभूसंस्का
रपूर्वकमग्निप्रतिष्ठापनंकरिष्ये ॥ इतिसंकल्प्यस्थंडिलंकुशैःपरिसमुह्य ॥ तान्नैशान्यांपरित्यज्यगोमयोदकेनोपलिप्यस्रुवमूलेनप्रादेशमात्रमुत्त
रोत्तरक्रमेणप्रागग्रं त्रिरुल्लिख्य उल्लेखनक्रमेण अनामिकाङ्गुष्ठाभ्यांमृदंसमुद्धृत्य उदकेनाभ्युक्ष्य कांस्यपात्रेणाग्निमुपसमाधायॐ अग्निंदूतं
पुरोदधे हव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिह इतिमंत्रेणस्थंडिलेस्थापयेत् ॥ततः अस्यानीतपात्रेसाक्षतोदकंनिषिच्याऽग्निंध्यायेत्॥ॐ
चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽआविवेश ॥ १ ॥ अग्नेवैश्वानर शांडि
ल्यगोत्रभूमिर्मातावरुणःपितामेषध्वजप्राङ्मुखममसम्मुखोभव ॥ इति रुद्रनामाग्निंप्रतिष्ठाप्य प्रोक्षितेंधनानिनिक्षिपेत् ॥ ततोऽग्नेर्दक्षिणतः

शुद्धमासनंविधाय ॥ तदुपरिप्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीयतत्रउदङ्मुखंब्राह्मणं तदभावे पंचाशत्कुशनिर्मितंवा ॥ ॐअस्मिन्वृषोत्सर्गकर्मणित्वंमब्रह्माभव इत्यभिधाय उपवेशयेत् ॥ भवानीतिप्रतिवचनम्॥ततः प्रणीतापात्रंपुरतःकृत्वा जलेनापूर्य्य कुशैरा च्छाद्यब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः कुशोपरिनिदध्यात् ॥ ततः परिस्तरणम् ॥ बर्हिष (६४)श्चतुर्थभागमादायउत्तराग्रैश्चतुर्भिर्दर्भैः आग्ने यादीशानांतामितिप्रच्यात् पूर्वाग्रनैर्ऋत्यादाग्नेयांतंदक्षिणस्याम् उत्तराग्रैर्नैर्ऋत्याद्वायव्यांतंप्रतीच्याम् ॥ पुनः पूर्वाग्रैर्वायव्यादीशानांतमुदी च्यां च परिस्तरणंकृत्वा॥ ततोग्नेरुत्तरतः पश्चिमदिशिपवित्रच्छेदनार्थंकुशत्रयम् पवित्रकरणार्थं साग्रमनन्तगर्भंकुशपत्रद्वयम् प्रोक्षणीपात्रम् आज्यस्थाली चरुस्थालीसंमार्जनार्थंकुशत्रयम् उपयमनार्थंकुशत्रयंप्रादेशमात्राःसमिधस्तिस्रःपालाश्यःस्रुवःखादिरः आज्यंगव्यम् तंडुलान् दुग्धं तंडुलपिष्टम् तंडुलाद्यन्नपूर्णपात्रम् यथाशक्तिहिरण्यादिद्रव्यम् ॥ ततःपवित्रच्छेदनकुशानांपूर्वपूर्वदिशिक्रमेणासादनीयम्॥ततोवाग्यतः आसादितकुशपत्रद्वयमादाय ॥ अग्रतःप्रादेशमात्रंप्रमाप्यपवित्रच्छेदनकुशैःपवित्रेछित्त्वातानपास्य पवित्राभ्यां प्रणीतोदकमुत्पूय सप वित्रकरेणप्रणीतोदकंत्रिःप्रोक्षण्यांनिधाय ॥ प्रोक्षण्युदकंभूमौत्रिः क्षिप्त्वापवित्रेप्रोक्षण्यांनिधाय प्रणीतोदकेनप्रोक्षणीप्रोक्षणं प्रोक्षणी जलेनासादितवस्तुसेचनम् ॥ अग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिधाय आज्यस्थाल्यामाज्यंनिरूप्य चरुस्थाल्यां तंडुलान् निक्षिप्य प्रणीतोदकेनतांस्त्रिः प्रक्षाल्य तत्रप्रणीतोदकंदुग्धंचप्रक्षिप्य आज्यं पायसंचरुं श्रपणार्थं युगपदग्नौ निधाय तृणंप्रज्वाल्यप्रद क्षिणमाज्यचर्व्वोः समंताद्भ्रामयित्वावह्नौतत्प्रक्षिप्य दक्षिणहस्तेनस्रुवमादायाधोमुखमग्नौतापयित्वा सव्येपाणौकृत्वादक्षिणहस्ते नसंमार्जनकुशानामग्रैरग्रंमध्यैर्मध्यंमूलैर्मूलंस्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्यपुनः प्रतप्य स्रुवंदक्षिणतोनिदध्यात् ॥ ततः स्वयमाज्यंच

रुंच उद्वास्य स्वपुरत आज्यंतदुत्तरतश्चरुंनिधाय आज्यंप्रोक्षणीवदुत्पूय अवेक्ष्यसत्यपद्रव्येतन्निरसनं पुनःप्रोक्षण्युत्पवनम् ॥ तत उत्थाय उपयमनकुशान्वामहस्तेकृत्वाप्रजापतिंमनसाध्यात्वा तूष्णीमग्नौघृताक्ताः समिधस्तिस्रोऽग्नौप्रक्षिपेत् ॥ ततः उपविश्य ॥ सपवित्रप्रोक्षण्युदकेनाग्निंपर्युक्ष्यप्रणीतापात्रेपवित्रेनिधाय सजघनंदक्षिणजानु निपात्य कुशाग्रेणब्रह्मणान्वारब्धः सुसमिद्धतमेऽग्नौ आज्येनजुहुयात् ॥ तत्रहोमः ॥ ॐइहरतिःस्वाहा ॥ इदमग्नयेनमम ॥१॥ ॐइहरमध्वर्ठस्वाहा॥इदमग्नये० ॥२॥ ॐइहधृतिःस्वाहा॥इदमग्नये०॥ ॥ ३ ॥ ॐइहस्वधृतिःस्वाहा ॥ इदमग्नये०॥ ४ ॥ उपसृजंधरुणंमात्रेधरुणोमातरंधयन्स्वाहा॥इदमग्नये० ॥५॥ ॐरायस्पोषमस्मासुदीधरत्स्वाहा॥इदमग्नयेनमम॥६॥ततःअग्नावुत्तरतःॐप्रजापतयेस्वाहा॥इदंप्रजापतयेनमम॥१॥अग्नौदक्षिणतःॐइंद्रायस्वाहा इदमिंद्रा०॥२॥उत्तरपूर्वार्द्धे ॐअग्नयेस्वाहा इदमग्नये० ॥३॥ दक्षिणपूर्वार्द्धे ॐसोमायस्वाहा इदंसोमाय०॥४॥ इत्याधारावाज्यभागौहुत्वाऽग्निंसंपूज्य पायसमादाय अनन्वारब्धेन संस्रवंविनैवजुहुयात्॥ॐअग्नयेस्वाहा इदमग्नये०॥१॥ॐरुद्रायस्वाहा इदंरुद्राय०॥२॥ॐशर्वायस्वाहा इदंशर्वाय०॥३॥ ॐ पशुपतयेस्वाहा इदंपशुपतये० ॥४॥ ॐउग्रायस्वाहा इदं०॥५॥ ॐअशनयेस्वाहा इदं०॥६॥ ॐभवायस्वाहा इदं० ॥७॥ ॐमहादेवायस्वाहा इदं०॥८॥ ॐ ईशानायस्वाहा इदमीशानायनमम ॥ ९ ॥ इतिहुत्वा ॥ पिष्टकेन ॐ पूषागा अन्वेतुनः पूषारक्षत्वर्वतः ॥ पूषावाजंसंनोतुनः स्वाहा ॥ इदंपूष्णेनमम ॥ १ ॥ ततोब्रह्मणान्वारब्धःपायसपिष्टकाभ्याम् ॐ अग्नये स्विष्टकृतेस्वाहा इदमग्नये स्विष्टकृतेनमम इतिजुहुयात् ॥ ततःआज्येन ॐभूःस्वाहा इदंभूःअग्नये ॥१॥ ॐभुवःस्वाहा इदंभुवः वायवे ॥२॥ ॐस्वः स्वाहा इदंस्वः सूर्य्याय ॥३॥

ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान् देवस्य हेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषा ᳪ सि प्रमुमुग्ध्यस्मत्स्वाहा ॥ इदमग्नीवरुणाभ्याम् ॥ ४ ॥ ॐ सत्वन्नोऽअग्नेऽवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ ॥ अवयक्ष्वनो वरुण ᳪ रराणो वीहि मृडीक ᳪ सुहवोनऽएधि स्वाहा ॥ इदमग्नीवरुणाभ्याम् ॥ ५ ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्त्यमित्त्वमयाऽअसि ॥ अयानो यज्ञं वहास्ययानो धेहि भेषज ᳪ स्वाहा इदमग्नये ॥ ६ ॥ ॐ येते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः ॥ ७ ॥ ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यम ᳪ श्रथाय ॥ अथा वयमादित्य व्रते तवानागसोऽअदितये स्याम स्वाहा ॥ इदं वरुणाय ॥ ८ ॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये नमम ॥ ९ ॥ इति हुत्वा स्थंडिलपरितो दिक्पालेभ्यो माषभक्तबलीन्दद्यात् ॥ ततः संस्रवप्राशनम् आचमनं च कृत्वा ॥ ॐ अद्य कृतैतद्वृषोत्सर्गहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ इति ब्रह्मणे पूर्णपात्रं दद्यात् ॐ स्वस्तीति प्रतिवचनानन्तरं ब्रह्मग्रंथिविमोकः ॥ ततो होत्रे सुवर्णं दक्षिणां दत्त्वा ॐ सुमित्रियानऽआपऽओषधयः सन्तु इति पवित्राभ्यां जलमानीय तेन शिरः संमृज्य ॥ ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः इत्यैशान्यां प्रणीतान्युब्जीकरणम् ॥ पवित्रे अग्नौ प्रतिपत्तिः ॥ ततस्तरणक्रमेण बर्हिरुत्थाप्य वह्नौ क्षिपेत् ॥ ततः ॐ नमस्ते रुद्र मन्यव इत्यारभ्यासमाप्तेः रुद्राध्यायं जपित्वा

१ अत्र पूर्णाहुतिहोमो बर्हिर्होमश्च कृताकृतः ॥ केचिन्मैथिलग्रंथेषूक्तत्वात्कात्यायनसूत्रादावनुक्तत्वात् ॥ विवाहादिक्रियायां च शालायां वास्तुपूजने ॥ नित्यहोमे वृषोत्सर्गे पूर्णाहुतिं न कारयेदिति प्रयागरत्ने निषिद्धत्वाच्च विकल्पः ॥

( रुद्रजपाकरणेप्रत्यवायोभवति)आचार्यः कुंकुमेन वृषस्यदक्षिणपार्श्वेत्रिशूलं[1] वामपार्श्वे चक्रमथवा वामेत्रिशूलंदक्षिणेचक्रंयथाचारंविलिख्य लोहकारमाहूय अंकयित्वा ततोवत्सतरीसहितंवृषभम्॥ हिरण्यवर्णाः शुचयः पावकायासुजातः कश्यपोयास्विंद्रः॥याऽअग्निंगर्भंदधिरेविरूपास्तानऽआपः शंस्योनाभवंतु॥१॥यासां राजावरुणोयातिमध्येसत्यानृतेऽअवपश्यन्जनानाम्॥मधुश्चुतः शुचयोयाःपावकास्तानऽआपः शंस्योनाभवन्तु॥२॥यासांदेवादिविकृण्वंतिभक्षंयाऽअंतरिक्षेवहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानऽ आपः शंस्योनाभवन्तु ॥३॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वाँ२ऽअग्नीँरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ ४ ॥ इति चतसृभिः ॥ ॐशन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शंय्योरभिस्रवंतुनः ॥ १ ॥ इत्यनेनचस्नापयित्वा लोहवंटानूपुरकनकपट्टिकादिभिः सर्वानलंकृत्य सावित्रीमघमर्षणंरुद्राध्यायं पुरुषसूक्तम् ॐयद्देवादेवहेडनंदेवासश्चकृमावयम्॥अग्निर्मातस्मादेनसोविश्वान्मुंचत्वंहसः॥१॥यदिदिवायदिनक्तमेनांसिचकृमावयम्॥वायुर्मातस्मादेनसोविश्वान्मुंचत्वंहसः २॥यदिजाग्रद्यदिस्वप्नएनांसिचकृमावयम्॥सूर्य्योमातस्मादेनसो विश्वान्मुंचत्वंहसः३इतिऋक्त्रयम्॥कूष्मांडसूक्तसंज्ञकंजपेत्॥ततोवृषभस्यदक्षिणकर्णे ॐ पितावत्सानांपतिरघ्न्यानामथोपितामहतांगर्गाणांवत्सो जरायुः प्रतिधुक्पीयूषऽआयुष्याघृतंतदस्यरेतः ॥ १ ॥ ॐ वृषोहिभगवान्धर्मश्चतुष्पादः प्रकीर्तितः ॥ वृणोमि

१ अष्टांगुलं भवेच्चक्रं त्रिशूलं द्वादशांगुलं ॥ तर्जन्यास्तु प्रमाणेन दाहयित्वा जपेत्ततः ॥ इति क्षिपेत्त्यजेदिति ॥

तमहंभक्त्यासमारक्षतुसर्वतः ॥ २ ॥ इतिमंत्रद्वयंजपित्वा उदङ्मुखः सव्येनवृषपुच्छंगृहीत्वा कुशत्रयतिलजलान्यादाय ॥ देश कालौ संकीर्त्य० ॐ अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्वविमुक्तिपूर्वकाक्षय्यस्वर्गलोकप्राप्तिकामः एनंवृषं रुद्रदैवतं यथाशक्त्यलं कृतंगंधपुष्पाद्यर्चितं त्रिशूलचक्रांकितंवत्सतरीयुतम् अहमुत्सृजामि ॐ एतंयुवानंपतिंवोददामि तेनक्रीडंतीश्चरथप्रियेण मानः साप्यजनुषासुभगारायस्पोषेणसमिषामदेम इत्युक्त्वासतिलमुदकंभूमौनिक्षिपेत् ॥ इत्युत्सृज्यचैशान्यांदिशिपंचपदानिचालयेत् ॥ ततो वत्सतरीसहितं वृषभम् ॐ वत्सतरीसहितायवृषभायनमः इतिषोडशोपचारैः संपूज्य तासां मध्यगतं वृषभमभिमंत्रयेत् ॥ तत्रमंत्राः ॥ ॐ मयोभूरभिमांव्वाहिस्वाहामारुतोसिमरुतांगणः ॥ शंभूर्म्मयो भूरभिमांव्वाहिस्वाहावस्यूरसिंदुवस्वान् ॥ छंभूर्म्मयोभूरभि माव्वाहिस्वाहा ॥ १ ॥ यास्तेऽअग्नेसूर्य्येरुचोदिवमातन्वन्तिरश्मिभिः ॥ ताभिर्न्नोऽअद्यसर्व्वाभीरुचेजनायनस्कृधि यावो देवाः सूर्य्ये रुचो गोष्वश्वेषुयारुचः इंद्राग्नीताभिः सर्व्वाभीरुचंन्नोधत्तबृहस्पते ३ रुचंन्नोधेहिब्राह्मणेषुरुचᳬराजसुनस्कृधिरुचंव्विश्येषुशूद्रेषुमयिधे हिरुचारुचम् ॥ २ ॥ तत्त्वांयामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणेहबोध्युरुशᳬस समानऽआयुःप्रमोषीः ॥ ॥ ३ ॥ स्वर्णघर्म्मः स्वाहास्वर्णार्कः स्वाहास्वर्णशुक्रः स्वाहा स्वर्णज्योतिः स्वाहा स्वर्णसूर्य्यः स्वाहा ॥ ४ ॥ इति ततोऽपसव्यंकृत्वा दक्षिणामुखः पातितवामजानुः ॥ यवतिलवृषपुच्छमोटकादीन्यादाय ॐ स्वधापितृभ्यो मातृभ्यो बंधुभ्यश्चापितृप्तये ॥ मातृपक्षाश्चयेके चिद्येचान्येपितृपक्षजाः ॥ गुरुश्वशुरबंधूनां येकुलेषुसमुद्भवाः ॥ येप्रेतभावमापन्ना येचान्येश्राद्धवर्जिताः ॥ वृषोत्सर्गेणतेसर्वे लभंतांप्रीतिमु

त्तमामितिमंत्रेणांजलित्रयंदद्यात् ॥ ततोदाताब्राह्मणानाहूयवक्रोक्तिभिः पदैः॥ नचाज्यंनचतत्क्षीरं पातव्यंकेनचित्क्वचित्॥नवाह्योसौवृषश्चै
षामृतेगोमूत्रगोमये ॥ १ ॥ इतिश्रावयेत् ॥ ततः पायसंश्रपयित्वात्रिप्रभृतीन्यथाशक्तियथासंभवं ब्राह्मणान्भोजयेत् ॥ ततो बहुतोय
तृणेऽरण्ये अथवाबहुगोधनसंकुलेगोकुलेवत्सतरीयुतोगोपतिः क्षेपणीयः ॥ निर्गतेगोपतौविप्रेभ्योदक्षिणांरुद्रकुंभंचदत्त्वाविष्णुंस्मरेत् ॥ एवं
वृषोत्सर्गविधिंनरोयः करोतिभक्त्यानिजपूर्वजानाम् ॥ उद्धृत्यतान्दुर्गतिपंकमग्नान्स्वयंसलोकंसमुपैतिशंभोः॥इतिवृषोत्सर्गपद्धतिःसमाप्ता॥
अथगोदानविधिः ॥ तत्र आशौचांतेद्वितीयेह्नि पुण्यदेशेयथोक्तलक्षणवतीं कपिलांगांप्राङ्मुखीमवस्थाप्य ॥ यथोक्तलक्षणंस
त्पात्रंतदभावे अनिषिद्धब्राह्मणम् उपवेश्य स्वयंगोपुच्छदेशे प्राङ्मुखः कुशत्रयतिलजलान्यादाय ॥ अद्येत्यादिदेशकालौसंकीर्त्य ॥
अद्यैकादशेह्नि अमुकगोत्रस्य अमुकप्रेतस्यस्वर्गकामोगोदानमहंकरिष्ये॥ तदंगतयागोब्राह्मणस्यचपूजनंकरिष्ये॥इतिसंकल्प्य ब्राह्मणंपाद्या
दिभिः संपूज्य हस्ते पुष्पचंदनतांबूलवासांस्यादायकरिष्यमाणगोदानार्थमनेनद्रव्येणत्वामहंवृणे इतिवृणुयात् ॥ वृतोस्मीतिप्रतिवचन
म् ॥ अथगोपूजनम् ॥ ॐ आवाहयाम्यहंदेवीं त्रैलोक्येषुचमातरम् ॥ यस्याः शरणमाविष्टः सर्वपापैःप्रमुच्यते ॥ इत्यावाहनम् ॥
त्वंदेवीत्वंजगन्माता त्वमेवासिवसुंधरा ॥ सावित्रीत्वंचगायत्री गंगात्वंचसरस्वती ॥ तृणानिभक्षसेनित्यममृतंस्रवसेप्रभो ॥ भूत
प्रेतपिशाचांश्च पितृदैवतमानुषान् ॥ सर्वांस्तारयसेदेवि नरकात्पापसंकटात् ॥ ॐ भूर्भुवः स्वः धेनोइहागच्छइहतिष्ठ ॥ इतिप्रतिष्ठाप्य ॥
ॐ सर्वदेवप्रियंदेवि चंदनंमलयोद्भवम् ॥ कस्तूरीकुंकुमाढ्यंच गोगंधःप्रतिगृह्यताम् ॥ इतिगंधम् ॥ १ ॥ ऐरावतकुलेजाता शतक्रतुप्रिया ॥१६
सदा ॥ यालक्ष्मीः सर्वभूतानां याचदेवेष्ववस्थिता ॥ धेनुरूपेण सादेवी ममपापंव्यपोहतु ॥ इतिपुष्पाणिचनिवेदयेत् ॥२॥ अथांगपूजा ॥

ॐ आस्यायनमः ॥ ॐ शृंगाभ्यांनमः ॥ ॐपृष्ठाभ्यांनमः ॥ ॐपुच्छायनमः ॥ ॐपूर्वपद्भ्यांनमः ॥ ॐपश्चिमपद्भ्यांनमः ॥ ॐवनस्पतिरसोद्भूतो गंधाढ्योगंधउत्तमः ॥ आघ्रेयःसर्वदेवानां धूपोयंप्रतिगृह्यताम् ॥ इतिधूपः ॥ ३ ॥ ॐ साज्यंचवर्तिसंयुक्तं वह्निनायोजितं मया ॥ दीपंगृहाणसुरभे मयादत्तंहिभक्तितः ॥ इतिदीपम् ॥ ४ ॥ वैष्णविसुरभेमातर्नित्यंविष्णुपदेस्थिते ॥ नैवेद्यंहिमयादत्तं गृह्यतांपापहारिणि ॥ इतिनैवेद्यम् ॥ ५ ॥ आच्छादनंचकौशेयं शुद्धंचैवसुनिर्मलम् ॥ सुरभ्यैदीयमानंतु प्रीयतांकेशवःसदा ॥ इतिवस्त्रम् ॥ ६ ॥ यत्तेमयार्पितं शुद्धं घंटाचामरसंयुतम् ॥ सुरभेतद्गृहाणेदं मुनित्रिदशवंदिते ॥ इतिघंटाचामरम् ॥ ७ ॥ एवंगंधादिभिः संपूज्य प्रदक्षिणां कृत्वा उदङ्मुखोगोपुच्छंगृहीत्वा कुशत्रययवतिलजलैस्तर्पणंकुर्यात् ॥ (सव्यम्) ॐगणपतिस्तथाब्रह्मा केशवोरुद्रदेवताः ॥ लक्ष्मीः सरस्वतीचैव येचान्येचनवग्रहाः ॥ १ ॥ तेसर्वेतृप्तिमायान्तु गोपुच्छोदकतर्पणैः ॥ देवाधिदेवताः सर्वास्तथाप्रत्यधिदेवताः ॥ २ ॥ नक्षत्रवसवोरुद्रा विश्वेदेवामरुद्गणाः ॥ तेसर्वेतृप्तिमायांतु गोपुच्छोदकतर्पणैः ॥ ३ ॥ किन्नराश्चपिशाचाश्च यक्षगंधर्वराक्षसाः ॥ दैत्याश्चदानवाश्चैव येचान्येप्सरसांगणाः ॥ ४ ॥ तेसर्वेतृप्तिमायांतु गोपुच्छोदकतर्पणैः ॥ पुलस्त्यःपुलहश्चैव दत्तात्रेयोथभार्गवः ॥ ५ ॥ वसिष्ठांगिरसावापि कश्यपश्चैवकाश्यपाः ॥ तेसर्वेतृप्तिमायान्तु गोपुच्छोदकतर्पणैः ॥ ६ ॥ ऋषयोमनवोदेवा अधस्थाभूमिदेवताः ॥ [illegible]धाराजलाधाराः साद्ध्यायक्षास्तथैवच ॥ तेसर्वेतृप्ति० ॥ ७ ॥ सरितःसागराश्चैव पर्वतावनमेवच ॥ लताऔषधयश्चैव मृगा[illegible] ॥ तेसर्वेतृप्ति० ॥ ८ ॥ स्वाहास्वधातथालक्ष्मीर्वृद्धिः श्रद्धासरस्वती ॥ मेधाप्रीतिस्तथालज्जा कीर्तिश्चदशमीतथा ॥ ताःसर्वास्तृप्ति० ॥ ९ ॥ विश्वाद्याश्चैवयेदेवा येचवैकुंठवासिनः॥ गरुडासनमारूढा आगताःपुच्छगोचरे ॥ तेसर्वेतृप्ति०॥१०॥ आदित्याद्याग्रहाः सर्वे ऋक्षाश्चाश्विनिकादयः ॥

मेषाद्याराशयश्चैव योगाविष्टंभकादयः ॥ तेसर्वेंतृप्ति० ॥ ११ ॥ ( कंठीं कृत्वायवोदकैः ) सनकःसनंदनश्चैव तृतीयश्चसनातनः ॥ कपिल
श्चासुरिश्चैव वोढुः पंचशिखस्तथा ॥ तेसर्वेंतृप्ति० ॥ १२ ॥ ( अपसव्यंकृत्वा दक्षिणामुखः कृष्णातिलोदकैः ) पितापितामहश्चैव तथैव
प्रपितामहः ॥ मातामहस्तात्पिताच वृद्धमातामहस्तथा ॥ तेसर्वेंतृप्ति० ॥ १३ ॥ मातृपितामहीचैव तथैवप्रपितामही ॥ मातामह्यादयः
सर्वास्तथैवान्याश्चगोत्रजाः ॥ तेसर्वेंतृप्ति० ॥१४॥ पितृवंशेमृतायेच मातृवंशेतथैवच ॥ गुरुश्वशुरबंधूनां येचान्येबांधवाःस्मृताः ॥ तेसर्वें
तृप्ति० ॥ १५ ॥ येमेकुलेलुप्तपिंडाः पुत्रदारविवर्ज्जिताः ॥ क्रियालोपगतायेच येचांधाःपंगवस्तथा ॥ ते सर्वेंतृप्ति० ॥ १६ ॥ विरूपाआमग
र्भायें ज्ञाताऽज्ञातकुलेमम ॥ वृक्षयोनिगतायेच येचकीटपतंगकाः ॥ तेसर्वेंतृप्ति०॥१७॥ नरकेरौरवेसर्वे महारौरवसंस्थिताः ॥ असिपत्रेवने
घोरे कुंभीपाकेचयेगताः ॥ तेसर्वेंतृप्ति० ॥ १८ ॥ स्वार्थंबंधमृतायेच शस्त्रादिविषमोहिताः ॥ तेसर्वेंतृप्तिमायांतु गोपुच्छोदकतर्पणैः ॥१९॥
ब्रह्महस्तैर्मृतायेच सिंहसर्पैश्चशृंगिभिः ॥ चांडालेनमृतायेच पथिलोपगताश्चये ॥ तेसर्वेंतृप्ति० ॥ २० ॥ जलमध्येमृतायेच ह्यल्पमृत्युग
ताश्चये ॥ बंदीमध्येमृतायेच स्त्रीहस्तेनैवयेमृताः॥ तेसर्वेंतृ०॥२१॥ येचब्रह्माण्डखण्डेच वसंतिपितृदेवताः॥सर्वेचमानवानागा आगताःपुच्छ
गोचरे ॥ तेसर्वेंतृप्तिमायांतुगोपुच्छोदकतर्पणैः ॥२२॥ देवासुरास्तथायक्षाः नागागंधर्वराक्षसाः ॥ पिशाचागुह्यकाःसिद्धाः कूष्मांडास्तरवः
खगाः ॥२३॥ जलेचराभूनिलया वाय्वाधाराश्चजंतवः ॥ प्रीतिमेतेप्रयांत्वाशु मद्दत्तेनाम्बुनाखिलाः ॥ २४ ॥ आब्रह्मणोयेपितृवंशजाता
मातुस्तथावंशभवामदीयाः ॥ वंशद्वयेस्मिन्ममदासभूता भृत्यास्तथैवाश्रितसेवकाश्च ॥ तेसर्वेंतृप्तिमायांतु गोपुच्छोदकतर्पणैः ॥ २५ ॥
इतितर्पणं कृत्वा ॥ सव्येनाचम्य ॥ ॐ यालक्ष्मीःसर्वभूतानां याचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवी ममपापंव्यपोहतु ॥ १ ॥

गावोममाग्रतःसंतु गावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेसन्तु गवांमध्येवसाम्यहम् ॥ २ ॥ इतिप्रार्थ्य ॥ गोपुच्छंकुशादीनिचादाय ॥ ॐ
अद्याशौचांतद्वितीयेह्नि अमुकगोत्रस्य अमुकप्रेतस्य स्वर्गकामः इमांगांसवत्सां सुपूजितां पयस्विनींसुवर्णशृंगींरौप्यखुरांताम्रपृष्ठां
वस्त्रयुगच्छन्नां कांस्यपानीयपात्रां पैत्तिलदोहां रुद्रदैवतामसुकगोत्रायामुकशर्मणे ब्राह्मणायतुभ्यमहं संप्रददे इतिसंकल्प्य गोपु
च्छंसाक्षतकुशोदकंविप्रहस्तेदद्यात् ॥ ॐ स्वस्तीतिप्रतिवचनम् ॥ ततः ॥ यज्ञसाधनभूतात्वं विश्वस्याघप्रणाशिनी॥ विश्वरूपधरोदेवः प्री
ययतामनागवा ॥ १ ॥ इतिप्रार्थ्य ॥ हस्तेसुवर्णदक्षिणामादाय ॥ ॐअद्यकृतैतद्गोदानप्रतिष्ठार्थमिमांसुवर्णदक्षिणामग्निदैवताममुकगोत्रा
यामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे इतिदद्यात्॥ततःप्रतिग्रहीताॐस्वस्तीत्युक्त्वायथाशाखंकोदात्कस्माऽअदादितिकामस्तुतिंपठेत्॥इतिगो
दानप्रयोगःसमाप्तः ॥ [ इदमेवगोदानं शिष्टाः सपिंडनदिनेपिकुर्वंति ] ॥छ॥ अथदुर्मरणमृतानां नारायणबलिप्रयोगः॥तत्रतावत्सूतकान्तेस
र्वोपहारान्गृहीत्वा तीर्थेपुण्यक्षेत्रे वा तडागादिसमीपेगवांगोष्ठे गृहेदेवालयेवागत्वा तत्रभूमिंपरिकल्प्य गोमयोदकाभ्यामुपलिप्य ज्वलदंगारैः
संशोध्यगौरमृत्तिकयाऽऽच्छाद्यतत्रसामग्रींस्थापयेत् ॥ ततोयथाविधानम् ॥ अथ नद्यादिस्नानप्रयोगः ॥ तत्रतावन्नदीतडागादिकंगत्वासुप्र
क्षालिततत्तीरे स्नानोपकरणानिसंस्थाप्य ततःपाणिपादंप्रक्षाल्य नाभिमात्रंजलंगत्वाकुशपवित्रहस्तोबद्धशिखआचामेत् ॥ ततोदेशकालौसं
कीर्त्य॥ ममशरीरशुद्ध्यर्थंभस्मादिभिरष्टौस्नानानिकरिष्ये ॥ इतिसंकल्प्य ॥ वामहस्तेदक्षिणहस्तेनयज्ञियभस्मगृहीत्वा पश्चादुदकमिश्रणा
नंतरं दक्षिहस्तेनसंमर्द्य अभिमंत्रयेत् ॥ तत्रमंत्राः ॥ ॐ अग्निरितिभस्म ॥ ॐवायुरितिभस्म ॥ ॐजलमितिभस्म ॥ ॐस्थलमितिभस्म
॥ ॐ व्योमेतिभस्म ॥ ॐ सर्वᳪं हवाइदंभस्म ॥ ॐमनएतानिचक्षूंषिभस्मानीत्यभिमंत्र्य ॥ ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूता

नाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेऽअस्तुसदाशिवोम् ॥ १ ॥ ॐ ईशानायनमः॥ इतिशिरसिमर्दयेत् ॥ ॐ तत्पुरुषायविद्महेः
महादेवायधीमहि ॥ तन्नोरुद्रः प्रचोदयात् ॥२॥ ॐतत्पुरुषायनमः ॥ इतिमुखेमर्दयेत् ॥ ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्व्वेभ्यः
सर्वशर्वेभ्यो नमस्तेऽअस्तुरुद्ररूपेभ्यः॥३॥ॐअघोरायनमः॥इतिहृदये०॥ॐवामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमः
कलविकरणायनमो बलविकरणायनमः ॥ ४ ॥ ॐ वामदेवायनमः ॥ इतिगुह्ये० ॥ ॐसद्योजातं प्रपद्यामिसद्योजातायवैनमोनमः ॥ भवे
भवेनातिभवे भवस्वमां भवोद्भवायनमः ॥ ५ ॥ ॐसद्योजातायनमः ॥ इतिपादयोर्मर्दयेत् ॥ ॐप्रसद्यभस्मनायोनिमपश्चपृथिवीमग्ने ॥
सꣳ सृज्यमातृभिष्ट्वं ज्योतिष्मान्पुनरासदः ॥ ६ ॥ इतिमंत्रेणप्रणवेनवा सर्वाङ्गंचभस्मविलिम्पेत् ॥ ततःस्नात्वा आचम्य गोमयस्नानं
कुर्य्यात् ॥ तद्यथा ॥ शुद्धगोमयमादायप्रणवेनदिक्षुदक्षिणभागं तीर्थेचोत्तरभागं प्रक्षिप्य ॥ शेषम् ॐ अग्रमग्रश्चरंतीनामोषधीनारसं
वने ॥ तासांवृषभपत्नीनां पवित्रंकायशोधनम् ॥ यन्मेरोगांश्चशोकांश्च पापंमेहरगोमय॥ १॥ॐमानस्तोकेतनयेमानऽआयुषिमानोगोषुमानो
ऽअश्वेषुरीरिषः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तःसदामित्वाहवामहे ॥ २ ॥ इत्यभिमंत्र्य ॥ सूर्यायदर्शयित्वा ॥ ॐ गंधद्वारांदुराधः
र्षां नित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानां तामिहोपह्वयेश्रियम् ॥ इतिमंत्रेणदक्षिणहस्तगृहीतेन गोमयेन शिरसोनाभ्यंतंवामहस्तगृही
तेनमंत्रावृत्त्या नाभितः पादपर्यंतंविलेपनमितिसर्वांगमालिप्यस्नात्वाद्विराचामेत् ॥ अथमृत्तिकास्नानम् ॥ शुद्धतीर्थमृत्तिकामादाय ॥ ॐ
अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे ॥ मृत्तिकेहरमेपापं यन्मयाकायसंचितम् ॥ १ ॥ उद्धृतासिवराहेण कृष्णेनशतबाहुना ॥ मृत्तिकेह
रमेपापं यन्मयादुष्कृतंकृतम्॥२॥त्वयाहतेनपापेन सर्वपापैःप्रमुच्यते ॥ इत्यभिमंत्र्य ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्य

पा᳓ंसुरेस्वाहा ॥ ३ ॥ इतिमंत्रेणशिरःप्रभृत्यंगानिविलिंपेत् ॥ ततोद्विराचम्य शुद्धोदकस्नानंकुर्यात् ॥ ॐआपोहिष्ठामयोभुवस्तानऽ ऊर्ज्जेदधातन॥महेरणायचक्षसे॥१॥योवः शिवतमोरसस्तस्यभाजयतेहनः॥ उशतीरिवमातरः॥२॥तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ॥ आपोजनयथाचनः ॥३॥ इतिस्नात्वा आचम्यपंचगव्यस्नानंकुर्यात ॥ तत्रमंत्राः ॐतत्सवितु० इतिगायत्र्यागोमूत्रस्नानम् ॥ १ ॥ गंध द्वारेतिगोमयस्नानम् ॥ ॐगंधद्वारांदुराधर्षां नित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानां तामिहोपह्वयेश्रियम् ॥२॥ आप्यायस्वेतिपयःस्नानम् ॐआप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे॥३॥ दधिक्राव्णेतिदधिस्नानम् ॐदधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयू ᳓षितारिषत् ॥ ४ ॥ तेजोसीत्याज्यस्नानम् ॐ तेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवा नामनाधृष्टंदेवयजनमसि ॥ ५ ॥ देवस्येतिकुशोदकस्नानम् ॐदेवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ ६ ॥ एवंपंचग व्यस्नानंकृत्वा ॥ पौराणिकमंत्रैः शुद्धस्नानंकुर्यात ॥ ॐनमोनारायणाय ॥ विष्णोः पादप्रसूतासि वैष्णवीविष्णुपूजिता ॥ पाहिनस्त्वेन सस्तस्मादाजन्ममरणांतिकात् ॥ १ ॥ विष्णुपादाब्जसंभूते गंगेत्रिपथगामिनि ॥ धर्मद्रवेतिविख्याते पापंमेहरजाह्नवि ॥ २ ॥ तिस्रःको ट्योर्धकोटीश्च तीर्थानांवायुरब्रवीत् ॥ दिविभुव्यन्तरिक्षेच तानिते संतुजाह्नवि ॥ ३ ॥ नंदिनीत्येवतेनाम देवेषुनलिनीतिच ॥ वृंदापृथ्वी चसुभगा विश्वकायाशिवासिता ॥ ४ ॥ विद्याधरीसुप्रसन्ना तथालोकप्रसादिनी ॥ श्यामाचजाह्नवीचैव शांताशांतिप्रदायिनी ॥ ५ ॥ एता निपुण्यनामानि स्नानकालेप्रकीर्तयेत् ॥ भवेत्सन्निहितातस्य गंगात्रिपथगामिनी ॥ ६ ॥ इतिस्नात्वा जले ॐ ऋतंचसत्यं० १ इत्यघमर्ष णम् ३ ॐद्रुपदादिवेतिचवारत्रयमावर्तयेत् ३॥ ततः स्नानाङ्गतर्पणम् ॥ सव्येन ॥ प्राङ्मुखः ॥ ॐब्रह्मादयोदेवास्तृप्यंताम् १ ॐगौतमाद

यंऋषयस्तृप्यंताम् १ इतिदेवतीर्थेनएकैकमंजलिंजलेक्षिपेत ॥ ततउदङ्मुखोयज्ञोपवीतंकंठेकृत्वा ॐसनकादयोमनुष्यास्तृप्यंताम् २ इति
प्रजापतितीर्थेन अंजलिद्वयंदद्यात् ॥ ततोपसव्येन दक्षिणामुखः कृष्णतिलोदकैः ॥ ॐकव्यवाडनलादयोदेवपितरस्तृप्यंताम् ३ ॐअस्म
त्पितृपितामहप्रपितामहास्तृप्यंताम् ३ ॐअस्मन्मातृपितामहीप्रपितामह्यस्तृप्यंताम् ३ ॐअस्मन्मातामहप्रमातामहवृद्धप्रमातामहास्तृप्यं
ताम् ३ ॐअस्मन्मातामहीप्रमातामहीवृद्धप्रमातामह्यस्तृप्यंताम् ३ ॐआब्रह्मस्तम्बपर्यंतंजगत्तृप्यताम् ३ इतिपितृतीर्थेनत्रींस्त्रीनंजलीन्द
द्यात् ॥ एवंतर्पणंकृत्वा ॐयन्मयादूषितंतोयं मलैःशारीरसंभवैः ॥ तस्यपापस्यशुद्ध्यर्थं यक्ष्मैतत्तेतिलोदकम्॥१॥ इति यक्ष्मणेजलंदत्त्वातीर
मागत्य ॥ ॐअग्निदग्धाश्चयेजीवा येऽप्यदग्धाः कुलेमम ॥ भूमौदत्तेनतृप्यंतु तृप्तायांतुपरांगतिम् ॥१॥ इतिजलांजलिंतटेनिक्षिपेत् ॥ ततः
सव्येन आचम्य सूर्यायार्घ्यंदद्यात् ॥ ॐएहिसूर्यसहस्रांशो तेजोराशेजगत्पते ॥ अनुकंपयमांदेव गृहाणार्घ्यंनमोस्तुते ॥ १ ॥ ततो जला
द्बहिर्निष्क्रम्य अहतंश्वेतंसदशंधौतंवस्त्रंपरिधायउपवस्त्रंगृहीत्वा स्नानवस्त्रंस्थलेनिष्पीड्यत्रिराचम्यगृहंगच्छेत् ॥ ( इदंस्नानंस्त्रीशूद्रव्रात्यानां
नकार्य्यम् ) इतिनद्यादिस्नानप्रयोगः ॥ एवंनदीतडागादौस्वगृहे उद्धृतोदकेनवास्नात्वास्वासनेप्राङ्मुखउपविश्यनूतनयज्ञोपवीतधारणंकु
र्यात् ॥ तद्यथा ॥ अद्येत्यादिदेशकालौसंकीर्त्य ममश्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थंसूतकान्तेनूतनयज्ञोपवीतधारणंकरिष्ये॥ इति संकल्प्य॥
यज्ञोपवीतं प्रक्षाल्य दशधागायत्र्याभिमंत्र्य ॥ ॐतच्चक्षुर्देवहितमितिसूर्यायदर्शयित्वा ॥ ॐयज्ञोपवीतंपरमंपवित्रं प्रजापतेर्यत्सहजंपुरस्ता ॥१६
दायुष्यमग्र्यंप्रतिमुंचशुभ्रं यज्ञोपवीतंबलमस्तुतेजः॥इतिमंत्रेणयज्ञोपवीतंधृत्वाजीर्णंविसृज्याचामेत् ॥ ततश्चंदनादिनायथाचारंतिलकंकृत्वापं
चगव्यप्राशनंकुर्यात् ॥ तत्रादौपंचगव्यकरणप्रकारः ॥ गायत्र्या गोमूत्रम् १ ॐगंधद्वारेतिगोमयम् २ ॐ आप्यायस्वेतिक्षीरम् ३ ॐद

धिक्राव्णेतिदधि ४ ॐतेजोसीत्याज्यम् ५ ॐदेवस्यत्वेतिकुशोदकम् ६ चदत्त्वा प्रणवेनालोडच ॐयत्वगस्थिगतंपापं देहेतिष्ठतिमामके
प्राशनात्पंचगव्यस्यदहत्यग्निरिवेंधनम् १ इतिप्राशयेत् इतिपंचगव्यप्राशनंकृत्वा ॥ आचमनंचकुर्यात् ॥ ततः संध्यादिनित्यक्रियांसमाप्य
गोमयादिसंस्कृतेदेशेपाकद्वयंकुर्यात् बांधवादिद्वारावाकारयेत् ॥ ततःकुशपवित्रादिधारणंकृत्वा आचम्यप्राणानायम्य ॥ ॐअपवित्रः
पवित्रोवा० १ ॐपुंडरीकाक्षः पुनात्वितिकुशत्रयानीतजलेनसंभारान्स्वात्मानंचप्रोक्ष्य ॥ ॐसुमुखश्चैकदंतश्चेत्यादिस्मरणपूर्वकगणेशनवग्रहा
न्पूजयेत् ॥ ततो दुर्म्मरणनिमित्तप्रायश्चित्तंकार्य्यम् ॥ तद्यथा—देशकालौसंकीर्त्य अमुकगोत्रस्य अमुकप्रेतस्य अमुकदुर्मरणदोषपरिहारार्थं
तथा रोगोत्पत्तिमरणावसानेऊर्द्ध्वोच्छिष्टाऽधउच्छिष्टोभयोच्छिष्टाऽकृतस्नानमरणमरणसमयहरिनामोच्चारवर्जिते संध्याशौचलोपआशौच
मरणे तुलसीतिलकुशगोपीचंदनगंगोदकस्नानरहिततथामार्गेशववाहे अशौचदेशे खर्परास्थिचर्मामेध्यकेशमार्जारसंमार्जनीरजस्वलादिसं
स्पर्शेअतीर्थेदक्षिणायनेपंचकमध्ये त्रिपुष्करयमलयोगे रात्र्यंतरिते रात्रौकृष्णपक्षे परकाष्ठे पराग्निदाहे मुखे आज्याहुतिरहितेचितामध्येकी
टपतंगादिज्वलितादिदोषपरिहारार्थं कुगतिनिवारणार्थम् उत्तमगतिप्राप्त्यर्थं पंचदशप्राजापत्यात्मकंप्रायश्चित्तंतत्प्रतिनिधिरूपंप्रतिप्राजा
पत्यंगोमूल्यमथवा प्रतिप्राजापत्यममुकसहस्रपरिमितगायत्रीजपंब्राह्मणद्वारायथाकालेनअथवाअहमाचरिष्ये इतिसंकल्प्य ॥ गोमूल्यगा
यत्रीजपतीर्थयात्राब्राह्मणभोजनादिद्वाराप्रायश्चित्तंसंपादयेत्॥इतिप्रायश्चित्तसंकल्पः॥एवंप्रायश्चित्तंकृत्वा आचम्य पुनर्देशकालौसंकीर्त्यअमु
कगोत्रस्य अमुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थम् अमुकदुर्मरणदोषपरिहारार्थंसद्गतिप्राप्त्यर्थंनारायणबलिकर्म्माहंकरिष्ये इतिसंकल्प्य ॥ पुनःॐ
अमुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणदोषपरिहारार्थं ममनारायणबलिकर्माधिकारार्थं पुरुषसूक्तेन श्रीमहाविष्णुपूजनमहंकरिष्ये इतिसं

कल्प्य ॥ प्राक्संस्थेस्थंडिलेश्वेतवस्त्रोपरितंडुलैरष्टदलंकृत्वा तन्मध्येताम्रकलशंस्थापयेत् ॥ तद्यथा—ॐभूरसिभूमिरस्यदितिरसिविश्वधाया
व्विश्वस्यभुवनस्यधर्त्री॥पृथिवींयच्छपृथिवींदृꣳहपृथिवींमाहिꣳसीः इतिकलशाधारभूमिंस्पृष्ट्वा ॥ तत्र ॐ धान्यमसिधिनुहिदेवान् प्राणा
यत्वोदानायत्वाव्व्यानायत्वा दीर्घामनुप्रसितिमायुषेधान्देवोवः सविता हिरण्यपाणिःप्रतिगृभ्णात्वाच्छिद्रेणपाणिनाचक्षुषेत्वामहीनांपयो
सि॥इति धान्यमभिमंत्र्य तस्योपरि ॐ आजिघ्रकलशंमह्यात्वा व्विशंत्विन्दवः पुनरूर्ज्जानि .. स्वसानः सहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्मा
व्विशताद्रयिरितिताम्रकलशंस्थापयेत् ॥ ततः ॐ व्वरुणस्योत्तंभनमसि व्वरुणस्यस्कंभसर्ज्जनीस्थोव्वरुणस्यऽऋतसदन्यसिव्वरुणस्यऽ
ऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद ॥ इति कलशेजलमापूर्य ॥ ॐ त्वांगंधर्व्वा अखनस्त्वामिन्द्रस्त्वांबृहस्पतिः ॥ त्वामोषधे
सोमोराजा व्विद्वान् यक्ष्मादमुच्यत ॥ इति गंधम् ॥ ॐयाऽओषधीः पूर्व्वाजातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणामहꣳ शतंधामानि
सप्तच इति सर्वौषधीः ॥ ॐ कांडात्कांडात्प्ररोहंतीपरुषः परुषस्परि ॥ एवानोदूर्व्वेप्रतनुसहस्रेणशतेनच ॥ इतिदूर्वाः ॥ ॐ अश्व
त्थेवोनिषदनं. पर्णेवो व्वसतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ इति पंचपल्लवान् ॥ ॐ स्योनापृथिविनोभवानृक्षरानि
वेशनी ॥ यच्छानः शर्म्मसप्रथाः इतिसप्तमृदः ॥ ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः॥बृहस्पतिप्रसूतास्तानोमुंचं

त्वᳬं हंसः ॥ इतिपूगीफलम् ॥ ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ इति पंचरत्नानि ॥ ॐ हिरण्यगर्भः समवर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत्॥सदाधारपृथिवींद्यामुतेमांकस्मै देवायहविषाविधेम ॥ इतिहिरण्यम्॥ॐ सुजातोज्योतिषा सहशर्मवरूथमासदत्स्वः॥ वासोऽअग्नेविश्वरूपᳬं संव्ययस्वविभावसो ॥ इतिवस्त्रम् ॥ ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत॥वस्नेवविक्रीणावहाऽइषमूर्जᳬं शतक्रतो ॥ इतितंडुलपूर्णपात्रंनिधाय ॥ ॐ मनोजूतिर्जुषता इतिप्रतिष्ठांकृत्वातत्र ॐतत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशᳬं समानऽआयुः प्रमोषीः ॥ ॐ भूर्भुवः स्वः वरुण इहागच्छइहतिष्ठ इत्यावाह्य ॐअपांपतिवरुणायनमःइति वरुणंषोडशोपचारैःसंपूज्यकलशस्यमुखेविष्णुरित्यादितीर्थान्यावाह्य॥देवदानवसंवादेइतिप्रार्थयेत्॥ततःतदुपरिपट्टवस्त्रं प्रसार्य तत्र शालग्रामप्रतिमाम् अथवासुवर्णमयींविष्णुमूर्तिम्अग्न्युत्तारणंकृत्वास्थापयेत्॥तत्रस्वर्णमूर्तिश्चेन्मूर्तिपात्रेनिधायतदुपरिदुग्धधारांजलधारांचपातयेत्॥सूक्तंवारद्वयंपठेत्॥तत्रमंत्राः ॥ ॐसमुद्रस्यत्वावकयाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यᳬंशिवोभव॥१॥ ॐहिमस्यत्वाजरायुणाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यᳬंशिवोभव ॥२॥ ॐअपामिदंन्ययनᳬंसमुद्रस्यनिवेशनम् ॥ अन्यांस्तेऽअस्मत्तपंतुहेतयः॥पावकोऽअस्मभ्यᳬंशिवोभव॥३॥ॐनमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे॥ अन्यांस्तेऽअस्मत्तपंतुहेतयः॥ पावकोऽअस्मभ्यᳬंशिवोभव ॥ ४ ॥ ॐप्राणदाऽअपानदाव्यानदावर्चोदावरिवोदाः ॥ अन्यांस्तेऽअस्मत्तपंतुहेतयःपावकोऽअस्मभ्यᳬंशिवोभव ॥

॥ ८ ॥ इत्यग्न्युत्तारणसूक्तम् ॥ ततः पंचामृतेनसंस्नाप्य ॥ स्थापितकलशोपरिसंस्थाप्य ॐ मनो जूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमं तंनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयंतामोꣳम्प्रतिष्ठ॥१॥ एषवैप्रतिष्ठानामयज्ञोयत्रैतेनयज्ञेनयजंते ॥ सर्वमेवप्रतिष्ठितंभवति ॥ २ ॥ इतिपुष्पाणि विकीर्य ॥स्वशरीरे तथादेवांगेच पुरुषसूक्तन्यासंकुर्य्यात् ॥ तद्यथा ॐसहस्रशीर्षा०इतिवामहस्ते॥पुरुषऽएवेदꣳ इतिदक्षिणहस्ते॥एतावानस्य०वामपादे ॥ त्रिपादूर्ध्व०इतिदक्षिणपादे ॥ ततोविराडजायत०वामजानुनि॥तस्माद्यज्ञात्सर्वहुतःसंभृतं०दक्षिणजानुनि ॥ तमाद्यज्ञात्सर्वहुतऽऋचः०वामकट्याम्॥ तस्मादश्वा०दक्षिणकट्याम्॥तंयज्ञं०नाभौ ॥ यत्पुरुषं०हृदये ॥ ब्राह्मणोस्य०कंठे ॥ चंद्रमामनसो०वामबाहौ ॥नाभ्याऽआसीत्० दक्षिणबाहौ॥यत्पुरुषेण० मुखे॥सप्तास्यासन्० नेत्रयोः ॥ यज्ञेनयज्ञमय० इतिमूर्ध्नि ॥ एवंन्यासं कृत्वापूजनंकुर्य्यात् ॥ तद्यथा ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिꣳसर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥ श्रीमहाविष्णवेनमः आवाहनंसमर्पयामि ॥ ॐपुरुषऽएवेदꣳसर्वंयद्भूतंयच्चभाव्यम् ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥२॥ श्रीमहाविष्णवेनमः आसनंसमर्पयामि० ॥ ॐएतावानस्यमहिमातोज्यायांश्चपूरुषः॥पादोस्यविश्वाभूतानि त्रिपादस्यामृतंदिवि ॥३॥ श्रीमहाविष्णवेनमःपाद्यंसम०॥त्रिपादूर्द्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः॥ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि॥४॥महाविष्णवेनमःअर्घ्यं०॥ॐततोविराड

जायतविराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥५॥ श्रीमहाविष्णवे० आचमनीयं० ॥ ॐतस्माद्यज्ञात्सर्व्वहुतः सम्भृत
म्पृषदाज्यम् ॥ पशूँस्ताँश्चक्रेव्वायव्यानारण्याग्ग्राम्म्याश्चये ॥६॥ श्रीमहाविष्णवेनमः ॥ स्नानंसमर्पयामि ॥ ततः ॐपयः पृथिव्यांपयऽओषधीषु
पयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीः प्रदिशः संतुमह्यम् ॥ ॐमहाविष्णवेनमः पयः स्नानंपुनः शुद्धोदकस्नानम् ॥१॥ ॐदधिक्राव्णोऽअकारिषं
जिष्णोरश्वस्यव्वाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूᳪंषितारिषत् ॥ ॐमहाविष्णवे० दधिस्नानं शुद्धोदकस्नानंच ॥२॥ ॐघृतंघृतपावानः
पिबतवसांवसापावनः पिबतांतरिक्षस्यहविरसिस्वाहा ॥ दिशः प्रदिशऽआदिशोव्विदिशऽउद्दिशोदिग्भ्यः स्वाहा ॐमहाविष्णवेनमः घृत
स्नानं शुद्धोदकस्नानंच ॥ ३ ॥ ॐ मधुव्वाताऽऋतायतेमधुक्षरन्तिसिन्धवः ॥ माध्वीर्न्नः सन्त्वोषधीः ॥ मधुनक्तमुतोषसोमधुम
त्पार्थिवᳪंरजः ॥ मधुद्यौरस्तुनः पिता ॥ मधुमान्नोवनस्पतिर्म्मधुमाँऽअस्तुसूर्य्यः ॥ माध्वीर्गावोभवन्तुनः ॥ ३ ॥ ॐमहाविष्णवेनमः
मधुस्नानं० शुद्धोदकस्नानंच ॥ ४ ॥ ॐ अपाᳪंरसमुद्वयसᳪं० सूर्येसन्तᳪं० समाहितम् । अपाᳪंरसस्ययोरसस्तंवोगृह्णाम्युत्तम
मुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॐ महाविष्णवेनमः शर्करोदकस्नानं० पुनः शुद्धोदकस्नानंचसमर्प
यामि ॥ ५ ॥ ॐ व्वरुणस्योत्तम्भनमसिव्वरुणस्यस्कम्भसर्ज्जनीस्थोव्वरुणस्यऽऋतसदन्न्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋत
सदनमासीद ॥ ॐमहाविष्णवेनमः शुद्धस्नानंसमर्पयामि ॥ ६ ॥ एवंपंचामृतेनसंस्नाप्य पुरुषसूक्तेनशंखोदकेन अभिषेकं कुर्य्यात् ॥
ॐतस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानिजज्ञिरे ॥ छन्दाᳪंसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ ७ ॥ श्रीमहाविष्णवेनमः वस्त्रंस०

वस्त्रान्तेआचमनंस० ॥ ॐतस्मादश्वाऽअजायन्तयेकेचोभयादतः ॥ गावोहयज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥८॥श्रीमहाविष्णवे०
उपवीतं०उपवीतांतेआचमनंस०ॐतंयज्ञम्बर्हिषिप्प्रौक्षन्पुरुषंजातमग्ग्रतः॥तेनदेवाऽअयजन्तसाध्याऽऋषयश्चये९श्रीमहाविष्णवेनमःचंदनं
स० ॥ॐयत्पुरुषंव्यदधुःकतिधाव्यकल्पयन्॥मुखङ्किमस्यासीत्किंबाहू किमूरूपादाऽउच्येते॥१०॥श्रीमहाविष्णवेनमःपुष्पाणितुलसीपत्रा
णिचस० ॥ॐब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः॥ऊरूतदस्ययद्वैश्यःपद्भ्याᳪंशूद्रोऽअजायत ॥ ११ ॥ श्रीमहाविष्णवे०धूपं० ॥ ॐ
चंद्रमामनसोजातश्चक्षोःसूर्य्योऽअजायत॥श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत॥१२श्रीमहाविष्णवे०दीपंस० ॥नाभ्याऽआसीदन्तरिक्षᳪंशी
र्ष्णोद्यौः समवर्त्तत॥पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथालोकाँऽअकल्पयन् ॥१३॥ श्रीमहाविष्णवेनमः नैवेद्यंस०॥नैवेद्यान्ते आचमनंस०॥ ॐ
यत्पुरुषेणहविषा देवायज्ञमतन्वत॥वसन्तोस्यासीदाज्ज्यङ्ग्रीष्मऽइध्मः शरद्धविः१४श्रीमहाविष्णवेनमः मुखवासतांबूलंस०॥ॐहिरण्य
गर्भःसमवर्त्तत० इतिदक्षिणां० (ततोनीराजनम्)ॐसप्तास्यासन्परिधयस्त्रिः सप्तसमिधःकृताः ॥ देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्प
शुम् ॥ १५ ॥ ॥ श्रीमहाविष्णवेनमः प्रदक्षिणांस० ॥ ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ॥ तेहनाकम्महिमानः
सचन्तयत्रपूर्व्वेसाध्याः सान्त देवाः ॥ १६ ॥ श्रीमहाविष्णवेनमः मंत्रपुष्पांजलिंसमर्पयामि॥अथनमस्कारः॥ॐअद्भ्यःसम्भृतःपृथिव्यै

रसाञ्च ॥ व्विश्वकर्म्मणस्समवर्त्तताग्रे ॥ तस्यत्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्त्वमाजानमग्रे ॥ १ ॥ ॐव्वेदाहमेतम्पुरुषम्महां
तमादित्यवर्णन्तमसः परस्तात् ॥ तमेवव्विदित्त्वातिमृत्युमेतिनान्यः पंथाव्विद्यतेयनाय ॥ २ ॥ ॐ प्रजापतिश्चरतिगर्ब्भेऽअन्तरजा
यमानोबहुधाव्विजायते॥तस्ययोनिम्परिपश्यन्तिधीरास्तस्मिन्हतस्थुर्भुवनानिव्विश्वा ॥ ३ ॥ ॐ योदेवेब्भ्यऽआतपतियोदेवानाम्पुरोहितः॥
पूर्व्वोयोदेवेब्भ्योजातो नमोरुचायब्राह्मये ॥ ४ ॥ ॐरुचंब्राह्मञ्जनयन्तोदेवाऽअग्ग्रेतदब्रुवन्॥यस्त्वैवंब्राह्मणोव्विद्यात्तस्यदेवाऽअसन्वशे॥५॥
श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम्॥इष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाण ॥ ६ ॥ श्रीविष्णवे
नमः स्तुतिपाठंसमर्पयामि ॥ अनेनषोडशोपचारपूजनेन श्रीमहाविष्णुः प्रीयतामिति पठित्वाप्रायश्चित्तधेनुंदद्यात् ॥ अशक्तश्चेत्प्रार्थना
मेवकुर्य्यात् ॥ ॐपुराकृतंमयाघोरं ज्ञानविज्ञानकिल्बिषम् ॥ जन्मतोद्यदिनंयावत्तस्मात्पापात्पुनीहिमाम् ॥ विष्णोतवप्रसादेन स्वर्गलोकं
सगच्छतु ॥ अपराधसहस्राणि लक्षकोटिशतानिच ॥ नश्यंतितत्क्षणादेव तवपूजनमात्रतः ॥ नारायणनमस्तुभ्यं मूर्त्तामूर्त्तस्वरूपिणे ॥
वासुदेवनृसिंहाख्यः कपिलोदिव्यभूधरः ॥ वाराहाच्युतयज्ञेश लक्ष्मीकान्तामृतेश्वर॥शार्ङ्गपाणेनमस्तुभ्यं यज्ञेशायनमोनमः ॥इतिप्रार्थना॥
अथनालिकेरणार्घ्यदानम् ॥ यज्ञेशाच्युतदेवेश सत्यरूपसनातन ॥ अनेनार्घ्यप्रदानेन सर्वपापाद्विमोचय ॥१॥ सत्येशायनमस्तुभ्यं पाप
घ्नः परमेश्वरः ॥मयादत्तार्घ्यदानेन प्रेतमुक्तिप्रदोभव ॥ २ ॥ इत्यर्घ्यंदत्त्वासाष्टांगंप्रणमेत् ॥ अथविष्णुतर्पणम् ॥ ताम्रपात्रेजलदुग्धसर्वौ
षध्यक्षततिलसुवर्णंकृत्वा विष्णुमुद्दिश्यशंखेनतर्पयेत् ॥ तत्र संकल्पः ॥ ॐअमुकगोत्रस्याऽमुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थम् अमुकदुर्मरण

दोषविनाशार्थं सद्गतिप्राप्त्यर्थं श्रीविष्णुप्रसन्नार्थं विष्णुतर्पणमहंकरिष्ये इति संकल्प्य ॥ ॐ सहस्रशीर्षा इत्यादिपुरुषसूक्तेनप्रत्यृचं संतर्प्य मंत्रांते सर्वत्र भगवान्पापहाविष्णुस्तृप्यतामिति पठेत् ॥ ततः ॐ विष्णुस्तृप्यताम् ॐ गोविंदस्तृप्यताम् ॐ केशवस्तृ० ॐमाधवस्तृ० ॐश्रीधरस्तृ० ॐहृषीकेशस्तृ० ॐपद्मनाभस्तृ० ॐपुरुषोत्तमस्तृ० ॐअनिरुद्धस्तृ० ॐसंकर्षणस्तृ० ॐवासुदेवस्तृ० ॐजनार्दनस्तृ० अच्युतस्तृ० ॐ वामनस्तृ० ॐपुंडरीकाक्षस्तृ० ॐ मधुसूदनस्तृ० ॐ दामोदरस्तृ० ॐअनंतस्तृ० ॐ श्रीकृष्णस्तृ० आदिदेवस्तृ० ॐ वैकुंठस्तृ० ॐ श्रीपतिस्तृ० ॐ गोपालस्तृ० ॐत्रिविक्रमस्तृ० ॐ नारसिंहस्तृ० ॐ रामचंद्रस्तृ० ॐनारायणस्तृ० ॐ पीतांबरस्तृ० ॐ त्रिपुरान्तकस्तृ० ॐ चतुर्भुजस्तृ० ॐ परमेष्ठीतृ० ॐ परमेश्वरस्तृ० ॐ हिरण्यगर्भस्तृ० ॐ जगन्नाथस्तृ० ॐगदाधरस्तृ० ॐ गरुडवाहनस्तृ ॐ मुकुंदस्तृ० धरणीधरस्तृ० ॐ देवकीनंदनस्तृप्यताम् ॥ ॐपापापहामहाविष्णुस्तृप्यताम् ॥ ॐअनादिनिधनोदेवः शंखचक्रगदाधरः ॥ अक्षय्यःपुंडरीकाक्षः प्रेतमोक्षप्रदोभव ॥ १ ॥ ॐविष्णुस्तृप्यताम् ॥ कृष्णकृष्णकृपालोत्वमगतीनांगतिप्रद ॥ संसारार्णवमग्नानां प्रसीदपुरुषोत्तम ॥ २ ॥ विष्णुस्तृ० ॥ नारायणसुरश्रेष्ठ लक्ष्मीकान्तवरप्रद ॥ अनेनतर्पणेनाथ प्रेतमोक्षप्रदोभव ॥ ३ ॥ जयत्वंदेवदेवेश जयाजन्मजयाक्षर ॥ जयकामदभक्तानां प्रभोविष्णोनमोस्तुते॥४॥ हिरण्यगर्भपुरुष प्रधानव्यक्तिरूपिणे ॥ ॐनमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ॥ ५ ॥ अच्युतानंतगोविंद विष्णोमाधवकेशव ॥ अस्यजीवस्यमोक्षार्थं सुप्रीतोभवतर्पणात् ॥ ६ ॥ अतसीपुष्पसंकाशं पीतवाससमच्युतम् ॥ येनमस्यंतिगोविंदं नतेषांविद्यतेभयम् ॥ ७ ॥ इति संतर्प्य अमुकगोत्रस्यप्रेतत्वानिवृत्त्यर्थं सद्गतिप्राप्त्यर्थम् अमुकदुर्मरणनिमित्त

नारायणबलौ कृतैतद्विष्णुतर्पणसांगतासिद्ध्यर्थं दास्यमानांपयस्विनीं धेनुम् अथवा तन्मूल्योपकल्पितं द्रव्यंमनसोद्दिष्टम् अमुकगोत्राय प्रेताय कस्मैचित् ब्राह्मणायमहृत्तसुपतिष्ठतामिति गोदानं कुर्य्यात् ॥ अनेनतर्पणेनश्रीमहाविष्णुः प्रीयतामिति पठेत् ॥ इति विष्णुतर्पणम् ॥ ततोविष्णोर्दक्षिणभागेप्राक्संस्थितं पंचकलशस्थापनम् तत्रादौदेशकालौसंकीर्त्य ॐअमुकगोत्रस्यामुकप्रेतस्यअमुकदुर्मरणनिमित्तनारायणबलिकर्मांगतया विहितं पंचकलशपंचदेवतानां स्थापनं प्रतिष्ठापूजनंचकरिष्ये इति संकल्प्यस्थंडिले पूर्वपश्चिमोत्तरदक्षिणमध्येषुपृथक्पृथक् भूरसिभूमिरसीत्यादिपूर्वोक्तैर्मंत्रैः क्रमेणपंचकलशान्संस्थाप्य तेषुब्रह्मादीनां पंचप्रतिमाअग्न्युत्तारणपूर्वकंसंस्थापयेत् ॥

ब्रह्मारौप्यमयःकार्यो विष्णुःस्वर्णमयोभवेत् ॥ रुद्रस्ताम्रमयःकुर्याद्यमोलोहमयःस्मृतः ॥ सीसकस्तुभवेत्प्रेतो ह्यथवादर्भकस्तथा ॥ १ ॥

पंचकलशेपंचधान्यानांस्थापनम्॥तत्रब्रह्मकलशे गोधूमाः श्वेतवस्त्रं विष्णुकलशे तंडुलाः पीतवस्त्रं रुद्रकलशे मुद्गाः रक्तवस्त्रं यम[illegible]लशे माषाः कृष्णवस्त्रं प्रेतकलशे तिलाः कृष्णवस्त्रंच इति॥अथावाहनमन्त्राः ॥ पूर्वकलशे ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् ॥ होतारंरत्नधातमम् ॥ १ ॥ ॐ ब्रह्मजज्ञानं प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥२ ॥ ॐ अस्मिन्कलशे भगवन् ब्रह्मन् इहागच्छ इह तिष्ठ ब्रह्मणेनमः ब्रह्माणं स्थापयामि ॥ इति स्थापयेत् ॥ १ ॥ पश्चिमे० ॐ

१ अत्र केषुचित्पुस्तकेषु सत्येशपूजनं लिखितं तद्यथा—अद्येत्यादि० पठित्वा—सत्येशस्थापनप्रतिष्ठापूजां करिष्ये इतिसंकल्प्य पूर्वोक्ताष्टदलमध्ये ईशानादिक्रमेण ॐभूर्भुवः स्वः रुक्मिण्यै नमः रुक्मिणीमावाहयामि स्थापयामि १ एवं सत्यभामां २ जांबवतीं ३ नाग्निजितीं ४ कालिंदीं ५ मित्रविंदां ६ लक्ष्मणां ७ चारुहासिनीं ८च आवाह्यसंस्थाप्य मध्ये पूर्वोक्तस्थापिते कलशे सत्येशप्रतिमां संस्थाप्य पुरुषसूक्तेन षोडशोपचारैः पूजयेत् ॥

इषेत्वोर्जेत्वा वायवस्थदेवोवः सविताप्रार्पयतुश्रेष्ठतमायकर्मणऽआप्यायध्वमघ्न्याऽइन्द्रायभागंप्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशत
माघशꣳसो ध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ १ ॥ ॐ इदंविष्णुर्विचक्रमे त्रेधानिदधेपदम् ॥ समूढमस्यपाꣳ
सुरे ॥२॥ॐ अस्मिन्कलशे भगवान्विष्णो इहागच्छ इहतिष्ठ इति स्थापयेत् ॥२॥ उत्तरे ॐ अग्नऽआयाहिवीतयेगृणानो हव्यदातये॥
निहोतासत्सिबर्हिषि ॥ १ ॥ ॐनमःशंभवायचमयोभवायच नमः शंकरायचमयस्करायचनमः शिवायचशिवतरायच ॥ २ ॥
अस्मिन्कलशेभगवन् रुद्र इहागच्छ इहतिष्ठ इतिस्थापयेत् ॥ ३ ॥ दक्षिणे ॐ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शंय्योरभिस्रवन्तुनः
॥ १ ॥ यमायत्वामखायत्वासूर्यस्यत्वातपसेदेवस्त्वा सवितामध्वानक्तुःपृथिव्याःसꣳस्पृशस्पाहि अर्चिरसिशोचिरसितपोसि ॥ २ ॥
अस्मिन्कलशेभगवन् यम इहागच्छ०इतिस्थापयेत्॥४॥मध्ये(अपसव्येन)ॐअक्रन्कर्मकर्मकृतः सहवाचामयोभुवा॥देवेभ्यःकर्मकृत्वा
स्तंप्रेतसचाभुवः॥१॥ॐप्रेताजयतानरऽइन्द्रोवःशर्मयच्छतु॥उग्रावःसंतुबाहवोनाधृष्यायथासथ ॥ २ ॥ॐ अस्मिन्कलशेभगवन्तत्पुरुषइ
हागच्छइहतिष्ठ ॐतत्पुरुषायनमः तत्पुरुषंस्थापयामिइतिस्थापयेत्॥५॥एवंपंचदेवतानांस्थापनं कृत्वा ॥ ॐमनोजूतिर्जुषतामाज्यस्यबृह
स्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳ समिमंदधातु॥विश्वेदेवासऽइहमादयन्तामोꣳप्रतिष्ठइतिप्रतिष्ठाप्य ॐसहस्रशीर्षाइतिपुरुषसूक्तेननामममंत्रेण

वा प्रत्येकं षोडशोपचारैर्गंधादिपंचोपचारैर्वा संपूज्य प्रार्थ्य पंचनारिकेलान्समर्प्य अनेनपूजनेनब्रह्मादयोदेवाः प्रीयंतामितिपठित्वाविष्णुंस्मरेत् ॥ जितंतेपुंडरीकाक्ष नमस्तेविश्वभावन ॥ नमस्तुभ्यंहृषीकेश महापुरुषपूर्वज ॥ १ ॥ अनादिनिधनोदेवः शंखचक्रगदाधरः ॥ अव्ययः पुंडरीकाक्षः प्रेतमोक्षप्रदोभव ॥२॥ इतिप्रार्थ्यपंचदेवतासूक्तपठनार्थंपंचब्राह्मणान्वृणुयात्॥तेच–ब्रह्मकलशे ॐ तेजोसि शुक्रममृतमित्यादिद्वाविंशाध्यायेप्रोक्तंब्रह्मसूक्तम्॥१॥विष्णुकलशे ॐसहस्रशीर्षा इत्यादिपुरुषसूक्तम् अ०३१॥२॥रुद्रकलशे ॐनमस्तेरुद्रइतिरुद्राध्यायम् अ०१६॥३॥यमकलशे ॐतदेवाग्निस्तदादित्याइत्यादिद्वात्रिंशाध्यायेप्रोक्तंयमसूक्तम् ॥४॥ तत्पुरुषकलशे ॐअपेतोयंतुपणयोइत्यादिपंचत्रिंशाध्यायेप्रोक्तंप्रेतसूक्तंचपठेयुः ॥ गायत्री–पंचाक्षर–द्वादशाक्षर–अष्टाक्षर–महामृत्युंजय–सूक्तानिचजपेयुः ॥ अथपंचदेवतानांतर्पणम् ॥ ताम्रपात्रे जलदुग्धतिलचंदनसर्वौषधिंकृत्वा देशकालौसंकीर्त्य ॐ अमुकगोत्रस्य अमुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थंपरलोकेमहातृषानिवारणार्थममुकदुर्मरणदोषनिवृत्त्यर्थं ब्रह्मादिदेवानांस्वैःस्वैर्मंत्रैस्तर्पणंकरिष्ये इति संकल्प्य पात्रस्थितब्रह्ममूर्त्तौशंखेनतर्पणंकुर्यात् ॥ तत्रमंत्राः ॥ ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः सबुध्न्याऽउपमाऽअस्यव्विष्ठाः सतश्चयोनिमसतश्चव्विवः ॥ १ ॥ ॐब्रह्मातृप्यताम् ॥ ॐ आब्रह्मन्ब्राह्मणोब्रह्मवर्च्चसीजायतामाराष्ट्रेराजन्यः शूरऽइषव्योतिव्याधीमहारथो जायतांदोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिः पुरन्ध्रिर्योषाजिष्णूरथेष्ठाः सभेयोयुवास्ययजमानस्यव्वीरोजायतान्निकामेनिकामेनः पर्ज्जन्योव्वर्षतुफलवत्योनऽओषधयः पच्यन्तांयोगक्षेमोनः कल्पताम् ॥ २ ॥ ब्रह्मातृ०॥ब्रह्मणे ब्राह्मणं क्षत्रायराजन्यम्मरुद्भ्योवैश्यन्तपसेशूद्रन्तमसेतस्करन्नारकायव्वीरहणम्पाप्मनेक्ली

बमांक्रुयायांऽअयोगुङ्गामायपूँश्चलूमार्तकुप्यमागघम् ॥ ३ ॥ अह्नात्० ॥ ब्राह्मणमद्यविदेयम्पितृमन्तम्पैतृमत्यमृषिमार्षेयꣳ सु
धातुदक्षिणम् अस्म्मद्रातादेवत्रा गेच्छतत्प्रदातारमाविशत ॥ ४ ॥ ब्राह्मणासः पितरः सोम्यासः शिवेनोद्यावापृथिवीऽअनेहसा ॥
पूषानः पातुदुरितादृतावृधोरक्षामाकिर्नोऽअघशꣳसऽईशत ॥ ५ ॥ ब्रह्मणस्पतेत्वमस्ययन्तासूक्तस्यबोधितनयञ्चजिन्व ॥ वि
श्वंतद्भद्रंय्यदवन्तिदेवाबृहद्वदेम व्विदथेसुवीराः ॥ यऽइमाव्विश्वाव्विश्वकर्म्मायोनःपिताब्रह्मणस्पतेनोदेहि ॥ ६ ॥ ब्राह्मणोस्यमुखमासी
द्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्याꣳशूद्रोऽअजायत ॥७॥ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुमरुतःसुदानवऽइन्द्र
प्राशूर्भवासचा ॥८॥ युजेवाम्ब्रह्मपूर्व्यन्नमोभिर्व्विश्लोकऽएतुपथ्येवसूरेः॥ शृण्वन्तुव्विश्वेऽअमृतस्यपुत्राऽआयेधामानिदिव्यानितस्थुः॥९॥
तत्त्वायामिब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः॥ १० ॥ ब्रह्मक्षत्रम्प
वतेतेजऽइन्द्रियꣳसुरयासोमःसुतऽआसुतोमदाय॥ शुक्रेणदेवदेवताःपिपृग्धिरसेनान्नंय्यजमानायधेहि ॥११॥ ब्रह्मसूर्य्यसमञ्ज्योतिर्द्यौः
समुद्रसमꣳसरः॥इन्द्रःपृथिव्यैवर्षीयान्गोस्तुमात्रानविद्यते॥१२॥रुचम्ब्राह्मञ्जनयन्तोदेवाऽअग्रेतदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोव्विद्यात्तस्य
देवाऽअसन्वशे ॥ १३ ॥ ब्रह्म णिमेमतयःशꣳसुतासःशुष्मऽइयर्तिप्रभृतोमेऽअद्रिःआशासतेप्रतिहर्य्यन्त्युक्थेमाहरिर्व्वहतस्तानोऽअ

च्छ ॥१४॥ प्रैतुब्ब्रह्मणस्पतिः प्प्रदेव्येतुसूनृता॥अच्छाव्वीरन्नर्य्यम्पङ्क्तिराधसन्देवा यज्ञन्नयन्तुनः ॥१५॥ अनेनतर्पणेनब्रह्माप्रीयताम् ॥
अथविष्णुतर्पणम् ॥ तत्रमंत्राः ॐ॥इदंविष्णुर्व्विचक्रमे त्रेधानिदधेपदम् ॥ समूढमस्यपाᳬंसुरे ॥ ॐ विष्णुस्तृप्यताम् ॥ १ ॥ ॐ युञ्जते
मनऽउतयुंजते धियोव्विप्प्राव्विप्प्रस्यबृहतोव्विपश्चितः॥व्विहोत्रादधेवयुनाविदेकऽइन्न्महीदेवस्यसवितुः परिष्टुतिः ॥१॥ इरावती धेनुमती
हिभूतᳬं सूयवसिनीमनवेदशस्या ॥ व्व्यस्कब्भ्नारोदसीविष्णवेतेदाधर्त्थपृथिवीमभितो मयूखैः ॥२॥ देवश्रुतौ देवेष्वाघोषतम्प्राचीप्रेतमद्ध्व
रङ्कल्पयन्तीऽऊर्द्ध्वं यज्ञन्नयतमाजिह्वरतम् ॥ स्वङ्गोष्ठमावदतंदेवीदुर्य्येऽआयुर्म्मानिर्व्वादिष्टम्प्रजाम्मानिर्व्वादिष्टमत्ररमेथांवर्ष्मन्पृथिव्व्याः
॥ ३ ॥ दिवोवाव्विष्णऽउतवापृथिव्यामहोवाव्विष्णऽउरोरन्तरिक्षात् ॥ उभाहिहस्तावसुनापृणस्वाप्रयच्छदक्षिणादोतसव्व्याद्विष्णवे
त्वा ॥ ४ ॥ व्विष्णोर्नुकं वीर्य्याणिप्प्रवोचंय्यः पार्थिवानिव्विममेरजाᳬंसि॥योऽअस्कभायदुत्तरᳬंसधस्थं व्विचक्रमाणस्त्रेधोरुगायो व्वि
ष्णवेत्वा ॥ ५ ॥ प्प्रतद्विष्णुस्तवतेव्वीर्य्येणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुव्विक्रमणेष्वधिक्षियन्तिभुवनानिव्विश्वा॥ ६ ॥
व्विष्णोरराटमसिव्विष्णोः श्नप्त्रेस्त्थोव्विष्णोः स्यूरसिव्विष्णोर्ध्रुवोसिवैष्णवमसिव्विष्णवेत्वा ॥ ७ ॥ तद्विष्णोः परमम्पदᳬं सदापश्य
न्तिसूरयः॥दिवीवचक्षुराततम् ॥ ८ ॥ व्विष्णोः कर्म्माणिपश्यतयतोव्व्रतानिपस्पशे ॥ इन्द्रस्ययुज्ज्यः सखा ॥ ९ ॥ त्रीणिपदाव्विचक्रमे

व्विष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्म्माणिधारयन् ॥१०॥तद्विप्रासोव्विपन्न्यवोजागृवा᳖सः सामिन्धते॥व्विष्णोर्यत्त्परमम्पदम् ॥११॥
दिविव्विष्णुर्व्व्यक्रᳪस्तजागतेनच्छन्दसाततोनिर्भक्तोयोस्म्मान्द्वेष्टियञ्चव्वयंद्विष्मोन्तरिक्षेव्विष्णुर्व्यक्रᳪस्तत्रैष्टुभेन च्छन्दसाततोनिर्भक्तो
योस्मान्द्वेष्टियञ्चव्वयंद्विष्मः ॥ पृथिव्यांव्विष्णुर्व्व्यक्रᳪस्तगायत्रेणच्छन्दसाततोनिर्भक्तोयोस्म्मान्द्वेष्टि यञ्चव्वयन्द्विष्मोस्म्माद
न्नादस्यैप्रतिष्ठायाऽअगन्न्मस्वः सञ्ज्योतिषाभूम ॥ १२ ॥ अदित्यैव्व्युन्दनमसिव्विष्णोस्तुपोस्यूर्णम्म्रदसन्त्वास्तृणामिस्वासस्थान्देवे
भ्योभुवपतये स्वाहाभुवनपतयेस्वाहाभूतानाम्पतयेस्वाहा ॥ १३ ॥ व्विष्णोःक्रमोसिसपत्नहागायत्रञ्छन्दऽआरोहपृथिवीमनुविक्रमस्वव्वि
ष्णोःक्रमोस्यभिमातिहात्रैष्टुभञ्छन्दआरोहान्तरिक्षमनुविक्रमस्वव्विष्णो ःक्रमोस्यरातीयतोहन्ताजागतञ्छन्दऽआरोहदिवमनुविक्रमस्व
व्विष्णोः क्रमोसिशत्रूयतोहन्तानुष्टुभञ्छन्दऽआरोहदिशोनुविक्रमस्व ॥ १४ ॥ प्रपर्व्वतस्यवृषभस्यपृष्ठान्नावश्चरन्तिस्वसिचऽइयाना
ताऽआववृत्रन्नधरागुदक्ताऽअहिंबुध्न्यमनुरीयमाणाः॥व्विष्णोर्व्विक्रमणमसिव्विष्णोर्विक्रान्तमसिव्विष्णोः क्रान्तमसि ॥ १५ ॥ अने
नतर्पणेनश्रीमहाविष्णुःप्रीयताम् ॥ अथरुद्रतर्पणम् ॥ ॐ व्विभ्राड्वृहत्पिबतु० रुद्रस्तृप्यताम् ॥ १ ॥ उदुत्त्यंजातवेदसं० ॥ २ ॥ ॥१७·
येनापावकचक्षसा० ॥ ३ ॥ दैव्व्यावद्धर्य्यू० ॥ ४ ॥ तम्प्रत्त्नथापूर्व्वथा० ॥५॥ अयंव्वेनश्चोदयत्त्पृश्निगर्भा०॥६॥चित्रन्देवाना० ॥७॥

आनऽइडाभिर्व्विदथे० ॥८॥ यदद्य कच्चवृत्रहन्नुदगा० ॥९॥ तरणिर्व्विश्वदर्शतो० ॥ १० ॥ तत्सूर्य्यस्यदेवत्वन्तन्महित्वं० ॥११॥ तन्मि
त्रस्यव्वरुणस्य० ॥१२॥ बण्महाँऽअसि० ॥१३॥ बट्सूर्य्यश्रवसा० ॥१४॥ श्रायन्तऽइवसूर्य्यम्० ॥ १५ ॥ अद्यादेवाऽउदिता० ॥ १६ ॥
आकृष्णेनरजसावर्त्तमानो० ॥ १७ ॥ 43/33 ॥ नमस्तेरुद्रमन्न्यवऽउतोतऽइषवेनमः बाहुभ्यामुततेनमः ॥१॥ ॐ रुद्रस्तृप्यताम् ॥ यातेरुद्र
शिवातनूरघोरापापकाशिनी ॥ तयानस्तन्न्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ २ ॥ इमारुद्रायतवसेकपर्दिने क्षयद्वीरायप्रभरामहे
मतीः ॥ यथाशमसद्द्विपदेचतुष्पदे व्विश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥ ३ ॥ असङ्ख्यातासहस्राणियेरुद्राऽअधिभूम्याम् ॥
तेषाᳬसहस्रयोजनेवधन्वानितन्मसि ॥४॥ नीलग्ग्रीवाः शितिकण्ठादिवᳬरुद्राऽउपश्रिताः ॥ तेषाᳬसहस्रयोजनेवधन्वानितन्मसि ॥५॥
एतेतेरुद्रावसन्तेनपरोमूजवतोतीहि ॥ अवततधन्वापिनाकावसः कृत्तिवासाऽअहिᳬसन्नः शिवोतीहि ॥६॥ अवरुद्रमदीमह्यवदेवन्त्र्यम्ब
कम् ॥ यथानोव्वस्यसस्करद्यथानः श्रेयसस्करद्यथानोव्व्यवसाययात् ॥ ७ ॥ एषतेरुद्रभागः सहस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्रभा
गऽआखुस्तेपशुः ॥८॥ असौयस्ताम्म्रोऽअरुणऽउतबभ्रुः सुमङ्गलः ॥ येचैनᳬरुद्राऽअभितोदिक्षुश्रिताः सहस्रशोवैषाᳬहेडऽईमहे ॥ ९ ॥
मानस्तोकेतनयेमानऽआयुषिमानो गोषुमानोअश्वेषुरीरिषः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तः सदमित्त्वाहवामहे ॥ १० ॥

नमः शम्भवायचमयोभवायचनमः शङ्करायचमयस्करायचनमः शिवायचशिवतरायच ॥ ११ ॥ परिणोरुद्रस्य हेतिर्वृणक्तुपरित्वेष
स्यदुर्म्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृड ॥ १२ ॥ पुनस्त्वादित्यारुद्रावसवः समिन्धताम्पुनर्ब्रह्माणोव
सुनीथयज्ञैः ॥ घृतेनत्वन्तन्वंवर्द्धयस्वसत्याःसन्तुयजमानस्यकामाः ॥ १३ ॥ वसुभ्यस्त्वारुद्रेभ्यस्त्वादित्येभ्यस्त्वासञ्जानाथान्द्या
वापृथिवीमित्रावरुणौत्वावृष्ट्यावताम् व्यन्तुवयोक्तठं रिहाणामरुताम्पृषतीर्गच्छवशापृश्निर्भूत्वादिवङ्गच्छततोनोवृष्टिमावह चक्षु
ष्पाऽअग्नेसिचक्षुर्म्मेपाहि ॥ १४ ॥ रुद्राःसठंसृज्यपृथिवीम्बृहज्ज्योतिः समीधिरे ॥ तेषाम्भानुरजस्रऽइच्छुक्रोदेवेषुरोचते ॥ १५ ॥ अनेनतर्प
णेनरुद्रः प्रीयताम् ॥ अथयमतर्पणम् ॥ यमायत्वाङ्गिरस्वतेपितृमतेस्वाहा स्वाहाघर्म्मायस्वाहाघर्म्मः पित्रे ॥ १ ॥ ॐ यमस्तृप्यताम् ॥
यमायस्वाहान्तकायस्वाहामृत्यवेस्वाहा ब्रह्मणेस्वाहा ब्रह्महत्यायैस्वाहाविश्वेभ्योदेवेभ्यः स्वाहा द्यावापृथिवीभ्याठंस्वाहा ॥ २ ॥
मायत्वामखायत्वासूर्य्यस्यत्वातपसे देवस्त्वासवितामद्ध्वानक्तुपृथिव्याः सठं स्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ३ ॥ यमेन
दत्तंत्रितऽएनमायुनगिन्द्रऽएणम्प्रथमोऽअद्ध्यतिष्ठत् ॥ गन्धर्व्वोऽअस्यरशनामगृभ्णात्सूरादश्वंवसवोनिरतष्ट ॥ ४ ॥ आसियमोऽअस्यादि
त्योऽअर्व्वन्नसित्रितोगुह्येनव्रतेन ॥ असिसोमेनसमयाविपृक्तऽआहुस्तेत्रीणिदिविबन्धनानि ॥ ५ ॥ मन्यवेयस्तापंक्रोधायनिसरंय्योगाययो

त्कारꣳ शोकायाभिसर्तारङ्क्षेमायविमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनंव्वपुषेमानस्कृतꣳ ॥ शीलायाञ्जनीकारीन्निर्ऋत्यैकोशकारीय्यमाया
सूम् ॥ ६ ॥ यमाययमसूमथर्व्वभ्योवतोकाꣳसंवत्सरायपर्य्यायिणीम्परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्कद्वरीव्व
त्सरायव्विजर्जराꣳसंवत्सरायपलिक्कीमृभुभ्योजिनसंधꣳ साद्ध्येभ्यश्चर्म्मम्नम् ॥ ७ ॥ येदेवाऽअग्निनेत्राः पुरः सदस्तेभ्यः स्वा
हायेदेवायमनेत्रादक्षिणासदस्तेभ्यः स्वाहायेदेवाव्विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहायेदेवा मित्रावरुणनेत्रावामरुन्नेत्रावोत्तरासदस्ते
भ्यः स्वाहायेदेवाः सोमनेत्राऽउपरिसदोदुवस्वन्तस्तेभ्यः स्वाहा ॥ ८ ॥ क्रव्यादमग्निम्प्रहिणोमिदूरंय्यमराज्यंगच्छतुरिप्रवाहः इहै
वायमितरोजातवेदादेवेभ्योहव्व्यंव्वहतुप्रजाजनन् ॥ ९ ॥ अनेनतर्पणेनयमः प्रीयताम् ॥ अथतत्पुरुषतर्पणम् ॥ ॐ अक्रन्कर्म्मकर्म्म
कृतः सहव्वाचामयोभुवा ॥ देवेभ्यः कर्म्मकृत्वास्तम्प्रेतसचाभुवः ॥ १ ॥ ॐतत्पुरुषस्तृप्यताम् ॥ प्रताजयतानरऽइन्द्रोवः शर्म्मयच्छतु ॥ उ
ग्ग्राव: सन्तुबाहवोनाधृष्ष्यायथासथ ॥ २ ॥ रूपेणवोरूपमभ्यागान्तुथोवोविश्ववेदाव्विभजतुऽऋतस्यपथाप्रेतचन्द्रदक्षिणाव्विस्वःपश्य
व्यन्तरिक्षंयतस्वसदस्यैः ॥ ३ ॥ यदाकूतात्समसुस्नोद्धृदोवामनसोवासम्भृतञ्चक्षुषोवा तदनुप्रेतसुकृतामुलोकंयत्रऽऋषयोजग्मुः प्प्रथ
मजाः पुराणाः ॥ ४ ॥ योऽअग्निः कव्व्यवाहनः पितॄन्यक्षदृतावृधः ॥ प्रेदुहव्व्यानिवोचातिदेवेभ्यश्चपितृभ्यऽआ ॥ ५ ॥ प्रेदग्ने
ज्ज्योतिष्मान्पाहिशिवेभिरर्चिभिष्ट्वम् ॥ बृहद्भिर्भानुभिर्भासन्मामाहिꣳसीस्तन्वाप्रजाः ॥ ६ ॥ अपेतव्वीतव्विचसर्पतातो येत्र

स्त्वपुराणा येचनूतनाः अदांद्यमोवसानंपृथिव्याऽ अक्रन्निमम्पितरोलोकमस्मै ॥ ७ ॥ अपेतो यन्तुपणयोसुम्ना देव पीयवः ॥ अस्यलोकाः सुतावतः द्युभिरहोभिरक्तुभिर्व्यक्तंय्यमोददात्ववसानमस्मै ॥ ८ ॥ येदेवाऽअग्निनेत्राःपुरःसदस्तेभ्यः स्वाहायेदे वायमनेत्रादक्षिणासदस्तेभ्यः स्वाहायेदेवाविश्वदेवनेत्राःपश्चात्सदस्तेभ्यः स्वाहायेदेवामित्रावरुणनेत्रावामरुन्नेत्रावोत्तरासदस्तेभ्यः स्वाहायेदेवाःसोमनेत्राऽउपरिसदोदुवस्वन्तस्तेभ्यःस्वाहा ॥ ९ ॥ अनेनतर्पणेनश्रीतत्पुरुषः प्रीयताम् ॥ इति तत्पुरुषतर्पणम् ॥ ततः पंचदेवतानां तर्पणपरिपूर्णतास्तु ॥ अनेनपंचदेवतानांतर्पणकृतेन अमुकगोत्रस्य अमुकप्रेतस्य अमद्गतिविनाशः सद्गतिप्राप्तिश्चभवतु ॥ इति पठित्वाधेनुंतन्मूल्यदक्षिणांवादद्यात् ॥ अथाग्निस्थापनम् ॥ तत्रादौ आचम्य प्राणानायम्य देशकालौ संकीर्त्य ॥ अस्मिन्नारायणबलिकर्मणि पंचभूसंस्कारपूर्वकाग्निप्रतिष्ठापनंकरिष्ये इति संकल्प्य तत्रहस्तपरिमितचतुरस्रंस्थंडिलंकृत्वाकुशैः परिसमुह्यतानैशान्यां निक्षिप्य गोमयेनोपलिप्यस्रुवमूलेनप्रादेशमात्रमुत्तरोत्तरक्रमेणप्रागग्रंत्रिरुल्लिख्य उल्लेखनक्रमेण अनामिकांगुष्ठाभ्यांमृदंसमुद्धृत्य ॥ उदकेनाभ्युक्ष्य कांस्यपात्रेणाग्निमुपसमाधाय स्थंडिले ॐअग्निंदूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिह ॥ १ ॥ इति मंत्रेणस्थापयेत् ॥ ततः अग्न्यानीतपात्रेसाक्षतोदकंनिषिच्य अग्निंध्यायेत् ॥ ॐचत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँऽआविवेश ॥ १ ॥ अग्नेवैश्वानर शांडिल्यगोत्र शांडिल्यासितदेवलेतित्रिप्रवरान्वित भूमिर्माता वरुणः पिता

मेषध्वजप्राङ्मुखममसन्मुखोभवइतिविटनामाग्निंप्रतिष्ठाप्यप्रोक्षितेन्धनानिनिक्षिपेत् ॥ ततः ॐअद्यकर्तव्यनारायणबलिहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेनत्वामहंवृणेइति ब्रह्माणं वृणुयात् ॥ वृतोस्मीतिप्रतिवचनम् ॥ यथाविहितंकर्मकुर्वितियजमानेनोक्तेकरवाणीतितेनोक्ते ॥ अग्नेर्दक्षिणतः शुद्धमासनंनिधायतदुपरिप्रागग्रान्कुशानास्तीर्य अग्निप्रदक्षिणंकारयित्वाब्रह्माणमुदङ्मुखंतत्रोपवेश्य अस्मिन्नारायणबलिकर्मणित्वंमेब्रह्माभव इत्यभिधाय भवानीतितेनोक्ते प्रणीतार्थंप्रागग्रैः[1]कुशैरग्नेरुत्तरतःआसनद्वयंकल्पयित्वाप्रणीतापात्रंपुरतः कृत्वावारिणापरिपूर्यकुशैराच्छाद्यब्रह्मणोमुखमवलोक्यपश्चिमासनेनिधायाऽऽलभ्यपूर्वासनेस्थापयेत् ॥ ततःपरिस्तरणम् ॥ बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानांतं ब्रह्मणोग्निपर्यंतं नैर्ऋत्याद्वायव्यांतमग्नितःप्रणीतापर्यंतं ततोऽग्नेरुत्तरतः पश्चिमदिशिपवित्रच्छेदनार्थंकुशत्रयं पवित्रकरणार्थंसाग्रमनंतगर्भंकुशपत्रद्वयं प्रोक्षणीपात्रमाज्यस्थालीचरुस्थालीसंमार्जनार्थंकुशत्रयम् उपयमनार्थं कुशत्रयं प्रादेशमितपलाशसमिधस्तिस्रः स्रुवः स्रुचः आज्यंचर्वर्थास्तंडुलाः तंडुलपूर्णपात्रं दक्षिणावरोवा एतानिपवित्रच्छेदनकुशानांपूर्वपूर्वदिशिक्रमेणासादनीयानि॥ततः पवित्रच्छेदनकुशैःयजमानप्रादेशमितपवित्रच्छेदनम् सपवित्रकरेणप्रणीतोदकं त्रिःप्रोक्षणीपात्रेनिधायद्वाभ्यामनामिकांगुष्ठाभ्यामुत्तराग्रेपवित्रे गृहीत्वा त्रिरुत्पवनम् ततः प्रोक्षणीपात्रंसव्यहस्तेगृहीत्वादक्षिणाऽनामिकांगुष्ठाभ्यांपवित्रेगृहीत्वा त्रिरुद्दिङ्गनयनम्॥ततः प्रणीतोदकेनप्रोक्षणीपात्रमभ्युक्ष्य प्रोक्षणीजलेनासादितवस्तुसेचनम् आज्यस्थाल्यादीनिपूर्णपात्रपर्यंतानि एकैकशःप्रोक्ष्य अग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिदध्यात् ॥ ततः आज्यस्थाल्यामाज्यंनिरूप्यप्रणीतोदकेन

१ उत्तराग्रैः । २ पूर्वाग्रैः । ३ उत्तराग्रैः । ४ पूर्वाग्रैः । ५ उत्तराग्रम् । ६ उत्तराग्रम् ।

॥ ततः तंडुलान्प्रक्षाल्यचरुपात्रेप्रणीतोदकंदत्त्वा तत्रतंडुलान्प्रक्षिप्यस्वयंचरुंगृहीत्वाब्रह्माचाज्यंवह्न्युत्तरतश्चरुंदक्षिणतआज्यंनिदध्यात् ॥ ततः
सिद्धेचरौतृणादिप्रज्वाल्यउभयोरुपरिप्रदक्षिणंभ्रामयित्वा वह्नौतत्प्रक्षेपः ॥ ततस्त्रिः स्रुवप्रतपनं संमार्जनंकुशानामग्रैरंतरतोमूलैर्बाह्यतः स्रुवं
संमृज्य प्रणीतोदकेनाभ्युक्ष्यपुनस्त्रिःप्रताप्यदक्षिणतोनिदध्यात् ॥ एवंस्रुक्प्रोक्षण्योरपिप्रतपनसंमार्जने कृत्वास्रुवादुत्तरतः स्थापयेत् ॥
ततः आज्यमग्नितश्चरोः पूर्वेणानीयअग्रेधृत्वा आज्यात्पश्चिमेचरुमानीयाज्यस्योत्तरतोनिदध्यात् ॥ ततः आज्यस्यप्रोक्षणीवत्त्रिरुत्पवनम्
अवेक्ष्यसत्यपद्रव्येतन्निरसनम् ॥ ततः प्रोक्षण्युत्पवनम् ततः उत्थाय उपयमनकुशान्वामहस्तेकृत्वाप्रजापतिंमनसाध्यात्वातूष्णीमग्नौघृ
ताक्ताः समिधः प्रक्षिपेत् ॥ ततः उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निंपर्युक्ष्य प्रणीतापात्रेपवित्रेनिधाय ब्रह्मणान्वारब्धः पा
तितसजवनदक्षिणजानुः समिद्धतमेग्नौजुहुयात् ॥ तत्रप्रथमाहुतिचतुष्टयेतत्तदाहुत्यनंतरंस्रुवावस्थितहुतशेषस्यप्रोक्षणीपात्रप्रक्षेपः ॥ अग्नेरु
त्तरभागे ॐ प्रजापतयेस्वाहा इदं प्रजापतये नमम ॥ अग्नेर्दक्षिणभागे ॐ इंद्राय स्वाहा इदमिंद्राय नमम इत्याघारौ ॥ मध्येसमिद्धतमे
ॐ अग्नये स्वाहा इदमग्नये नमम ॥ ॐ सोमाय स्वाहा इदं सोमाय नमम इत्याज्यभागौ ॥ इति हुत्वा प्रायश्चित्ते विट्नामानंवैश्वानरंयज्ञ
पुरुषंवहिः षोडशोपचारैः संपूज्य ॐ वह्निपूजनविधेः परिपूर्णताऽस्तु इतिपठेत् ॥ ततोऽन्वारब्धंविना युंजतेइत्यनुवाकेनचतुर्गृहीताज्येनस्रु
चाजुहुयात् ॥ ॐ युंजतेमनउतयुंजतेधियोविप्राविप्रस्यबृहतोविपश्चितः ॥ विहोत्रादधेवयुनाविदेकइन्महीदेवस्यसवितुःपरिष्टुतिःस्वा
हा ॥१॥ इदं विष्णवे नमम इति सर्वत्र त्यागः॥ ॐ इदंविष्णुर्विचक्रमे त्रेधानिदधेपदम् ॥ समूढमस्यपांसुरेस्वाहा ॥२॥ इदं विष्णवे०

ॐ इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या ॥ व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा ॥ ३ ॥ ॐ देवश्रुतौ देवेष्वाघोषतं प्राची प्रेतमध्वरं कल्पयंती ॥ ऊर्ध्वं यज्ञं नयतं मा जिह्वरतं स्वं गोष्ठमावदतं देवी दुर्य्ये ऽआयुर्म्मा निर्व्वादिष्टं प्रजां मा निर्व्वादिष्ट मन्त्र रमेथां वर्ष्मन्पृथिव्याः स्वाहा ॥४॥ ॐ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि ॥ यो ऽअस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा स्वाहा ॥५॥ ॐ दिवो वा विष्ण ऽउत वा पृथिव्या महो वा विष्ण ऽउरोरन्तरिक्षात् ॥ उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वा स्वाहा ॥ ६ ॥ ॐ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ॥ यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियंति भुवनानि विश्वा स्वाहा ॥ ७ ॥ ॐ विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा स्वाहा ॥८॥ इदं विष्णवे नमम ॥ ततः पुरुषसूक्तेन षोडशाज्याहुतीर्जुहुयात् ॥ ॐ सहस्रशीर्षा० गुलꣳ स्वाहा ॥१॥ इदं विष्णवे नमम इति त्यागः सर्वत्र ॥ ॐ पुरुषएवेदꣳ० तिस्वाहा ॥२॥ ॐ एतावा० दिविस्वाहा ॥ ३ ॥ ॐ त्रिपादूर्ध्व० अभिस्वाहा ॥ ४ ॥ ॐ ततो विराड० पुरः स्वाहा ॥ ५ ॥ ॐ तस्माद्यज्ञात्सर्वहुतः सम्भृतं० येस्वाहा ॥६॥ ॐ तस्माद्यज्ञात्सर्वहुत ऽऋचः० तस्वाहा ॥ ७ ॥ ॐ तस्मादश्वा० यः स्वाहा ॥ ८ ॥ ॐ तं यज्ञं० येस्वाहा ॥ ९ ॥ ॐ यत्पुरुषं० च्येतेस्वाहा ॥ १० ॥ ॐ ब्राह्मणोस्य० यतस्वाहा ॥ ११ ॥ ॐ चंद्रमा० यतस्वाहा ॥ १२ ॥ ॐ

नाभ्यांऽआसीदं०यन्स्वाहा ॥ १३ ॥ ॐ यत्पुरुषेण० हविःस्वाहा ॥ १४ ॥ ॐसप्तास्यांसन्० पशुंस्वाहा ॥ १५ ॥ ॐयज्ञेनयज्ञ० देवाः स्वाहा ॥ १६ ॥ इदं विष्णवे नमम ॥ ततः उत्तरनारायणेनहोमः ॥ॐ अद्भ्यः सम्भृतःपृथिव्यैरसाच्चविश्वकर्म्मणःसमवर्त्तताग्रे ॥ तस्य त्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्वमाजानमग्रे स्वाहा ॥१॥ इदं विष्णवे नमम ॥ ॐवेदाहमेतंपुरुषंमहान्तमादित्यवर्णंतमसः परस्तात्॥ तमेवविदित्वातिमृत्युमेतिनान्यःपन्थाविद्यतेयनायस्वाहा॥२॥ ॐप्रजापतिश्चरतिगर्भेऽअन्तरजायमानो बहुधाविजायते ॥ तस्ययोनिंपरि पश्यंतिधीरास्तस्मिन्हतस्थुर्भुवनानिविश्वास्वाहा ॥ ३ ॥ ॐयोदेवेभ्यऽआतपतियोदेवानाम्पुरोहितः ॥ पूर्व्वोयोदेवेभ्योजातोनमोरुचायब्रा ह्मये स्वाहा ॥ ४ ॥ ॐ रुचंब्राह्मंजनयंतोदेवाऽअग्रेतदब्रुवन् ॥ यस्त्वैवंब्राह्मणोविद्यात्तस्यदेवाऽअसन्वशेस्वाहा ॥ ५ ॥ ॐश्रीश्चतेलक्ष्मी श्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम्॥इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण स्वाहा॥ ६ ॥ इदं विष्णवे नमम । ततः पुनः स्रुवेणाज्याहुतयः । ॐ लोमभ्यःस्वाहा २ इदं लोमभ्यो नमम ॥ ॐ त्वचे स्वाहा २ इदं त्वचे नमम ॥ त्यागः सर्वत्रयथा दैवतम् ॥ ॐ लोहिताय स्वाहा २ इदं लो० ॥ ॐ मेदोभ्यः स्वाहा २ इदं० ॥ ॐमांसेभ्यःस्वाहा २इदं० ॥ ॐ स्नायुभ्यःस्वाहा २ इदं०॥ॐ अस्थिभ्यः स्वा० २ इदं०॥ॐ मज्जाभ्यःस्वाहा २ इदं०॥ इति षोडशाहुतयः ॥ ॐरेतसेस्वाहा १ इदं०॥ॐपायवे०१इदं०॥

ॐआयासाय०१इदं० ॐप्रायासाय०१इदं०ॐसंय्यासाय०१इदं ॐव्वियासाय०१इदं०ॐउद्यासाय०१इदं०ॐशुचेस्वाहा१इदं०ॐशोचं
ते०१ इदं०॥ ॐशोचमानायस्वाहा१ इदं० ॐशोकाय०१इदं० ॐतपसे०१इदं० ॐतप्यते०१ इदं० ॐतप्यमानाय०१इदं० ॐतप्ताय०
१इदं०ॐघर्माय०१इदं० ॐनिष्कृत्यै० १ इदं० ॐप्रायश्चित्त्यै० १ इदं० ॐभेषजाय० १ इदं०ॐयमाय० १ इदं० ॐअन्तकाय०
१इदं०॥ ॐमृत्यवे० १ इदं० ॐब्रह्मणे० १ इदं० ॐब्रह्महत्यायै० १ इदं० ॐव्विश्वेभ्योदेवेभ्यःस्वाहा १इदं०ॐद्यावापृथिवीभ्यां
स्वाहा १ इदंद्यावापृथिवीभ्यांनमम.॥४२॥अथघृताक्तपायसचरुहोमः॥तावद्गणेशनवग्रहदिक्पालहोमःसमाचारात् कार्यः॥ततः ॐइदंविष्णु
र्व्विचक्रमेत्रेधानिदधेपदम् ॥समूढस्यपाᳬसुरेस्वाहा ॥१॥ इदंविष्णवेनमम ॥ ॐ अपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥
याभिर्म्मित्रावरुणावभ्यषिंचन्न्याभिरिन्द्रमनयन्नत्यरातीःस्वाहा॥२॥ इदं०ॐप्रपर्वतस्यवृषभस्यपृष्ठान्नावश्चरन्तिस्वसिचऽइयानाः ॥ ताऽआव
वृत्रन्नधरागुदक्ताऽअहिंर्बुध्न्यमनुरीयमाणाः विष्णोर्व्विक्रमणमसिविष्णोर्व्विक्रान्तमसिविष्णोः क्रान्तमसिस्वाहा ॥३॥ इदं०ॐ॥ विष्णो
र्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजाᳬसि ॥ योऽअस्कभायदुत्तरᳬसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवेत्वास्वाहा ॥४॥ इदं० ॥
ॐदिवोवाव्विष्णऽउतवापृथिव्यामहोवाव्विष्ण॥उरोरन्तरिक्षात्॥ उभाहिहस्तावसुनापृणस्वप्रयच्छदक्षिणादोतसव्याविष्णवेत्वास्वाहा ॥५॥

इदं०॥ ॐप्रतद्विष्णुंस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंतिभुवनानिविश्वास्वाहा ॥ ६ ॥ इदं०॥ॐ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोः ॥ स्यूरसिविष्णोर्ध्रुवोसिवैष्णवमसिविष्णवेत्वास्वाहा ॥ ७ ॥ इदं०॥ॐतद्विप्रासोविपन्यवोजागृवाꣳसꣳसमिंधते ॥विष्णोर्यत्परमंपदꣳस्वाहा ॥ ८॥ इदं०॥ ॐविष्णोःकर्माणिपश्यतयतो व्रतानिपस्पशे॥इंद्रस्ययुज्यःसखास्वाहा ॥ ९ ॥ इदं० ॥ ॐतद्विष्णोःपरमंपदꣳसदापश्यंतिसूरयः दिवीवचक्षुराततꣳस्वाहा ॥ १० ॥ इदं विष्णवेनमम ॥ ॐअद्भ्यःसंभृतः० स्वाहा १ इदंविष्णवे० ॐवेदाहमेतंपुरुषं० स्वाहा २ इदं० ॐप्रजापति० स्वाहा ३ इदं० ॐयोदेवेभ्यआतपति० स्वाहा ४ इदं० ॐरुचंब्राह्मंजनयंतो०॥ स्वाहा ५ इदं० ॐश्रीश्चतेलक्ष्मीश्च० स्वाहा६इदंविष्णवे नमम ॥ इतिषोडशचर्वाहुतयः ॥ १६ ॥ ततःकृष्णैस्तिलैःकार्योघृताक्तैर्यवमिश्रितैः ॥ तद्विप्रासेतिमंत्रेणजुहुयादष्टोत्तरंशतम्॥ॐतद्विप्रासोविपन्यवोजागृवाꣳसःसमिन्धते॥विष्णोर्यत्परमंपदꣳस्वाहा ॥ १ ॥ इदंविष्णवे नमम इतिमंत्रेणाष्टोत्तरशतंतिलयवाहुतीर्दद्यात् ॥ १०८॥ ततोब्राह्मणान्वारब्धः ॐअग्नयेस्विष्टकृतेस्वाहा इदमग्नये स्विष्टकृतेनममइतिचरुशेषंहुत्वा ॥ ततः आज्येन ॐभूः स्वाहा इदमग्नये नमम ॥ १ ॥ ॐभुवःस्वाहा इदंवायवे० ॥ २ ॥ ॐस्वःस्वाहा इदंसूर्याय० ॥ ३ ॥ ॐत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमु

ग्ध्यस्मत्स्वाहा ॥४॥ इदमग्नीवरुणाभ्यांनमम ॥ ॐसत्वन्नोऽअग्नेव्वमोभंवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ॥अवंयक्ष्वनोवरुणठ्ठंरराणोव्वीहि
मृडीकठ्ठंसुहवोनऽएधिस्वाहा ॥ ५ ॥ इदमग्नीवरुणाभ्याम् ॥ ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाऽअसि ॥ अयानोयज्ञंव्वहास्य
यानोधेहिभेषजठ्ठं स्वाहा ॥६॥ इदमग्नयेअयसे नमम॥ ॐयेते शतंवरुणंयेसहस्रंयज्ञियाः पाशावितताममहान्तः तेभिर्नोऽअद्यसवितोतविष्णु
र्व्विश्वे मुंचंतुमरुतःस्वर्क्काःस्वाहा ॥ ७ ॥ इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यश्च नमम ॥ ॐउदुत्तमंव्वरुणपाशमस्म
दवाधमंव्विमध्यमठ्ठं श्रथाय॥अथाव्वयमादित्यव्रतेतवानागसोऽअदितयेस्यामस्वाहा ॥ ८ ॥ इदंवरुणायादित्यायादितयेच नमम ॥
ॐप्रजापतयेस्वाहा ॥ ९ ॥ इदंप्रजापतयेनमम ॥ इतिप्राजापत्यम् इतिनवाहुतयः ॥ ततोदिक्पालेभ्योमाषभक्तेन हुतशेषचरुणावा
बलिदानम् ॥ तत्रदेशकालौसंकीर्त्य० इंद्रादिदिक्पालानां पूजापूर्वकबलिदानंकरिष्ये इतिसंकल्प्य ॐदिक्पालेभ्योनमः इतिगं
धादिसमर्प्यस्थंडिलपरितः पूर्वादिदिक्षुपृथक्पृथङ्नाममंत्रेणमाषभक्तबलीन्दत्त्वा आचामेत् ॥ अथपूर्णाहुतिः ॥ तावत आज्ये
न स्रुचंपूरयित्वा तदुपरि गंधकुंकुमाक्षततांबूलकुसुमयुतंनालिकेरं पूगीफलंवाधृत्वाउत्थायस्रुचंहस्तेगृहीत्वा ॐस्वाहाप्राणेभ्यः साधि
पतिकेभ्यः पृथिव्यैस्वाहाऽग्नयेस्वाहान्तरिक्षायस्वाहा व्वायवेस्वाहा दिवेस्वाहा सूर्य्यायस्वाहा ॥ १ ॥ दिग्भ्यः स्वाहाचं

द्रायस्वाहानक्षत्रेभ्यः स्वाहाऽद्भ्यः स्वाहा वरुणायस्वाहा नाभ्यैस्वाहा पूतायस्वाहा ॥ २ ॥ वाचेस्वाहा प्राणायस्वाहा प्राणायस्वाहा चक्षुषेस्वाहा चक्षुषेस्वाहा श्रोत्रायस्वाहा श्रोत्राय स्वाहा ॥ ३ ॥ ॐ मूर्द्धानं दिवोऽअरतिं पृथिव्या वैश्वानरमृतऽआजातमग्निम् ॥ कविꣳ सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः स्वाहा ॥४॥ इदं मृडाग्नये नमम इतित्यागः ॥ततः ॐ आघारावादिपूर्णाहुतिपर्य्यन्तम् अस्मिन्प्रायश्चित्तहोमकर्म्मणि स्वैः स्वैर्मन्त्रैर्यस्यैयस्यैदेवतायैयावद्यावद् आहुतयः सासादेवता प्रीयताम् ॥ इत्युत्सृजेत् ॥ ततः संस्रवप्राशनम् आचमनं च कृत्वा ॐ अद्यकृतैतन्नारायणबलिहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं संप्रददे इतिपूर्णपात्रं दद्यात् ॥ ॐ स्वस्तीतिप्रतिवचनम् ॥ ततो ब्रह्मग्रंथिविमोकः ॥ ॐ सुमित्रियानऽआपऽओषधयः सन्तु इतिपवित्राभ्यां प्रणीताजलमानीय तेनयजमानशिरः संमृज्य ॐ दुर्मित्रियास्तस्मैसन्तुयोऽस्मान्द्वेष्टियं च वयं द्विष्मः इत्यैशान्यां प्रणीतान्युब्जीकरणं पवित्रे अग्नौ प्रतिपत्तिः ॥ ततः ॐ देवागातुविदोगातुंवित्त्वागातुमितमनसस्पतऽइमंदेवयज्ञꣳ स्वाहा वाते धाः स्वाहा ॥ इतिमंत्रेण बर्हिर्होमः ॥ ततः स्रुवेणभस्मानीयदक्षिणानामिकागृहीतभस्मना ॐ त्र्यायुषं जमदग्नेरितिललाटे ॥ ॐ कश्यपस्यत्र्यायुषम् इति ग्रीवायाम् ॥ ॐ यद्देवेषुत्र्यायुषम् इति दक्षिणबाहुमूले ॥ ॐ तन्नोऽअस्तुत्र्यायुषमितिहृदि इति त्र्यायुषं कुर्यात् ॥ ॐ अद्यामुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणनिमित्तकनारायणबलिहवनकर्म्मणः सांगतासिद्ध्यर्थं यथासंपन्नेनान्नेनयथासंख्याकान्

ब्राह्मणान्भोजयिष्ये इतिसंकल्प्य विप्रान्संभोज्य अथवा आमान्नंदक्षिणांवादत्त्वा अनेनकर्म्मणाकर्माङ्गदेवताप्रीयताम् इत्युत्सृज्य नारायणबलिहवनकर्मणिन्यूनातिरिक्तं विष्णुप्रसादात्सर्वंपरिपूर्णमस्तु ॥ अनेनदुर्मरणप्रायश्चित्ताङ्गहोमकृतेन अमुकगोत्रस्यामुकप्रेतस्या मुकदुर्मरणदोषनिवृत्तिः असद्गतिविनाशः सद्गतिप्राप्तिः इतिपठेत् ॥ इतिप्रायश्चित्तहोमविधिः ॥ अथैकादशविष्णुश्राद्धप्रयोगः ॥ तत्रादौ स्नात्वाधौतश्वेतवाससीपरिधाय गोमयादिनासंस्कृतंश्राद्धदेशमागत्यतत्रतिलतैलेनश्राद्धापवर्गस्थायिनंदीपंप्रज्वाल्यस्थापयेत् ॥ काककु क्कुटादीञ्छाद्धापहंतॄनपसारयेत् ॥ श्राद्धदेशावरणंचकुर्यात् ॥ ततःस्वासनेप्राङ्मुखउपविश्य सव्येनकुशपवित्रादिधारणंकृत्वा आचम्य प्राणानायम्य कर्म्मपात्रंजलेनापूर्य्यगंधपुष्पयवकुशत्रयादि निक्षिप्य ॐ अपवित्रः पवित्रोवा० ॐ पुण्डरीकाक्षः पुनातु इति कुशत्रयानीत जलैः श्राद्धदेयद्रव्याणि स्वात्मानंचाभिसिंचेत् ॥ ततःॐभूम्यैनमः ॐभगवत्यैगयायैनमः ॐभगवतेगदाधरायनमः इतिनत्वाकुशत्रययवजला न्यादाय अद्येत्यादिदेशकालौसंकीर्त्य ॐ अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थम् असद्गतिविनाशार्थं सद्गत्यक्षय्यविष्णुलोकप्राप्त्यर्थंप द्वात्रिंशद्दुर्मरणांतर्गताः—मुकदुर्मरणनिमित्तकनारायणबलिकर्म्मांगभूतम् एकादशविष्णुश्राद्धं विष्ण्वादिविष्णुपर्यंतानाम् एकोद्दिष्टविधिना एकतंत्रेणाहंकरिष्ये इतिसंकल्प्य गायत्रींत्रिर्जपित्वा ॐ देवताभ्य इतित्रिर्जपेत् ॥ ततोगौरसर्षपान्गृहीत्वा पूर्वादिदिक्षु ॐ नमोनम स्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः ॥ १ ॥ पूर्वेनारायणःपातु वारिजाक्षस्तुदक्षिणे ॥ प्रद्युम्नःपश्चिमेपातु वासुदेवस्तथोत्तरे ॥ २ ॥ ऐशान्यांरक्षताद्विष्णुराग्नेय्यांचत्रिविक्रमः ॥ नैर्ऋत्यांपद्मनाभस्तु वायव्यांमाधवोऽवतु ॥ ऊर्ध्वंगो वर्द्धनोरक्षेदधस्ताच्चत्रिविक्रमः ॥ ३ ॥ इतिविकीर्य कस्मिंश्चित्पात्रेजलंगृहीत्वादर्भैरालोड्य ॐयद्देवादेव हेडनंदेवासश्चकृमाव्वयम् ॥ अग्नि

र्मातस्मादेनसोविश्वान्मुञ्चत्वर्ठ० हंसः ॥ १ ॥ यदिदिवायदिनक्तमेनांसिचकृमाव्वयम्॥व्वायुर्मातस्मादेनसोविश्वान्मुञ्चत्वर्ठ० हंसः ॥२॥ यदिजाग्रद्यदि स्वप्नऽएनांसिचकृमाव्वयम्॥सूर्य्यो मातस्मादेनसोविश्वान्मुञ्चत्वर्ठ० हंसः ॥ ३ ॥ इतिकूष्मांडसूक्तेनाभिमंत्र्य एकादशविष्णुश्राद्धेपिंडद्रव्योपहाराणां पवित्रताऽस्तु इतिपाकंप्रोक्ष्य ॐ देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु इतिपठेत् ॥ अस्तुसंपत् ॥ ततउदङ्मुखः उत्तरोत्तरक्रमेण एकादशचटान्स्थाप्य प्रथमचटे ॐ विष्णवे इदमासनम् इतिपूर्वाग्रंकुशत्रयमुत्सृजेत ॥ १ ॥ एवमेवद्वितीयम् ॐ शिवाय इदमासनं० ॥ २ ॥ ॐ यमायसपरिवाराय इदमासनं० ॥ ३ ॥ ॐ सोमराजाय इदमासनं० ॥ ४ ॥ ॐ हव्यवाहनाय इदमासनं० ॥ ५ ॥ ॐ कव्यवाहनाय इदमासनं० ॥ ६ ॥ ॐमृत्यवे इदमासनं० ॥ ७ ॥ ॐ रुद्राय इदमासनं० ॥ ८ ॥ ॐ तत्पुरुषाय इदमासनं० ॥ ९ ॥ अपसव्येन ॐ प्रेताय इदमासनम् इतिदक्षिणाग्रमुत्सृजेत् ॥१०॥ हस्तप्रक्षालनंसव्येन ॐ विष्णवे इदमासनम्॥११॥ इतिएकादशासनान्युत्सृजेत् ॥ ततः एकादशार्घपात्राणिधृत्वातेषु एकैकंपवित्रंदत्त्वा ॥ ॐ शन्नोदेवीरभिष्टयऽ आपोभवंतुपीतये शंय्योरभिस्रवन्तुनः तिजलंप्रक्षिप्य ॐ यवोसियवयास्मद्द्वेषोयवयारातीरितिदशसुयवान्निक्षिप्य प्रेतपात्रे ॐ तिलोसीतितिलान्निक्षिप्य गंधपुष्पाणिक्षिपेत् ॥ ततः एकादशार्घपात्राणाम् अर्घ्यार्चनविधेः परिपूर्णतास्तु इतिपठित्वाप्रथमार्घपात्रस्थपवित्रं पात्रेधृत्वा ॐ यादिव्याऽआपः पयसासंबभूवुर्याऽआन्तरिक्षाऽउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानऽआपः शिवाः शर्ठ० स्योनाः सुहवाभवंतु इत्यर्घ्यपात्रम् अभिमंत्र्य ॐ विष्णो एषतेऽर्घः इति पवित्रोपारिअर्घंदद्यात् ॥ एवंसर्वत्रशिवादिभ्योऽर्घदानम् ॥ अत्रनन्युब्जीकरणं

नार्चवंदनम् ॥ ततः एकादशघटेषु क्रमेण गंधपुष्पधूपदीपतांबूलादीनिधृत्वा ॐ एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि विष्णवे अक्षय्यमस्तु स्वाहा इतिप्रथममुत्सृजेत् ॥ १ ॥ एवं शिवाय० ॥ २ ॥ यमायसपरिवाराय० ॥ ३ ॥ सोमराजाय० ॥ ४ ॥ हव्यवाहनाय० ॥ ५ ॥ कव्यवाहनाय० ॥ ६ ॥ मृत्यवे० ॥ ७ ॥ रुद्राय० ॥ ८ ॥ तत्पुरुषाय० ॥९॥ अपसव्येन प्रेताय० ॥१०॥ पुनः सव्येन विष्णवे० ॥ ११ ॥ क्रमेणगंधादिउत्सृजेत ॥ ततः ॐअमीषामेकादशश्राद्धानामर्चनविधेः परिपूर्णतास्तु इतिप्रार्थ्य हस्तौप्रक्षाल्य एकादशपात्रेषु पृथक्पृथक् पात्रेसोपस्करान्नपरिवेषणंकुर्य्यात् ॥ ततः प्रथमपात्रमालभ्य ॐपृथिवीतेपात्रंद्यौरपिधानं ब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वाहा॥ ॐइदंविष्णुर्विचक्रमे त्रेधानिदधेपदम् समूढमस्यपा१ंसुरे स्वाहा॥इतिपठित्वाॐविष्णोहव्यंरक्षस्व इत्यंगुष्ठमन्नेनिवेश्य ॐ अपहताऽअसुरारक्षा१ंसिवेदिषद इति परितोयवान्विकीर्य पात्रमत्यजन् ॐ एतदन्नंसोपस्करम् अमृतरूपंहव्यं विष्णवेस्वाहा संपद्यतांनमम इत्युत्सृजेत् ॥१॥ एवं शिवाय० ॥२॥ यमायसपरिवाराय० ॥३॥ सोमराजाय० ॥४॥ हव्यवाहनाय० ॥५॥ कव्यवाहनाय० ॥ ६ ॥ मृत्यवे० ॥७॥ रुद्राय० ॥ ८ ॥ तत्पुरुषाय० ॥ ९ ॥ असव्येन पात्रालंभनंविना प्रेताय० ॥ १० ॥ पुनः सव्येन विष्णवे अन्नमुत्सृजेत्॥११॥ततः पिण्डदानार्थमेकादशस्थानानिनिर्माय प्रेतवर्ज्यंसर्वत्र ॐ अपहतेतिसकृद्रेखाकरणम् ॐयेरूपाणीति उल्मुकभ्रामणंचकृत्वा प्रत्येकंकुशत्रयमास्तीर्य्यएकादशपात्रेषु जलयवगंधपुष्पाणिकृत्वाप्रथमपात्रेण ॐविष्णवेअवनेनिक्ष्व इतिप्रथमदर्भोपरि अवनेजनंदद्यात् ॥ एवं शिवादिभ्योऽपिक्रमेणदद्यात् ॥ ततः तिलघृतमधुयुक्तेनान्नेन एकादशपिण्डान्कृत्वाघृतमधुभ्यामभिघार्य्य

एकंपिण्डंकुशादीनिचादाय ॐविष्णो एषतेपिण्डोनम इतिप्रथमदर्भोपरिदद्यात्॥१॥एवं द्वितीयंशिवाय०॥२॥ तृतीयं यमाय सपरिवाराय ॥३॥ चतुर्थं सोमराजाय० ॥४॥ पंचमं हव्यवाहनाय० ॥५॥ षष्ठं कव्यवाहनाय०॥६॥ सप्तमं मृत्यवे०॥७॥ अष्टमं रुद्राय० ॥८॥ नवमं तत्पुरुषाय० ॥ ९ ॥ दशमम् अपसव्येन अमुकगोत्र अमुकप्रेत एषतेपिण्डोमयादीयतेतवोपतिष्ठतामितिदद्यात् ॥ १० ॥ ततोहस्तौप्रक्षाल्य सव्येन एकादशंविष्णवेदद्यात् ॥ ११ ॥ ततोहस्तौप्रक्षाल्य आचम्य पूर्ववत्प्रत्यवनेजनंप्रत्येकंदत्त्वा पिंडेषु सूत्राच्छादनगंधपुष्पतुलसीधूपदीपनैवेद्यतांबूलपूगीफलदक्षिणादीनिक्रमेणदद्यात् ॥ ततः पिंडानामर्चनविधेः परिपूर्णतास्तु एभिरेकादशपिंडैः ॥ अपसव्यम् ॥ अमुकगोत्रस्य अमुकप्रेतस्यसद्गतिः उत्तमलोकप्राप्तिरस्तु इतिपठित्वा सव्येन आचमनंकृत्वा एकस्मिन्पत्रपुटे ॐ शिवाआपः संतु ॐ सौमनस्यमस्तु ॥ ॐ अक्षतंचारिष्टंचास्तु ॥ इतिसुप्रोक्षितादि कुर्य्यात् ॥ ततः अक्षय्योदकदानम् ॥ ॐ विष्णोः यद्दत्तमन्नपानादिकं तदुपतिष्ठताम् इति ॥ १ ॥ एवंसर्वत्र षष्ठ्या विभक्त्या शिवादीनामक्षय्योदकंक्रमेणदद्यात् ॥ ततः पिंडानामुपरिएकादशसपवित्रान्दर्भान्समर्प्यप्रत्येकंजलधारांदद्यात् ॥ तद्यथा ताम्रपात्रेजलदुग्धसर्वौषधितिलयवतुलसीचंदनहिरण्यानिप्रक्षिप्यपिंडोपरिपृथक्पृथङ्मंत्रेणशंखेनजलधारांदद्यात् ॥ तत्रमंत्राः ॥ ॐआपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्म्मित्रावरुणावभ्यषिञ्चन्न्याभिरिन्द्रमनयन्नत्यरातीः॥प्रथमेविष्णुपिंडेजलधारापयोधारा उपतिष्ठतु ॥ १ ॥ उपयामगृहीतोस्यन्तर्यच्छमघवन्पाहि सोमम्॥उरुष्यरायऽएषोयजस्व॥द्वितीयेशिवपिंडेजलधारापयोधारा उपतिष्ठतु॥२॥ ॐयेनापावकचक्षसा भुरण्यन्तञ्जनाँऽअनु ॥

त्वंव्वं रुणपश्यंसि॥तृतीयेयमपिंडे जलधारा० ॥३॥ ॐयेदेवासोदिव्व्येकादशस्त्थपृथिव्व्यामध्येकादशस्त्थ ॥ अप्सुक्षितोमहिनैकादशस्त्थते
देवासोयज्ञमिमञ्जुषद्ध्वम्॥चतुर्थे सोमराजपिंडेजलधारा० ॥ ४ ॥ ॐसमुद्रङ्गच्छस्वाहान्तरिक्षङ्गच्छस्वाहादेवठंसवितारङ्गच्छस्वाहामित्रा
वरुणौगच्छस्वाहाऽहोरात्रेगच्छस्वाहा छंदांठंसिगच्छस्वाहा द्यावापृथिवीगच्छस्वाहायज्ञंगच्छस्वाहासोमङ्गच्छस्वाहादिव्व्यन्नभोगच्छस्वाहा
ग्निंवैश्वानरङ्गच्छस्वाहा॥मनोमेहार्द्दियच्छदिवन्तेधूमोगच्छतुस्वर्ज्योतिः पृथिवीम्भस्मनापृणस्वाहा ॥ पंचमेहव्यवाहनपिंडेजलधारा० ॥५॥
ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्योज्ज्योतिर्ज्योतिःसूर्यः स्वाहा अग्निर्व्वर्च्चोज्ज्योतिर्व्वर्च्चःस्वाहा सूर्योवर्च्चोज्ज्योतिर्व्वर्च्चःस्वाहा
ज्ज्योतिःसूर्य्यःसूर्य्योज्ज्योतिःस्वाहा॥षष्ठेकव्यवाहनपिंडे ॥ ६ ॥ ॐहिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत्॥सदाधारपृथि
वींद्यामुतेमाङ्कस्मैदेवायहविषाव्विधेम॥सप्तमेमृत्युपिंडे ॥७॥ ॐ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः बाहुभ्यामुततेनमः ॥अष्टमेरुद्रपिण्डे
॥ ८ ॥ ॐ यज्जाग्रतोदूरमुदैतिदैवन्तदुसुप्तस्यतथैवेति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनः शिवसंकल्पमस्तु ॥ नवमेपुरुषपिंडे ॥९॥
( अपसव्येन ) ॐयाःफलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वठंहसः॥दशमेप्रेतपिण्डे ॥१०॥ (सव्येन)
ॐव्विश्वतश्चक्षुरुतव्विश्वतोमुखोव्विश्वतोबाहुरुतव्विश्वतस्पात् ॥ सम्बाहुभ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ एकादशेविष्णुपिं

डेजलधारापयोधारातेउपतिष्ठतु ॥ ११ ॥ ततः अपसव्येन ॥ शेषोदकम् एकतंत्रेणएकादशपिंडोपरिजलधारांदद्यात् ॥ ॐअनादिनि
धनोदेवः शङ्खचक्रगदाधरः ॥ अक्षय्यःपुंडरीकाक्षः प्रेतमोक्षप्रदोभव ॥ १ ॥ अतसीपुष्पसंकाशं पीतवाससमच्युतम् ॥ येनमस्यंतिगोविंदं
नतेषांविद्यतेभयम् ॥ २ ॥ कृष्णकृष्णकृपालोत्वमगतीनांगतिर्भव ॥ संसारार्णवमग्नानां प्रसीदपुरुषोत्तम ॥ ३ ॥ नारायणसुरश्रेष्ठ लक्ष्मी
कांतवरप्रद ॥ अनेनतर्पणेनाथ प्रेतमोक्षप्रदोभव ॥ ४ ॥ हिरण्यगर्भपुरुषव्यक्ताव्यक्तस्वरूपिणे ॥ अस्यप्रेतस्यमोक्षार्थं सुप्रीतोभवसर्वदा ॥
॥५॥ इति पठेत् ॥ ततः सव्यंकृत्वादक्षिणार्थंपुरतो हिरण्यं वस्त्रं रजतं गुडाज्यं लवणं लोहदंडं तिलान्धान्यं माहिषीमूल्यंचामरं च धृत्वा
॥ अद्येत्यादिपठित्वा ॥ अमुकगोत्रस्य अमुकप्रेतस्य अमुकदुर्मरणनिमित्तकनारायणबलिविहितैकादशश्राद्धानांसांगतासिद्ध्यर्थम् इमा
निहिरण्याद्येकादशदानानि तत्तद्देवताप्रीतये अमुकगोत्रेभ्यो ब्राह्मणेभ्योदातुमहमुत्सृजे इति संकल्प्य दद्यात् ॥ ततः ॐ तीर्थंविष्णोःप्रसा
दात् एकादशश्राद्धानांपरिपूर्णताऽस्तु ॥ एभिः एकादशश्राद्धैः अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्तिः असद्गतिविनाशःसद्गतिप्राप्तिश्चभ
वतु इति पठेत्। ततः ॐ भद्रङ्कर्णेभिः शृणुयामदेवा भद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहिदेवहितंयदायुः
॥ १ ॥ इति पिंडविसर्जनं कृत्वा एकादशआमान्नानितन्मूल्यंवाविप्रेभ्योदत्त्वा कर्म्मपूर्तिकामो विष्णुं स्मरेत् ॥ इति विष्ण्वाद्येकादशश्रा
द्धप्रयोगः ॥ अथ पंचश्राद्धानांप्रयोगः ॥ तत्रतावत्स्नात्वावाससीपरिधायविष्णोःपूजनंब्रह्मादिपंचदेवतानां पूजनं च नाममंत्रेणपंचोपचारैः
कृत्वाप्रार्थयेत् ॥ तत्र मंत्राः ॥ ॐब्रह्मजज्ञानम्प्रथमंपुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्च

व्विर्वं ॥ ॐब्रह्मणेनमः ॥ १ ॥ ॐव्विष्णोर्रराटमसिव्विष्णोः श्नप्त्रेस्थोव्विष्णोः स्यूरसिविष्णोर्ध्रुवोसिवैष्णवमसिव्विष्णवेत्वा ॥ ॐ विष्णवेनमः ॥ २ ॥ ॐनमः शंभवायचमयो भवायचनमः शंकरायचमयस्करायचनमः शिवायचशिवतरायच ॥ ॐशिवायनमः ॥ ३ ॥ ॐयमायत्वामखायत्वा सूर्य्यस्यत्वातपसे देवस्त्वासवितामध्वानक्तुपृथिव्व्याः सर्ठ० स्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ॐ यमायनमः ॥ ४ ॥ अक्रन्कर्म्मकर्मकृतः सहव्वाचामयोभुवा ॥ देवेभ्यः कर्म्मकृत्वास्तंप्रेतसचाभुवः ॥ ॐतत्पुरुषायनमः ॥ ५ ॥ इतिप्रार्थ्य पंचश्राद्धानि ब्रह्मविष्णु शिवयमतत्पुरुषाणांकुर्यात् ॥ तत्रादौपूर्ववच्छ्राद्धस्थानंविधाय स्वासनेप्राङ्मुखउपविश्य सव्येन आचम्य प्राणानायम्य कर्म्मपात्रंजलादिनापरिपूर्य्य ॐअपवित्रः० पुंडरीकाक्षः पुनात्वितिकुशत्रयेणश्राद्धद्रव्याणिस्वात्मानंचसंप्रोक्ष्य ॐभूम्यैनमः ॥ ॐभगवत्यैगयायै० ॐभगवतेगदाधरायनमः इतिप्रणमेत् ॥ ततः कुशत्रययवजलान्यादाय ॥ अद्येत्यादिपठित्वा अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्तिपूर्वकासद्गतिविनाशार्थं सद्गतिप्राप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलिकर्म्मांगभूतब्रह्मादिपंचदेवताश्राद्धानिएकोद्दिष्टविधिना करिष्ये ॥ इतिसंकल्प्यगायत्रींत्रिर्जपित्वादेवताभ्य इतित्रिर्जपेत् ॥ ततो गौरसर्षपान् गृहीत्वा ॥ सर्वत्र ॐ नमोनमस्तेगोविंद० ॥ पूर्वे नारायणोरक्षेद्वारिजाक्षस्तुदक्षिणे ॥ प्रद्युम्नःपश्चिमेपातु वासुदेवस्तथोत्तरे ॥ १ ॥ ऐशान्यांरक्षतां विष्णुराग्नेय्यांचत्रिविक्रमः ॥ नैर्ऋत्यांपद्मनाभस्तु वायव्यांमाधवोऽवतु ॥ २ ॥ ऊर्ध्वंगोवर्द्धनोरक्षेदधस्ताच्चत्रिविक्रमः ॥ इतिविकीर्य कूष्मांडसूक्ताभिमंत्रितजलेनपाकं प्रोक्ष्यउदङ्मुख उत्तरोत्तरक्रमेणपंचचटान् स्थापयेत् ॥ ततः प्रथमचटे ॐब्रह्मणे इदमासनंस्वाहा ॥ १ ॥ इति पूर्वाग्रं कुशत्रयमुत्सृजेत् ॥ एवंद्वितीयम् ॐविष्णवे इदमासनं० ॥ २ ॥ तृतीयम्

ॐशिवाय इदमासनं०॥३॥ चतुर्थम् ॐयमाय इदमासनं०॥४॥ पंचमम् ॐतत्पुरुषाय इदमासनंनमः इत्यासनमुत्सृजेत्॥ ततःपंचपात्राणि अर्घ्यार्थंधृत्वातेषुएकैकंपवित्रंदत्त्वा ॐशन्नोदेवीरितिप्रत्येकंजलंप्रक्षिप्य यवोसियवाया इतियवान् तूष्णींगंधपुष्पाणिचनिक्षिपेत् ॥ ततः पंचार्घपात्राणांसंपत्तिरस्तु इतिपठित्वाप्रथमार्घपात्रस्थपवित्रं पात्रेधृत्वा ॐयादिव्याइत्यर्घ्यपात्रमभिमंत्र्य ॐब्रह्मन्एषतेऽर्घोनमः इति पवित्रोपरिअर्घंदद्यात् ॥ एवंसर्वत्रविष्ण्वादिभ्योऽर्घदानम् ॥ अत्रनन्युब्जकिरणम् ॥ ततःपंचसुघटेषु क्रमेणगंधपुष्पधूपदीपादिधृत्वा ॐ एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसिब्रह्मणेअक्षय्यमस्तुस्वाहा ॥ इतिप्रथममुत्सृजेत् १ एवंविष्णवे २ शिवाय ३ यमाय ४ पातत्पुरुष ५ चोत्सृजेत् ॥ ततःअमीषांपंचश्राद्धानामर्चनविधेःपरिपूर्णतास्तु ॥ इतिप्रार्थ्य ॥ मंडलानिकृत्वा पंचसुपात्रेषुपृथक्पृथक्अन्नं सोपस्करंसुशीतलजलंचपरिवेषयेत् ॥ ततोऽन्नमधुदत्त्वामधुमधुमध्वितिचपठित्वाप्रथमपात्रमृजुपाणिभ्यामालभ्य ॐपृथिवीते० ॐइदंवि ष्णुरितिचजप्त्वाविष्णोहव्यरक्षस्व इतिऋचाङ्गुष्ठम् अन्नेनिवेश्य ॥ ॐअपहताइतियवान्विकीर्यवामपाणिनापात्रमत्यजन् कुशत्रयादि द्वारा ॐएतदन्नंसोपस्करममृतरूपंहव्यंब्रह्मणेस्वाहासंपद्यतांनममइत्युत्सृजेत् ॥१॥ एवंविष्णवे० २ शिवाय० ३ यमाय० ४ तत्पुरुषाय० ५ चोत्सृजेत् ॥ ततःपिंडदानार्थंपंचस्थानंवालुकयानिर्मायप्रत्येकं पूर्ववद्रेखाकरणमुल्मुकभ्रामणंचकृत्वाकुशत्रयमास्तीर्य पंचसुपात्रेषु जलयवगंधपुष्पाणिकृत्वा प्रथमपात्रेण ॐब्रह्मणे अवनेनिक्ष्व इतिप्रथमदर्भोपरि अवनेजनंदद्यात् ॥ १ ॥ एवंवि ष्ण्वादिभ्योप्यवनेजनानिदद्यात् ॥ ततः तिलघृतमधुयुक्तेनान्नेन पंचपिण्डान्निर्मायघृतमधुभ्यामभिघार्य एकंपिण्डंकुशत्रयजला दीनिचादाय ॐब्रह्मन् एषतेपिंडोनमः इतिप्रथमदर्भोपरिदद्यात् १ एवं विष्णवे २ शिवाय ३ यमाय ४ तत्पुरुषाय

च दद्यात् ॥ ततो हस्तौ प्रक्षाल्य आचम्य पूर्ववत्प्रत्यवनेजनं दत्त्वा पिंडेषु सूत्रगंधपुष्पधूपदीपतांबूलदक्षिणादीनि क्रमेण दत्त्वा पिण्डानामर्चनविधेः परिपूर्णतास्तु एभिःपंचभिःपिंडैः अमुकप्रेतस्यसद्गतिरुत्तमलोकावाप्तिरस्तु इतिपठेत् ॥ ततः आचमनंकृत्वा एकस्मिन्पत्रपुटे ॐशिवाआपःसंतु इतिजलम् ॐसौमनस्यमस्तु इतिपुष्पाणि ॐ अक्षतंचारिष्टमस्तु इतियवांश्चप्रक्षिपेत्॥ततः अक्षय्योदकदानम् ॥ ॐब्रह्मणोयदत्तमन्नपानादिकंतदुपतिष्ठताम् ॥१॥ एवंविष्णोः२ शिवस्य ३यमस्य४तत्पुरुषस्य५चाक्षय्योदकंदद्यात् ॥ ततःपिण्डानामुपरिपंचसपवित्रान्कुशान्समर्प्यप्रत्येकंजलदुग्धसर्वौषधियवतुलसीसंयुतां जलधारां शंखेनदद्यात्॥तत्र मंत्राः॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् ॥ होतारंरत्नधातमम् ॥ १ ॥ ॐआब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यः शूरऽइषव्योतिव्याधीमहारथोजायतां दोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिः पुरंधिर्योषाजिष्णूरथेष्ठाः सभेयोयुवास्ययजमानस्यवीरोजायतांनिकामेनिकामेनः पर्जन्योवर्षतुफलवत्योनऽओषधयः पच्यंतां योगक्षेमानः कल्पताम् ॥२॥ इतिप्रथमब्रह्मपिण्डेजलधारांदद्यात्॥१॥ॐइषेत्वोर्जेत्वावायवस्स्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मणऽआप्यायध्वमघ्न्याऽइंद्रायभागंप्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशंसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ १ ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम्॥समूढमस्यपांसुरे ॥ २॥ इतिद्वितीयेविष्णुपिण्डे जलधाराम्०॥२॥ॐअग्नऽआयाहिवीतयेगृणानोहव्यदातये॥निहोतासत्सिबर्हिषि ॥१॥ ॐ नमः शंभवायचमयो

भवायचनमः शंकरायचमयस्करायचनमः शिवायचशिवतरायच ॥ २ ॥ इतितृतीयेशिवपिण्डे० ॥ ३ ॥ ॐ शन्नोदेवीरभिष्टयऽआ
पोभवंतुपीतये॥शंय्योरभिस्रवन्तुनः ॥ १ ॥ ॐ यमायत्वामखायत्वासूर्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्याः सᳪस्पृशस्पा
हि अर्चिरसिशोचिरसितपोसि ॥ २ ॥ इतिचतुर्थेयमपिण्डे० ॥४॥ॐ प्रेताजयतानरऽइन्द्रोवः शर्मयच्छतु ॥ उग्रावः संतुबाहवोनाधृष्याय
थासथ ॥ १ ॥ ॐ अक्रन्कर्मकर्मकृतः सहवाचामयोभुवा देवेभ्यः कर्मकृत्वास्तं प्रेतसचाभुवः ॥ २ ॥ इतिपंचमेतत्पुरुषपिण्डेजल
धारांदद्यात् ॥ ५ ॥ ततोऽपसव्येनशेषोदकधारामेकतंत्रेणपंचपिण्डोपरिदद्यात् ॥ अनादिनिधनोदेव० ॥ १ ॥ अतसीपुष्पसंकाशं० ॥२॥
कृष्णकृष्णकृपालुस्त्वं० ॥ ३ ॥ नारायणसुरश्रेष्ठ० ॥ ४ ॥ हिरण्यगर्भपुरुष० ॥ ५ ॥ इतिपठेत् ॥ ततः सव्येनदक्षिणामादाय अद्येत्या
दिपठित्वा अमुकप्रेतस्यप्रेतत्वविमुक्त्यर्थमुत्तमलोकप्राप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलिविहितब्रह्मादिपंचदेवानांश्राद्धकर्मणः प्र
तिष्ठार्थम् इदंहिरण्यमग्निदैवतंयथानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृजे ॥ इतिस्वर्णदक्षिणांदद्यात् ॥ ततः पंचदानानि ॥ भूमिः सस्यवती
धेनुः सुवर्णंचक्रमात्तिलान् ॥ वृषभंसहिरण्यंच पंचश्राद्धेषुदक्षिणा ॥ १ ॥ यथाशक्तिदद्यात् ॥ अथवा पंचदानप्रत्याम्नायेनयथाशक्तिद्रव्यं
दद्यात् ॥ ततः कलशसंकल्पः ॥ अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थमुत्तमलोकप्राप्त्यर्थम् अमुकदुर्मरणनिमित्तकनारायणबलौब्रह्म
कर्मणः प्रतिष्ठार्थं ब्रह्मप्रीत्यर्थमिदंतीर्थवारिपूरितं सफलंवस्त्रोपवीतान्नप्रतिमानालिकेरसहितं मृन्मयकलशं ब्रह्मदैवतं ब्रह्मसूक्तजापिने अमु
कगोत्रायामुकशर्मणे ब्राह्मणायतुभ्यमहंसंप्रददे॥अनेन ब्रह्माप्रीयतामिति दद्यात् ॥१॥ एवं विष्णुरुद्रयमतत्पुरुषाणांकलशान्ततत्सूक्तजापि

नेद्द्यात् ॥ ततः तीर्थविष्णोः प्रसादाद्ब्रह्मादिपंचश्राद्धानांपरिपूर्णतास्तु ॥ एभिः कृतैः पंचश्राद्धैः अमुकगोत्रस्यप्रेतस्यप्रेतत्वनिवृत्तिः असद्ग
तिविनाशः सद्गतिप्राप्तिश्चास्तु इतिपठेत् ॥ ततः ॐ भद्रंकर्णेभिः शृणुयामदेवा भद्रम्पश्येमाक्षभिर्य्यजत्राः॥ स्थिरैरङ्गैस्तुष्टुवाᳬसंस्तनू
भिर्व्यशेमहिदेवहितंयदायुरिति पिण्डान्विसृज्य विष्णुंस्मरेत् ॥ ततो नारायणबलिकर्मणः सांगतासिद्ध्यर्थं धेनुम् अथवा तन्मूल्यंचाचा
र्यायदत्त्वा ॐ अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थम् अमुकदुर्मरणनिमित्तकनारायणबलिकर्मणिपूजनतर्पणहोमश्राद्धादिषुयन्न्यूना
धिकं तद्भवतां ब्राह्मणानां वचनात्तीर्थदेवताविष्णोः प्रसादात्सर्वपरिपूर्णमस्तु ॥ अस्तुपरिपूर्णमित्युक्तेघृतेमुखावलोकनंकृत्वा यथाशक्ति
ब्राह्मणान्दीनानाथांदीन् अन्नेन संतोष्य कर्म्मपूर्त्तिकामः ॐ प्रमादात्कुर्वतांकर्म्म प्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोः संपूर्णस्या
दितिश्रुतिः ॥ १ ॥ यस्यस्मृत्याचनामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयाति सद्योवंदेतमच्युतमितिपठित्वाविष्णुंस्मृत्वास्नानं
कुर्य्यात् ॥ इतिश्राद्धप्रकाशेनारायणबलिप्रयोगः समाप्तः ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

अथ नारायणबलिविहितब्रह्मादिपंचदेवजाप्यसूक्तानि ॥ तत्रादौ ब्रह्मसूक्तम् ॥ हरिः ॐ तेजोसिशुक्रममृतमायुष्पाऽआयुर्म्मेपाहि ॥
देवस्यत्वासवितुःप्रसवेश्विनोर्ब्बाहुभ्यांम्पूष्णोहस्ताब्भ्यामाददे ॥ १ ॥ इमामगृब्भ्णन् ॥ इमामगृब्भ्णन्न्रशनामृतस्यपूर्व्वऽआयुषि
विदथेषुकव्या ॥ सानोऽअस्मिन्न्सुतऽआबभूवऋतस्यसामन्त्सरमारपन्ती ॥ २ ॥ अभिधाऽअसि ॥ भुवनमसियन्तासि धर्त्ता ॥

सत्त्वमग्निं वैश्वानरꣳ सप्रथसङ्गच्छ स्वाहाकृतः ॥ ३ ॥ स्वगा त्वा देवेभ्यः प्रजापतये ब्रह्मन्नश्वम्भन्त्स्यामि देवेभ्यः प्रजापतये तेन
राध्यासम् ॥ तम्बधान देवेभ्यः प्रजापतये तेन राध्नुहि ॥ ४ ॥ प्रजापतये त्वा ॥ जुष्टम्प्रोक्षामीन्द्राग्निभ्यान्त्वा जुष्टम्प्रोक्षामि वायवे त्वा जु
ष्टम्प्रोक्षामि विश्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामि सर्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामि ॥ योऽअर्वन्तञ्जिघाꣳसति तमभ्यमीति वरुणः
परो मर्त्तः परः श्वा ॥५॥ अग्नये स्वाहा सोमाय स्वाहापाम्मोदाय स्वाहा सवित्रे स्वाहा वायवे स्वाहा विष्णवे स्वाहेन्द्राय स्वाहा बृहस्पतये स्वाहा मि
त्राय स्वाहा वरुणाय स्वाहा ॥ ६ ॥ हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहावक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा ग
न्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वा
हा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहा सꣳहानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा ॥ ७ ॥
यते स्वाहा धावते स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा निषण्णाय स्वाहोत्थिताय स्वाहा जवाय स्वाहा बलाय स्वाहा विव
र्त्तमानाय स्वाहा विवृत्ताय स्वाहा विधून्वानाय स्वाहा विधूताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहेक्षमाणाय स्वाहेक्षिताय स्वाहा वीक्षिताय
स्वाहा निमेषाय स्वाहा यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मूत्रं करोति तस्मै स्वाहा कुर्वते स्वाहा कृताय स्वाहा ॥ ८ ॥ तत्सवितुः ॥

तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ ९ ॥ हिरण्यपाणिमूतयेसवितारमुपह्वये ॥ सचेत्तादेवता
पदम् ॥ १० ॥ देवस्यचेततोमहीम्प्रसवितुर्हवामहे ॥ सुमतिꣳसत्यराधसम् ॥ ११ ॥ सुष्टुतिꣳसुमतीवृधोरातिꣳसवितुरीमहे प्रदेवायमती
विदे ॥ १२ ॥ रातिꣳसत्पतिम्महेसवितारमुपह्वये ॥ आसवन्देववीतये ॥ १३ ॥ देवस्यसवितुर्मतिमासवंविश्वदेव्यम् ॥ धियाभ
गम्मनामहे ॥ १४ ॥ अग्निꣳस्तोमेन ॥ बोधयसमिधानोऽअमर्त्यम् ॥ हव्यादेवेषुनोदधत् ॥ १५ ॥ सहव्यवाडमर्त्यऽउशिग्दूत
श्चनोहितः ॥ अग्निर्धियासमृण्वति ॥ १६ ॥ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिह ॥ १७ ॥ अजीजनोहि पवमा
नसूर्य्यंविधारेशक्मनापयः ॥ गोजीरयारꣳहमाणः पुरन्ध्या ॥ १८ ॥ विभूर्म्मात्रा ॥ प्रभूः पित्राश्वोसिहयोस्यत्योसिमयोस्यर्वासिस
प्तिरसिवाज्यसिवृषासिनृमणाऽअसि ॥ ययुर्न्नामासिशिशुर्न्नामास्यादित्यानाम्पत्वान्विहिदेवाऽआशापालाऽएतन्देवेभ्योश्वंमेधायप्रो
क्षितꣳरक्षतेहरन्तिरिहरमतामिहधृतिरिहस्वधृतिःस्वाहा ॥ १९ ॥ कायस्वाहाकस्मैस्वाहा ॥ कतमस्मैस्वाहास्वाहाधिमाधीतायस्वाहामनः
प्रजापतयेस्वाहाचित्तंविज्ञातायादित्यैस्वाहादित्यैमह्यैस्वाहादित्यैसुमृडीकायैस्वाहा सरस्वत्यैस्वाहासरस्वत्यैपावकायैस्वाहासरस्वत्यैबृहत्यै
स्वाहा पूष्णेस्वाहा पूष्णेप्रपथ्यायस्वाहा पूष्णेनरन्धिषायस्वाहा त्वष्ट्रेस्वाहा त्वष्ट्रेतुरीपायस्वाहा त्वष्ट्रेपुरुरूपायस्वाहा विष्णवेस्वाहा

विष्णवेनिभूयपायस्वाहा व्विष्णवेशिपिविष्टायस्वाहा ॥ २० ॥ विश्श्वोदेवस्य नेतुर्मर्तोव्वुरीतसख्यम् ॥ विश्श्वोरायऽइषुध्यतिद्युम्नं
वृणीतपुष्ष्यसेस्वाहा ॥ २१ ॥ आब्ब्रह्मन् ब्ब्राह्मणोब्ब्रह्मवर्च्चसीजायतामाराष्ट्रेराजन्न्यः शूरऽइषव्व्योतिव्व्याधीमहारथोजायतान्दोग्ग्ध्रीधेनुर्व्वोढा
नड्वानाशुः सप्तिः पुरन्ध्रिर्य्योषाजिष्णूरथेष्ठाः सभेयोयुवास्ययजमानस्यव्वीरोजायतान्निकामेनिकामेनः पर्जन्न्योव्वर्षतुफलवत्योनऽ ओषधयः
पच्च्यन्तांय्योगक्षेमोनः कल्पताम् ॥२२॥ प्राणायस्वाहा पानायस्वाहा व्व्यानायस्वाहा चक्षुषेस्वाहा श्रोत्त्रायस्वाहा व्वाचेस्वाहामनसेस्वाहा
॥ २३ ॥ प्राच्च्यैदिशे स्वाहार्व्वाच्च्यैदिशेस्वाहादक्षिणायैदिशेस्वाहार्व्वाच्च्यैदिशेस्वाहाप्रतीच्च्यैदिशेस्वाहार्व्वाच्च्यैदिशेस्वाहोदीच्च्यैदिशेस्वाहा
र्व्वाच्च्यैदिशेस्वाहोर्द्ध्वायैदिशेस्वाहार्व्वाच्च्यैदिशेस्वाहावाच्च्यैदिशेस्वाहार्व्वाच्च्यैदिशेस्वाहा ॥ २४ ॥ अद्भ्यः स्वाहा व्वार्भ्यः स्वाहोदकाय
स्वाहातिष्ठन्तीभ्यः स्वाहास्रवन्तीभ्यः स्वाहास्यन्दमानाभ्यः स्वाहाकूप्याभ्यः स्वाहासूद्याभ्यः स्वाहाधार्य्याभ्यः स्वाहार्णवायस्वाहासमु
द्रायस्वाहासरिरायस्वाहा ॥ २५ ॥ व्वातायस्वाहा धूमायस्वाहाब्भ्रायस्वाहामेघायस्वाहाव्विद्योतमानायस्वाहास्तनयतेस्वाहावास्फूर्जते
स्वाहाव्वर्षतेस्वाहाववर्षतेस्वाहोग्ग्रंव्वर्षतेस्वाहाशीग्घ्रंव्वर्षतेस्वाहोद्गृह्णतेस्वाहोद्गृहीतायस्वाहाप्प्रुष्णतेस्वाहाशीकायतेस्वाहाप्प्रुष्वाभ्यः
स्वाहाह्रादुनीभ्यः स्वाहानीहारायस्वाहा ॥ २६ ॥ अग्ग्नयेस्वाहा सोमायस्वाहेन्द्रायस्वाहापृथिव्व्यैस्वाहान्तरिक्षायस्वाहादि

वेस्वाहादिग्भ्यःस्वाहाशाभ्यःस्वाहोर्व्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २७ ॥ नक्षत्रेभ्यःस्वाहा नक्षत्रियेभ्यःस्वाहाहोरात्रेभ्यःस्वाहार्द्धमासेभ्यःस्वाहामासेभ्यःस्वाहऽऋतुभ्यःस्वाहार्तवेभ्यः स्वाहासँव्वत्सरायस्वाहाद्यावापृथिवीभ्याᳬंस्वाहाचन्द्रायस्वाहा सूर्य्यायस्वाहारश्मिभ्यःस्वाहाव्वसुभ्यःस्वाहारुद्रेभ्यःस्वाहादित्येभ्यःस्वाहामरुद्भ्यःस्वाहाव्विश्श्वेभ्योदेवेभ्यःस्वाहामूलेभ्यःस्वाहा शाखाभ्यःस्वाहाव्वनस्पतिभ्यःस्वाहापुष्पेभ्यःस्वाहाफलेभ्यःस्वाहौषधीभ्यःस्वाहा ॥ २८ ॥ पृथिव्यैस्वाहा अन्तरिक्षायस्वाहादिवेस्वाहासूर्य्यायस्वाहाचन्द्रायस्वाहानक्षत्रेभ्यःस्वाहाद्भ्यःस्वाहौषधीभ्यःस्वाहाव्वनस्पतिभ्यः स्वाहापारिप्प्लवेभ्यःस्वाहाचराचरेभ्यःस्वाहासरीसृपेभ्यः स्वाहा ॥ २९ ॥ असवेस्वाहाव्वसवेस्वाहाव्विभुवेस्वाहा व्विवस्वतेस्वाहागणश्रियेस्वाहागणपतयेस्वाहाभिभुवेस्वाहाधिपतयेस्वाहाशूषायस्वाहासᳬंसर्प्पायस्वाहाचन्द्रायस्वाहाज्ज्योतिषेस्वाहामलिम्म्लुचायस्वाहादिवापतयेस्वाहा ॥ ३० ॥ मधवेस्वाहा माधवायस्वाहाशुक्रायस्वाहाशुचयेस्वाहानभसेस्वाहानभस्यायस्वाहेषायस्वाहोर्ज्जायस्वाहासहसेस्वाहासहस्यायस्वाहातपसेस्वाहातपस्यायस्वाहाᳬंहसस्पतयेस्वाहा ॥ ३१ ॥ व्वाजायस्वाहा ॥ प्प्रसवायस्वाहापिजायस्वाहाक्रतवेस्वाहास्वःस्वाहा मूर्द्ध्नेस्वाहाव्व्यश्नुविनेस्वाहान्त्यायस्वाहान्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहाप्प्रजापतयेस्वाहा ॥ ३२ ॥ आयुर्यज्ञेन ॥ कल्पताᳬंस्वाहाप्प्राणोयज्ञेनकल्पताᳬंस्वाहापानो

यज्ञेनकल्पताᳬस्वाहाव्यानोयज्ञेनकल्पताᳬस्वाहोदानोयज्ञेनकल्पताᳬस्वाहासमानोयज्ञेनकल्पताᳬस्वाहाचक्षुर्यज्ञेनकल्पताᳬ स्वाहा
श्श्रोत्रंय्यज्ञेनकल्पताᳬ स्वाहाव्वाग्यज्ञेनकल्पताᳬस्वाहामनोयज्ञेनकल्पताᳬ स्वाहात्मायज्ञेनकल्पताᳬस्वाहाब्ब्रह्मायज्ञेनकल्पताᳬ
स्वाहाज्ज्योतिर्यज्ञेनकल्पताᳬस्वाहास्वर्यज्ञेनकल्पताᳬस्वाहापृष्ठंय्यज्ञेनकल्पताᳬस्वाहायज्ञोयज्ञेनकल्पताᳬस्वाहा ॥ ३३ ॥ एकस्मै
स्वाहा द्वाभ्याᳬस्वाहाशतायस्वाहैकशतायस्वाहाव्युष्ट्यैस्वाहास्वर्गायस्वाहा ॥ ३४ ॥ इतिश्रीशुक्लयजुर्वेदवाजसनेयसंहितायांदी
र्घपाठेद्वाविंशोध्यायः ॥ २२ ॥ हरिः ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिᳬसर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषऽ
एवेदᳬसर्व्वंय्यद्भूतंय्यच्चभाव्यम् ॥ उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एतावानस्यमहिमातोज्ज्यायाँश्चपूरुषः पादोस्यविश्श्वा
भूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्द्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततोव्विष्ष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॥
ततोव्विराडजायतव्विराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्च्यतपश्श्चाद्भूमिमथोपुरः ॥ ५ ॥ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम्
पशूँस्ताँश्चक्रेवायव्व्यानारण्याग्ग्राम्याश्श्चये ॥ ६ ॥ तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानिजज्ञिरे छन्दाᳬसिजज्ञिरेतस्माद्यजुस्तस्मादजायत
॥ ७ ॥ तस्मादश्वाऽअजायन्तयेकेचोभयादतः गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥८॥ तंय्यज्ञम्बर्हिषिप्रौक्षन्पुरुषंजातमग्ग्रतः ॥ तेनदे

वाऽअंजयन्तसाध्याऽऋषंयश्श्चये ॥ ९ ॥ यत्पुरुषंव्यदंधुःकतिधाव्यंकल्पयन् ॥ मुखंकिमंस्यासीत् किम्बाहूकिमूरूपादांऽउच्येते ॥ १०॥
ब्राह्मणोस्यमुखंमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदंस्ययद्वैश्यःपद्भ्याᳬंशूद्रोऽअंजायत ॥ ११ ॥ चन्द्रमामनंसोजातश्चक्षोःसूर्योऽअजायत
श्रोत्राद्वायुश्च प्राणश्चमुखादग्निरजायत ॥ १२ ॥ नाभ्यांऽआसीदन्तरिक्षᳬं शीर्ष्णोद्यौःसमंवर्त्तत॥पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँ२ऽअंक
ल्पयन् ॥ १३ ॥ यत्पुरुषेणहविषा देवायज्ञमतंन्वत॥वसन्तोस्या सीदाज्यंग्रीष्मऽइध्मःशरद्धविः ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिःसप्तस
मिधःकृताःदेवायद्यज्ञन्तंन्वानाऽअबंध्नन्पुरुषपशुम् ॥ १५ ॥ यज्ञेनंयज्ञमंयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन्तेहनाकंम्महिमानःसच
न्तयत्रपूर्व्वेसाध्याः सन्तिदेवाः ॥ १६ ॥ इतिश्रीवाजसनेयसंहितायामेकत्रिंशाध्यायोक्तंविष्णुसूक्तंसमाप्तम्॥२॥अथरुद्रसूक्तम् ॥ ॐनमंस्ते
रुद्रमन्यवंऽउतोतऽइषवेनमःबाहुभ्यांमुततेनमः ॥ १ ॥ यातेरुद्रशिवातनूरघोरापापकाशिनी। तयानस्तन्वाशन्तंमयागिरिशन्ताभिचाकशी
हि ॥ २ ॥ यामिषुंगिरिशन्त हस्तेबिभर्ष्यस्तवे। शिवागिरित्रताङ्कुरुमाहिᳬंसीःपुरुषञ्जगत्॥ ३॥ शिवेनवचसात्वागिरिशाच्छावदामसि।
यथानःसर्व्वमिज्जगंदयक्ष्मᳬंसुमनाऽअसत् ॥ ४ ॥ अध्यंवोचदधिवक्ताप्रथमोदैव्योभिषक्॥अहींश्चसर्व्वाञ्जम्भयन्त्सर्वाश्चयातुधान्यो
धराचीः परांसुव ॥ ५ ॥ असौयस्ताम्म्रोऽअरुणऽउतबभ्रुःसुमंगलः। येचैनᳬंरुद्राऽअभितोदिक्षुश्रिताःसहस्रशोवैषाᳬंहेडऽई

महे ॥ ६ ॥ असौयोवसर्प्पतिनीलग्ग्रीवोव्विलोहितः । उतैनंगोपाऽअदृश्श्रन्नदृशन्नुदहार्य्यः सदृष्टोमृडयातिनः ॥ ७ ॥
नमोस्तुनीलग्ग्रीवाय सहस्राक्षायमीढुषे ॥ अथोयेऽअस्यसत्त्वानोहन्तेभ्योकरन्नमः ॥ ८ ॥ प्रमुञ्चधन्न्वनस्त्वमुभयोरार्त्न्न्योर्
ज्ज्याम् ॥ याश्चतेहस्तऽइषवः परातामगवोव्वप ॥ ९ ॥ विज्ज्यन्धनुः कपर्द्दिनोव्विशल्ल्योबाणवाँ२ऽउत । अनेशन्नस्ययाऽइषवऽआभुरस्य
निषङ्गधिः ॥ १० ॥ यातेहेतिर्म्मीढुष्टमहस्तेबभूवतेधनुः । तयास्मान्न्विश्श्वतस्त्वमयक्ष्मयापरिभुज ॥ ११ ॥ परितेधन्न्वनो
हेतिरस्म्मान्न्वृणक्तुव्विश्श्वतः । अथोयऽइषुधिस्तवारेऽअस्म्मन्निधेहितम् ॥ १२ ॥ अवतत्त्यधनुष्ट्वꣳसहस्राक्षशतेषुधे । निशीर्य्यशल्ल्यानाम्मु
खाशिवोनः सुमनाभव ॥ १३ ॥ नमस्तऽआयुधायानाततायधृष्णवे । उभाब्भ्यामुततेनमोबाहुब्भ्यान्तवधन्न्वने ॥ १४ ॥ मानोमहा
न्तमुतमानोऽअर्ब्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् । मानोव्वधीः पितरम्मोतमातरम्मानः प्प्रियास्तन्न्वोरुद्द्ररीरिषः ॥ १५ ॥ मानस्तो
केतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषः । मानोव्वीरान्रुद्द्रभामिनोव्वधीर्हविष्मन्तः सदमित्त्वाहवामहे ॥ १६ ॥ नमोहिरण्ण्यबाह
वेसेनान्न्ये दिशाञ्चपतये नमोनमो व्वृक्षेब्भ्योहरिकेशेब्भ्यः पशूनाम्पतये नमोनमः शष्प्पिञ्जरायत्त्विषीमते पथीनाम्पतये नमोनमो हरि 
केशायोपवीतिने पुष्टानाम्पतये नमोनमो बब्भ्लुशाय ॥ १७ ॥ नमोबब्भ्लुशायव्याधिनेन्नानाम्पतये नमोनमो भवस्य हेत्यै जगताम्पु

तये नमो नमो रुद्रायाततायिने क्षेत्राणाम्पतये नमो नमः सूतायाहन्त्यै वनानाम्पतये नमो नमो रोहिताय ॥ १८ ॥ नमो रोहितायस्थ
पतये वृक्षाणाम्पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमो नमऽउच्चैर्घोषायाक्र
न्दयते पत्तीनाम्पतये नमो नमः कृत्स्नायतया ॥ १९ ॥ नमः कृत्स्नायतया धावते सत्वनाम्पतये नमो नमः सहमानाय निव्याधिनऽआव्या
धिनीनाम्पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमो नमो निचेरवे परिचरायारण्यानाम्पतये नमो नमो वञ्चते ॥ २० ॥
नमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमो नमो निषङ्गिणऽइषुधिमते तस्कराणाम्पतये नमो नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णता
म्पतये नमो नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमो ॥ २१ ॥ नमऽउष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमो नमऽइषुमद्भ्यो
धन्वायिभ्यश्च वो नमो नमऽआतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नमऽआयच्छद्भ्योऽस्यद्भ्यश्च वो नमो नमो विसृजद्भ्यः
॥२२॥ नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्यऽआसीनेभ्यश्च वो नमो नमस्तिष्ठ
द्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः ॥ २३ ॥ नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमोऽश्वेभ्यो ऽश्वपतिभ्यश्च वो नमो नमऽआ
व्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नमऽउगणाभ्यस्तृंहतीभ्यश्च वो नमो नमो गणेभ्यः ॥२४॥ नमो गणेभ्यो गणपतिभ्यश्च

वो नमोनमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो
नमो नमः सेनाभ्यः ॥ २५ ॥ नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्योऽअरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः सङ्ग्रहीतृ
भ्यश्च वो नमो नमो महद्भ्योऽअर्भकेभ्यश्च वो नमः ॥ २६ ॥ नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः कुलालेभ्यः कर्म्मारेभ्यश्च
वो नमो नमो निषादेभ्यः पुञ्जिष्टेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमो नमः श्वभ्यः ॥ २७ ॥
नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्द्दिने ॥ २८ ॥
नमः कपर्द्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय ॥ २९ ॥
नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च नमऽआशवे ॥ ३० ॥ नमऽआशवे चाजिराय
च नमः शीघ्र्याय च शीभ्याय च नमऽऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय च ॥ ३१ ॥ नमो ज्येष्ठाय च कनिष्ठाय च नमः
पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च नमः सोभ्याय ॥ ३२ ॥ च नमः सोभ्याय च प्रतिसर्याय च नमो 
याम्याय च क्षेम्याय च नमः श्लोक्याय चावसान्याय च नमऽउर्वर्याय च खल्याय च नमो वन्याय ॥ ३३ ॥ नमो वन्याय च कक्ष्याय च नमः श्रवा

यंचप्प्रतिश्श्रवायचनमऽआशुषेणायचाशुरथायचनमश्शूरायचावभेदिनेचनमोबिल्म्मिने ॥ ३४॥ नमोबिल्म्मिनेचकवचिनेचनमोव्वर्म्मिणे
चव्वरूथिनेचनमःश्रुतायचश्श्रुतसेनायचनमोदुन्दुब्भ्यायचाहनन्न्यायचनमोधृष्णवे ॥ ३५ ॥ नमोधृष्णवेचप्प्रमृशायचनमोनि
षङ्गिणेचेषुधिमतेचनमस्तीक्ष्णेषवेचायुधिनेचनमःस्वायुधायचसुधन्न्वनेच ॥ ३६ ॥ नमस्स्रुत्यायचपत्थ्यायचनमस्काट्ट्यायचनीप्प्याय
चनमस्कुल्ल्यायचसरस्यायचनमोनादेयायचव्वैशन्तायचनमस्कूप्प्याय ॥ ३७ ॥ नमस्कूप्प्यायचावट्ट्यायचनमोव्वीद्ध्र्यायचातप्प्यायचन
मोमेघ्यायचाव्विद्युत्त्यायचनमोव्वर्ष्यायचावर्ष्यायचनमोव्वात्त्याय॥३८॥नमोव्वात्त्यायचरेष्म्म्यायचनमोव्वास्तव्व्यायचव्वास्तुपायचनमस्सो
मायचरुद्रायचनमस्ताम्म्रायचारुणायचनमःशङ्गवे॥३९॥नमःशङ्गवेचपशुपतयेचनमऽउग्ग्रायचभीमायचनमोग्ग्रेवधायचदूरेवधायचनमो
हन्त्रेचहनीयसेचनमोव्वृक्षेब्भ्योहरिकेशेब्भ्योनमस्ताराय ॥४०॥ नमःशम्भवायचमयोभवायचनमःशङ्करायचमयस्करायचनमःशिवायच
शिवतरायच॥४१॥ नमःपार्य्यायचावार्य्यायचनमःप्प्रतरणायचोत्तरणायचनमस्तीर्त्थ्यायचकूल्ल्यायचनमश्शष्प्यायचफेन्न्यायचनमःसि
कत्याय॥४२॥नमःसिकत्यायचप्प्रवाह्यायचनमःकिꣳशिलायचक्षयणायचनमःकपर्द्दिनेचपुलस्तयेचनमऽइरिण्यायचप्प्रपत्थ्यायच४३॥
नमोव्व्रज्यायचगोष्ठ्यायचनमस्तल्प्यायचगेह्यायचनमोहृदय्यायचनिवेष्प्यायनमस्काट्ट्यायचगह्वरेष्ठायचनमश्शुष्क्याय ४४॥ नमश्शुष्क्या

यचहरित्यायच नमः पाᳬसव्यायचरजस्यायच नमो लोप्प्यायचोलप्प्यायच नमऽऊर्व्व्यायचसूर्व्यायचनमः पुर्ण्णाय॥४५॥ नमः पुर्ण्णा
यचपर्णशदायचनमऽउद्गुरमाणायचाभिघ्नते चनमऽआखिदतेच प्रखिदतेचनमऽइषुकृद्भ्यो धनुष्कृद्भ्यश्चवो नमो नमोवः किरिकेभ्यो
देवानाᳬहृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नमऽआनिर्हतेभ्यः॥४६॥द्रापेऽअन्धसस्पते दरिद्रनीललोहित ॥
आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनः किञ्चनाममत्॥४७॥इमारुद्रायतवसे कपर्दिनेक्षयद्वीरायप्रभरामहेमतीः यथाशमसद्द्विपदे
चतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥ ४८ ॥ यातेरुद्रशिवातनूः शिवाविश्वाहाभेषजी शिवारुद्रस्यभेषजीतयानोमृडजीवसे॥४९॥
परिनोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्म्मतिरघायोः॥अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृड ॥ ५०॥ मीढुष्टमशिवतमशिवो
नः सुमनाभवपरमेवृक्षऽआयुधन्निधायकृत्तिंव्वसानऽआचरपिनाकम्बिभ्रदागहि ॥ ५१ ॥ विकिरिद्रविलोहितनमस्तेऽअस्तुभगवः यास्ते
सहस्रᳬहेतयोन्यमस्मन्निवपन्तुताः ॥ ५२ ॥ सहस्राणिसहस्रशोबाह्वोस्तवहेतयः तासामीशानोभगवः पराचीनामुखाकृधि ॥ ५३ ॥
असंख्यातासहस्राणियेरुद्राऽअधिभूम्म्याम्॥तेषाᳬसहस्रयोजनेवधन्वानितन्मसि॥ ५४॥ अस्मिन्महत्यर्णवेन्तरिक्षेभवाऽअधितेषाᳬ० ॥
॥ ५५ ॥ नीलग्रीवाःशितिकण्ठादिवᳬरुद्राऽउपश्रिताः॥तेषाᳬ०॥५६॥नीलग्रीवाःशितिकण्ठाः शर्व्वाऽअधःक्षमाचराः॥तेषाᳬ०५७ ॥

येवृक्षेषुशष्पिञ्जरानीलग्ग्रीवाव्विलोहिताः॥तेषां७०॥५८॥ येभूतानामधिपतयोव्विशिखासःकपर्द्दिनः॥तेषां७०॥५९॥ येपथाम्पथिरक्ष
यऽऐलबृदाऽआयुर्युधः॥ तेषा७०॥ ६०॥ येतीर्थानिप्प्रचरन्तिसृकाहस्तानिषङ्गिणः॥तेषा७०॥ ६१॥ येन्नेषुव्विविद्ध्यन्ति
पात्रेषुपिबतोजनान्॥तेषां७०॥६२॥यऽएतावन्तश्चभूयाꣳसश्चदिशोरुद्रावितस्थिरे॥तेषां७०॥ ६३॥ नमोस्तुरुद्रेभ्योयेदिवियेषांव्वर्ष
मिषवस्तेभ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः॥तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्ष्मोयश्चनोद्वेष्टितमेषाञ्ज
म्भेदध्मः॥ ६४॥ नमोस्तुरुद्रेभ्योयेन्तरिक्षेयेषांव्वातऽइषवः॥तेभ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः॥तेभ्योनमोऽ
अस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः॥ ६५॥ नमोस्तुरुद्रेभ्योयेपृथिव्व्यांयेषामन्नमिषवः॥तेभ्यो
दशप्प्राचीर्दशदाक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः॥तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः॥
॥ ६६॥ ॥ इतिश्रीवाजसनेयसंहितायां षोडशाध्यायोक्तंरुद्रसूक्तंसमाप्तम्॥३॥ अथ यमसूक्तम्॥ हरिः ॐ तदेवा॥ तदेवाग्निस्तदा
दित्यस्तद्वायुस्तदुचन्द्रमाः॥तदेवशुक्रन्तद्ब्रह्मताऽआपःसप्रजापतिः॥१॥सर्व्वेनिमेषाः॥जज्ञिरेव्विद्युतःपुरुषादधि॥ नैनमूर्द्ध्वन्नतिर्य्यञ्चन्नम
ध्येपरिजग्ग्रभत्॥२॥नतस्य॥ प्प्रतिमाऽअस्तियस्यनाममहद्यशः॥हिरण्यगर्ब्भऽइत्येषमामाहिꣳसीदित्येषायस्म्मान्नजातऽइत्येषः॥३॥

एषोहदेवऽप्प्रदिशोनुसर्व्वाः पूर्व्वोहजातऽसऽउगर्ब्भेऽअन्तः ॥ सऽएवजातऽसजनिष्ष्यमाणःप्प्रत्यङ्जनास्तिष्ठतिसर्व्वतोमुखः ॥
॥ ४ ॥ यस्म्माञ्जातन्नपुराकिञ्चनैवयऽआबभूवभुवनानिव्विश्श्वा ॥ प्प्रजापतिः प्प्रजयासर्ठरराणस्त्रीणिज्योतीर्ठषिसचतेसषोडशी ॥ ५ ॥
येनद्यौरुग्ग्रापृथिवीचदृढायेनस्वस्तभितंय्येननाकः ॥ येऽअन्तरिक्षेरजसोव्विमानःकस्म्मैदेवायहव्विषाव्विधेम ॥६॥ यङ्क्रन्दसीऽअव
सातस्तभानेऽअब्भ्यैक्षेताम्मनसारेजमाने ॥ यत्राधिसूरऽउदितोव्विभातिकस्म्मैदेवायहविषाव्विधेम ॥ आपोहयद्बृहतीर्य्यश्चिदापः ॥ ७ ॥
व्वेनस्तत् ॥ पश्श्यन्निहितङ्गुहासद्यत्र व्विश्श्वम्भवत्येकनीडम् ॥ तस्म्मिन्निदर्ठसञ्चव्विचैतिसर्वर्ठसऽओतःप्प्रोतश्चव्विभूःप्प्रजासु ॥ ८ ॥
प्प्रतद्वोचेदमृतन्नुव्विद्वान्गन्धर्व्वोधामव्विभृतङ्गुहासत् ॥ त्रीणिपदानिनिहिताग्गुहास्ययस्तानिव्वेदसपितुःपितासत् ॥ ९ ॥ सनोबन्धुर्ज्जनि
तासव्विधाताधामानिव्वेदभुवनानिव्विश्श्वा ॥ यत्रदेवाऽअमृतमानशानास्तृतीयेधामन्नद्ध्यैरयन्त ॥ १० ॥ परीत्यभूतानि ॥ परीत्यलोका
न्न्परीत्यसर्व्वाःप्प्रदिशोदिशश्च ॥ उपस्त्थायप्प्रथमजामृतस्यात्मनात्मानमभिसंविवेश ॥ ११ ॥ परिद्यावापृथिवी ॥ सद्यऽइत्वापरि
लोकान्न्परिदिशःपरिस्वः ॥ ऋतस्यतन्तुंव्विततंव्विचृत्यतदपश्यत्तदभवत्तदासीत् ॥ १२ ॥ सदसस्प्पतिमद्भुतम्प्प्रियमिन्द्रस्यकाम्म्य
म् ॥ सनिम्मेधामयासिषर्ठस्स्वाहा ॥ १३ ॥ याम्मेधान्देवगणाऽपितरश्चोपासते ॥ तयामामद्यमेधयाग्नेमेधाविनङ्कुरुस्वाहा ॥ १४ ॥

मेधाम्मे ॥ व्वरुणोददातुमेधामग्निः प्प्रजापतिः मेधामिन्द्रश्चव्वायुश्चमेधान्धातादातुमेस्वाहा ॥ १५ ॥ इदम्मे ब्रह्मचक्षत्रञ्चोभेश्रियमश्नु
ताम् ॥ मयिदेवादधतश्रियमुत्तमान्तस्यैतेस्वाहा ॥ १६ ॥ इतिश्रीवाजसनेयसंहितायांद्वात्रिंशाध्यायोक्तंयमसूक्तंसमाप्तम् ॥ ४ ॥ अथप्रेत
सूक्तम्॥हरिः ॐ अपेतः ॥ अपेतोयन्तुपणयोसुम्म्नादेवपीयवः ॥ अस्यलोकः सुतावतः ॥ द्युभिरहोभिरक्तुभिर्व्यक्तँय्यमोददात्ववसा
नमस्म्मै ॥१॥ सवितातेशरीरेभ्यः पृथिव्व्याँल्लोकमिच्छतु ॥ तस्म्मैयुज्ज्यन्तामुस्रियाः ॥ २ ॥ व्वायुः पुनातु ॥ सवितापुनात्वग्नेर्भ्रा
जसासूर्य्यस्यव्वर्चसा ॥ व्विमुच्यन्तामुस्रियाः ॥ ३ ॥ अश्वत्थेवो निषदनम्पर्णेवोव्वसतिष्कृता ॥ गोभाज
ऽइत्किलासथयत्सनवथपूरुषम् ॥ ४ ॥ सवितातेशरीराणिमातुरुपस्थऽआवपतु ॥ तस्म्मैपृथिविशम्भव ॥
॥ ५ ॥ प्प्रजापतौत्वा देवतायामुपोदके। लोकेनिदधाम्म्यसौ ॥ अपनः शोशुचदघम् ॥ ६ ॥ परम्मृत्यो
अनुपरेहिपन्थाँय्यस्तेऽअन्न्यऽइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्ब्रवीमिमानः प्प्रजाँ रीरिषोमोतव्वीरान् ॥ ७ ॥ शँव्वातः शँ
हितेघृणिः शन्तेभवन्त्विष्टकाः ॥ शन्तेभवन्त्वग्नयः पार्थिवासोमात्वाभिशूशुचन् ॥ ८ ॥ कल्पन्तान्तेदिशस्तुब्भ्यमापः शिवतमास्तु
ब्भ्यम्भवन्तुसिन्धवः ॥ अन्तरिक्षँ शिवन्तुब्भ्यङ्कल्पन्तान्तेदिशः सर्व्वाः ॥ ९ ॥ अश्म्मन्वतीरीयते सँरभद्ध्वमुत्तिष्ठतप्रतरता

सर्वाय॑ ॥ अत्रांजहीमोशिवांयऽअसञ्छिवाञ्वयमुत्तरेमाभिवाजान् ॥ १० ॥ अपाघमपकिल्बिषमपकृत्त्यामपोरपः ॥ अपांमार्ग्गत्त्व
मस्म्मदपदु॑ष्ष्वप्न्य॑ठंसुव ॥ ११ ॥ सुमित्त्रियानऽआपऽओषधयः संतुदुर्मित्रियास्तस्म्मैसन्तुयोस्म्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥१२॥ अन
ड्वाहंमन्वारंभामहेसौरंभेयठंस्वस्तये ॥ सनऽइन्द्रऽइवदेवेभ्योवह्निठंसन्तारणोभव ॥ १३ ॥ उद्वयन्तमंसस्परिस्वः पश्यन्तऽउत्त
रम् ॥ देवन्देवत्राससूर्य्यमगन्मज्ज्योतिरुत्तमम् ॥ १४ ॥ इमञ्जीवेभ्यः परिधिन्दधामिमैषान्नुगादपरोऽअर्थमेतत् ॥ शतञ्जीवन्तुशरदः
पुरूचीरन्तर्म्मृत्युन्दधताम्पर्वतेन ॥ १५ ॥ अग्नऽआयूठंषि पवसऽआसुवोर्ज्जमिषञ्चनः ॥ आरेबाधस्वदुच्छुनाम् ॥ १६ ॥ आयुष्मा
नग्ने हविषावृधानोघृतप्रतीकोघृतयोनिरेधि ॥ घृतम्पीत्वामधुचारुगव्यम्पितेवपुत्रमभिरक्षतादिमान्त्स्वाहा॥१७॥ परीमे गामनेष
तपर्य्यग्निमहृषत ॥ देवेष्वक्रतश्रवःकऽइमाँ२ऽआदधर्षति ॥१८॥ क्रव्यादमग्निम्प्रहिणोमिदूरय्यमराज्यङ्गच्छतुरिप्रवाहः ॥
इहैवायमितरोजातवेदादेवेभ्योहव्यंवहतुप्रजानन् ॥ १९ ॥ वहवपाञ्जातवेदः पितृभ्योयत्रैनान्वेत्थनिहितान्पराके ॥ मेदसः
कुल्ल्याऽउपतान्त्स्रवन्तुसत्याऽएषामाशिषःसन्नमन्ताठंस्वाहा ॥ २० ॥ स्योनापृथिविनोभवान्नृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्र
थाः ॥ अपनःशोशुचदघम् ॥ २० ॥ अस्म्मात्त्वमधिजातोसित्वदयञ्जायताम्पुनः ॥ असौस्वर्गायलोकायस्वाहा ॥ २२ ॥

इतिश्रीवाजसनेयसंहितायांपंचात्रिंशाध्यायोक्तं ( तत्पुरुष प्रेतसूक्तंसमाप्तम् ॥ इतिश्रीगौडीयश्राद्धप्रकाशेब्रह्मादिपंचसूक्तानिसमाप्तानि ॥
॥ ९ ॥ अथनारायणबलिसामग्रीलिख्यते ॥ शालग्रामप्रतिमा साङ्गा १ स्वर्णमयीविष्णुप्रतिमा २ राजतीब्रह्मप्रतिमा १ ताम्रमयीरुद्र प्रतिमा १ लोहमयीयमप्रतिमा १ सीसकमयीप्रेतप्रतिमा १ सुवर्णखंड । नारिकेलकेफल ७ चंदन । कुंकुम । केशर । कर्पूर । गोरोचन । पुष्प विचित्रजैसेदेशकालोद्भवहों । धूप । दीप।दीपवर्तिका । यज्ञोपवीत कईजोडी । तांबूल । पूगीफल९० ऋतुफल । तुलसी पत्र । बिल्वपत्र । शमीपत्र । गंगोदक । अभावमें तडागकूपादिजल । गोदुग्ध । गोदधि । गोमूत्र । गोमय । मधु । श्वेतवस्त्र । रक्तव स्त्र । पीतवस्त्र । कृष्णवस्त्र । पीतपट्टवस्त्र । सर्वौषधि । कूठ । जटामांसी । हरिद्राद्वय । देवदारु छड । छडिलो । चंदन । वच । चंपक । मुस्ता । सप्तमृत्तिका ७ अश्वत्थ । वट । प्लक्ष । आम्र । उडुंबर इनपाँचोंकेपंचपल्लव ५ । पंचरत्न । तंडुल । गोधूम । मुद्ग । माष । तिल । यव । शर्करा। गोकाघृत । गव्य। गुग्गुलु । मेवो । मोदक ।लड्डु।पेडा।सिंदूर।गौरसर्षपा।दर्भा।दूर्वा ।पलाशादिपत्रकेपात्र।आचमनपात्र। कर्मपात्र ।ताम्रपात्र । अर्घ्यपात्र । आसन । प्रोक्षणीपात्र १ प्रणीता १ आज्यस्थाली १ चरुस्थाली १ स्रुक्स्रुव १ पलाशसमिध् शमीप्रभृतिसमिधः । मृन्मयकलश ५ ताम्रकलश १ पूर्णपात्रपात्र ६ जलपात्र १ धेनु अथवा । मौल्य । लोहदंड १ रजतद्रव्य पृथ्वीदान । हिरण्य । वस्त्र । गुड । लवण ! धान्य । महिषीमूल्य। चामरमूल्य।भूयसी ताम्रदक्षिणा । कार्पास।पेटिका । सूत्र।आमान्न।पत्त ल । यवचूर्ण सेटक भर ३ छायापात्र । तिलतैल । प्रायश्चित्तधेनु अथवा मूल्य । प्राजापत्यव्रत १९ अथवा प्रतिप्राजापत्यगोदान अथवा मूल्य अथवा प्रतिप्राजापत्य । द्वादशसहस्रगायत्रीजप । ब्रह्मादिपंचसूक्तपाठ । शंख १शरावा५०मट्टीकाघटजललानेको लगुड १ श्राद्धस्थानवेष्टनार्थवस्त्र । गौरमृत्तिका । गंगोदक । भस्म ॥ इत्याद्युपकरणानि ॥ छ ॥ ॥ छ ॥

अथ पंचकमरणशांतिप्रयोगः ॥ तावन्मरणविधिर्लिख्यते ॥ तत्रादौदाहदेशेशवंनीत्वा शुद्धभूमौसंस्थाप्य तत्समीपे दर्भाणांपंचप्रतिमाः ऊर्णासूत्रवेष्टिताः यवपिष्टेनानुलिप्ताः मनुष्याकृतीः कृत्वापूजयेत् ॥ तद्यथा देशकालौसंकीर्त्यअपसव्येन अमुकगोत्रस्य अमुकप्रेतस्य धनिष्ठादिपंचकेमरणसूचितवंशानिष्टविनाशार्थं पंचकविधिंकरिष्ये इतिसंकल्प्य स्थंडिलेस्थापितपंचप्रतिमाः ॥ प्रेतवाहायनमः १ प्रेतसखायनमः २ प्रेतपायनमः ३ प्रेतभूमिपायनमः ४ प्रेतहर्त्रेनमः ५ इतिनाममंत्रेणप्रत्येकं गंधपुष्पधूपदीपनैवेद्यादिभिःसंपूज्य दाहसमयेप्रेतस्योपरिविन्यसेत् ॥ प्रथमांशिरसि १ द्वितीयांदक्षिणकुक्षौ २ तृतीयांवामकुक्षौ ३ चतुर्थींनाभौ ४ पंचमींपादयोर्मध्ये ५ एवंन्यस्य तदुपरिताभ्योनामभिर्मंत्रैर्घृताहुतीर्दद्यात् ॥ प्रेतवाहायस्वाहा ॥ प्रेतसखायस्वाहा ॥ प्रेतपायस्वाहा ॥ प्रेतभूमिपायस्वाहा॥ प्रेतहर्त्रेस्वाहा इतिहुत्वाताभिःसह विधिनाशवंदहेत् ॥ सूतकांते ततः कुर्य्याद्विधानपंचकंतथा ॥ अन्यथानगतिस्तस्य प्रेतपुत्रसुशोभनमितिमरणसमयपंचकविधानम् ॥ अथशांतिप्रयोगः ॥ तत्रादौ सूतकान्ते पुत्रादिस्तीर्थेपुण्यक्षेत्रे वा तडागादिसमीपेगत्वा तत्रकर्मभूमिंपरिकल्प्य गोमयोदकेनानुलिप्य गौरमृत्तिकयाऽऽच्छाद्यतत्रसामग्रींस्थापयेत् ॥ ततः स्नात्वाधौतशुक्लवाससीनूतनयज्ञोपवीतंचपरिधाय संध्यादिनित्यक्रियांसमाप्य होमार्थंहस्तमात्रंस्थंडिलंकृत्वा तदीशान्यांशुद्धमृदामंडलंचकृत्वा तत्रवस्त्रंसमास्तीर्यतदुपरिकलशपंचकंपूर्वदक्षिणपश्चिमोत्तरासुमध्येचधान्यपुंजोपरिक्रमेण स्थापनीयम् ॥ आचम्य प्राणानायम्य ॐअपवित्रः० ॐपुंडरीकाक्षः पुनात्वितिकुशत्रयेण संभारान्स्वात्मानंचजलेनप्रोक्ष्य गणेशनवग्रहादिदेवान्पूजयेत् ॥ ततो देशकालौ संकीर्त्य ॥ अपसव्येन अमुकगोत्रस्य अमुकप्रेतस्य धनिष्ठादिपंचकजनितदुर्मरणदोषनिवृत्त्यर्थम् (सव्यंकृत्वा) ममगृहे सपरिवाराणामायुरारोग्यसुखप्राप्त्यर्थं विष्णुपूजनपूर्वकंपंचक

शांतिकर्माहंकरिष्ये॥इतिसंकल्प्य विष्णुंषोडशोपचारैः संपूजयेत्॥ततो देशकालौ संकीर्त्य अमुकप्रेतस्य० पंचकशांतिकर्मांगतया विहितं कलशपंचकंदेवतानांस्थापनंप्रतिष्ठापूजनंचकरिष्ये॥इति संकल्प्य ॥ ॐभूरसिभूमिरसीतिकलशाधारभूमिंस्पृष्ट्वा॥ॐधान्यमसिधिनुहि इति स्थापितधान्यमभिमंत्र्य॥तस्योपरि ॐआजिघ्रकलशमिति क्रमेण कलशपंचकंस्थापयेत् ॥ ततः ॐवरुणस्योत्तमितितेषुजलमापूर्य्य॥ ॐयाऽओषधीः पूर्व्वाजाता इतिसर्वौषधीः॥कांडात्काण्डादितिदूर्वाः॥अश्वत्थेवोनिषदनमिति पंचपल्लवान्॥स्योनापृथिविनो इतिसप्तमृदः॥ याः फलिनीरिति पूगीफलानि॥परिवाजंपतिरिति पंचरत्नानि ॥ हिरण्यगर्भेति सुवर्णखंडानिचाक्षिपेत् ॥ ततः ॐवसोः पवित्रमसीति प्रत्येकंवस्त्रेण सूत्रेणवावेष्ट्य ॥ पूर्णादर्विपरापत इतितंडुलपूरितानिपंचताम्रपात्राणिनिधाय ॥ ॐ मनोजूतिर्जुषतामितिप्रतिष्ठां कृत्वा ॥तेषुॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः॥अहेडमानोवरुणेहबोध्युरुशंसमानऽआयुःप्रमोषीः ॥ ॐभूर्भुवः स्ववरुणइहागच्छइहतिष्ठइतिवरुणमावाह्य॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुयजमानस्य दुरितक्षयकारकाः ॥ १ ॥ इतितीर्थान्यावाह्य ॥ॐवरुणायनमः ॥ इतिपंचोपचारैःसंपूज्यॐकलशस्यमुखेविष्णुरित्यादिप्रार्थयेत् ॥ ततस्तेषुस्वर्णमयीःपंचप्रतिमाअग्न्युत्तारणपूर्व्वकंसंस्थापयेत् ॥ अथावाहनम् ॥ पूर्वकलशेदुग्धजलपूरितेवसून् ॐवसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारंदेवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ १ ॥ ॐभूर्भुवःस्वःवसवःइहागच्छतइहतिष्ठतॐवसून्आवाहयामिस्थाप

यामि इतिस्थापयेत ॥ दक्षिणकलशेदध्युदकपूरितेवरुणं० ॐव्वरुणस्योत्तम्भनमसिव्वरुणस्यस्कम्भसर्जनीस्त्थोव्वरुणस्यऽऋतसदन्य
सिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद ॥ २ ॥ ॐभूर्भुवःस्ववरुणइहागच्छ० वरुणमावाहयामि ॐवरुणायनमः इति
स्थापयेत्॥पश्चिमकलशेघृतोदकपूरिते अजैकपदं० ॐउतनोहिर्बुध्न्यःशृणोत्वजऽएकपात्पृथिवीसमुद्रः । विश्वेदेवाऽऋतावृधोहुवानास्तु
तामंत्रांकविशस्ताऽअवन्तु ॥ ३ ॥ ॐभूर्भुवःस्वःअजैकपदमावाहयामिस्थापयामि॥ॐअजैकपदेनमः इतिस्थापयेत् ॥ उत्तरकलशेगोमयो
दकपूरिते अहिर्बुध्न्यम् ॐशिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिꣳसीः ॥ निवर्त्तयाम्यायुषेन्नाद्यायप्रजननायरा
यस्पोषायसुप्रजास्त्वायसुवीर्य्याय ॥ ४ ॥ ॐभूर्भुवःस्वः अहिर्बुध्न्यइहागच्छेह० अहिर्बुध्न्यमावाहयामिस्थापयामि॥ॐअहिर्बुध्न्याय
नमः ॥ मध्यकलशेगोमूत्रोदकपूरितेपूषणम् ॐपूषन्तवव्रतेव्वयंनरिष्येमकदाचन ॥ स्तोतारस्तऽइहस्मसि ॥ॐभूर्भुवःस्वः पूषन्इहागच्छ
इहतिष्ठपूषाणमावाहयामिस्थापयामि ॐपूष्णेनमः इतिस्थापयेत् ॥ ५ ॥ इत्यावाह्य ॥ ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिम
न्तनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयन्तामोम्प्रतिष्ठ॥इतिप्रतिष्ठाप्यप्रत्येकंनाममंत्रेणषोडशोपचारैःसंपूजयेत्॥ततस्तत्पा
र्श्वेअक्षतपुंजेषु पूगीफलेपुवायमादिपंचदशदेवान्स्थापयेत् ॥ तद्यथाॐयमायनमःयमम् आवाहयामिस्थापयामि ॥ १ ॥ एवमग्रेॐधर्मरा

जायनमः धर्मराजं० ॥ २ ॥ ॐमृत्यवेनमः मृत्युमावा० ॥३॥ ॐअन्तकाय० अन्तकं० ॥४॥ ॐवैवस्वताय० वैवस्वतं०॥५॥ॐकालाय० कालं० ॥६॥ ॐसर्वभूतक्षयाय० सर्वभूतक्षयं० ॥७॥ ॐऔदुंबराय० औदुंबरं० ॥८॥ॐदध्नाय० दध्नं० ॥९॥ ॐनीलाय०नीलं०॥१०॥ ॐपरमेष्ठिने० परमेष्ठिनं०॥११॥ ॐवृकोदराय० वृकोदरं० ॥ १२ ॥ ॐचित्राय० चित्रं ॥१३॥ॐचित्रगुप्तायनमः चित्रगुप्तमावाहयामि स्थापयामि ॥ १४ ॥ ऐशान्ये ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्यानमस्तेऽअस्तुरुद्ररूपेभ्यः ॥ ॐअघोरायनमः अघोरमावाहयामिस्थापयामि ॥ १५ ॥ इत्यावाह्य ॐचतुर्दशयमेभ्योनमइतिषोडशोपचारैःपूजयेत् ॥ ततः पंचकलशेषुपंचसूक्तानिज पेत् ॥ प्रथमकलशेॐकृणुष्वपाजः प्रसितिन्नइत्यादिरक्षोघ्नीःपंचर्चः ॥ द्वितीयकलशे ॐविभ्राड्बृहत्पिबतुइत्याद्यनुवाकम् ॥ तृतीयकलशे ॐआशुःशिशानो इत्यादिअप्रतिरथम् ॥ चतुर्थेॐनमस्तेरुद्रमन्यवइत्यादिरुद्राध्यायः ॥ पंचमकलशे ॥ ॐऋचंवाचंप्रपद्ये इत्याद्यध्यायंचपठेत् ॥ अथाग्निस्थापनम् ॥ तत्रादौदेशकालौसंकीर्त्य ॥ अस्मिन्पंचकशांतिकर्मणिपंचसंस्कारपूर्वकाग्निप्रतिष्ठापनंकरिष्ये॥इतिसंकल्प्य पूर्वरचितस्थंडिलं कुशैः परिसमुह्य तानैशान्यांनिक्षिप्य गोमयोदकेनोपलिप्यस्रुवमूलेनप्रादेशमात्रमुत्तरोत्तरक्रमेणप्रागग्रंत्रिरुल्लिख्य उल्लेखनक्रमेणअनामिकांगुष्ठाभ्यांमृदंसमुद्धृत्य उदकेनाभ्युक्ष्य कांस्यपात्रेणाग्निमुपसमाधायस्थंडिले ॐअग्निंदूतम्पुरोदधेहव्यवाहमुपब्रुवे देवाँऽआसादयादिह ॥ १ ॥ इतिमंत्रेणस्थापयेत्॥ततः अन्यानीतपात्रेसाक्षतोदकंनिपिच्याऽग्निंध्यायेत् ॥ ॐचत्वारिशृङ्गा त्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ २ ऽआविवेश ॥ १ ॥ अग्नेवैश्वानरशांडिल्यगोत्र

शांडिलासितदैवलेतित्रिप्रवरान्वितभूमिमातृकवरुणपितृकमेषध्वजप्राङ्मुखममसम्मुखोभवइतिवरदनामाग्निंप्रतिष्ठाप्य प्रोक्षितेंधनानि
क्षिपेत् ॥ ततः पुष्पचंदनतांबूलवस्त्राण्यादाय ॐअद्यकर्त्तव्यपंचकशांतिहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्रममुक
र्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेनत्वामहंवृणे इतिब्रह्माणं वृणुयात् ॥ वृतोस्मीतिप्रतिवचनम् ॥ यथाविहितंकर्म
यजमानेनोक्ते करवाणीतितेनोक्ते अग्नेर्दक्षिणतः शुद्धमासनंविधाय तदुपरिप्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय
ङ्मुखंब्राह्मणंतदभावे पंचाशत्कुशनिर्मितम् अस्मिन्पंचकशांतिकर्मणि त्वंमेब्रह्माभवइत्यभिधायउपवेशयेत् ॥ भवानीतिप्रतिवचनम् ॥ ततः
ॐअद्यकर्त्तव्यपंचकशांतिहोमकर्मणि आचार्यकर्मकर्त्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिराचार्यत्वेनत्वामहंवृणे
ॐवृतोस्मीतितेनोक्ते आचार्यः प्रणीतापात्रंपुरतः कृत्वावारिणापरिपूर्य कुशैराच्छाद्य ब्रह्मणोमुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निद
ध्यात् ॥ ततः परिस्तरणम् ॥ बर्हिष ६४ श्चतुर्थभागमादायआग्नेयादीशानान्तम्उत्तराग्रैः४ ब्रह्मणोग्निपर्य्यंतंपूर्वाग्रैः४ नैर्ऋत्याद्वायव्यांतम्
उत्तराग्रैः४अग्नितः प्रणीतापर्य्यंतं पूर्वाग्रैः४चतुर्भिश्चतुर्भिर्दर्भदलैः परिस्तीर्य ततोऽग्नेरुत्तरतः पश्चिमदिशिपवित्रच्छेदनार्थंकुशत्रयं३पवित्रकर
णार्थंसाग्रमनंतर्गर्भंकुशपत्रद्वयं२ प्रोक्षणीपात्रम् आज्यस्थाली चरुस्थाली संमार्जनकुशाः३ उपयमनकुशाः ३ समिधस्तिस्रः पालाश्यः ३
स्रुवः खादिरः आज्यंगव्यं चर्वर्थास्तंडुलाः तंडुलपूर्णपात्रं दक्षिणाम् एतानिपवित्रच्छेदनकुशानां पूर्वपूर्वदिशिक्रमेणासादनीयानि ॥ ततः
पवित्रच्छेदनकुशैः पवित्रेछित्त्वा सपवित्रकरेणप्रणीतोदकंत्रिःप्रोक्षणीपात्रेनिक्षिप्य त्रिरुद्दिङ्गनयनम्॥ ततः प्रोक्षणीपात्रंगृहीत्वापवित्राभ्यांत्रि
रुत्पूय प्रणीतोदकं प्रोक्षणीपात्रेअभ्युक्ष्य प्रोक्षणीजलेन आसादितवस्तूनि एकैकशः प्रोक्ष्य अग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिदध्यात्॥ततः

आज्यस्थाल्यामाज्यंनिरूप्य प्रणीतोदकेनतंडुलान्प्रक्षाल्य चरुपात्रेप्रणीतोदकंदत्त्वा तत्रतंडुलान्प्रक्षिप्य चरुम् अग्नेर्दक्षिणत आज्यमुत्तरतोनिदध्यात् ॥ ततः सिद्धे चरौतृणादि प्रज्वाल्य उभयोरुपरिप्रदक्षिणंभ्रामयित्वा वह्नौतत्प्रक्षेपः ॥ ततस्त्रिः स्रुवप्रतपनं संमार्ज्जनकुशानामग्रैरन्तरतोमूलैर्बाह्यतः स्रुवंसंमृज्यप्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिःप्रताप्य दक्षिणतः स्थापयेत् ॥ ततः आज्यमग्नितश्चरोः पूर्वेणानीय अग्रेधृत्वा आज्यात्पश्चिमे चरुमानीयाज्यस्योत्तरतोनिदध्यात् ॥ ततः आज्यस्य प्रोक्षणीवत्त्रिरुत्पवनम् अवेक्ष्य सत्यपद्रव्येतन्निरसनम् प्रोक्षण्युत्पवनम्॥ ततः उत्थाय उपयमनकुशान्वामहस्ते कृत्वा प्रजापतिंमनसाध्यात्वा तूष्णीमग्नौ घृताक्तास्तिस्रः समिधः प्रक्षिपेत् ॥ तत उपविश्य ॥ सपवित्रप्रोक्षण्युदकेनप्रदक्षिणक्रमेणाग्निंपर्युक्ष्यप्रणीतापात्रेपवित्रेनिधाय ब्रह्मणान्वारब्धः सजघनं दक्षिणजानु निपात्य सुसमिद्धतमेग्नौजुहुयात् ॥ तत्रप्रथमाहुतिचतुष्टये तत्तदाहुत्यनन्तरं स्रुवावस्थितहुतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः ॥ अथहोमः ॥ ॐप्रजापतयेस्वाहा इदंप्रजापतये नमम इति अग्नेरुत्तरभागे ॥ ॐइंद्रायस्वाहा इदमिंद्राय नमम इति अग्नेर्दक्षिणभागे इत्याघारौ ॥ ॐअग्नयेस्वाहा इदमग्नये नमम ॥ ॐसोमायस्वाहा इदंसोमायनममइति मध्येसमिद्धतमे इत्याज्यभागौ ॥ इतिहुत्वा बहिरग्नेः पूजनंषोडशोपचारैः कुर्य्यात्॥ततो वस्वादिप्रधानदेवतानांप्रत्येकं समिच्चरुतिलाज्यादिद्रव्यैरष्टोत्तरशतमष्टाविंशतिरष्टौवाऽऽहुतीर्जुहुयात् ॥ तत्रमंत्राः ॥ ॐव्वसोः पवित्रमसिशतधारंव्वसोः पवित्रमसिसहस्रधारम्॥देवस्त्वासवितापुनातुव्वसोःपवित्रेणशतधारेणसुप्वाकामधुक्षःस्वाहा ॥ इदंवसुभ्यो नमम १०८। २८। ८। ॐव्वरुणस्योत्तम्भनमसिव्वरुणस्यस्कम्भसर्जनीस्थो व्वरुणस्यऽऋतसदन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋ....

तसदंनमासादस्वाहा॥इदंवरुणायनमम १०८।२८।८। ॐउतनोहिर्बुध्न्यः शृणोत्वजएकपात्पृथिवीसमुद्रः विश्वेदेवाऋतावृधोहुवानास्तुता

मंत्राः कविशस्ताऽअवन्तुस्वाहा॥इदमजैकपदेनमम१०८।२८।८ॐशिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिꣳसीः ॥ निवर्त्तया

म्यायुषेन्नाद्यायप्रजननायरायस्पोषायसुप्रजास्त्वायसुवीर्य्यायस्वाहा॥इदम्अहिर्बुध्न्यायनमम॥१०८।२८।८ ॐपूषंतवव्रतेव्वयन्नरिष्येमकदा

चुनस्तोतारस्तइहस्मसिस्वाहा इदंपूष्णे नमम।१०८।२८।८।ततोयमाद्यघोरांतंप्रत्येकमेकैकाहुतिंचरुणाजुहुयात् ॥ ॐ यमायस्वाहा । इदं

यमायनमम ॥१॥ ॐ धर्मराजाय० इदं धर्म० ॥२॥ ॐ मृत्यवेस्वा० इदं मृत्यवे० ॥३॥ ॐ अंतकाय० इदमन्तकाय० ॥ ४ ॥ ॐ वैव

स्वताय० इदं वैवस्व० ॥५॥ ॐकालाय० इदं० ॥६॥ ॐसर्वभूतक्षयाय० इदं०॥७॥ ॐऔदुंबराय० इदं०॥८॥ ॐदध्नाय० इदं० ॥ ९ ॥

ॐनीलाय० इदं०॥१०॥ॐपरमेष्ठिने० इदं० ॥ ११ ॥ ॐवृकोदराय० इदं० ॥१२॥ ॐचित्राय० इदं॥१३॥ ॐचित्रगुप्तायस्वाहा इदंचि

त्रगुप्ताय नमम ॥१४॥ ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यःसर्वेभ्यः सर्वशर्वेभ्योनमस्तेऽअस्तुरुद्ररूपेभ्यः स्वाहा॥इदम् अघोराय० ॥

ततः ॐनमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः ॥ बाहुभ्यामुततेनमः स्वाहा इदं रुद्राय इतिमंत्रेणाष्टोत्तरशत १०८ । २८ । ८ समिद्धो

मः ॥ विष्णुमंत्रेणतिलहोमः ॥ ततोवस्वादिदेवानामुत्तरपूजनंकृत्वा ब्राह्मणान्वारब्धः ॐ अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृतेनमम

इतिचरुशेषंहुत्वा ततःआज्येन ॐभूःस्वाहा॥इदमग्नये नमम ॥१॥ ॐभुवःस्वाहा॥इदंवायवे० ॥ २ ॥ ॐस्वःस्वाहा ॥ इदं सूर्य्याय० ॥

॥ ३ ॥ ॐत्वन्नोऽअग्नेव्वरुणस्यव्विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोव्वह्नितमःशोशुचानोव्विश्वाद्वेषांꣳसिप्रमुमुग्ध्यस्मत्स्वाहा

इदमग्नीवरुणाभ्याम् ॥ ४ ॥ ॐ सत्वन्नोऽअग्नेव्वमोभवोतीनेदिष्ठोऽअस्याऽउपसोव्युष्टौ ॥ अवयक्ष्वनोवरुणर्ठ०ररणोव्वीहिमृडीकर्ठ०सुहवोन
ऽएधिस्वाहा इदमग्नीवरुणाभ्यां नमम ॥५॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्त्यमित्त्वमयाऽअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेपजर्ठ०
स्वाहा इदमग्नयेअयसेनमम ॥ ६ ॥ ॐ येतेशतंवरुणयेसहस्रंयज्ञियाः पाशावितता महान्तः ॥ तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुम
रुतः स्वर्क्काः स्वाहा इदं वरुणादिभ्यः ॥ ७ ॥ ॐ उदुत्तमंव्वरुणपाशमस्मदवाधमंव्विमध्यमर्ठ० श्रथाय ॥ अथाव्वयमादित्यव्रतेतवानाग
सोऽअदितयेस्यामस्वाहा इदं वरुणादिभ्यः० ॥ ८ ॥ ॐ प्रजापतये स्वाहा इदं प्रजापतयेनमम ॥ ९ ॥ इति नवाहुतयः ॥ ततोदिक्पाले
भ्योबलिदानम् ॥ अथ पूर्णाहुतिः ॐस्वाहाप्प्राणेभ्यः साधिपतिकेब्भ्यः पृथिव्व्यैस्वाहाग्नयेस्वाहान्तरिक्षायस्वाहा व्वायवेस्वाहा दिवेस्वाहा
सूर्य्यायस्वाहा ॥ १ ॥ दिग्भ्यःस्वाहा चंद्रायस्वाहा नक्षत्रेभ्यःस्वाहाभ्द्यःस्वाहाव्वरुणायस्वाहा नाभ्यैस्वाहा पूतायस्वाहा ॥ २ ॥ मूर्द्धा
नंदिवोऽअरतिंपृथिव्यावैश्वानरमृतऽआजातमग्निम् ॥ कविर्ठ०सम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाःस्वाहा ॥३॥ इदं मृडाग्नयेनमम
इतित्यागः ॥ ततः संस्रवप्राशनम् आचमनं च कृत्वा ॥ ॐअद्यकृतैतत्पंचकशांतिहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदंपूर्ण
पात्रंप्रजापतिदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे इति पूर्णपात्रंदद्यात् ॥ ॐस्वस्तीतिप्रतिवचनानन्तरंब्रह्मग्रंथिविमो
कः ॥ ॐ सुमित्रियानऽआपओषधयःसन्तु ॥ इति प्रणीताजलेनयजमानशिरःसंमृज्य ॥ ॐदुर्मित्रियास्तस्मैसन्तुयोऽस्मान्द्वेष्टियंचवयंद्वि

ष्मत्॥इत्यैशान्यांप्रणीतान्युब्जीकरणम् ॥ अग्नौपवित्रप्रतिपत्तिः ॥ ततःस्तरणक्रमेणबर्हिरुत्थाप्याज्येनाभिघार्य ॐदेवागातुविदोगातुं
वित्वागातुमितमनसस्पत॥इमंदेवयज्ञꣳस्वाहाव्वातेधाःस्वाहा इतिजुहुयात् ततःस्रुवेणभस्मानीयदक्षिणानामिकागृहीतभस्मना ॐत्र्यायुषंज
मदग्नेरितिललाटे ॥ ॐकश्यपस्यत्र्यायुषम् ॥ इतिग्रीवायाम् ॥ ॐयद्देवेषुत्र्यायुषम् इति बाहुमूले ॥ ॐतन्नोऽअस्तुत्र्यायुषमितिहृदि॥ इति
त्र्यायुषंकुर्य्यात् ॥ ततः आचार्यायनक्षत्रप्रतिमादानम् ॥ देशकालौ संकीर्त्य० ॥ इमांधनिष्ठाप्रतिमांवसुदैवतां सतिलान्नांसघटां
सोपस्कराम् असुकगोत्रायामुकशर्मणे ब्राह्मणायतुभ्यमहंसंप्रददे ॥ ॐ स्वस्तीतिप्रतिवचनम् ॥ १ ॥ एवं शतभिषक्प्रतिमां
वरुणदैवतांसमाषान्नांसघटांसोपस्कराम्० ॥ २ ॥ पूर्वाभाद्रपदप्रतिमाम् अजैकपाद्दैवतांससर्षपान्नांसघटांसोपस्कराम्० ॥ ३ ॥ उत्तरा
भाद्रपदप्रतिमाम् अहिर्बुध्न्यदैवतां समुद्गान्नां सघटांसोपस्करां० ॥ ४ ॥ रेवतीप्रतिमांपूषदैवतां सप्तधान्यघटसहितांसोपस्करामसुक
गोत्रायामुकशर्मणे ब्राह्मणायतुभ्यमहं संप्रददे ॥ ५ ॥ स्वस्तीतिप्रतिवचनम् ॥ ततः षड्ब्राह्मणभोजनसंकल्पः ॥ ततः पंचदानानि
कुर्य्यात् ॥ पयस्विनींगां १ महिषीं २ सप्तधान्यानि ३ सहिरण्यं सतिलं कृष्णवस्त्रं ४ सहिरण्यं सघृतं कांस्यपात्रंचदद्यात् ५ ॥
अथवा पंचदानमूल्यद्रव्यंदद्यात् ॥ ततः पंचकलशोदकेनयजमानं सपरिवारमभिषिंचेयुः ॥ तत्रमंत्राः ॥ ॐशन्नोमित्रꣳशंव्वरुणꣳ
शन्नोभवत्त्वर्य्यमा ॥ शन्नऽइन्द्रोव्बृहस्पतिꣳ शन्नोव्विष्णुरुरुक्रमः ॥ १ ॥ शन्नोव्वातःपवताꣳशन्नस्तपतुसूर्य्यः ॥ शन्नः कनिक्रदद्देवः
पर्ज्जन्न्योऽअभिवर्षतु ॥ २ ॥ अहानिशंभवंतुनः शꣳरात्रीः प्रतिधीयताम् ॥ शन्नऽइन्द्राग्नीभवतामवोभिः शन्नऽइन्द्रावरुणारातहव्या ॥

शन्नऽइन्द्रापूषणाव्वाजंसातौशमिन्द्रासोमासुवितायशंय्योः ॥ ३ ॥ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ ४ ॥
द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवी शान्तिरापः शांतिरोषधयः शांतिर्व्वनस्पतयः शांतिर्व्विश्वे देवाः शान्तिर्ब्रह्मशान्तिः सर्व्वꣳ
शान्तिः शान्तिरेवशांतिः सामाशान्तिरेधि ॥ ५ ॥ इत्यभिषिच्यघृतेमुखावलोकनंकृत्वा ब्राह्मणेभ्यो भूयसीं दक्षिणांदत्त्वा देवतानामग्ने
श्चविसर्जनंकुर्यात् ॥ ततोदेशकालौसंकीर्त्य प्राचीनावीती अमुकगोत्रस्यप्रेतस्य अनेनपंचकशांतिकृतेन पंचकजनितदुर्मरणदोषनि
वृत्तिः॥ सव्यम् ॥ ममगृहेसकलदुरितोपशांतिरस्तु इतिपठित्वा ॐयस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयाति सद्योवं
देतमच्युतमिति कर्मपूर्त्तिकामो विष्णुंस्मरेत् ॥ ततः स्नात्वाशुक्लशुद्धवाससीपरिधायब्राह्मणान्पायसान्नेन भोजयित्वागृहंगच्छेत् ॥
एवंयः कुरुतेपुत्रः शुभंतस्यप्रजायते ॥ विधानंयोनकुर्वीत विघ्नस्तस्यभवेत्सदा ॥ १ ॥ इतिब्रह्मपुराणोक्तपंचकशांतिप्रयोगः समाप्तः ॥
॥ अथत्रिपादनक्षत्रमरणशांतिः ॥ तत्रादौएकादशेऽहनिपंचकशांतिवत्सर्वंतीर्थादौपरिकल्प्यस्नात्वाधौतवाससीपरिधाय संध्यादिनित्य
कर्मसमाप्य देशकालौसंकीर्त्य अमुकगोत्रस्यामुकप्रेतस्यत्रिपादनक्षत्रे त्रिपुष्करयोगेवा दुर्मरणजनितदोषोपशांत्यर्थं ममगृहे सपरिवार
स्यायुरारोग्यसुखश्रीप्राप्त्यर्थं विष्णुपूजनपूर्वकत्रिपादनक्षत्रशांतिंकरिष्ये इतिसंकल्प्य ॥ विष्णुंषोडशोपचारैःसंपूज्य ॥ चतुरस्रंहस्तमात्रं
होमार्थंस्थंडिलंकृत्वातदीशान्यांपूर्वोक्तपंचकशान्तिवत्कलशत्रयस्थापनंतेषामुपरिस्वर्णमयीमूर्त्तयःस्थाप्याः ॥ मध्यकलशेत्रिपादनक्षत्रं
मुख्यदेवतां तद्दक्षिणे तत्पूर्वनक्षत्रमधिदेवतामुत्तरेतदुत्तरनक्षत्रंप्रत्यधिदेवतामित्येवम्प्रतिमात्रयंकलशत्रयेप्रतिष्ठाप्यपूजयेदितरंतुपूर्वव

कृत्तिकात्रिपादेप्राङ्नक्षत्रं

त्समानम् ॥ होमेतुमुख्यदेवतायै अष्टोत्तरशतम अधिप्रत्यधिदेवतायै अष्टाविंशत्यष्टाविंशतिसंख्येतिविशेषः ॥ कृत्तिकात्रिपादेप्राङ्नक्षत्रं भरणी तद्देवता यमः तन्मंत्रः ॥ ॐयमायत्वाङ्गिरस्वते० ॥ कृत्तिकादेवता अग्निस्तन्मंत्रः ॥ ॐअग्निंदूतंपुरोदधे० ॥ उत्तरनक्षत्र रोहिणीत देवताप्रजापातिस्तन्मंत्रः ॥ ॐ प्रजापतेनत्वदेता० पुनर्वसुत्रिपादेप्राङ्नक्षत्रम् आर्द्रा तद्देवता रुद्रस्तन्मंत्रः ॥ ॐ नमस्ते रुद्र० ॥ पुनर्वसु देवता अदितिस्तन्मंत्रः ॥ ॐअदितिर्द्यौ० ॥ उत्तरनक्षत्रंपुष्यस्तदेवता बृहस्पतिस्तन्मंत्रः ॥ ॐ बृहस्पतेऽअति० ॥ उत्तराफाल्गुनीत्रिपादे प्राङ्नक्षत्रंपूर्वा तद्देवता भगस्तन्मंत्रः ॥ भगऽएव भगवाँ० ॥ उत्तराफाल्गुनीदेवता अर्यमातन्मंत्रः ॥ ॐ अर्यमणंबृहस्पतिं० उत्तरन क्षत्रं हस्तस्तदेवता रविस्तन्मंत्रः ॥ ॐ आकृष्णेनरजसा० ॥ विशाखात्रिपादेप्राङ्नक्षत्रंस्वातिस्तद्देवतावायुस्तन्मंत्रः ॥ ॐ वायोयेतेसह स्रिणो० ॥विशाखादेवतेइन्द्राग्नीतन्मंत्रः॥ॐ इंद्राग्नी आगतᳫं॥ उत्तरनक्षत्रमनुराधातद्देवतामित्रस्तन्मंत्रः ॥ ॐमित्रस्यचर्षणी०॥उत्तरापाढा त्रिपादेपूर्वनक्षत्रं पूर्वापाढा तद्देवताजलम् ॥ ॐ आपोहिष्ठा ॥ उत्तरापाढादेवताविश्वेदेवाः ॥ ॐ विश्वेदेवास० ॥ उत्तरनक्षत्रंश्रवणस्तद्देवता विधिः ॥ ॐब्रह्मजज्ञानं० ॥ पूर्वाभाद्रपदात्रिपादे प्राङ्नक्षत्रंशततारका तद्देवतावरुणः०॥ॐव्वरुणस्योत्तं० ॥पूर्वाभाद्रपदादेवता अजैकपाद् ॐउतनोहिर्बुध्न्य०॥उत्तरनक्षत्रम् उत्तराभाद्रपदातद्देवताअहिर्बुध्न्यः ॥ ॐशिवोनामासि०॥ततःकलशत्रयेत्रीणिमूक्तानिजपेत्॥प्रथमकलशे कृणुष्वपाजः०॥ ८॥द्वितीयकलशे॥विभ्राडित्यनुवाकः॥तृतीयकलशे आशुः शिशानो इत्यप्रतिरथंचजपेत् ॥ ततोदक्षिणतोब्रह्मासनादिचरु श्रपणम् आज्यभागांतंपूर्ववत्कृत्वा स्थापितदेवतानांसमिच्चरुतिलाज्यादिद्रव्यैः प्रत्येकमष्टोत्तरशतमष्टाविंशतिमष्टौवाजुहुयात् ॥ मंत्रास्तुपूर्व उक्ताः॥ततःस्थापितदेवातानामुत्तरपूजनम्॥ततःस्विष्टकृदाद्यभिषेकान्तंपंचकशांतिवद्यथाशक्ति ब्राह्मणभोजनसंकल्पः ॥ स्थापितदेवता

नांविसर्जनम् ॥ ततोभूमिहिरण्यवस्त्रदानानिचदद्यात् ॥ भद्रातिथिमृतस्य भूमिदानम् ॥ त्रिपादर्क्षेहिरण्यंदद्यात् ॥ रव्यंगारकगुरुवाराणामेकस्मिन्वारेमृतस्य वस्त्रदानंकुर्यात् ॥ अन्यत्सर्वंपूर्ववत् ॥ इतित्रिपादनक्षत्रमरणशांतिप्रयोगःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥

॥ अथैकादशाहश्राद्धप्रयोगः ॥ तत्रतावत् प्रातर्नद्यादौस्नात्वा शुद्धवाससीनूतनयज्ञोपवीतंचपरिधायसंध्यादिनित्यक्रियांकृत्वानद्यादितीर्थेदेवालयेवागत्वातत्रश्राद्धभूमिंपरिकल्प्य ॥ गोमयोदकाभ्यामुपलिप्यज्ज्वलदंगारैः संशोध्यगौरमृत्तिकयाऽऽच्छाद्यतिलैर्गौरसर्षपैश्चविकिरेत् ॥ ततोमध्याह्ने पुनः स्नात्वाशुक्लवाससीपरिधाय पूर्वरचितश्राद्धदेशमागत्य ॥ गोमयोपलिप्तायां भूमौतिलान्विकीर्य तत्रसपिंडादिद्वारास्वयंवा नूतनमृन्मयभांडैः सकृत्षोडशश्राद्धार्थंपाकंकुर्यात् ॥ ततः पाकेसिद्धे आसनसमीपे तिलतैलेनदीपंप्रज्वाल्यस्थापयेत् ॥ काककुक्कुटादीञ्श्राद्धापहंतॄनपासारयेत् ॥ श्राद्धदेशंचवस्त्रेणावेष्टयेत् ॥ ततः कर्तास्वासनेप्राङ्मुख उपविश्य पादयोरधः कुशत्रयंदक्षिणाग्रंधृत्वा सव्येन आचम्यप्राणानायम्यकर्म्मपात्रंजलेनपरिपूर्य गंधपुष्पादिभिरभ्यर्च्य ॐअपवित्रः पवित्रोवा सर्वावस्थां गतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षं सबाह्याभ्यंतरःशुचिः ॥ १ ॥ ॐपुंडरीकाक्षः पुनातु इतिपठित्वा कुशत्रयानीतजलेन श्राद्धद्रव्याणिस्वात्मानंच प्रोक्षयेत् ॥ ततः ॐ भूम्यैनमः ॐभगवत्यैगयायैनमः ॐभगवतेगदाधरायनमः इतिनत्वा ॥ कुशत्रयतिलजलान्यादाय देशकालौसंकीर्त्य ( प्राचीनावीती ) अद्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थं पितृसमत्वप्राप्त्यर्थम् आद्यमासिकत्रैपाक्षिकद्वितीयमासिकतृतीयमासिकचतुर्थपंचमोनषष्ठषष्ठसप्तमअष्टमनवमदशमएकादशोनाब्दिकद्वादशमासिकानि स्वस्वकालकर्त्तव्यानि षोडशश्राद्धानि सपिंडीकरणाधिकारसिद्ध्यर्थमेकादशेऽहन्यअपकृष्य एकोद्दिष्टविधिनाकरिष्ये इतिसंकल्पयेत् ॥ एकाद

शमासाभ्यन्तरेऽधिकमासपातेषोडशपदस्थानेसप्तदशपदंप्रयोज्यम् ॥ ततो गायत्रींत्रिर्जपित्वा ॐदेवताभ्यःपितृभ्यश्च महायोगिभ्यएव च ॥ नमः स्वाहायै स्वधायै नित्यमेवनमोनमः इतित्रिर्जपेत् ॥ ततोऽपसव्यंकृत्वा ॥ दक्षिणामुखःसजघनंवामजानु निपात्य ॐनमोनमस्ते गोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः ॥१॥ इतितिलगौरसर्षपान्सर्वत्रविकीर्य नीवीबंधंकुर्यात् ॥ ततः कस्मिंश्चि त्पात्रेजलंगृहीत्वादर्भैरालोड्य॥ॐयद्देवादेवहेडनंदेवासश्चकृमावयम् ॥ अग्निर्मातस्मादेनसोविश्वान्मुंचत्वꣳहसः ॥१॥ यदिदिवायदिनक्तं मेनांꣳसिचकृमावयम् ॥वायुर्मातस्मादेनसो विश्वान्मुंचत्वꣳहसः ॥२॥ यदिजाग्रद्यदिस्वप्नएनांꣳसिचकृमावयम्॥सूर्योमातस्मादे नसोविश्वान्मुंचत्वꣳहसः ॥ ३ ॥ इतिकूष्मांडसूक्तेनाभिमंत्र्य श्वादिदुष्टदृष्टिनिपातदूषितंपाकादिपूतंभवत्वित्युक्त्वा तेनपाकंप्रोक्षयेत् ॥ ततः कुशत्रयतिलजलान्यादाय ॥ ॐअद्यामुकगोत्रामुकप्रेत आद्यश्राद्धे इदमासनंतेमयादीयतेतवोपतिष्ठतामित्युक्त्वा ॥ ऋजुकुशत्रयरूपमासनंप्रथमंदक्षिणाग्रंसर्वतः पश्चिमगतमुत्सृजेत् ॥ ( नात्रद्विगुणभुग्नमोटकरूपम् ) ॥ ( सापिंडीकरणं यावदृजु दर्भैः पितृक्रिया इतिविष्णुपुराणीयात् ) ॥ पुनः कुशत्रयतिलजलान्यादाय ॥ ॐअमुकगोत्र अमुकप्रेतमासिकश्राद्धनिमित्तकमिद मासनंतेमयादीयतेतवोपतिष्ठताम् इतिद्वितीयमासनं दक्षिणाग्रमुत्सृजेत् ॥ २ ॥ पुनः कुशत्रयादीन्यादाय ॐ अमुकगोत्रा

१ (विष्णुवायुगरुडपुराणहेमाद्रिषु, आशिषो द्विगुणा दर्भा जपाशीःस्वस्तिवाचनम् ॥ पितृशब्दः स्वसंबंधः शर्मशब्दस्तथैव च॥आवाहः पात्रालंभश्च उल्मुकोल्लेखनादिकम्॥ तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैवच ॥ प्रदक्षिणाविसर्गश्च सीमांतं गमनं तथा ॥ अष्टादशपदार्थास्तु प्रेतश्राद्धेषु वर्जयेत् ॥

मुकप्रेतत्रिपाक्षिकश्राद्धनिमित्तकमिदमासनंतेमयादीयतेतवोपतिष्ठतामितितृतीयमुत्सृजेत् ॥ ३ ॥ एवंद्वितीयमासिक० ॥ ४ ॥ तृतीयमासिक० ॥ ५ ॥ चतुर्थमासिक० ॥६॥ पंचममासिक० ॥७॥ ऊनषाण्मासिक० ॥८॥ षाण्मासिक० ॥९॥ सप्तममासिक० ॥१०॥ अष्टममासिक० ॥११॥ नवममासिक०॥१२॥ दशममासिक०॥१३॥ एकादशमासिक०॥१४॥ ऊनाब्दिक०॥१५॥ द्वादशमासिक० ॥१६॥ एवंतत्तच्छाद्धनिमित्तकान्यासनानिक्रमेणदद्यात् ॥ ततः ॐअपहताऽअसुरारक्षाᳬसिवेदिषदः ॥ इतिवामावर्त्तेनसर्वत्रतिलान्विकीर्य दर्भहस्तोभूतले ॐइहलोकंपरित्यज्य गतोसिपरमांगतिम् ॥ मनसावायुरूपेण चटेत्वाहंनिमंत्रये–इतिप्रेतमावाहयेत् ॥ ततोऽर्घपात्रषोडशोपरिप्रत्येकंदक्षिणाग्रंकुशपत्रैकैकंधृत्वा तत्र ॐशन्नोदेवीरभिष्टयऽ आपोभवंतुपीतये॥शंय्योरभिस्रवंतुनः॥इतिप्रत्येकंजलंक्षिप्त्वा ॥ ॐतिलोसिसोमदैवत्यो गोसवोदेवनिर्मितः ॥ प्रत्नमद्भिःपृक्तःस्वधयापितृँल्लोकान्प्रीणाहिनः स्वाहा इतिमंत्रेणतिलान्प्रक्षिप्य तूष्णींगंधपुष्पाणिचप्रक्षिपेत् ॥ ततः प्रथमपात्रंवामहस्तेकृत्वा पवित्रंतदग्रेधृत्वा ॐयादिव्याऽआपःपयसासंबभूवुर्य्याऽअन्तरिक्षाऽउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानऽआपःशिवाःसᳬस्योनाःसुहवाभवन्तु–इतिपठित्वा ॥ कुशत्रयादीन्यादाय ॐ अद्यामुकगोत्र अमुकप्रेत आद्यश्राद्धे एषतेहस्तार्घोतेमयादीयतेतवोपतिष्ठतामिति प्रथमपवित्रोपरि अर्घ्यजलमुत्सृजेत् ॥ ततोद्वितीयार्घपात्रंगृहीत्वा पवित्रंतदग्रेपलाशपत्रोपरिधृत्वा ॥ ॐ यादिव्या इतिपठित्वा कुशत्रयादीन्यादाय ॐ अमुकगोत्रामुकप्रेत मासिकश्राद्धे एषतेहस्तार्घोमयादीयतेतवोपतिष्ठतामितिपवित्रोपरि अर्घजलमुत्सृजेत् ॥ एवमेवत्रिपाक्षिकद्वितीयमासिकादिषुज्ञेयम् ॥(अत्रपात्रन्युब्जीकरणंकृताकृतम्)॥ ततोगंधादिदानंतावद्गंधपुष्पधूपदीपवस्त्रादी

न्यासाद्यहस्तेकुशत्रयतिलजलान्यादाय ॐ अमुकगोत्र अमुकप्रेत आद्यादिद्वादशमासिकांतपोडशश्राद्धनिमित्तकान्येतानिगंधपुष्पधूपदीपतांबूलवासांसि एकतंत्रेणतेमयादीयंतेतवोपतिष्ठंताम् इत्युत्सृजेत् ॥ ततः अमीषांपोडशश्राद्धानामर्चनविधेः परिपूर्णता इतिपठित्वा ततः आसनानिवेदयित्वाजलेनचतुष्कोणादिमंडलंकुर्यात ॥ अत्रपरकीयभूमौश्राद्धकरणे इममन्नमेतद्भूस्वामिपितृभ्योनम इतिदर्भेपूत्सृजेत्॥ततः उष्णमन्नंताम्रादिपात्रेणकराभ्यामादाय मृतंध्यायन्पोडशपात्रेषुप्रत्येकम् एकस्मिन्पात्रेवापुरुपतृप्तिक्षमंपरिविष्यपृथक्पृथक्पुटकादिस्थितानिप्रत्येकंघृतजलव्यंजनानिचोपनीय अन्नंमधुनाभिघार्य ॐमधु०वाताऽऋतायते० इतिमंत्रत्रयेणाभिमंत्र्य ॐ मधुमधुमध्विति चपठेत् ॥ ( नात्रपात्रालंभागाहौ नात्रपात्रालंभोनाशिषःप्रार्थयदितिप्रचेतःस्मरणात् ) ॥ ततः सर्वत्रपात्रपरितः ॐ अपहताऽअसुरारक्षाᳬंसिवेदिषद इतितिलान्विकीर्य ॥ वामकरेणपात्रंस्पृशन्दक्षिणहस्तेकुशत्रयादीन्यादाय ॥ ॐ अमुकगोत्र अमुकप्रेत आद्यश्राद्धे इदमन्नंघृताद्युपस्करसहितंतेमयादीयतेतवोपतिष्ठतामित्यासनवामभागेजलमुत्सृजेत् ॥ इदमन्नंप्रेताय उपतिष्ठतुइतिपठेत् ॥ अनेनैवक्रमेण मासिक० २ त्रैपक्षिक० ३ द्वितीयमासिक० ४ तृतीयमासिक० ५ चतुर्थमासिक० ६ पंचममासिक० ७ऊनपाण्मासिक०८पाण्मासिक० ९सप्तम० १० अष्टम०११नवम० १२ दशम०१३एकादश० १४ ऊनाब्दिक० १५ द्वादशमासिकश्राद्धेषुज्ञेयम् १६ अथवा एकस्मिन्पात्रेस्थितमन्नम्ॐ अमुकगोत्रप्रेतआद्यादिद्वादशमासिकान्तपोडशश्राद्धनिमित्तकमिदमन्नघृताद्युपस्करसहितम् एकतंत्रेणतेमयादीयतेतवोपतिष्ठतामित्युत्सृजेत् ( नात्रपैतृकोजपः ॥ नपैतृकोजपः कार्य्य इतिहेमाद्रौप्रचेतःस्मरणात्॥ विकिरमपिनकुर्यात् ॥ प्रेतश्राद्धे न विकिर इति स्मृतिरत्नावल्यां नविकिरंस्वधाकारम् इतिवायुपुराणाच्च ) ॥ ततोऽन्नपात्रसमीपेपिंडदानार्थंसिकताभिः पोडशवेदिकाः दक्षिणप्लवाः कृत्वा गोमयोदकेनोप

लिप्य प्रत्येकंदक्षिणाग्रंकुशत्रयास्तरणंकुर्यात् ॥ ततः षोडशपुत्रपुटकेषुजलतिलगंधपुष्पाणिकृत्वा एकंपुटकंगृहीत्वा ॐ अद्या मुकगोत्रामुकप्रेत आद्यश्राद्धपिंडस्थाने अत्रावनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिप्रथमवेदिकायां छिन्नमूलकुशत्रयोपरि अवनेजनजलंकिंचिद्दद्यात् ॥ एवं मासिकादिपंचदशश्राद्धपिंडस्थानेप्रत्येकमवनेजनंदद्यात् यथाक्रमेण ॥ ततोघृतमधुतिलयुक्तेनान्नेनषोडशपिंडान्बिल्वोपमान्निर्मायमधुघृताभ्यामभिवार्य प्रथमंपिंडंकुशत्रयतिलजलानिचादाय ॐ अमुकगोत्र अमुकप्रेत आद्यश्राद्धे एपतेपिंडोमयादीयतेतवोपतिष्ठतामितिप्रथमवेदिकायांकुशोपरि अवनेजनस्थाने सव्योपगृहीतदक्षिणकरेणापिंडंदद्यात् १ पुनःकुशत्रयादीनि पिंडंचादाय ॥ ॐ अमुकगोत्रामुकप्रेत मासिकश्राद्धे एपतेपिंडोमयादीयतेतवोपतिष्ठतामितिद्वितीयवेदिकायां कुशोपरिदद्यात् २ एवं त्रैपाक्षिक० ३ द्वितीयमासिक० ४ तृतीयमासिक० ५ चतुर्थमासिक० ६ पंचम० ७ ऊनपाण्मासिक० ८ पाण्मासिक० ९ सप्तममासिक० १० अष्टम० ११ नवम० १२ दशम० १३ एकादश० १४ ऊनाब्दिक० १५ द्वादशमासिक १६ श्राद्धेषु पृथक्पृथक् पिंडं दद्यात् ॥ ततोहस्तौप्रक्षाल्य सव्येनाचम्य हरिंस्मृत्वा अपसव्यंकुर्यात् ॥ ततः प्रथममवनेजनपात्रमादाय ॐ अमुकगोत्रामुकप्रेत आद्यश्राद्धपिंडे अत्रप्रत्यवनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिप्रथमपिंडोपरिप्रत्यवनेजनंदद्यात् ॥ १ ॥ एवं मासिकादिपंचदशश्राद्धपिंडोपरिक्रमेणप्रत्येकं प्रत्यवनेजनंदद्यात् ॥ ततः पिंडसमीपे नीवींविसृज्य सव्येनाचम्य अपसव्येन प्रतिपिंडं प्रक्षालितं सूत्रत्रयं दक्षिणहस्तेनदत्त्वा ॥ कुशत्रयादीन्यादाय ॐ अमुकगोत्रामुकप्रेत आद्यादिद्वादशमासिकान्तषोडशश्राद्धपिंडोपरि एतानिवासांसिते मयादीयंते तवोपतिष्ठंतामितितंत्रेणैवमुत्सृजेत् ॥ ततः षोडशपिंडान्गंधपुष्पतुलसीपत्रधूपदीपनैवेद्यतांबूलपूगी

फलदक्षिणाभिः संपूज्य ॥ ॐ अमुक० प्रेत आद्यादिषोडशश्राद्धपिंडेषुयद्दत्तंगंधाद्यर्चनं तत्तत्रोपतिष्ठतामित्युत्सृजेत् ॥ ततः एभिः षोडशपिंडदानैरमुकगोत्रप्रेतस्यप्रेतत्वनिवृत्तिः ॥ सद्गतिप्राप्तिश्चास्तु ॥ इतिपठित्वा एकस्मिन्पत्रपुटे ॐ शिवा आपः संतु–इतिजलम् ॥ सौमनस्यमस्तु–इतिपुष्पम् ॥ अक्षतंचारिष्टंचास्तु–इतियवतिलांश्च प्रक्षिप्य ॥ कुशत्रयतिलजलान्यादाय ॐ अमुकगोत्रस्यअमुकप्रेतस्य आद्यश्राद्धे यद्दत्तमन्नपानादिकंतदुपतिष्ठतामित्यक्षय्योदकं दद्यात् ॥ एवं मासिकादिपंचदशश्राद्धेषुक्रमेणषष्ठीविभक्त्याक्षय्योदकं दद्यात् ॥ ततः पिंडानामुपरि प्रत्येकंपवित्रं निधाय तदुपरि सतिलदुग्धेनजलेनदक्षिणाग्रांजलधारांदद्यात् ॥ अनादिनिधनोदेवःशंखचक्रगदाधरः ॥ अक्षय्यः पुंडरीकाक्षः प्रेतमोक्षप्रदोभव॥१॥अतसीपुष्पसंकाशं पीतवाससमच्युतम्॥येनमस्यंतिगोविंदं नतेषांविद्यतेभयम् ॥ ॥ २ ॥ कृष्णकृष्णकृपालुस्त्वमगतीनांगतिर्भव ॥ संसारार्णवमग्नानां प्रसीदपुरुषोत्तम ॥ ३ ॥ नारायणसुरश्रेष्ठ लक्ष्मीकान्तवरप्रद ॥ अनेनतर्पणेनाथ प्रेतमोक्षप्रदोभव ॥ ४ ॥ हिरण्यगर्भपुरुष व्यक्ताव्यक्तस्वरूपिणे ॥ अस्यप्रेतस्यमोक्षार्थंसुप्रीतोभवसर्वदा ॥ ५ ॥ इतिपठित्वा॥ अमुकगोत्रामुकप्रेत अत्रजलधारास्तेमयादीयंतेतत्रोपतिष्ठंताम् इत्युत्सृजेत् ॥ ततोरजतदक्षिणादानंकुर्यात् ॥ तत्र रजतद्रव्यं कुशत्रयादीनिचादाय ॐ अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थं कृतैतदाद्यादिद्वादशमासिकपर्यंतषोडशश्राद्धानांप्रतिष्ठासिद्ध्यर्थमिदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदातुमहमुत्सृजे इतिसंकल्प्य ब्राह्मणायदद्यात् ॥ ततः पिंडानुत्थाप्य चटविसर्जनंकुर्यात ॥ ततः ॐ देवताभ्यः पितृभ्यश्चेतित्रिर्जपित्वा रक्षादीपंनिर्वाप्य हस्तौपादौप्रक्षाल्य सव्येनाचामेत् ॥ ततः कर्म्मपूर्तिकामो विष्णुंस्मरेत् ॥ ॐ प्रमादात्कुर्वतांकर्म्म प्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोः संपूर्णंस्यादितिश्रुतिः–इतिपठित्वा श्राद्धवस्तूनिविप्राय

प्रतिपादयेत् ॥ पिंडादिकंगोभ्योवायसेभ्योवादद्यादगाधेजलेवा क्षिपेत् ॥ ततः एकादशप्रभृतिब्राह्मणान्भोजयेत्तान्शय्यादिदानैः परितोपयेत् ॥ ततः षष्ट्युत्तरशतत्रयपिंडदानम् अंजलिदानंचकुर्य्यात् ॥ इत्याद्यादिषोडशश्राद्धपद्धतिः समाप्ता ॥ ॥ ❀ ॥ ❀ ॥

अथषष्ट्यधिकशतत्रयपिंडश्राद्धविधिः ॥ तत्रादौसव्येनाचम्यप्राणानायम्यकुशत्रयतिलजलान्यादाय ॥ देशकालौसंकीर्त्य अपसव्यादिना अमुकगोत्रस्यामुकप्रेतस्यपरलोकेमहाक्षुधातृषानिवारणार्थं मरणदिनादारभ्यसंवत्सरपर्य्यंतम् अहरहः सान्नोदकुंभपिंडनिमित्तकपष्ट्यधिकशतत्रयपिंडश्राद्धं करिष्ये इतिसंकल्प्य ॥ गोमयोपलिप्तेदक्षिणप्रवणेस्थंडिलेकुशोपरि त्रिंशात्त्रिंशत्पिंडान्दद्यात् ॥ तद्यथा–एकस्मिन्पत्रपुटे ॥ जलतिलगंधपुष्पाणिकृत्वा तत्पुटंगृहीत्वा ॐअमुक० प्रेतपष्ट्यधिकशतत्रयपिंडस्थाने अत्रावनेनिक्ष्वतेमयादीयतेतवोपतिष्ठताम्–इति वेदिकायांकुशोपरि अवनेजनंकिंचिद्दद्यात् ॥ ततस्तिलघृतमधुदधिदुग्धशर्करादियुक्तेनयवचूर्णेन षष्ट्युत्तरशतत्रयपिंडान्निर्म्माय जलेनप्रोक्ष्यप्रथमंत्रिंशत्पिंडान्कुशत्रयादीनिचादाय ॥ ॐअमुकगोत्र अमुकप्रेत परलोकेमहाक्षुधानिवारणार्थम् एकादशाहे प्रथममासिकाहरहःश्राद्धनिमितकनीमानि त्रिंशत्पिंडानितेमयादीयंतेतवोपतिष्ठंतामिति कुशोपरिदद्यात् १ ॥ एवं द्वितीयमासिक०२ तृतीय०३ चतुर्थ०४ पंचम०५ षाण्मासिक० ६ सप्तम० ७ अष्टम० ८ नवम० ९ दशम० १० एकादश० ११ द्वादशमासिक १२ श्राद्धनिमित्तकानिक्रमेणत्रिंशत्त्रिंशत्पिंडानिदद्यात् ॥ ततोऽवनेजनपात्रमादाय ॐअमुकगोत्र०प्रेतपष्ट्युत्तरशतत्रयपिंडोपरि प्रत्यवनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामिति प्रत्यवनेजनंदत्त्वा पिंडान्सूत्रगंधपुष्पधूपदीपतांबूलैःसंपूज्य ॥ एभिःपष्ट्यधिकशतत्रयपिंडदानैरमुकगोत्रस्य प्रेतस्य संवत्सरपर्यंतंक्षुधानिवृत्तिरस्तु–इतिपठेत् ॥ ततोदक्षिणादानं रजतद्रव्यंजलकुशादीनिचादाय । अमुकगोत्र

स्यप्रेतस्यप्रेतत्वनिवृत्त्यर्थंकृतैतत्पष्ट्यधिकशतत्रयपिंडश्राद्धकर्मणः सांगतासिद्ध्यर्थमिदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायद
क्षिणात्वेनदातुमहमुत्सृजेइतिदद्यात् ॥ ततः पिंडानुत्थाप्यजलादौप्रक्षिप्यविष्णुंस्मरेत् ततोंऽजलिदानम् ॥ तत्रादौ अश्वत्थादिसमीपे
गत्वातन्मूलदेशेदक्षिणामुख उपविश्यपातितवामजानुःअपसव्येन ॥ कुशत्रयतिलजलान्यादाय ॥ अमुकगोत्रस्यामुकप्रेतस्यपरलोकेमहा
तृषानिवारणार्थम् अहरहःमात्रोदकुंभनिमित्तकपष्ट्यधिकशतत्रयांजलिदानंकरिष्ये-इतिसंकल्प्य॥ एकंबृहत्पात्रंजलेनापूर्य्यतत्रदुग्धतिलगं
धपुष्पाणिनिक्षिप्य ऋजुदर्भयुक्तपूर्णांजलिना ॐअमुकगोत्र अमुकप्रेत परलोकेमहातृषानिवारणार्थम् एतेपष्ट्यधिकशतत्रयः तिलतोयांज
लयस्तेमयादीयंतेतवोपतिष्ठंताम् इतिवाक्यंकृत्वापष्ट्यधिकशतत्रयतिलतोयांजलीन्दद्यात् ॥ ततः-अनादिनिधनोदेवःशंखचक्रगदाधरः॥
अक्षय्यः पुंडरीकाक्ष प्रेतमोक्षप्रदोभव ॥ इति प्रार्थ्यविष्णुंस्मरेत् ॥ इति पष्ट्यधिकशतत्रयपिंडश्राद्धप्रयोगः ॥ अथशय्यादिदानम् ॥
तत्रप्रयोगः ॥ तत्रादौ ॥ सारदारुमयींदृढांदंतपत्रहेमपट्टाद्यैरलंकृतांहंसतूलीप्रतिच्छन्नांशुभ्रगंडोपधानकां प्रच्छादनपटीयुक्तांगंधधूपादिवि
वासितां पुष्पतांबूलकुंकुमकर्पूरागुरुचंदनदीपोपानहच्छत्रचामरव्यजनासनसप्तधान्यघृतपूर्णकुंभसहितां शय्यामासाद्यतत्रहैमंकांचनपुरुषं
स्थापयेत् ॥ ( सपिंडनोत्तरंशय्यादानकरणेलक्ष्मीनारायणप्रतिमांस्थापयेत् ) ततः पूर्वाभिमुख उदङ्मुखोवा उपविश्य आचम्य
प्राणानायम्य देशकालौसंकीर्त्य ॥ ॐअद्याशौचान्तद्वितीयेह्नि ( अपसव्यम् ) अमुकगोत्रस्यामुकप्रेतस्यस्वर्गकामः शय्यादानं
करिष्ये इति संकीर्त्य देयब्राह्मणंगंधादिनासंपूज्य ॐइमांसोपकरणशय्यांददामीति द्विजकरेजलंदत्त्वा ॥ ॐददस्व इति प्रतिवचना
नन्तरं विप्रंशय्यायामुपवेशयेत् ॥ ततः ॐसोपकरणशय्यायैनमः-इति शय्यांनमस्कृत्य कांचनपुरुषं गंधपुष्पधूपदीपनैवेद्यानां

बूलादिभिः संपूज्य नमस्कृत्य ॥ कुशत्रयतिलजलान्यादाय ॐ अद्याशौचांतद्वितीयेह्नि अमुकगोत्रस्यामुकप्रेतस्यपरलोकेसुख शयनार्थं स्वर्गलोकप्राप्त्यर्थमिमांसोपस्करांशय्यां कांचनपुरुषप्रतिमायुतांविष्णुदैवत्याममुकगोत्रायामुकशर्मणे ब्राह्मणायतुभ्यमहंसंप्र ददे-इतिसतिलोदकंविप्रहस्तेदद्यात ॥ ॐस्वस्तीतिविप्रोवदेत् ॥ ततः शय्यादानप्रतिष्ठार्थं हिरण्यंकुशत्रयादीनिचादाय ॥ ॐ अद्यकृतैतत्सोपकरणशय्यादानप्रतिष्ठासिद्ध्यर्थमिदंहिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायदक्षिणात्वेनतुभ्यमहं संप्रददे इति दद्यात् ॥ ततःप्रतिग्रहीता ॐ स्वस्तीत्युक्त्वाशय्यांसंस्पृशेत् ॥ ततोदाता ॐ यथा न कृष्णशयनं शून्यं सागरजातया ॥ शय्या ममाप्यशून्यास्तु तथा जन्मनिजन्मनि ॥ इति पठित्वा प्रणम्यविसृजेत् इति शय्यादानप्रयोगः ॥ ( अत्रकेषुचिद्ग्रंथेषुद्विजदंपतीपूजनंलिखितम् तत्तुपर्वतीयानांमैथिलानांचज्ञेयम् ) ॥ अथत्रयोदशपददानानि ॥ तत्र आसनम् १ उपानहौ २ छत्रम् ३ मुद्रिकाम् ४ कमंडलुम् ५ अन्नम् ६ जलम् ७ भाजनानि ८ वस्त्राणि ९ आज्यम् १० यज्ञोपवीतम् ११ यष्टिम् १२ तांबूलम् १३ इमानित्रयोदशपददानद्रव्याणि यथाचारं यथाशक्तिसंपाद्य कुशत्रयतिलजलान्यादाय ॥ देशकालौ संकीर्त्य ( अपसव्येन ) अमुकगोत्रस्यामुकप्रेतस्य परलोकेसुखप्राप्त्यर्थम् असद्गतिनिवारणार्थम् इमानि आसनोपानहौछत्रमुद्रिकाकमंडल्वन्नजलभाजनवस्त्राज्ययज्ञोपवीतयष्टितांबूलानित्रयोदशपदानिनानादैवतानि नानानामगोत्रेभ्यो ब्राह्मणेभ्योदातुमहमुत्सृजे प्रेताय उपतिष्ठंताम् इत्युत्सृजेत् ॥ एभिः पददानैरमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्तिः सद्गतिप्राप्तिः इतिपठित्वाब्राह्मणेभ्योदद्यात ॥ इतित्रयोदशपददानम् ॥ ततः शक्तौसत्यां महार्हाणिरत्नानि गाःवाहनंयानानिदासीदासवेश्मानिप्रेतमुद्दिश्यविप्रेभ्योदद्यात् ॥ इत्येकादशाहदिनकर्म्म ॥ ❋ ॥ ॥ अथसपिंडनश्राद्धम् ॥

तच्चाधुनिकाः द्वादशाहे अनुकल्पेनकुर्वंतितथैवलिख्यते ॥ तत्रपूर्वदिने एकादशाहश्राद्धंकृत्वा निरामिषमेकवारंभुक्त्वारात्रौप्रदोषान्तेब्राह्मणा न्निमंत्रयित्वा सपिंडनदिनेनद्यादौप्रातः स्नात्वा नित्यक्रियांसमाप्य मध्याह्ने पुनः स्नात्वाश्वेतवस्त्रेपरिधायगोमयोपलितायांभूमौ सुस्नातसपिं डादिद्वारास्वयंवापाकद्वयंकुर्यात् ॥ ततोमृतिस्थानेश्राद्धभूमिंपरिकल्प्य गोमयोदकाभ्यामुपलिप्यज्वलदंगारैः संशोध्यगौरमृत्तिकयाच्छाद्य तिलैर्गौरसर्षपैश्चविकिरेत् ॥ तत्र श्राद्धसामग्रीं जलपूरितान्द्वादशघटांश्चैकांपक्वान्नपूरितांवर्धनींचसंपाद्य श्राद्धार्थं मंडलद्वयंकुर्यात् ॥ तत्र प्रथमंदेवमंडलंचतुरस्रंकृत्वा तद्दक्षिणेप्रेतमंडलंतत्प्राक्पितामहादिमंडलंचवर्तुलंत्रिकोणंवाकृत्वातत्रषड्दर्भंचटान्निवेशयेत् ॥ ततआसनसमी पेतिलतैलेनदीपंप्रज्वाल्यस्थापयेत् ॥ काककुक्कुटादींश्छ्राद्धापहंतनपसारयेत् ॥ श्राद्धदेशावरणंचकुर्यात् ॥ तत्रप्रथमंविश्वेदेवास्ततः प्रेतः प्रेतपित्रादिकमितिक्रमः ॥ तत्रप्रेतश्राद्धेद्विगुणादर्भा आवाहनं स्वधाशब्दं पात्रालंभ अङ्गुष्ठनिवेशनम् अग्नौकरणशेषदानम् उल्मुकभ्रा मणं शर्मादिशब्दं विसर्जनंचविवर्जयेत् ॥ भोटकस्थानेऋजुदर्भाः स्वधास्थाने उपतिष्ठतामितिवक्तव्यंप्रेतशब्देनोद्देशः कर्त्तव्यः ॥ प्रेतपित्रा दिश्राद्धंतुपार्वणवत्कर्त्तव्यम् ॥ अथप्रयोगः ॥ तत्रादौस्वासनेप्राङ्मुख उपविश्य पादयोरधः कुशत्रयंदत्त्वा ( सव्येन ) पवित्रेपरिधायआ चम्य प्राणानायम्य कर्मपात्रंजलेनापूर्य्य तत्र जलतिलगंधपुष्पाणिप्रक्षिप्य ॐअपवित्रःपवित्रोवा सर्वावस्थांगतोपिवा ॥ यः स्मरेत्पुंडरी काक्षं सबाह्याभ्यन्तरः शुचिः ॥ १ ॥ ॐपुंडरीकाक्षः पुनात्वितिकुशत्रयानीतजलेनश्राद्धवस्तूनिस्वात्मानंचासिंचेत ॥ ततः ॐ वैष्णव्यैनमः ॥ ॐकाश्यप्यैनमः ॥ ॐ अक्षयायैनमः ॥ ॐ भूम्यैनमः ॥ इतिनत्वा ॥ श्राद्धदेशंगयात्मकत्वेन तदेकदेशस्थं गदाधरंचध्यात्वा तयोः ॐ भगवत्यैगयायैनमः ॥ ॐ भगवतेगदाधरायनमः ॥ इतिमनोवाक्कायैर्नमस्कारंकुर्यात् ॥ ततः कुश

त्रयतिलजलान्यादाय ॥ देशकालौसंकीर्त्य ॥ ॐ अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्या उत्तमलोकप्राप्त्यर्थमेकोद्दिष्टपार्वणोभया
त्मकंसपिंडीकरणश्राद्धमहंकरिष्ये इतिसंकल्प्य ॥ गायत्रींत्रिर्जपित्वा ॥ ॐ देवताभ्यःपितृभ्यश्च महायोगिभ्यएवच ॥ नमः
स्वाहायैस्वधायै नित्यमेवनमोनमः ॥ इतित्रिर्जपेत् ॥ ततः ॐ नमोनमस्तेगोविन्द पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्ष
तांसर्वतोदिशः ॥ इतिदैवप्रदेशेयवान्विकीर्य ( अपसव्येन ) पैतृकप्रदेशे ॐ अग्निष्वात्ताःपितृगणाः प्राचींरक्षंतुमेदिशम् ॥
तथाबर्हिषदःपांतु याम्यांयेपितरःस्थिताः ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपिसोमपाः ॥ अधोर्ध्वमपिकोणेषु हविष्मन्तश्चसर्वदा ॥ रक्षो
भूतपिशाचेभ्यस्तथैवासुरदोषतः ॥ सर्वतश्चाधिपस्तेषां यमोरक्षांकरोतुवै ॥ वायुभूतपितॄणांच तृप्तिर्भवतुशाश्वती ॥ इत्यनेन
दिक्ष्वधस्तादूर्ध्वंकोणेषुच तिलान्गौरसर्षपांश्चविकीर्य वामेदक्षिणेवाकटिभागेनीवींबंधंकुर्यात् ॥ ततः ( सव्येन ) कस्मिंश्चित्पात्रेज
लंगृहीत्वा दर्भैरालोड्य ॥ ॐ यद्देवादेवहेडनंदेवासश्चकृमाव्वयम् ॥ अग्निर्मातस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ १ ॥ यदि
दिवायदिनक्तमेनांꣳसिचकृमाव्वयम् ॥ व्वायुर्मातस्मादेनसो विश्वान्मुंचत्वꣳहसः ॥ २ ॥ यदिजाग्रद्यदिस्वप्नऽएनांꣳसिचकृ
माव्वयम् ॥ सूर्य्योमातस्मादेनसोविश्वान्मुंचत्वꣳहसः ॥ ३ ॥ इतिकूष्मांडसूक्तेनाभिमंत्र्य ॥ श्वोदक्यादिदुष्टदृष्टिनिपातात
शूद्रादिसंपर्कदोषाच्चपाकादीनां पवित्रताऽस्तु इतिपाकादीन्संप्रोक्षयेत् ॥ अथासनादिदानम् ॥ तत्रतावत् उदङ्मुखउपविश्य
सव्येन सजघनंदक्षिणंजान्वाच्य ॥ कुशत्रययवजलान्यादाय ॥ ॐ अद्यास्मत्पितामहादित्रयश्राद्धसंबंधिनः कामकालसंज्ञका

विश्वेदेवाः इदमासनंवोनमः ॥ इत्युच्चार्य्य देवतीर्थेनप्रथममंडले पूर्वाग्रंकुशत्रयंदद्यात् ॥ ततोयवहस्तः ॥ ॐ कामकालसंज्ञ
कान्विश्वान्देवानावाहयिष्ये इत्युक्त्वा ॥ ॐविश्वेदेवासऽआगंतशृणुतामऽइमठंहवम् ॥ एदंबर्हिर्निषीदत ॥ इत्यनेनावाह्य ॥ ॐयवोसियु
वयास्मद्द्वेषोयवयारातीः ॥ इत्यनेनयवान्विकीर्य ॥ ॐ विश्वेदेवाःशृणुतेमठंहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥ येऽअग्निजिह्वाऽउतवायज
त्राऽआसद्यास्मिन्बर्हिषिमादयध्वम् ॥ इतिजपेत् ॥ (विश्वेदेवोत्पत्तिनाम्नोरज्ञाने) आगच्छंतुमहाभागा विश्वेदेवामहाबलाः॥ येयत्रयोजिताः
श्राद्धे सावधानाभवन्तुते ॥ इति श्लोकोऽप्युच्चारणीयः ॥ ततोऽर्घपात्रेपूर्वाग्रंपवित्रंधृत्वा ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये॥शंय्योर
भिस्रवंतुनः॥ इतिजलंक्षिप्त्वा ॐयवोसियवयास्मद्द्वेषोयवयारातीः इतियवान् प्रक्षिप्यतूष्णीमेवगंधपुष्पतुलसीदलानिक्षिपेत्॥ततः ॐअर्घ
पात्रसंपत्तिरस्तु इति पठित्वा ॥ अर्घपात्रंवामहस्तेकृत्वापवित्रंपूर्वाग्रंदेवताग्रे पलाशपत्रेनिधाय॥ ॐयादिव्याऽआपः पयसासंबभूवुर्याऽअन्त
रिक्षाऽउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानऽआपःशिवाःशठंस्योनाःसुहवाभवन्त्वितिमंत्रेणार्घपात्रमभिमंत्र्य ॥ दक्षिणहस्तेन कुशत्रय
यवजलान्यादाय ॥ ॐअद्यास्मत्पितामहादित्रयश्राद्धसंबंधिनः कामकालसंज्ञकाविश्वेदेवाएषवोहस्तार्घःस्वाहानमः॥ इत्युत्सृज्यपवित्रोपरि
अर्घजलंदक्षिणहस्तस्थदेवतीर्थेनक्षिपेत् ॥ ततोऽर्घपात्रंपवित्रादिसहितं देवदक्षिणपार्श्वे ॐविश्वेभ्यो देवेभ्यः स्थानमसीत्युत्तानंस्थाप
येत् ॥ अथगंधादिदानम् ॥ तत्रगंधपुष्पधूपदीपवस्त्रादिकंधृत्वा॥कुशत्रययवजलान्यादाय॥ॐअद्यास्मत्पितामहादित्रयश्राद्धसंबंधिनः काम
कालसंज्ञकाविश्वेदेवाः एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसिवोनमः इत्युत्सृजेत् ॥ ततः ॐविश्वेषांदेवानामर्चनं संपूर्णमस्त्विति

पठित्वा प्रणीताग्निभस्मना वारिणावा ब्राह्मणादिषु चतुरस्रत्रिकोणवर्त्तुलमंडलंवेष्टयित्वाकुर्य्यात् ॥ इतिगंधाद्यर्चनान्तंदेवकांडंनिर्वर्त्य प्रेतपित्रादिश्राद्धदेशमागच्छेत् ॥ तत्र आसने दक्षिणाभिमुखउपविश्य अपसव्यंकृत्वा सजघनं वामंजान्वाच्य॥कुशत्रयतिलजलान्यादाय॥ ॐअमुकगोत्र अमुकप्रेत इदमासनंतेमयादीयते तवोपतिष्ठतामित्युक्त्वा ऋजुकुशत्रयरूपंदक्षिणाग्रमासनमुत्सृजेत् ॥ ततोद्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐअमुकगोत्र पितामहामुकशर्मन्वसुरूप इदमासनंतुभ्यंस्वधा ॥ इतिप्रथमासनं मोटकरूपं दक्षिणाग्रं पश्चिमगतमुत्सृजेत् ॥१॥ पुनर्द्विगुणभुग्नकुशत्रयादीन्यादाय ॐ अमुकगोत्रप्रपितामहामुकशर्मन् रुद्ररूप इदमासनंतुभ्यंस्वधा ॥ इति द्वितीयासनं प्रपितामहायदद्यात्॥२॥पुनर्द्विगुणभुग्नकुशादीन्यादाय ॐ अमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नादित्यरूप इदमासनंतुभ्यंस्वधा इतितृतीयासनंसर्वतः पूर्वगतंवृद्धप्रपितामहायोत्सृजेत् ॥ ३ ॥ ततःपितामहादीनुद्दिश्य ॐपितॄनावाहयिष्ये इत्युक्त्वा ॐउशन्तस्त्वानिधीमह्युशन्तः समिधीमहि॥उशन्नुशतऽआवहपितॄन्हविषेऽअत्तवे ॥ इत्यावाह्य ॥ ॐअपहताऽअसुरारक्षांᳬसिवेदिषदः ॥ इतितिलान्विकीर्य ॥ ॐआयंतुनःपितरःसोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधयामदंतोधिब्रुवन्तुतेवन्त्वस्मान् ॥ इतिजपेत् ॥ ततोर्घपात्रचतुष्टयंनिधायप्रत्येकमेकैकंदर्भदलंधृत्वा ॥ तत्र ॐ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये॥ शंय्योरभिस्रवतुनः॥इतिजलंप्रक्षिप्य ॐ तिलोसिसोमदेवत्यो गोसवोदेवनिर्मितः ॥ प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणाहिनः स्वधा ॥ इतिप्रत्येकंतिलान्प्रक्षिप्य तूष्णीमेव गंधपुष्पाणिनिक्षिपेत् ॥ ततोर्घपात्रचतुष्टयसंपत्तिरस्तु इतिपठित्वा प्रेतार्घपात्रं वामहस्तेकृत्वा पवित्रंपलाशपत्रे धृत्वा ॥ ॐया

दिव्याऽआपः पयसासंबभूवुर्य्याऽआन्तरिक्षाऽउतपार्थिवीर्य्याः ॥ हिरण्यवर्णा यज्ञियास्तानऽआपःशिवाः शᳫंस्योनाः सुहवा भवंतु ॥ इति पात्रजलमभिमंत्र्य ॐअमुकगोत्रामुकप्रेत सापिंडीकरणश्राद्धे एषतेहस्तार्घोमयादीयते तवोपतिष्ठतामितिपवित्रोपरि अर्घजलं किंचिद्द्यात् ॥ अर्घपात्रंचावशिष्टजलपवित्रसहितंपुरतः स्थापयेत् ॥ अथपात्रमेलनम् ॥ तत्रादौकुशत्रयतिलजलान्यादाय देशकालौ संकीर्त्य ॥ अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्तिपूर्वकसद्गतिप्राप्त्यर्थं वसुरुद्रादित्यत्वप्राप्त्यर्थंच तत्पितृपितामहप्रपितामहाना मर्घैः सहप्रेतार्घसंयोजयिष्ये इतिसंकल्प्य ॥ ततः प्रेताऽर्घपात्रस्थंपवित्रं पितामहार्घपात्रेनिधाय प्रेतार्घपात्रंदक्षिणहस्तेधृत्वा ॥ ॐअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थंतदर्घपात्रस्थंप्रथमांशजलम् अमुकगोत्रस्यपितामहस्यामुकशर्मणोवसुरूपस्य अर्घपात्रेणसहसं योजयिष्ये इतिपठित्वा ॥ ॐयेसमानाः समनसःपितरो यमराज्ये तेषांल्लोकः स्वधानमोयज्ञोदेवेषुकल्पताम् ॥१॥ ॐयेसमानाः समनसोजीवाजीवेषुमामकाः ॥ तेषाᳫंश्रीर्मयिकल्पतामस्मिँल्लोकेशतᳫंसमाः इतिमंत्रद्वयान्तेप्रथमांशमर्घजलमर्घेक्षिपेत् ॥ तेन वसुलोकप्राप्तिः ॥ १ ॥ ततः प्रेतपवित्रंप्रपितामहार्घपात्रेधृत्वा ॥ अमुक० प्रेतस्यप्रेतत्वनिवृत्त्यर्थं तदर्घपात्रस्थंद्वितीयांशंजलम् अमुकगोत्रस्यप्रपितामहस्यामुकशर्मणः रुद्ररूपस्यअर्घपात्रेणसहसंयोजयिष्ये इतिपठित्वा ॥ ॐ येसमानाःसमनसः० ॥१॥ येसमानाः० ॥२॥ इति मंत्राभ्यांद्वितीयांशमर्घजलमर्घेक्षिपेत् ॥ तेनरुद्रलोकप्राप्तिः ॥ २ ॥ पुनः प्रेतपवित्रं वृद्धप्रपितामहार्घपात्रेधृत्वा ॥ ॐ अमुक० प्रेतस्यप्रेतत्वनिवृत्त्यर्थं तदर्घपात्रस्थं सर्वंजलंवृद्धप्रपितामहस्यामुकशर्मणः आदित्यरूपस्यअर्घपात्रेणसहसंयोजयिष्ये इतिपठित्वा ॥

ॐ येसमाना ॰ ॐ येसमा॰ इतिमंत्राभ्यांतृतीयांशमर्घजलमर्घेक्षिपेत्॥तेनआदित्यलोकप्राप्तिः॥३॥इतिपात्रमेलनम्॥ स्त्रीसापिंडीकरणेतुएवं प्रयोगः ॥ अमुकगोत्रायाः अमुकप्रेतायाः उत्तमलोकप्राप्त्यर्थं तदर्घपात्रस्थंप्रथमांशजलम् अमुकगोत्रायाः पितामह्याः गंगारूपायाः अर्घपात्रेणसहसंयोजयिष्ये इतिपठित्वा ॥ येसमाना॰ इतिमंत्रद्वयांतेप्रथमांशमर्घजलमर्घेक्षिपेत् ॥ तेनवसुलोकप्राप्तिः ॥ १ ॥ अमुक॰ प्रेतायाः उत्तमलोकप्राप्त्यर्थंतदर्घपात्रस्थंद्वितीयांशजलम् अमुकगोत्रायाः प्रपितामह्याः यमुनारूपायाः अर्घपात्रेणसहसंयोजयिष्ये इति पठित्वा ॥ येसमाना॰ इतिमंत्रद्वयान्ते द्वितीयांशमर्घजलमर्घेक्षिपेत् ॥ तेनरुद्रलोकप्राप्तिः ॥ २ ॥ अमुक॰ प्रेतायाः उत्तमलोकप्राप्त्यर्थं तदर्घपात्रस्थंसर्वजलममुकगोत्राया वृद्धप्रपितामह्याः सरस्वतीरूपाया अर्घपात्रेणसह संयोजयिष्ये इति पठित्वा ॥ येसमाना॰ इतिमंत्रद्वयान्ते तृतीयांशमर्घजलमर्घेक्षिपेत् ॥ तेन आदित्यलोकप्राप्तिः ॥ ३ ॥ इतिस्त्रीसापिंडनार्घपात्रमेलनविधिः॥ततः अनेन अर्घसंयोजनेन प्रेतस्यसद्गत्युत्तमलोकप्राप्तिः इति पठित्वा प्रेतपवित्रं प्रेतार्घपात्रेकृत्वाप्रेतसमीपे उत्तानंन्युब्जंवापात्रंस्थापयेत् ॥ ततःपितामहादीनामर्घ्यदानम्॥तत्रादौ पितामहार्घपात्रंवामहस्तेकृत्वा दक्षिणाग्रं पवित्रं पात्रधृत्वा ॐयादिव्याऽआपः पयसासंबभूवुर्याऽआन्तरिक्षाऽउतपार्थिवीर्याः हिरण्यवर्णायज्ञियास्तानऽआपःशिवाः शꣳस्योनाः सुहवाभवंतु इत्यभिमंत्र्य॥द्विगुणभुग्नकुशत्रयादीन्यादाय ॐअमुकगोत्रस्यास्मत्पितामहामुकशर्मन् एषते हस्तार्घः स्वधा इति पवित्रोपर्य्यर्घ्यजलंदद्यात्॥अर्घपात्रंपवित्रजलसहितंचपुरतः स्थापयेत्॥ एवमेव प्रपितामहाय वृद्धप्र

१ श्राद्धविवेकपितृभक्त्यादिषु अर्घ्यमेलनात्प्राक्पितामहाद्यर्घदानमुक्तं तन्मैथिलसांप्रदायिकं ज्ञेयम् ।

पितामहायचदद्यात् ॥ अवशिष्टजलयुतंपात्रद्वयमग्रेस्थापयेत् ॥ ततोवृद्धप्रपितामहप्रपितामहयोः पात्रस्थजलादीनि पितामहपात्रे कृत्वा ( सव्येन ) ॐआपः शिवाः शिवतमाः शांताः शांततमास्ते कृण्वन्तुभेषजमितिमंत्रेणशिरस्यभिषेकंकृत्वा ( अपसव्येन ) ॐपितृभ्यः स्थानमसीति प्रथमंपितामहपात्रम् आसनवामप्रदेशभूमावधोमुखं संस्थाप्यतदुपरिप्रपितामहपात्रं वृद्धप्रपितामहपात्रंचदद्यात् ॥ एतानिस्थापितपात्राणि दक्षिणादानपर्यंतंनोद्धरेन्नचालयेत् ॥ ततोगंधादिदानम् ॥ तत्रादौ गंधपुष्पधूपदीपतांबूलवासांसिप्रेतासने धृत्वा कुशत्रयतिलजलान्यादाय अमुकगोत्रामुकप्रेत सपिंडीकरणश्राद्धे एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेमया दीयंतेतवोपतिष्ठंतामिति प्रेताय गंधादीन्युत्सृजेत् ॥ १ ॥ पुनः पितामहाद्यासनेषुक्रमेणगंधादिकंधृत्वा ॥ द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ ॐअमुकगोत्रास्मत्पितामहामुकशर्मन् एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितुभ्यंस्वधा इतिपितामहाय गंधादीन्युत्सृजेत् ॥ एवंप्रपितामहायवृद्धप्रपितामहायचगंधादीन्युत्सृजेत् ॥ ततःपितॄणामर्चनंसंपूर्णमस्त्वितिब्रूयात् ॥ एवंगंधाद्यर्चनंविधाय सव्यापसव्याभ्यांभोजनपात्रस्थापनदेशंसंमार्ज्य ॥ गौरमृत्तिकया जलेनवा ब्राह्मणादिषुचतुरस्रत्रिकोणवर्त्तुलमंडलानिकृत्वा भोजनपात्राणिदद्यात् ॥ अथाग्नौकरणम् ॥ तत्रादौव्यंजनक्षारवर्जितंघृताक्तमुष्णंपितामहादिश्राद्धीयान्नाग्रभागं कांस्यपात्रेसमुद्धृत्य अपसव्यंकृत्वा वामजानु निपात्य दक्षिणामुखः पत्रपुटकादिस्थजले ॐ अग्नयेकव्यवाहनायस्वाहा इदमग्नयेकव्यवाहनायनमम ॥ ॐ सोमायपितृमतेस्वाहा इदंसोमायपितृमतेनमम इत्याहुतिद्वयंदक्षिणकरेणजुहुयात् ॥ ततोहुतशेषमन्नंपितामहादिपात्रत्रये किंचित्किंचिद्दद्यात् ॥ नप्रेतपात्रेदानम् नचाविश्वेदेवपात्रेऽपि ॥ ( नहिस्मृताः शेषभाजोविश्वेदेवाः पुराणगैरितिवचनात् ) ततः सव्येनदेवपात्रे अपसव्येन

प्रेतपाकात्प्रेतपात्रे(पितृपाकात्)पितामहादिपात्रेषुच उष्णमन्नं सघृतं व्यंजनजलसहितंप्रत्येकंपुरुषतृप्तिजनकं यथावत्परिविष्य मधुनाभिघा र्य्य ॐ मधुव्वाताऽऋतायतेमधुंक्षरन्तिसिंधवः॥माध्वीर्न्नःसन्त्वोषधीः॥१॥मधुनक्तमुतोषसोमधुमत्पार्थिवरठंरजः॥ मधुद्यौरस्तुनःपिता ॥ ॥ २ ॥ मधुमान्नोव्वनस्पतिर्मधुमाँऽअस्तुसूर्य्यः॥माध्वीर्गावोभवंतुनः ॥३॥ ॐ मधुमधुमध्वित्यभिमंत्रयेत् ॥ ततः(सव्येन)उत्तानपाणिभ्यां देवपात्रमालभ्य ॐपृथिवीतेपात्रंद्यौरपिधानं ब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वाहा इतिजप्त्वा ॐइदंविष्णुर्व्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाठंसुरेस्वाहा ॥ इत्येतां वैष्णवीमृचमुच्चार्य्याधोमुखस्वांगुष्ठमन्नम् ॐ विष्णोहव्यरठंरक्ष इतियजुषान्नेनिवेश्य ॥ इदमन्नम् इमाआपः इदमाज्यम् एतत्सर्वंहविरित्युक्त्वा ॐअपहताऽअसुरारक्षाठंसिवेदिषद इतियवान् अन्नपात्रपरितोविकीर्य्य वामेनकरेणपात्रंस्पृश न्दक्षिणकरेणकुशत्रययवजलान्यादाय ॐअद्यास्मत्पितामहादित्रयश्राद्धसंबंधिनः कामकालसंज्ञकाविश्वेदेवाइदमन्नंसोपस्करंपरिविष्टंहव्यम् अमृतरूपंवः स्वाहानमः ॥ इत्युदकंदेवतीर्थेनासनदक्षिणभागेनिक्षिपेत् ॥ ततोऽपसव्यंकृत्वा प्रेतपात्रवर्जं पितामहादिपात्रत्रयालंभः ॥ प्रेत पात्रस्यतुपरितः ॐ अपहताऽअसुरारक्षाठंसिव्वेदिषद इतितिलान् विकीर्य ॥ अमुकगोत्रामुकप्रेतसपिंडीकरणश्राद्धे इदमन्नंघृताद्युप स्करसहितं तेमयादीयतेतवोपतिष्ठतामित्युत्सृजेत् ॥ ततः पितामहपात्रंन्युब्जाभ्यांव्यस्ताभ्यांपाणिभ्यांस्पृष्ट्वा ॥ ॐपृथिवीतेपात्रंद्यौरपिधानं ब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वधा इतिपठित्वा ॥ ॐ इदंविष्णुर्विचक्रमे त्रेधानिदधेपदम् ॥ समूढमस्यपाठंसुरे ॥ इत्येतामृचंचज

स्वाऽधोमुखंस्वदक्षिणांगुष्ठमनस्वम् ॐ विष्णोकव्यर्ठ० रक्ष इत्यन्नेनिवेश्य ॥ इदमन्नम् इमाआपः इदमाज्यम् एतत्सर्वंहविरित्युक्त्वा ॐ अपहताऽअसुरारक्षांᳬसिवेदिषदः ॥ इतितिलान्पात्रपरितोऽप्रदक्षिणेनविकीर्य वामेनकरेणपात्रंस्पृशन् ॐ अमुकगोत्र पितामहामुकशर्मन्वसुरूप इदमन्नं सोपकरणं कव्यममृतरूपंतुभ्यंस्वधा इत्युदकं पितृतीर्थेन आसनवाममागेक्षिपत् ॥ एवंप्रपितामहाय वृद्धप्रपितामहाय चान्नमुत्सृजेत् ॥ ततः ॐ अन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्तु इतिप्रार्थ्य ( सव्येन ) व्याहृतित्रयपूर्वांसप्रणवां गायत्रीं त्रिः सकृद्वाजपेत् ॥तथा–ॐमधु०वाताऽऋतायतेमधुंक्षरन्तिसिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ १ ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवर्ठ० रजः ॥ मधुद्यौरस्तुनः पिता ॥ २ ॥ मधुमान्नोवनस्पतिर्मधुमाँ२ऽअस्तुसूर्यः ॥ माध्वीर्गावोभवन्तुनः ॥३॥ इतित्र्यृचम् ॥ ॐ मधु मधुमध्विति च जपेत् ॥ ततः ॐ कृणुष्वपाजः प्रसितिन्नपृथ्वींयाहिराजेवामवाँऽइभेन ॥ तृष्वीमनुप्रसितिन्द्रूणानोऽस्तासिविध्यरक्षसस्तपिष्ठैः ॥ १ ॥ तवभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः ॥ तपूᳬष्यग्नेजुह्वापतङ्गानसन्दितोविसृजविष्वगुल्काः ॥ २ ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोऽअस्याऽअदब्धः ॥ योनोदूरेऽअघशर्ठ० सोयोऽअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ ३ ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ२ऽओषतातिग्महेते ॥ योनोऽअरातिर्ठ० समिधानचक्रेनीचातंधक्ष्यतसन्नशुष्कम् ॥ ४ ॥ ऊर्ध्वोभवप्रतिविध्याध्यस्मादाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनांजामिमजामिम्प्रमृणीहिश

त्रून् ॥ अग्नेष्ट्वातेजसासादयामि ॥ ६ ॥ इतिरक्षोघ्नीः पंचऋचः पठित्वा भूमिंतिलैरास्तीर्य ॥ ॐउदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः ॥ असुंयऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥ १ ॥ इत्यादि १३ पितृमंत्रान् ॐसहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिंठं० सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम्–इत्यादि १६ पुरुषसूक्तम् ॥ ॐआशुः शिशानोवृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ॥ संक्रन्दनोनिमिषऽएकवीरः शतठं० सेनाऽअजयत्साकमिन्द्रः ॥ इत्यादि १७ अप्रतिरथंचपठेत् ॥ ततः सप्तव्याधादशार्णेषु मृगाः कालञ्जरेगिरौ ॥ चक्रवाकाः शरद्वीपे हंसाःसरसिमानसे ॥ तेऽभिजाताःकुरुक्षेत्रे ब्राह्मणावेदपारगाः ॥ प्रस्थितादूरमध्वानंयूयंतेभ्योऽवसीदत ॥ इतिचपठित्वायथारुचिस्तवादिकंपठेत् ॥ ततः( अपसव्येन ) पितामहपात्रसन्निधौभूमिंप्रोक्ष्य तत्रदक्षिणाग्रंकुशत्रयमास्तीर्य सर्वप्रकारमन्नंसव्यंजनमुद्धृत्यसतिलमेकीकृत्य ॥ ॐ अग्निदग्धाश्चयेजीवा येप्यदग्धाः कुलेमम ॥ भूमौ दत्तेनतृप्यन्तु तृप्तायान्तुपरांगतिम्॥ १ ॥इतिमंत्रेणकुशोपरितदन्नंविकिरेत् ॥ततः (सव्यंकृत्वा) आचम्य हरिंस्मृत्वा ( अपसव्येन ) ॐमधुवाताऽऋतायते इतित्र्यृचं मधुमधुमध्वितिचजपेत् ॥ततः उच्छिष्टसन्निधौहस्तांतरप्रदेशेचतुरस्रंदक्षिणप्लवंरमणीयंहस्तमात्रं चतुरङ्गुलोच्छ्रितंप्रेतपिंडपातनार्थंस्थानंनिर्माय॥तत्पूर्वतःअपरंपितामहादित्रयपिंडदानार्थंतादृशमेवकुर्यात्॥ततः पितामहादिपिंडस्थानमध्येदर्भपिंजुलीमूलेन ॐअपहताऽअसुरारक्षाठंसिवेदिषदः॥इतिमंत्रेणसव्योपगृहीतदक्षिणहस्तेनदक्षिणाग्रांरेखांसकृदुल्लिख्य दर्भपिंजुलीमुत्तरस्यांदिशिनिक्षिप्य ॐयेरूपाणिप्रतिमुञ्चमानाऽअसुराः सन्तः स्वधयाचरंति॥परापुरोनिपुरोयेभरंत्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ इतिमंत्रेण उल्मुकंरेखोपरिभ्रामयित्वादक्षिणतोनिद

ध्यात्॥तत उभयत्र उपमूलसकृदाच्छिन्नदक्षिणाग्रकुशत्रयमास्तीर्य देवताभ्य इतित्रिर्जपेत् ॥ ततःपुटकचतुष्टये जलतिलगंधपुष्पाणिकृत्वा
एकंप्रेतपुटकंगृहीत्वा अमुकगोत्रामुकप्रेत सपिंडीकरणश्राद्धे पिंडस्थाने अत्रावनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिप्रथमवेदिकायांकुशोप
रि अवनेजनंदद्यात् ॥ ततोऽपरंपुटकंगृहीत्वा ॐअमुकगोत्रपितामहामुकशर्मन्नत्रावनेनिक्ष्वतेस्वधा ॥ इतिकुशमूलेपितामहायपितृतीर्थेना
वनेजनंदद्यात् ॥ एवमेवप्रपितामहायकुशमध्ये वृद्धप्रपितामहायकुशाग्रेऽवनेजनंदद्यात् ॥ ततः सर्वस्माच्छ्राद्धशेषान्नादुष्णंकिंचिदन्नमुद्धृत्य
हुतशेषान्नंमध्वाज्यतिलसर्वव्यञ्जनयुतंपात्रेकृत्वा बिल्वोपमांश्चतुरः पिंडान्निर्माय मधुघृताभ्यामभिघार्य्य प्रथममतिस्थूलंप्रेतपिंडं
कुशत्रयादीनिचादाय । ॐअमुकगोत्रामुकप्रेत सपिंडीकरणश्राद्धे एतत्तेऽन्नपिंडंमयादीयतेतवोपतिष्ठताम् ॥ इतिप्रथमवेदिकायां कुशो
परिपिंडं दद्यात् ॥ ततोद्वितीयपिंडंद्विगुणभुग्नकुशादीनिचादाय ॐ अमुकगोत्र पितामहामुकशर्मन्वसुरूप एतत्तेऽन्नपिंडंतुभ्यं
स्वधा इति द्वितीयवेदिकायांप्रथमावनेजनस्थानेसव्योपगृहीतदक्षिणहस्तेनापितृतीर्थेनपितामहायदद्यात् ॥ एवंप्रपितामहाय वृद्धप्र
पितामहायचतत्तदवनेजनस्थानेदद्यात् ॥ ततः पितामहादिपिंडास्तरणकुशमूले ॐ लेपभागभुजः पितरस्तृप्यंतु इतिपठि
त्वा दक्षिणहस्तंप्रोञ्छ्य जलेनहस्तौप्रक्षालयेत् ॥ ततः ( सव्येन ) त्रिराचम्यहरिंस्मरेत् ॥ ततः ( अपसव्यं कृत्वा ) पूर्वदत्तप्रेतावने
जनपात्रंगृहीत्वा ॥ अमुकगोत्रामुकप्रेतसपिंडीकरणश्राद्धे पिंडे अत्रप्रत्यवनेनिक्ष्वतेमयादीयतेतवोपतिष्ठताम् इतिप्रेतपिंडोप
रिप्रत्यवनेजनंदद्यात् ॥ ततः प्रेतपिंडं सूत्राच्छादनगंधपुष्पधूपदीपपूगीफलादिभिः संपूज्य अनेनपिंडदानेन प्रेतस्य सद्गति
उत्तमलोकावाप्तिः इतिपठेत् ॥ अथपिंडमेलनप्रकारः ॥ तत्रतावत्प्रेतपिंडस्थसूत्रादिकमपनीय हस्तद्वयेनसुवर्णरजतशलाकां

तदभावेदर्भमयींरज्जुंमधुघृताक्तामादायतयाप्रेतपिंडंसमं त्रेधाविभजेत् ॥ ततोदेशकालौस्मृत्वा अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्व निवृत्तिपूर्वकपितृसमत्वप्राप्त्यर्थं वस्वादिलोकप्राप्त्यर्थंच अमुकगोत्राणां तत्पितृपितामहप्रपितामहानांपिंडैः सह अमुकप्रेतस्यपिंडसंयोजनं करिष्ये इति संकल्प्य॥प्रेतपिंडस्यप्रथमभागमादाय वामहस्तेकृत्वादक्षिणहस्तेपितामहपिंडंधृत्वा अमुकगोत्रस्यामुकप्रेतस्यप्रथमं पिंडशकलम् अमुकपितामहस्यामुकशर्मणो वसुरूपस्यपिंडेनसहसंयोजयिष्ये इत्युक्त्वा ॐयेसमानाःसमनसःपितरोयमराज्ये।तेषांल्लोकःस्वधानमोयज्ञोदेवेषुकल्पताम् ॥ १ ॥ येसमानाःसमनसोजीवाजीवेषुमामकाः।तेषांश्रीर्मयिकल्पतामस्मिँल्लोकेशतंसमाः॥२॥ इति मंत्रद्वयांतेदक्षिणहस्तस्थंपितामहपिंडं वामहस्तस्थप्रेतपिंडशकलेपितृतीर्थेनक्षिप्त्वामधुघृताक्तं कृत्वावर्त्तुलंकुर्यात् ॥ अनेनप्रेतस्यप्रथमपिंडशकलस्य प्रेतपितृसंयोजनेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु वसुलोकावाप्तिरस्तु इति पठेत् ॥ १ ॥ ततोद्वितीयंप्रेतपिंडशकलंप्रपितामहपिंडं चादाय॥अमुक० प्रेतस्यद्वितीयंपिंडशकलम् अमुक०प्रपितामहस्यामुकशर्मणः रुद्ररूपस्यपिंडेनसहसंयोजयिष्ये इत्युक्त्वा ॐयेसमानाः० इतिमंत्रद्वयेनपूर्ववत्प्रपितामहपिंडेनियोजयित्वा अनेन प्रेतद्वितीयपिंडशकलस्यप्रेतपितामहसंयोजनेन प्रेतस्य प्रेतत्वनिवृत्तिरस्तु रुद्रलोकावाप्तिरस्त्वितिपठेत् ॥ २ ॥ ततः तृतीयंप्रेतशकलंवृद्धप्रपितामहपिंडंचादाय ॥ अमुक० प्रेतस्यतृतीयंपिंडशकलम् अमुक० वृद्धप्रपितामहस्यामुकशर्मणः आदित्यरूपस्यपिंडेनसहसंयोजयिष्ये इत्युक्त्वा ॥ ॐ येसमानाः० इतिमंत्रद्वयेनवृद्धप्रपितामहपिंडेनियोजयित्वा अनेनप्रेतस्यतृतीयपिंडशकलस्यप्रेतप्रपितामहसंयोजनेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु आदित्यलोकावाप्तिरस्तु–इति पठेत् ॥३॥ ( अथस्त्रीस

पिंडनेविशेषः ) अमुकगोत्रायाः अमुकप्रेतायाःप्रेतत्वनिवृत्तिपूर्वकपितृसमत्वप्राप्त्यर्थंवस्वादिलोकप्राप्त्यर्थंच अमुकगोत्राणामस्मत्पिताम हीप्रपितामहीवृद्धप्रपितामहीनांपिंडैःसहामुकप्रेतायाः पिंडसंयोजनंकरिष्ये इतिसंकल्प्य ॥ सुवर्णशलाकादिनाप्रेतपिंडंत्रेधाविभजेत् ॥ ततः प्रथमभागंगृहीत्वा ॥ अमुक० प्रेतायाः पिंडप्रथमशकलम् अमुकगोत्रायाःपितामह्याः पिंडेनसहसंयोजयामीत्युक्त्वा ॥ ॐयेसमाना० इति मंत्रद्वयांते प्रथमशकलंप्रथमपिंडेनसह संयोजयेत् ॥ तेनवसुलोकप्राप्तिः॥ १ ॥ ततोद्वितीयभागंगृहीत्वा ॥ अमुक० प्रेतायाःपिंडद्विती यशकलम् अमुकगोत्रायाः प्रपितामह्याः पिंडेनसहसंयोजयामीति पठित्वा ॥ येसमाना० इतिमंत्रद्वयान्ते द्वितीयशकलं द्वितीयपिंडेनसह संयोजयेत् ॥ तेनरुद्रलोकप्राप्तिः ॥ २ ॥ ततस्तृतीयभागमादाय अमुक० प्रेतायाः पिंडतृतीयशकलम् अमुकगोत्रायावृद्धप्रपितामह्याः पिंडेनसहसंयोजयामि इत्युक्त्वा ॥ ॐ येसमाना० इतिमंत्रद्वयान्ते तृतीयशकलं तृतीयपिंडेनसहसंयोजयेत् ॥ तेन आदित्यलोकप्राप्तिः इति वदेत् ॥ इति स्त्रीसपिंडनेविशेषः ॥ ततः पिंडानामभिमृश्येदंपठेत् ॥ एषवोनुगतः प्रेतः पितरस्तंददामिवः ॥ शिवमस्त्विति शेषाणां जायतां चिरजीविनाम् ॥ १ ॥ समानीवआकूतिःसमानाहृदयानिवः ॥ समानमस्तुवोमनोयथावःसुसहासति ॥ २ ॥ गच्छस्वपितृलोकेत्वं प्रेतत्वंचपरित्यज ॥ समानैः पितृभिः सार्द्धं विहरस्वयथासुखम् ॥ ३ ॥ ( अत ऊर्ध्वंभ्रांत्यापिप्रेतशब्दोनकार्य्यः ) अत्रावसरेनिश्वासधे नुदानम्॥ तद्यथा (स०यम) अद्येत्यादिदेशकालौसंकीर्त्य अमुकगोत्रस्यास्मत्पितुःपित्रादित्रयेणसहसंयोजनेन चतुर्थस्य निवृत्तिजातातच्छो कापनयक्षमार्थं ब्राह्मणाय निश्वासधेनुदाननिष्क्रयरूपंरजतद्रव्यंदातुमहमुत्सृजे इति संकल्प्यदद्यात् ॥ ततः (अपसव्येन) ॥ ॐअत्र पितरो

मादयध्वंयथाभागमावृषायध्वम्–इति पठित्वावामावर्त्तेनोदङ्मुखोभूत्वाप्रीतमनाः मनाकूश्वासंनियम्य तेनैवपथापरावृत्य ॥ ॐअमीमदन्त पितरोयथाभागमावृषायिषत–इतिजपेत् ॥ ततः पूर्वदत्तावनेजनजलेन ॥ ॐअमुकगोत्रपितामहामुकशर्मन् अत्रप्रत्यवनेनिक्ष्वते स्वधा इतिप्रथमपिंडोपरिप्रत्यवनेजनंदद्यात्॥एवमेव प्रपितामहवृद्धप्रपितामहपिंडोपरिप्रत्यवनेजनंदद्यात् ॥ ततोनीवींविस्रंस्य सव्येन आचम्य अपसव्यं कृत्वा ॥ ॐनमोवःपितरोरसायनमोवःपितरःशोषायनमोवःपितरोजीवायनमोवःपितरःस्वधायै ॥ नमोवःपितरोघोराय नमोवःपितरोमन्यवे नमोवःपितरःपितरो नमोवोगृहान्नःपितरोदत्तसतोवःपितरोदेष्म ॥ इतिकृताञ्जलिःपठेत् ततः ॐएतद्वःपितरो वासः–इतिपठित्वा प्रत्येकं पितामहादिपिंडोपरिसूत्रत्रयंदद्यात् ॥ ततोद्विगुणभुग्नकुशत्रयादीन्यादाय ॥ ॐअमुकगोत्रपितामहामुकशर्मन्नेतत्तेवासः स्वधा–इतिसूत्रमुत्सृजेत् ॥ एवंप्रपितामहायवृद्धप्रपितामहायचोत्सृजेत् ततः प्रत्येकंपितॄनुद्दिश्यतदीयपिंडेषु तूष्णीं गंधपुष्पतुलसीधूपदीपतांबूलपूगीफलदक्षिणादीनिदद्यात्॥पिंडशेषान्नंपिंडसमीपेविकिरेत्॥ततः (सव्येन)देवपात्रे ( अपसव्येन ) पितृपात्रेषु ॐ शिवाआपःसंतु इति सकृत्सकृज्जलंदद्यात् ॥ ॐसौमनस्यमस्तु इतिपुष्पाणि ॥ अक्षतंचारिष्टंचास्तु इतियवांश्चदद्यात् ॥ ततः ॐअद्यामुकगोत्रस्यपितुरमुकशर्मणः सपिंडीकरणश्राद्धेदत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामितिपित्रेऽक्षय्योदकंदद्यात् ॥ ततः ॐ अमुकगोत्रस्यपितामहस्यामुकशर्मणः दत्तैतदन्नपानादिकमक्षय्यमस्तु इतिपितामहायदत्त्वाएवमेवप्रपितामहायवृद्धप्रपितामहायचाक्षय्योदकंदद्यात् ॥ ततः ( सव्यंकृत्वा)प्राङ्मुखस्तन्मनाः सुमनाः कृताञ्जलिर्दक्षिणांदिशंपश्यन् ॐअघोराः पितरः सन्तु–इतिपठित्वा समाचारा

त्पूर्वाग्रां जलधारांदद्यात ॥ ततः ॐगोत्रंनोवर्द्धतांदातारोनोभिवर्द्धतांवेदाः सन्ततिरेवच ॥ श्रद्धाचनोमाव्यगमद्बहुदेयंचनोऽस्तु ॥ अन्नंचनोब
हुभवेदतिथींश्चलभेमहि॥याचितारश्चनःसंतु माचयाचिष्मकंचन॥एताः सत्या आशिषः संतु–इतियाचेत् ॥ततोऽपसव्यादिकृत्वापिंडोपरि स
पवित्रान्कुशानास्तीर्य्य॥ स्वधांवाचयिष्ये इतिपठित्वा पितामहेभ्यः प्रपितामहेभ्योवृद्धप्रपितामहेभ्यश्च स्वधोच्यताम् इतिब्रूयात् अस्तु
स्वधा इत्युक्ते ॐऊर्जंवहं तीरमृतंघृतंपयः कीलालं परिस्रुतम् ॥ स्वधास्थतर्प्पयतमेपितॄन् इति कुशोपरिदक्षिणाग्रांजलधारांदद्यात् ॥
ततोऽर्घपात्राण्युत्तानीकृत्यसव्यादिनादेवदक्षिणांदद्यात ॥ तत्र कुशत्रययवजलहिरण्यद्रव्यमादाय देशकालौस्मृत्वा ॐअद्यास्मत्पिताम
हादित्रयाणांश्राद्धसंबंधिकामकालसंज्ञकानांविश्वेषांदेवानांकृतैतच्छ्राद्धप्रतिष्ठार्थमिदंहिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायद
क्षिणात्वेनदातुमहमुत्सृजे इतिसंकल्प्य ब्राह्मणायदद्यात् ॥ ततोऽपसव्यादिकृत्वारजतद्रव्यंमोदकादीनिचादाय ॐ अमुकगोत्रस्य
पितुरमुकशर्मणः कृतैतत्सपिंडीकरणश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायदक्षिणात्वेनदातुमहमुत्सृजे–इति
दद्यात् ॥ पुनः रजतद्रव्यं कुशादीनिचादाय ॐअमुकगोत्रस्यपितामहस्यामुकशर्मणः कृतैतच्छ्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतममुकगोत्रा
यामुकशर्मणे ब्राह्मणायदक्षिणात्वेनदातुमहमुत्सृजे–इतिदद्यात् ॥ एवमेव प्रपितामहवृद्धप्रपितामहयोः श्राद्धदक्षिणांदद्यात्॥ दैवेरजतनिषेधः
स्वर्णासंभवेताम्रफलमूलादिकंदद्यात् ॥ ततोनम्रीभूयपिंडानुत्थाप्यस्थाल्यांनिधाय आघ्राय पिंडाधारसकृदाच्छिन्नान्कुशान् उल्मुकं
चवह्नौक्षिपेत्॥ततः(सव्येन) ॐ विश्वेदेवाःप्रीयंतामितिप्रार्थ्य(अपसव्येन)ॐवाजे वाजेवतवाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः॥अस्य

मध्वंः पिबतमादयध्वंतृप्ता यातपथिभिर्देवयानैः—इतिमंत्रेण पितॄन्विसर्जयेत् ॥ ततः ( सव्येन ) ॐदेवताभ्यः पितृभ्यश्च महायोगिभ्यएवच॥नमः स्वाहायैस्वधायै नित्यमेवनमोनमः इतित्रिर्जपेत्॥अथद्वादशकुंभसंकल्पः॥तत्रादौ आचम्य (अपसव्येन)कुशत्रयादीन्यादाय देशकालौस्मृत्वा ॐअद्यामुकगोत्रस्य पितुरमुकशर्मणः परलोके क्षुत्पिपासानिवृत्त्यर्थम् इमेद्वादशकुंभाः सान्नोदकाः नानानामगोत्रेभ्यो ब्राह्मणेभ्योदातुमहत्सृजे—इतिसंकल्प्य ॥ सुशीतलजलोपेताः सर्वोपस्करसंयुताः ॥ एतेघटामयादत्ताः स्वर्गद्वार्युपतिष्ठताम् ॥ इति पठित्वा यथाचारंदद्यात् ॥ विप्रासंभवेघटोदकमश्वत्थादिषुप्रक्षिप्यघटोपकरणादिकंकस्मैचिद्दद्यात् ॥ ततः वर्धनीकुंभंपक्वान्नपूरितंसवस्त्रदक्षिणाकंनिधायसव्येनदेशकालौसंकीर्त्य ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः स्वर्गलोककाम इदंपक्वान्नपूरितंकुंभमेकंवर्द्धनीसंज्ञकं विष्णुप्रीतये अमुकगोत्रायामुकशर्मणे ब्राह्मणायदातुमहमुत्सृजे इतिसंकल्प्य कस्मैचिद्ब्राह्मणायदद्यात् ॥ एवं कुंभमेकंयमचित्रगुप्तप्रीत्यर्थमपिदद्यात् ॥ ततोऽपसव्येन श्राद्धदीपान्पाणिभ्यांनिर्वाप्य सव्येन हस्तौपादौप्रक्षाल्य आचमनंकुर्यात् ॥ ततः ॐ प्रमादात्कुर्वतांकर्म प्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोः संपूर्णंस्यादितिश्रुतिरितिपठित्वा कर्म्मपूर्त्तिकामोविष्णुंस्मरेत् ॥ ततः पिंडान्धेन्वादिभ्यो दत्त्वा वैश्वदेवबलिकर्मणीपार्वणवदाचरेत्॥ उच्छिष्टमार्जनंकुर्यात् ॥ ततः कुशत्रयतिलजलान्यादाय देशकालौसंकीर्त्य ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः स्वर्गलोकप्राप्त्यर्थं सपिंडीकरणश्राद्धसांगतासिद्ध्यर्थंच यथाशक्ति अमुकसंख्याकान्ब्राह्मणांस्तृप्तिपर्य्यन्तेनान्नेन भोजयिष्ये इतिसंकल्प्य दशप्रभृतिश्रोत्रियान् अनिषिद्धब्राह्मणान्वायथाशक्तियथाचारंभोजयेत्॥ततोज्ञातिबांधवातिथि

१ अत्राधुनिकाः शिष्टा एकादशाहनिमित्तकशय्याधेन्वादिदानं कुर्वंति तद्दिने पात्राभावात् ।

युक्तः स्वयमपिभोजनंकुर्यात् ॥ अस्मिन्दिने आगतान्सर्वानतिथिप्रभृतीन् अन्नेनतोषयेत् ॥ इतिगौडीयश्राद्धप्रकाशे सपिंडनश्राद्धपद्धतिः समाप्ता ॥ अथमैथिलोक्तसपिंडनप्रयोगः ॥ पूर्वेद्दिनेनियमंकृत्वा श्राद्धदिनेप्रातरादिकृत्यंसमाप्य मध्याह्ने स्नातान्ब्राह्मणानाहूय स्वागतं पृष्ट्वा उपविश्यामंत्र्यनियमाञ्छ्रावयित्वा ब्राह्मणपादौप्रक्षाल्यपादार्घंदद्यात् ॥ तत आचमनीयंदत्त्वा स्वयमेवाचम्यावृतस्थानंगत्वाऽन्नाभिप्रायेणसिद्धमितिपाचिकांपृष्ट्वा ब्राह्मणानुप्रवेश्य तेषांपादयोर्दक्षिणाग्रंकुशपत्रत्रयंदत्त्वाप्रत्यासनसमीपेतिलतैलेनदीपान्दत्त्वारक्षोघ्नान्सन्निधाप्यश्राद्धहंतनपसार्य्यश्राद्धदेयद्रव्याणिसिंचेत् ॥ अथप्राङ्मुख उपविष्टः कुशजलतिलान्यादाय ॐ अद्यपितुः सपिंडीकरणश्राद्धमहंकरिष्ये–इतिवाक्यंकृत्वा कुरुष्व इत्यनुज्ञातो गायत्रीं देवताभ्य इतिचत्रिर्जपित्वा आसनाद्यन्नसङ्कल्पपर्यन्तंदैवक्रियाकांडंनिर्वर्त्य आसनादिदत्त्वापितॄनावाह्य तिलान्विकीर्य्यआयंतुनः०–इतिजप्त्वाऽर्घपात्रचतुष्टयं सपवित्रं जलतिलगंधपुष्पैःप्रपूर्य्यार्घंदत्त्वा प्रेतपात्रस्थजलेनपितामहादिषुपात्रेषु पित्रवशिष्टजलानिसिंचेत्॥येसमानाः समनसःपितरोयमराज्ये ॥ तेषांल्लोकः स्वधानमोयज्ञोदेवेषु कल्पताम् ॥१॥ ये समानाःसमनसो जीवाजीवेषुमामकाः ॥ तेषाᳬंश्रीर्मयिकल्पतामस्मिँल्लोके शतᳬं समाः ॥ २ ॥ इतिमंत्रद्वयेन ॥ ततः पात्राणिन्युब्जीकृत्यगंधादिदत्त्वा नीवारचूर्णेनमंडलानिकृत्वा आहुतिद्वयंहुत्वा हुतशेषंपितामहादिपात्रत्रयेदत्त्वा ॥ अन्नव्यंजनानिपरिविष्य मधुनाऽभिघार्य मधुव्वाता इतितृचेनाभिमंत्र्यपात्रमालभ्यपात्रस्थेऽन्नेद्विजाङ्गुष्ठं संयोज्य तिलान्विकीर्य पूर्ववन्नसंकल्प्यान्नहीनमित्यादिपाठित्वाऽऽ

[1] अत्र मैथिलरुद्रधरेण पुटकत्रयधारणादिविशेषः प्रपंचः स्वरुच्या लिखितस्तद्भ्रांतिकरः तथा निर्मूलत्वाच्छिष्टैर्नादरणीयः ।

पोशानंदत्त्वा गायत्र्यादिजप्त्वाऽनुज्ञातोऽन्नंविकीर्य्याचम्य हरिंस्मृत्वा ब्राह्मणेभ्यः प्रत्येकं जलगंडूषंदत्त्वा पूर्ववद्गायत्रीम् मधुव्वाता० इति त्र्यृचं मधुमधुमध्विति जप्त्वाप्रेतविप्रंस्वदितम् इतिपृष्ट्वा इतरान् तृप्ताःस्थ इतियथार्हतैरुक्ते शेषमन्नमनुज्ञाप्य पिंडानहंकरिष्ये इतिपृष्ट्वा कुरुष्व इत्युक्तः एकंप्रेतपिंडार्थमपरं पितामहादिपिंडार्थंस्थानंनिर्माय उभयत्ररेखाकरणंकृत्वा तदुपर्युल्मुकंभ्रामयित्वा तद्दक्षिणतोऽङ्गारं निधायरेखोपरिछिन्नमूलकुशानास्तीर्य तदुपरि प्रेताय पितामहादिभ्यश्चावनेजनंदत्त्वाऽन्नविशेषेण चतुरः पिंडान्निर्माय प्रेतायवर्त्तुलंपिंडंकृत्वा पितामहादिभ्योपिपिंडान्दत्त्वा दर्भमूलेकरंप्रोञ्छ्याचम्य हरिंस्मृत्वा अत्रपितरः० इत्यादिपठित्वोदङ्मुखीभूयश्वासं मनाङ्नियम्यपुनः परावृत्य 'अमीमदंत'इतिजप्त्वा पिंडान्प्रत्यवनेज्य नीवींविस्रंस्य 'नमोवःपितरः' इत्यादिना ऋतुषट्करूपतया पितामहादीन्नत्वाऽऽशिषः संप्रार्थ्यपिंडेषुसूत्रादिदत्त्वाप्रेतपिंडेगंधादिदत्त्वासुवर्णरजतकुशैः प्रेतपिंडंत्रेधाविभज्य पितामहादित्रयेयोजयेत् ॥ 'येसमानाः'इतिपूर्वोक्तमंत्रद्वयेन॥ ततः पितामहादिपिंडत्रयं प्रेतपिंडभागेनसमंवर्त्तुलंकृत्वा गंधादिभिरभ्यर्च्य॥ब्राह्मणानाचमय्यतत्करेषुजलपुष्पाक्षतानिदत्त्वा पितृगोत्राद्युच्चार्य दत्तमन्नादिकमुपतिष्ठतामितिविप्रकरेऽक्षय्योदकंदत्त्वा पितामहादिविप्रकरेतत्तन्नामगोत्राभ्यांदत्तमन्नादिकमक्षय्योदकमस्त्वितिप्रत्येकंदत्त्वा तत आशिषः प्रतिगृह्यपिंडोपरि सपवित्रकुशानास्तीर्य स्वधांवाचयित्वा ऊर्जमित्यादिनापिंडान्परिषिच्याघ्रायोत्थापयेद्दर्भमुल्मुकंचवह्नौनिक्षिप्यार्घपात्राण्युत्तानीकृत्यदक्षिणांदद्यात् ॥ ततोविश्वेदेवाः प्रीयंतामितिदैवेवाचयित्वाब्राह्मणान्विसृज्य ॥ आमावाजस्य इत्यादिनाऽनुव्रज्योदकधारयाप्रदक्षिणीकृत्यगृहंप्रविश्यश्राद्धोत्तरकर्म्मसमापयेत् ॥ इतिमैथिलश्रीदत्तकृतापितृभक्तौसपिंडीकरणप्रयोगः संक्षिप्तः समाप्तः ॥ ७ ॥ अथसान्नोदकुम्भदानम् ॥ तच्चत्रयोदशदिनात्सप्तदशदिनाद्वाऽऽरभ्यप्रत्यहमशक्तेनप्रतिमासंवाकर्त्तव्यम् ॥ तत्रादौ

आचम्यप्राणानायम्य सान्नोदकुंभमुपनीय कुशत्रयतिलजलान्यादाय देशकालौसंकीर्त्य ॐ अद्यामुकगोत्रस्यपितुरमुकशर्मणःक्षुत्तृषोपशान्त्यर्थंयावद्वत्सरंतावत्प्रतिमासंसान्नोदकुंभदानंकरिष्ये–इतिसंकल्पंकुर्य्यात् ॥ ततोऽपसव्यंकृत्वा दक्षिणामुखः पातितवामजानु द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रपितरमुकशर्मन् ऊनमासिकसान्नोदकुंभश्राद्धे इदमासनंतुभ्यंस्वधा इति पित्रे आसनं मोटकरूपंसतिलजलप्रोक्षितंदक्षिणाग्रमुत्सृजेत् ॥ पुनर्द्विगुणभुग्नकुशादीन्यादाय ॐ अद्यामुकगोत्रपितरमुकशर्मन् ऊनमासिकश्राद्धे इदं सान्नोदकुंभंतुभ्यंस्वधा इतिवाक्यंकृत्वा ब्राह्मणायदद्यात्॥ ततः सव्येन ॐअद्यकृतैतत्सान्नोदकुंभदानप्रतिष्ठार्थम् इदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायदक्षिणात्वेनदातुमहमुत्सृजे इतिदक्षिणांदत्त्वाविष्णुंस्मरेत् ॥ एवमेवमासिक० २ त्रैपक्षिक० ३ द्वितीयमासिक० ४ तृतीय० ५ चतुर्थ० ६ पंचम० ७ ऊनपाण्मासिक० ८ षष्ठ० ९ सप्तम० १० अष्टम० ११ नवम० १२ दशम० १३ एकादश० १४ ऊनाब्दिक० १५ सांवत्सरिक० १६ श्राद्धनिमित्तकसान्नोदकुंभदानंकुर्य्यात् ॥ प्रतिमासमशक्तेनवृद्धिप्राप्तौ ऊनषाण्मासिके त्रैपक्षिके सप्तदशेऽहनिवायथाचारं सर्वाण्यपकृष्यकुर्यात् ॥ वृद्ध्युत्तरनिषेधनात् ॥ तत्रप्रयोगः ॥ देशकालौसंकीर्त्य ॥ ॐ अमुकगोत्रस्यपितुरमुकशर्मणः क्षुत्तृषोपशांत्यर्थम् ऊनमासिकं १ मासिकं २ त्रैपक्षिकं ३ द्वितीयमासिकम् ४ तृतीयं ५ चतुर्थं ६ पंचमं ७ ऊनपाण्मासिकं ८ पाण्मासिकं ९ सप्तममासिकम् १० अष्टमं ११ नवमं १२ दशमम् १३ एकादशम् १४ ऊनवार्षिकं १५ च एतानिपंचदशसान्नोदकुंभश्राद्धानि स्वस्वकालेकर्त्तव्यानि इदानींममकुलेभविष्यमाणवृद्धिनिमित्तत्वात्सर्वाण्यपकृष्यसांकल्पेनविधिनातंत्रेणसद्यः करिष्ये इतिसंकल्पयेत् ॥ ततोऽपसव्यंकृत्वा द्विगुणभुग्नकुशत्रयादीन्यादाय अमुकगोत्रपितरमुकशर्मन् ऊनमासिकाद्यूनाब्दिकान्तपंचदशसान्नोदकुंभश्राद्ध

निमित्तकम् इदमासनंपंचदशधा विभज्यतुभ्यं स्वधा इत्यासनंदक्षिणाग्रं द्विगुणभुग्नकुशत्रयरूपमुत्सृजेत् ॥ पुनः ॐअमुकगोत्रपितर मुकशर्मन् ऊनमासिकाद्यूनवार्षिकान्तपंचदशश्राद्धनिमित्तका इमेपंचदशसान्नोदकुंभास्तुभ्यंस्वधा–इतिसंकल्प्य ॥ दानप्रति ष्ठादक्षिणासहितपंचदशसान्नोदकुंभान्ब्राह्मणेभ्योदद्यात् ॥ इतिसान्नोदकुंभदानप्रयोगः ॥ अथ ऊनमासिकादिपंचदशश्राद्धम् ॥ तच्च त्रयोदशेऽहनि चतुर्दशेवादिनेभौमार्कमंदनंदातिथियुग्मैकपादद्विपादत्रिपादचतुर्दशीशुक्रवारकर्तृनक्षत्रभद्राव्यतीपातादिवर्जिते कुर्यात् ॥ तत्रतावदूनमासिकश्राद्धप्रयोगः ॥ श्राद्धपूर्वदिने एकभक्तादिनियमंविधाय श्राद्धदिनेप्रातः स्नात्वाश्वेतवस्त्रेपरिधाय संध्यातर्पणादिनित्य क्रियांचकृत्वा मध्याह्ने पुनः स्नात्वा आचांतोगोमयोपलिप्तश्राद्धदेशमागत्यतिलतैलेनदीपंप्रज्वाल्यस्वासनेप्राङ्मुख उपविशेत्॥ततःकर्म पात्रंजलेनापूर्य गंधपुष्पकुशतिलादिनिक्षिप्य॥पवित्रधारणम् आचमनंप्राणायामंचकृत्वा ॐअपवित्रःपवित्रोवाइतिपठित्वा ॐपुंडरीकाक्षः पुनातु इतिकुशत्रयानीतजलेन श्राद्धद्रव्याणिस्वात्मानंचप्रोक्षयेत्॥ततः ॐभूम्यैनमः॥ॐगयायैनमः॥ॐगदाधरायनमः इतिनत्वाकुशत्रय तिलजलान्यादाय अद्येत्यादिपठित्वा ॐअमुकगोत्रस्य पितुरमुकशर्मणः ऊनमासिकैकोद्दिष्टश्राद्धमहंकरिष्ये–इतिसंकल्प्य ॥ गायत्रीं जप्त्वादेवताभ्य इतित्रिर्जपेत्॥ततः(अपसव्येन)ॐनमोनमस्तेगोविंदपुराणपुरुषोत्तम॥इदंश्राद्धंहृषीकेशरक्षतांसर्वतोदिशः ॥१॥अग्निष्वात्ताः पितृ०इत्यादिपूर्वोक्तमंत्रैःसर्वत्रतिलान्गौरसर्षपांश्चविकीर्यनीवीबंधंकुर्यात्॥ततःकूष्मांडसूक्ताभिमंत्रितजलेनकुशैःपाकंप्रोक्ष्यासनादिदद्यात्॥ तत्रादौदक्षिणमुख उपविश्य ( अपसव्येन ) सजवनंवामंजान्वाच्यद्विगुणभुग्नकुशत्रयतिलजलान्यादाय॥ ॐअमुकगोत्रपितरमुकशर्मन्इद मासनंतुभ्यंस्वधा इतिद्विगुणभुग्नकुशत्रयात्मकमासनंदद्यात् ॥ ततः ॐअपहता इत्यादिनातिलान् विकीर्य ॥ अर्घपात्रोपरिपवित्रंधृत्वा

ॐशन्नोदेवीतिजलम् ॥ ॐतिलोऽसीतितिलान् ॥ तूष्णीमेवगंधपुष्पेप्रक्षिप्य वामकरेऽर्घपात्रमादाय पवित्रं पलाशपत्रेधृत्वा ॐयादिव्या आप इत्यभिमंत्र्य ॐअमुकगोत्रपितरमुकशर्मन् एषतेहस्तार्घः स्वधा इतिदक्षिणकरेणपितृतीर्थेन पवित्रोपरि अर्घंदत्त्वा ॐपित्रेस्थानमसीति वामप्रदेशभूमावधोमुखंनिदध्यात् ॥ एवंस्थितंपात्रंसमाप्तिपर्य्यंतंनचालयेत् ॥ ततोगंधादिधृत्वा द्विगुणभुग्नकुशान्यादाय ॐअमुकगोत्रपितरमुकशर्मन् एतानिगंधपुष्पधूपदीपतांबूलवासांसितुभ्यंस्वधा इत्युत्सृजेत् ॥ ततोजलादिनामंडलंकृत्वा ॥ परकीयभूमौश्राद्धकरणेतद्भूस्वामिनेऽन्नबलिंदत्त्वा अथोष्णमिष्टान्नपूर्णपात्रमादायकराभ्यां पितरंध्यायन् पु॰ पतृतिक्षममन्नंसघृतंपात्रेपरिविष्यात् ॥ तत्पार्श्वेव्यंजनसुशीतलजलपात्राणिस्थापयेत् ॥ ततोऽन्नंमधुमयंकृत्वा ॐमधुव्वाता इतित्र्यचे ॥ ऽमंत्र्य ततोऽन्नपात्रमालभ्य ॐपृथिवीतेपात्रमितिजप्त्वा ॐ इदं विष्णुर्विचक्रमे॰ इत्यादिना स्वाङ्गुष्ठमनखम् ॐ विष्णो कव्यठंरक्ष इत्यन्नेनिवेश्य इदमन्नम् इमाआपः इदमाज्यम् इदंहविः इतिपठित्वा ॐ अपहता॰ इत्यादिनाऽन्नपात्रपरितस्तिलान्विकीर्य ॐअमुकगोत्रपितरमुकशर्मन्निदमन्नंसोपकरणम् अमृतरूपंकव्यंतुभ्यं स्वधा इत्युत्सृजेत् ॥ ततः ॐ अन्नहीनमित्यादिपठित्वा गायत्रीम् ॐमधुव्वाता॰ इतित्र्यृचं मधुमधुमध्वितिचजपेत् ॥ ततोरक्षोघ्नीर्ऋचः पठित्वा भूमिंतिलैरास्तीर्य्य पितरंध्यायन् पितृमंत्रान्पुरुषसूक्तमप्रतिरथमन्यानिचयथाशक्तिपठेत् ॥ ततः उच्छिष्टसन्निधौ आस्तृतदक्षिणाग्रकुशोपरि ॐ अग्निदग्धाश्चेत्यन्नंभूमौप्रकीर्यसव्येनाचम्य हरिंस्मृत्वा पूर्ववद्गायत्रीं ॐ मधुव्वाता॰ इतित्र्यृचंमधुमधुमध्वितिचजपेत्॥ततः(अपसव्येन)उच्छिष्टसन्निधौपिण्डार्थंस्थानंदक्षिणप्रवणंनिर्मायतन्मध्येदर्भपिंजुलीमूलेनॐअपहता॰ इतिवामान्वारब्धदक्षिणकरेणप्रादेशमितांरेखांदक्षिणाग्रांसमुल्लिख्य दर्भपिंजुलीमुत्तरस्यांदिशि निक्षिप्य ॐयेरूपाणि इतिमंत्रेणोल्मुकंरेखायांभ्रामयित्वादक्षिणतो

निदध्यात ॥ ततः उपमूलसकृच्छ्नकुशत्रयंरेखोपरिस्तीर्त्वा देवताभ्य इतित्रिर्जपेत् ॥ ततः सतिलजलपात्रंगृहीत्वा ॐ अमुकगोत्रापित रमुकशर्मन्नत्रावनेनिक्ष्वतेस्वधा इतिकुशोपरिपितृतीर्थेनावनेजनंदद्यात् ॥ ततः सर्वस्मादन्नात्किंचिदन्नमुद्धृत्य मध्वाज्यतिलजलसहितंपात्रे कृत्वापिंडंनिर्माय मधुघृताभिघारितंपिंडं कुशादीनिचादाय ॐअमुकगोत्र पितरमुकशर्मन् ऊनमासिकश्राद्धे एषतेपिंडः स्वधा इति पितृतीर्थेनंदद्यात्॥ततोलेपभागभुजस्तृप्यन्तु इतिदर्भमूलेकरंप्रोंछ्य हस्तौप्रक्षाल्य सव्येनाचम्य हरिंस्मरेत् ॥ ततः अपसव्येन ॐअत्रपि तर्मादयस्वयथाभागमावृषायिस्व इतिपठित्वा वामावर्त्तेनोदङ्मुखीभूयप्रीतमनाः श्वासंनियम्यतेनैवपथापरावृत्य ॐअमीमदंतपितर्यथा भागमावृषायिष्ट इतिजप्त्वा पूर्ववत्पिंडोपरिप्रत्यवनेजनंदत्त्वा नीवींविस्रंस्य कृतांजलिः ॐनमस्ते पितारसायनमस्तेपितः शोषायनम स्तेपितर्जीवायनमस्तेपितः स्वधायैनमस्तेपितर्घोरायनस्तेपितर्मन्यवे नमस्तेपितः पितर्नमस्तेगृहान्नः पितर्दत्तसतस्ते पितर्देष्म इतिपठित्वा ॐ एतत्तेपितर्वासः इतिपिंडोपरिसूत्रंधृत्वा ॐ अमुकगोत्र पितरमुकशर्मन् एतत्तवासः स्वधा इतिसूत्रमुत्सृजेत् ॥ ततस्तूष्णीमे वपितरमुद्दिश्यपिंडेगंधपुष्पधूपदीपतांबूलादिकंदत्त्वा ॐशिवाआपःसंतु इतिजलम्॥सौमनस्यमस्तु इतिपुष्पम्॥अक्षतंचारिष्टमस्तु इत्यक्षतां श्चदद्यात् ॥ ॐअमुकगोत्रस्यपितुरमुकशर्मणऊनमासिकश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठताम् इतितिलयुक्तमप्यग्योदकंदद्यात्॥ ततः प्राङ्मुख उपवीतीकृतांजलिराशिषोगृह्णीयात्॥अघोरःपिताऽस्तु ॥ गोत्रंनोवर्द्धताम् ॥ दातारोनोभिवर्द्धताम् वेदाःसंततिरेवच ॥श्रद्धाचनोमा व्यगमद्बहुदेयंचनोस्तु ॥ अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनःसंतुमाचयाचिष्मकंचन ॥ एताःसत्याआशिषःसंतु इतिपठेत्॥ ततोऽपसव्येनपिंडोपरिसपवित्रदर्भानास्तीर्य ॐऊर्जंवहंतीरमृतंघृतंपयःकीलालंपरिस्रुतम् ॥ स्वधास्थतर्प्पयतमेपितरमितिपिंडोपरिजलधारां

दद्यात् ॥ ततः पिंडमुत्थाप्याघ्राय पिंडायआस्तृतदर्भेचोल्मुकमग्नौनिक्षिप्यार्घपात्रमुत्तानीकृत्ययथाशक्तिदक्षिणांदद्यात ॥ तद्यथा-रजत द्रव्यं कुशादीनिचादाय ॐअद्यामुकगोत्रस्यपितुरमुकशर्मणः कृतैतदूनमासिकश्राद्धप्रतिष्ठार्थमिदंरजतं चंद्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणात्वेनदातुमहमुत्सृजे इतिसंकल्प्यदद्यात् ॥ ततः पिंडमुत्थाप्याघ्रायपिंडायआस्तृतदर्भेचोल्मुकमग्नौनिक्षिपेत् ॥ ततः ॐअभिरम्यतामितिविसृज्य देवताभ्य इतित्रिःपठित्वादीपनिर्वापणंकृत्वा (सव्येन) हस्तौपादौप्रक्षाल्याचम्य ॥ ॐप्रमादादिति पठित्वा कर्म्मपूर्तिकामोविष्णुंस्मरेत् ॥ ततःपिंडं गाम् अजंवायसान्वाखादयेत् ॥ अग्नौजलेवाक्षिपेत् ॥ ततोवैश्वदेवबलिकर्मणीकृत्वा ब्राह्मणमेकंभोजयेत् १ एवमेव मासिक २ त्रैपक्षिक ३ द्वितीयमासिक ४ तृतीयमासिक ५ चतुर्थ ६ पंचम ७ ऊनषाण्मासिक ८ षाण्मासिक ९ सप्तमा १० ऽष्टम ११ नवम १२ दशम १३ कादशो १४ नवार्षिक १५ मासिकानि कुर्यात ॥ इति ऊनमासिकादिपृथक्श्राद्धप्रयोगः समाप्तः ॥ प्रतिमासं करणाशक्तौ वृद्धिप्राप्तौ ऊनषाण्मासिके त्रैपक्षिकेवासप्तदशेहनियथाचारं भौमार्कादिवर्जित एकद्वित्रिन्यूनदिने सर्वाण्यपकृष्य कुर्यात् वृद्ध्युत्तरनिषेधनात् ॥ तत्र प्रयोगः ॥ तत्रादौ पूर्वोक्तोनमासिकश्राद्धवत्सर्वंसंपाद्य ॥ देशकालौ संकीर्त्य ॐअमुकगोत्रस्यपितुरमुकशर्मणः क्षुत्तृपोपशांत्यर्थम् ऊनमासिकश्राद्धं० १ मासिकं० २ त्रैपक्षिकं० ३ द्वितीयमासिकं० ४ तृतीयं० ५ चतुर्थं० ६ पंचमम् ७ ऊनषाण्मासिकं० ८ षाण्मासिकं० ९ सप्तमं० १० अष्टमं० ११ नवमं० १२ दशमं० १३ एकादशमासिकम् १४ ऊनवार्षिकं १५ च एतानि पंचदश ऊनमासिकाद्यूनवार्षिकांतानिश्राद्धानि स्वस्वकालेकर्त्तव्यानि ॥ इदानीं ममकुले भविष्यमाणवृद्धिनिमित्तत्वात्सर्वाण्यपकृष्यैकोद्दिष्टविधिना तंत्रेणसद्यः करिष्ये इति संकल्प्य ॥ गायत्रीं देवताभ्य इतिचात्रिर्जपेत् ॥

ततः अपसव्येन ॐनमोनमस्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः ॥१॥ ॐ 'अग्निष्वात्ताः पितृगणा' इत्यादिपूर्वोक्तमंत्रैः सर्वत्रतिलगौरसर्षपान्विकीर्य्य नीवीबंधंकृत्वापाकंप्रोक्ष्यासनानिदद्यात् ॥ तत्रादौ द्विगुणभुग्नकुशादीन्यादाय ॐअमुकगोत्र पितरमुकशर्मन्नूनमासिकश्राद्धे इदमासनंतुभ्यंस्वधा इति प्रथमंमोटकरूपमासनंपश्चिमगतमुत्सृजेत् ॥ एवं मासिकश्राद्धनिमित्तक० २ त्रैपक्षिक० ३ द्वितीयमासिक० ४ तृतीय० ५ चतुर्थ० ६ पंचम० ७ ऊनषाण्मासिक० ८ षाण्मासिक० ९ सप्तम० १० अष्टम० ११ नवम० १२ दशम० १३एकादशमासिक० १४ऊनसांवत्सरिकश्राद्धनिमित्तक० १५ आसनानिक्रमेणोत्सृजेत् अथवा ॐअमुकगोत्रपितरमुकशर्मन् ऊनमासिकाद्यूनवार्षिकान्तपंचदशश्राद्धनिमित्तकम् इदमासनं पंचदशधा विभज्यतुभ्यं स्वधा इत्येकमुत्सृजेत् ॥ ततःॐअपहता इति सर्वत्रतिलान्विकीर्य पंचदशार्घपात्रोपरिप्रत्येकंपवित्रंधृत्वा ॐशन्नोदेवीतिजलम् ॥ तिलोऽसीतितिलान्तूष्णीमेवगंधपुष्पाणिप्रत्येकं प्रक्षिप्य वामकरेप्रथमार्घपात्रमादाय तत्रस्थंपवित्रंपात्रेधृत्वा ॥ ॐयादिव्याऽआप० इतिपात्रमभिमंत्र्य ॐअमुकगोत्र पितरमुकशर्मन् ऊनमासिकश्राद्धे एषतेहस्तार्घः स्वधा—इति दक्षिणकरेणपितृतीर्थेन पवित्रोपरि अर्घंदद्यात् ॥ एवंमासिकादिचतुर्दशश्राद्धेषुक्रमेणदद्यात ॥ अथवा ॐअमुक० पितरमुकशर्मन् ऊनमासिकाद्यूनवार्षिकान्तपंचदशनिमित्तकश्राद्धे एष ते हस्तार्घः स्वधा इति दद्यात् ॥ ततः ॐपितृभ्यःस्थानमसीतिस्वस्ववामप्रदेशभूमौक्रमेणाधोमुखंपात्रंकुर्य्यात् ॥ एवं स्थापितानि पंचदशपात्राणिसमाप्तिपर्यंतं न चालयेत् ॥ ततोगंधादिधृत्वाद्विगुणभुग्नकुशादीन्यादाय ॥ ॐ अमुकगोत्रपितरमुकशर्मन् ऊनमासिकाद्यूनवार्षिकपर्य्यंतंपंचदशश्राद्धेषु एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि तुभ्यंस्वधा ॥ इत्येकतंत्रेणैवोत्सृजेत् ॥ ततः ॐअर्चनंसंपूर्णमस्त्वितिप्रार्थ्य

जलादिनाऽऽसनानिवेष्टयित्वामंडलंकुर्य्यात् ॥ ततः पंचदशपात्रेष्वेकस्मिन्पात्रे वा उष्णमन्नंबहुतरम् अनेकव्यंजनसहितं परिविष्य तद्दक्षिणपार्श्वे सुशीतलजलपात्रंच धृत्वाऽन्नंमधुमयंकृत्वा ॐ मधुव्वाता० इतित्र्यृचेनाभिमंत्रयेत् ॥ ततः पात्रंन्युब्जहस्ताभ्यामालभ्य ॐ पृथिवीतेपात्रं द्यौरपिधानं ब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वधा इतिजप्त्वा ॐ इदंविष्णुर्व्विचक्रमे० इतिचपठित्वास्वाङ्गुष्ठमधोमुखमनखम् ॐ विष्णो कव्यर्ठरक्ष इत्यन्ने निवेश्य ॥ इदमन्नम् इमा आपः इदमाज्यम् इदंहविः इतिपठित्वा ॐ अपहता० इति पात्रपरितस्तिलान्विकीर्य वामकरेणपात्रमत्यजन् दक्षिणहस्ते कुशादीन्यादाय ॐ असुकगोत्रापितरमुकशर्मन् ऊनमासिकाद्यूनवार्षिकान्तपंचदशश्राद्धानिमित्तकमिदमन्नं सोपकरणम् अमृतरूपंकव्यंतुभ्यंस्वधा इतिवाक्यंकृत्वा जलमासनवामभागेभूमौक्षिपेत् ॥ ततः ॐ अन्नहीनंक्रियाहीनमिति पठित्वा गायत्रीं मधुव्वाता० इति त्र्यृचं मधुमधुमध्विातिचजपेत् ॥ ततोरक्षोघ्नीऋचःपठित्वाभूमौतिलैरास्तीर्यपितरंध्यायन् उदीरतामवरइत्यादिपितृमंत्रान् पुरुषसूक्तमप्रतिरथमन्यानिचरुचिस्तवप्रभृतीनि यथाशक्तिपठेत् ॥ ततः उच्छिष्टसन्निधौभूमिं प्रोक्ष्य तत्रदक्षिणाग्रकुशत्रयोपारि ॥ ॐ अग्निदग्धाश्चयेजीवा येप्यदग्धाः कुलेमम ॥ भूमौदत्तेनतृप्यन्तु तृप्तायान्तुपरांगतिमितिमंत्रेणान्नंप्रकीर्य सव्येनाचम्य हरिंस्मृत्वा पूर्ववद्गायत्रीं मधुव्वाता० इतित्र्यृचं मधुमधुमध्वितिचजपेत् ॥ ततः पिंडदानार्थं पंचदशस्थानं[1] दक्षिणप्लवंनिर्माय तन्मध्ये क्रमेण दर्भपिंजुलीमूलेन ॐ अपहता० इतिप्रादेशमितां रेखांदक्षिणाग्रामुल्लिख्य दर्भपिंजुलीमुत्तरस्यांदिशिनिक्षिप्य ॐ येरूपाणीत्युल्मुकंरेखोपारि भ्रामयित्वा दक्षिणतोनिदध्यात् ॥ ततः उपमूलसकृल्लूनकुशत्रयं सर्वत्ररेखोपारिक्रमेणस्तीर्त्वा 'दैवताभ्यः' इतित्रिर्जपेत् ॥ ततः पत्रपुटेजलतिलगंधपुष्पाणिप्रक्षिप्य तत्पात्रंगृहीत्वा ॥ ॐअमुकगोत्र

१ अथवा एकमेव स्थानम् ।

पितरमुकशर्मन् ऊनमासिकाद्यूनवार्षिकान्तपंचदशश्राद्धपिंडस्थानेषु अत्रावनेनिक्ष्वतेस्वधा इतिकुशोपरि पितृतीर्थेनकिंचित्किंचिज्जलंक्रमेणनिक्षिपेत् ॥ ततः सर्वस्मादन्नात्किंचिदन्नमुद्धृत्य मध्वाज्यतिलजलसहितंपात्रेकृत्वा तेनपंचदशपिंडान्निर्माय मधुघृताभ्यामभिघार्य्य एकंपिंडं कुशादीनिचादाय ॐ अमुकगोत्रपितरमुकशर्मन् ऊनमासिकंश्राद्धे एषतेपिंडः स्वधा इतिपितृतीर्थेनप्रथमस्थानेकुशोपरिदद्यात् १ एवं मासिकश्राद्धे०२ त्रैपक्षिक० ३ द्वितीयमासिक० ४ तृतीय०५ चतुर्थ०६ पंचम०७ ऊनषाण्मासिक० ८ षाण्मासिक०९सप्तम०१०अष्टम०११नवम० १२ दशम० १३ एकादशमासिक० १४ ऊनवार्षिक० १५ श्राद्धेषुक्रमेणतत्तदवनेजनस्थानेपिंडं दद्यात् ॥ ततोलेपभागभुजस्तृप्यन्तु इतिदर्भमूलेकरंप्रोंछ्य हस्तौप्रक्षाल्य सव्येनाचम्य हरिंस्मरेत् ॥ ततोऽपसव्यादिना ॐअत्रपितर्मादयस्वयथाभागमावृषायस्व इतिपठित्वा वामावर्त्तेनोदङ्मुखोभूत्वाप्रीतमनाः श्वासंनियम्यतेनैवपथापरावृत्त्य ॐ अमीमदन्तपितर्यथाभागमावृषायिष्ट इतिजप्त्वा ॥ पूर्ववत्पिंडोपरिप्रत्यवनेजनंदत्त्वा नीवीं विस्रंस्यसव्येनाचामेत् ॥ ततः(अपसव्येन) ॐनमस्तेपितारसाय नमस्तेपितः शोषाय नमस्तेपितर्जीवाय नमस्तेपितः स्वधायै नमस्तेपितर्घोराय नमस्तेपितर्मन्यवेनमस्तेपितः पितर्नमस्तेगृहान्नः पितर्देत्तसतस्तेपितर्देष्म इतिकृतांजलिः पठित्वा ॥ ॐ एतत्तेपितर्वासः इति प्रत्येकं पिंडोपरि सूत्रंधृत्वा ॐ अमुकगोत्र पितरमुकशर्मन् ऊनमासिकादि ऊनवार्षिकांतश्राद्धपिंडेषु एतानिवासांसितुभ्यंस्वधा इत्युत्सृजेत् ॥ ततस्तूष्णीमेवपितरमुद्दिश्य पिंडान्गंधपुष्पतुलसीधूपदीपतांबूलदक्षिणाभिः संपूज्य पिंडशेषान्नं पिंडसमीपेविकीर्य्य ॥ ॐ शिवा आपः संतु इति। सामनस्यमस्तु इतिपुष्पाणि जलम् । अक्षतं

१ अथवा ॐ अमुकगोत्र पितरमुकशर्मन् ऊनमासिकाद्यूनवार्षिकान्तपंचदशश्राद्धनिमित्तक एष ते पिंडः स्वधा इत्येकं वा दद्यात्।

चारिष्टमस्त्वितियवतिलांश्चपात्रेषुप्रक्षिप्य कुशादीन्यादाय ॐ अमुकगोत्रस्यपितुरमुकशर्मण ऊनमासिकाद्यूनवार्षिकान्तश्राद्धे पुदत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामितितिलयुक्तमक्षय्योदकं दद्यात् ॥ ततः प्राङ्मुखः ( उपवीती ) कृतांजलिराशिषो गृह्णीयात् ॥ ॐ अघोरः पिताऽस्तु ॥ गोत्रंनोवर्द्धताम् ॥ दातारोनोभिवर्द्धताम् ॥ वेदाः संततिरेवच ॥ श्रद्धाचनोमाव्यगमत् ॥ बहुदेयंचनोऽस्तु ॥ अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनः सन्तुमाचयाचिष्मकंचन ॥ एताः सत्याआशिषः सन्तु-इतिपठेत् ॥ ततोऽपसव्येनपिंडोपरिसपवित्रान्कुशानास्तीर्य ॐऊर्ज्जंवहंतीरमृतं घृतंपयः कीलालंपरिस्रुतम् ॥ स्वधास्थतर्प्पयतमेपितरमितिपिंडोपरिदक्षिणाग्रां जलधारांदद्यात् ॥ ततोऽर्घपात्राण्युत्तानीकृत्य यथाशक्तिदक्षिणांदद्यात् ॥ तद्यथा—रजतद्रव्यंकुशादीनिचादाय ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः कृतैतदूनमासिकाद्यूनवार्षिकान्तपंचदशश्राद्धप्रतिष्ठार्थम् इदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायदक्षिणात्वेन दातुमहमुत्सृजे इतिसंकल्प्यदद्यात् ॥ ततः पिंडानुत्थाप्याघ्रायपिंडाधआस्तृतदर्भानुल्मुकंचवह्नौक्षिपेत् ॥ ततः ॐ अभिरम्यतामितिविसृज्य देवताभ्य०इतित्रिः पठित्वा दीपनिर्वापणादिकर्म्मसमाप्य कर्म्मपूर्त्तिकामः ॐ प्रमादादितिपठित्वाविष्णुंस्मरेत् ॥ ततः पिंडान् गामजंवायसान्वा खादयेत् ॥ अगाधेजलेवाक्षिपेत् ॥ ततोवैश्वदेवबलिकर्मणीकृत्वापंचदशब्राह्मणान्भोजयेत् ॥ ततः स्वस्तिवाचनं ब्राह्मणपूजनादिकृत्वा आशिषोगृहीत्वा वृद्धिनिमित्तकमंगलारंभंकुर्यात् ॥ पुनः ऊनपदोच्चारणं नकर्त्तव्यम् ॥ ॥ इत्यूनमासिकाद्यूनवार्षिकान्तश्राद्धपद्धतिः ॥ ❀ ॥ ❀ ॥ ❀ ॥ अथसांवत्सरिकैकोद्दिष्टश्राद्धपद्धतिः ॥ तत्रादौश्राद्धपूर्वदिनेएकभक्तादिनियमं विधायश्राद्धदिनेप्रातःस्नात्वाश्वेतधौतवाससीपरिधाय संध्यादिनित्यकर्म्मसमाप्य गोमयोपलेपनज्वलदंगारभ्रामणगौरमृत्तिकाच्छाद

नैः श्राद्धपाकयोर्भूमिसंस्कारंकृत्वा वस्त्रादिनावेष्टयित्वा तिलगौरसर्षपैरवकीर्य श्राद्धदेयवस्तून्यासाद्यस्वयंपाकंकुर्य्यात् ॥ अथवासुस्नात
स्त्रीबांधवादिद्वाराकारयेत् ॥ ततोमध्याह्नेपुनः स्नात्वा ॥ आचांतः श्राद्धदेशमागत्य तिलतैलेनदीपंप्रज्वाल्य काककुक्कुटादीनपसार्य्य स्वासने
प्राङ्मुख उपविशेत् ॥ ततःकर्म्मपात्रंजलेनापूर्य्य तत्रगंधपुष्पतिलकुशादीनिनिक्षिप्य पवित्रधारणंकृत्वा आचम्य प्राणानायम्य ॐअपवित्रः
पवित्रोवा० सर्वावस्थामितिपठित्वा ॐ पुंडरीकाक्षः पुनात्वितिकुशत्रयानीतजलैः श्राद्धद्रव्याणिस्वात्मानंच प्रोक्षयेत् ॥ ततः ॐ भू
म्यैनमः ॥ ॐ भगवत्यैगयायैनमः ॥ ॐ भगवते गदाधरायनमः ॥ इतिनत्वा कुशत्रयतिलजलान्यादाय ॥ देशकालौसंकीर्त्य ॥ ॐअद्या
मुकगोत्रस्य अस्मत्पितुरमुकशर्मणोऽमुकरूपस्य सांवत्सरिकैकोद्दिष्टश्राद्धमहंकरिष्ये— इतिसंकल्प्य ॥ गायत्रींत्रिर्जप्त्वा ॐ देवता
भ्यःपितृभ्यश्च महायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायै नित्यमेवनमोनमः। इतित्रिर्जपेत् ॥ ततोऽपसव्यंकृत्वादक्षिणामुखः सजघनंवाम
जानु निपात्यवामहस्ते तिलगौरसर्षपान्गृहीत्वा ॐ नमोनमस्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः ॥ १ ॥
अग्निष्वात्ताः पितृगणाः प्राचींरक्षंतुमेदिशम् ॥ तथाबर्हिषदः पांतु याम्यां येपितरः स्थिताः ॥ २ ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपिसो
मपाः ॥ अधोर्ध्वमपिकोणेषु हविष्मन्तश्चसर्वदा ॥ ३ ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥ सर्वतश्चाधिपस्तेषांयमोरक्षांकरोतुवै ॥४॥
वायुभूतपितॄणांचतृप्तिर्भवतुशाश्वती ॥ इत्येतैर्मंत्रैर्दिक्षु अधस्तादूर्ध्वंकोणेषुच सर्वत्र तिलगौरसर्षपान्विकीर्य्य वामेदक्षिणेवाकटिभागेनीवी
बंधंकुर्यात् ॥ ततः कस्मिंश्चित्पात्रेजलंगृहीत्वा दर्भैरालोड्य ॐ यद्देवादेवहेडनं देवासश्चकृमावयम् ॥ अग्निर्मातस्मादेनसोविश्वान्मुञ्चत्व
ꣳ हसः ॥ १ ॥ यदिदिवायदिनक्तमेनाꣳसिचकृमावयम् ॥ वायुर्म्मातस्मादेनसोविश्वान्मुंचत्वꣳहसः ॥ २ ॥ यदिजाग्रद्यदिस्वप्नएनां

ꣳसिंचक्रुमावयम् ॥ सूर्य्यौ मातस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ ३ ॥ इति कूष्मांडसूक्तेनाभिमंत्र्य श्वोदक्यादिदुष्टदृष्टिनिपाताच्छूद्रा
दिसंपर्कदोषाच्च पाकादीनां पवित्रताऽस्तु इति पाकादीन्संप्रोक्षयेत् ॥ ततः आसनादिदानम् ॥ तावत् अपसव्यादिना द्विगुणभुग्नकुशत्रय
तिलजलान्यादाय ॐ अमुकगोत्रास्मत्पितरमुकशर्मन्वसुरूप इदमासनंतुभ्यंस्वधा इतिद्विगुणभुग्नकुशत्रयात्मकमासनंदक्षिणाग्रं दद्यात् ॥
ततः ॐ अपहताऽअसुरारक्षाꣳसिवेदिषदः ॥ इतितिलान्विकीर्य्य एकस्मिन्नर्घपात्रेदर्भदलमेकंसाग्रं प्रादेशमात्रंदक्षिणाग्रंधृत्वा ॐ
शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शंय्योरभिस्रवंतुनः—इतिजलम् ॥ ॐ तिलोसिसोमदेवत्यो गोसवोदेवनिर्मितः ॥ प्रत्न
मद्भिःपृक्तः स्वधयापितॄँल्लोकान्प्रीणाहिनःस्वधा—इतितिलांश्च प्रक्षिप्य तूष्णीमेव गंधपुष्पे निक्षिपेत् ॥ ततोर्घपात्रंवामहस्तेकृत्वापवित्रंपात्रे
धृत्वा॥ॐ यादिव्याऽआपःपयसासंबभूवुर्य्याऽआन्तरिक्षा उतपार्थिवीर्य्याः॥ हिरण्यवर्णायज्ञियास्तानऽआपः शिवाः शꣳ स्योनाः सुहवाभ
वंतु ॥ इतिपात्रजलमभिमंत्र्य दक्षिणहस्ते द्विगुणभुग्नकुशादीन्यादाय ॥ ॐ अमुकगोत्र अस्मत्पितरमुकशर्मन्वसुरूप एषतेहस्तार्घः
स्वधा इतिपवित्रोपरि अर्घजलंदत्त्वा ॐ पितृस्थानमसीतिवामप्रदेशभूमावधोमुखंनिदध्यात् ॥ एवंस्थितंपात्रं समाप्तिपर्यंतंनचालयेत् ॥
ततोगंधादिधृत्वा ॥ द्विगुणभुग्नकुशादीन्यादाय ॐ अमुकगोत्र अस्मत्पितरमुकशर्मन्वसुरूप एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीत ॥२१
वासांसितुभ्यंस्वधा इत्युत्सृजेत् ॥ ततः अर्चनंसंपूर्णमस्त्वितिपठित्वाजलादिनामंडलंकृत्वा परकीयभूमौश्राद्धकरणेतद्भूस्वामिनेऽन्नब
लिंदद्यात् ॥ ततः पात्रंदत्त्वातत्र उष्णमन्नंसघृतं पितरं ध्यायन्पुरुषतृप्तिक्षमं कराभ्यां परिविष्य तत्पार्श्वे व्यंजनसुशीतलजल

पात्राणिस्थापयेत्॥ततोऽन्नंमधुमयंकृत्वा ॐ मधुव्वाताऽऋतायते मधुक्षरंतिसिंधवः ॥ माध्वीर्न्नःसंत्वोषधीः ॥ १ ॥ मधुनक्तमुतोषसोमधुम
त्पार्थिवठंरजः ॥ मधुद्यौरस्तुनःपिता ॥ २ ॥ मधुमान्नोव्वनस्पतिर्म्मधुमाँऽअस्तुसूर्य्यः ॥ माध्वीर्गावोभवंतुनः ॥ ३ ॥ ॐ मधुमधुमध्वि
त्यभिमंत्रयेत् ॥ ततोऽन्नपात्रंन्युब्जकराभ्यांव्यस्ताभ्यामालभ्य ॥ ॐ पृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमि
स्वधा ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाठंसुरे–इतिपठित्वा ॐ विष्णो कव्यठंरक्षइत्यनेन स्वाङ्गुष्ठमधोमुखमन्नस्य
अन्नेनिवेश्य ॐइदमन्नम्ॐइमाआपःॐइदमाज्यम् ॐएतत्सर्वंकव्यमितिपठित्वा ॐअपहताऽअसुरारक्षाठंसिवेदिषदः इत्यन्नपात्रपरितस्ति
लान्विकीर्य्य वामकरेणपात्रमत्यजन्दक्षिणकरेणकुशादीन्यादाय ॐअमुकगोत्र अस्मत्पितरमुकशर्मन्वसुरूप इदमन्नंसोपकरणम् अमृत
रूपंकव्यंतुभ्यंस्वधा इत्युत्सृजेत् ॥ ततः ॐ अन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्तु इतिप्रार्थ्य गायत्रीं त्रिः सकृ
द्वाजपेत् ॥ तथापवित्रपाणिर्द्दर्भेष्वासीनः ॐमधुव्वाताऽऋतायत इत्यादिमंत्रत्रयम् ॐ मधुमधुमध्वितिचजपेत् ॥ ततः ॐ कृणुष्वपाजः
प्रसितिन्नपृथ्वींय्याहिराजेवामवाँऽइभेन ॥ तृष्वीमनुप्रसितिन्द्रूणानोस्तासिव्विद्धयरक्षसस्तपिष्ठैः ॥१॥ तवभ्रमासऽआशुयापतन्त्यनुस्पृ
शधृषताशोशुचानः ॥ तपूठंष्यग्नेजुह्वापतङ्गानसंदितोव्विसृजव्विष्वगुल्काः ॥ २ ॥ प्रतिस्पशोव्विसृजतूर्णितमोभवापायुर्व्विशोऽअ
स्याऽअदब्धः॥योनोदूरेऽअघशठंसोयोऽअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत ॥ ३ ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ२ऽओषतात्तिग्महेते ॥

योनोऽअरातिर्ठ० समिधानचक्रेनीचातंधक्ष्यतसन्नशुष्कम् ॥ ४ ॥ ऊर्द्धोभवप्रतिविद्ध्याद्ध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥अवस्थिरातनु
हियातुजूनांजामिमजामिम्प्रमृणीहिशत्रून्।अग्नेष्ट्वातेजसासादयामि॥८॥इतिरक्षोघ्नीर्ऋचः पठित्वाभूमिंतिलैरास्तीर्य्यपितरंध्यायन्॥ ॐ उदीर
तामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः ॥ असुंयऽईयुरवृकाऽऋतज्ञास्तेनोऽवन्तुपितरोहवेषु ॥ इत्यादि पितृमंत्रान्॥ ॐ सहस्र
शीर्षा इत्यादिपुरुषसूक्तम् ॥ ॐ आशुः शिशानोवृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम्॥संक्रन्दनोनिमिषऽएकवीरःशतर्ठ० सेनाऽअज
यत्साकमिन्द्रः—इत्यादिअप्रतिरथंचपठेत् ॥ ततः सप्तव्याधादशार्णेषु मृगाःकालंजरेगिरौ ॥ चक्रवाकाः शरद्वीपे हंसाःसरसिमानसे ॥
तेऽभिजाताःकुरुक्षेत्रे ब्राह्मणावेदपारगाः ॥ प्रस्थितादूरमध्वानं यूयंतेभ्योऽवसीदत ॥ इतिगाथां पठित्वा ॥ अन्या
नियथारुचिस्तवप्रभृतीनिचपठेत् ॥ ततः उच्छिष्टसन्निधौ भूमिंप्रोक्ष्य तत्रास्तृतदक्षिणाग्रकुशत्रयोपरि ॐ अग्निदग्धाश्चयेजीवा ये
प्यदग्धाः कुलेमम ॥ भूमौदत्तेनतृप्यंतु तृप्तायांतुपरांगतिम् ॥ इतिमंत्रेणान्नंप्रकीर्य्य सव्येनाचम्य हरिंस्मृत्वापूर्ववद्गायत्रीं मधुव्वाता इति
त्र्यृचंमधुमधुमध्वितिचजपेत् ॥ ततः ( अपसव्येन ) उच्छिष्टसन्निधौचतुरस्रं दक्षिणप्लवंहस्तमात्रं रमणीयंचतुरङ्गुलोच्छ्रितं पिंडदानार्थं
स्थानंनिर्म्माय तन्मध्यदेशेदर्भपिंजुलीमूलेन ॐ अपहताऽअसुरारक्षाᳬसिवेदिषदः॥इतिमंत्रेण सव्योपगृहीतदक्षिणहस्तेनदक्षिणाग्रां सकृल्ले
खांलिख्यदर्भपिंजुलीमुत्तरस्यांदिशिनिक्षिप्य ॐ येरूपाणिप्रतिमुंचमानाऽअसुराःसंतः स्वधयाचरंति॥परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकात्प्र
णुदात्यस्मात् इतिमंत्रेणज्वलदुल्मुकंरेखोपरिभ्रामयित्वा दक्षिणतोनिदध्यात्॥ततःउपमूलसकृल्लूनकुशत्रयंरेखोपरिस्तीर्त्वा(सव्येन)देवताभ्य

इतित्रिर्जपेत् ॥ ततः ( अपसव्येन ) एकस्मिन्पत्रपुटके जलतिलगंधपुष्पाणिकृत्वा तत्पुटकमादाय ॐअमुकगोत्र अस्मत्पितरमुकशर्म
न्वसुरूप अत्रावनेनिक्ष्वतेस्वधा इति कुशोपरिदक्षिणहस्तेनपितृतीर्थनावनेजनंदद्यात् ॥ ततः सर्वस्मादन्नादुष्णंकिंचित्किंचिदन्नमुद्धृत्य
मध्वाज्यतिलजलसहितंपात्रेकृत्वा बिल्वोपमंपिंडंनिर्माय मधुघृताभिघारितंकुशादीनिचादाय ॐ अमुकगोत्र अस्मत्पितरमुकशर्म
न्वसुरूप सांवत्सरिकश्राद्धे एषतेपिंडः स्वधानमः ॥ इति सव्योपगृहीतदक्षिणहस्तेनपितृतीर्थेन अवनेजनस्थानेदद्यात् ॥ ततः ॐलेपभा
गभुजस्तृप्यंतु इतिदर्भमूलेकरंप्रोञ्छ्यहस्तौप्रक्षाल्य सव्येनाचम्य हरिंस्मरेत् ॥ ततोऽपसव्यादिना ॐअत्रपितर्मादयस्वयथाभागमावृषा
यस्व इतिपठित्वा वामावर्त्तेनोदङ्मुखोभूत्वा प्रीतमनाः श्वासंनियम्यतेनैवपथापरावृत्त्य ॐअमीमदन्तपितर्यथाभागमावृषायिषत इति
श्वासमुत्सृजेत् ॥ ततोऽवनेजनपात्रंगृहीत्वा ॐअमुकगोत्रपितरमुकशर्मन्नत्रप्रत्यवनेनिक्ष्वतेस्वधानमः इति पिंडोपरिप्रत्यवनेजनंदत्त्वानीविं
विस्रंस्य सव्येनाचम्य अपसव्येन ॐनमस्तेपितारसायनमस्तेपितः शोषायनमस्तेपितर्जीवायनमस्तेपितःस्वधायैनमस्तेपितर्घोरायनमस्ते
पितर्मन्यवेनमस्तेपितः पितर्नमस्तेगृहान्नः पितर्दत्तसतस्तेपितर्देष्म इति कृताञ्जलिःपठेत्॥ततः ॐएतत्तेपितर्वासः ॥ इतिपिंडोपरिसूत्रं
धृत्वा ॐअमुकगोत्र पितरमुकशर्मन्वसुरूप एतत्तेवासः स्वधा इति सूत्रमुत्सृजेत् ॥ ततः पितरमुद्दिश्यतदीयपिंडे तूष्णीं गंधपुष्पतुलसी
धूपदीपतांबूलपूगीफलदक्षिणादीनिदद्यात् ॥ पिंडशेषान्नंपिंडसमीपेविकिरेत् ॥ ततः ॐशिवा आपः संतु इतिजलं सौमनस्यमस्तु इति
पुष्पम् अक्षतंचारिष्टं चास्तु इतियवतिलांश्चान्नपात्रे दद्यात् ॥ ततः ॐअमुकगोत्रस्यास्मत्पितुरमुकशर्मणोवसुरूपस्यदत्तैतदन्नपाना
दिकमक्षय्यमुपतिष्ठतामिति तिलयुक्तमक्षय्योदकं दद्यात् ॥ ततः प्राङ्मुखः (उपवीती) कृताञ्जलिर्दक्षिणांदिशंपश्यन् आशिषोगृह्णीयात ॥

ॐअघोरःपिताऽस्तु इतिपठित्वा ॐगोत्रंनोवर्द्धतां दातारोनोभिवर्द्धतां वेदाः सन्ततिरेव च ॥ श्रद्धाचनोमाव्यगमद्बहुदेयंचनोऽस्तु ॥ अन्नंच नोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनःसंतुमाचयाचिष्मकंचन ॥ एताःसत्याआशिषःसन्तु इतिवदेत् ॥ ततोऽपसव्येन पिंडोपरि सपवित्रंकुशत्रयमास्तीर्य्य ॐऊर्ज्जंवहंतीरमृतंघृतंपयःकीलालंपरिस्रुतम् ॥ स्वधास्थतर्पयतमेपितरम् ॥ इति मंत्रेणपिंडोपरिदक्षिणाग्रांजल धारांदद्यात् ॥ ततः अर्घपात्रमुत्तानीकृत्ययथाशक्तिरजतदक्षिणां कुशादीनि चादाय ॐअमुकगोत्रस्यास्मत्पितुरमुकशर्मणोवसुरूपस्य कृतै तत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिदं रजतंचंद्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायदक्षिणात्वेनदातुमहमुत्सृजे इति संकल्प्यदद्यात् ॥ ततः पिंडमुत्थाप्य स्थाल्यांनिधाय अवघ्राणंकृत्वापिंडाधःस्थंसकृल्लूनकुशत्रयमुल्मुकंचवह्नौक्षिपेत् ॥ ततोदेवताभ्य इतित्रिर्जपित्वा ॐ अभिरम्यतामिति विसृज्यरक्षादीपंनिर्वाप्यसव्येन हस्तौपादौप्रक्षाल्याचामेत् ॥ ततः ॐप्रमादादितिपठित्वा कर्म्मपूर्तिकामोविष्णुंस्म रेत् ॥ ततः पिंडंगामजंवायसान्वाखादयेदग्नौ जले वा क्षिपेत् ॥ ततोवैश्वदेवबलिकर्म्मणीकृत्वा ब्राह्मणान्भोजयेत् ॥ एवमेवमातृभ्रातृपितृ व्यादीनांश्राद्धंज्ञेयम् ॥ इतिसांवत्सरिकैकोद्दिष्टश्राद्धपद्धतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ अथमातृकैकोद्दिष्टश्राद्धपद्धतिः ॥श्राद्धपूर्वदिनेएकभक्तादिनियमंविधाय श्राद्धदिनेप्रातः स्नात्वा श्वेतधौतवाससीपरिधाय संध्यादिनित्य कर्मसमाप्य गोमयोपलेपनज्वलदंगारभ्रामणगौरमृत्तिकाच्छादनैः श्राद्धपाकयोर्भूमिसंस्कारं कृत्वा वस्त्रादिनावेष्टयित्वा तिलगौरसर्षपैरव कीर्य श्राद्धदेयवस्तून्यासाद्य स्वयंस्त्रीबांधवादिद्वारावापाकंकुर्यात् ॥ ततोमध्याह्नेपुनः स्नात्वा आचांतः श्राद्धदेशमागत्य तिलतैलेनदीपं प्रज्वाल्य काककुक्कुटादीनपसार्य्य स्वासनेप्राङ्मुखउपविशेत्ततः कर्मपात्रंजलेनापूर्य्य तत्रगंधपुष्पातिलकुशादीनिनिक्षिप्य पवित्रधारणं

कृत्वा आचम्य प्राणानायम्य । ॐ अपवित्रः पवित्रोवा० १ इतिपठित्वा । ॐ पुंडरीकाक्षःपुनात्विति कुशत्रयानीतजलैः श्राद्धद्रव्या
णिस्वात्मानंचप्रोक्षयेत् ॥ ततः ॐ भूम्यैनमः । ॐ भगवत्यैगयायैनमः । ॐ भगवतेगदाधरायनमः । इतिनत्वा कुशत्रयतिलजलान्या
दाय । देशकालौसंकीर्त्य अद्यामुकगोत्रायाअस्मन्मातुरमुकदेव्यागंगारूपायाः सांवत्सरिकैकोद्दिष्टश्राद्धमहंकरिष्ये । इतिसंकल्प्य । गायत्रीं
त्रिर्जप्त्वा ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्यएवच ॥ नमः स्वाहायै स्वधायै नित्यमेवनमोनमः १ इतित्रिर्जपेत् ॥ ततोऽपसव्यंकृत्वा
दक्षिणामुखः पातितवामजानुः तिलगौरसर्षपान्गृहीत्वा ॐनमोनमस्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः॥१॥
अग्निष्वात्ताः पितृगणाः प्राचींरक्षंतुमेदिशम् ॥ तथाबर्हिषदःपांतु याम्यांयेपितरःस्थिताः ॥ २॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपिसोमपाः ॥
अधोर्ध्वमपिकोणेषु हविष्मंतश्चसर्वदा ॥ ३ ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥ सर्वतश्चाधिपस्तेषांयोमेरक्षांकरोतुवै ॥ ४ ॥ वायुभूत
पितॄणांच तृप्तिर्भवतुशाश्वती ॥ इत्येतैर्मंत्रैर्दिक्षुविदिक्षु अधस्तादूर्ध्वंचसर्वत्रतिलगौरसर्षपान्विकीर्य ॥ वामेदक्षिणेवाकटिभागे नीवीबंधंकु
र्यात् ॥ ततः कस्मिंश्चित्पात्रेजलंगृहीत्वादर्भैरालोड्य॥ ॐयद्देवादेवहेडनंदेवासश्चकृमावयम् ॥ अग्निर्मातस्मादेनसोविश्वान्मुञ्चत्वंहसः॥१॥
यदिदिवायदिनक्तमेनाꣳसिचकृमावयम् ॥ वायुर्मातस्मादेनसोविश्वान्मुञ्चत्वंहसः ॥ २ ॥ यदिजाग्रद्यदिस्वप्नऽएनाꣳसिचकृमावयम् ॥
सूर्य्योमातस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ ३ ॥ इतिकूष्मांडसूक्तेनाभिमंत्र्य श्वोदक्यादिदुष्टदृष्टिनिपाताच्छूद्रादिसंपर्कदोषाच्चपाकादी
नांपवित्रताऽस्तु इतिपाकादीन्प्रोक्षयेत् ॥ ततःआसनादिदानम् ॥ तावदपसव्यादिनाद्विगुणभुग्नकुशत्रयतिलजलान्यादायदेशकालौस्मृत्वा ।
ॐअमुकगोत्रेऽस्मन्मातरमुकदेवि गंगारूपिणि सांवत्सरिकैकोद्दिष्ट श्राद्ध इदमासनंतुभ्यंस्वधा—इतिद्विगुणभुग्नकुशत्रयात्मकमासनंदक्षिणा

ग्रंसतिलमुत्सृजेत् ॥ ततः ॐ अपहताऽअसुरारक्षाᳬंसिवेदिषदः ॥ इतिवामावर्त्तेनतिलान्विकीर्य एकस्मिन्नर्घपात्रेपवित्रंदक्षिणाग्रंधृत्वा ॥
तत्र ॐशन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शंय्योरभिस्रवंतुनः-इतिजलंक्षिप्त्वा ॥ ॐतिलोसिसोमदैवत्योगोसवोदेवनिर्मितः॥ प्रत्नमद्भिः
पृक्तःस्वधयापितृँल्लोकान्प्रीणाहिनः स्वधा-इतितिलान् ॥ तूष्णीमेवगंधपुष्पेचाक्षिपेत् ॥ ततोऽर्घपात्रंवामहस्तेकृत्वापवित्रंपात्रेधृत्वा । ॐ
यादिव्याऽआपः पयसासंबभूवुर्याऽआन्तरिक्षाऽउतपार्थिवीर्य्याः ॥ हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः शᳬस्योनाः सुहवाभवंतु-इति
पात्रजलमभिमंत्र्य ॥ दक्षिणहस्तेद्विगुणभुग्नकुशादीन्यादाय ॐअमुकगोत्रेऽस्मन्मातरमुकदेविएषतेहस्तार्घःस्वधा-इतिपवित्रोपरिअर्घजलं
दत्त्वा अवशिष्टजलसहितं सपवित्रंचार्घपात्रम् ॥ ॐमात्रेस्थानमसीतिआसनवामप्रदेशभूमावधोमुखंनिदध्यात् ॥ एवंस्थितंपात्रंदक्षिणादान
पर्यंतंनोद्धरेन्नचालयेत् ॥ ततोगंधादिकंधृत्वा । द्विगुणभुग्नकुशत्रयादीन्यादाय ॐ अमुकगोत्रेऽस्मन्मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्ध
एतानिगंधपुष्पधूपदीपतांबूलसिंदूरवासांसि तुभ्यंस्वधा-इत्युत्सृजेत् ॥ ततः अर्चनंसंपूर्णमस्त्वितिप्रार्थ्य जलादिनामण्डलं कृत्वा ( परकी
यभूमौश्राद्धकरणे-ॐइदमन्नमेतद्भूस्वामिपितृभ्योनमः-इतिकुशोपरिभूस्वामिनेऽन्नबलिंदद्यात् ॥ भूमौस्वसत्त्वेनावश्यकता ) ततोभोजनपा
त्रंदत्त्वा तत्र उष्णमन्नंसघृतंपितरंध्यायन्गुरुपत्तृप्तिक्षमं कराभ्यांपरिविष्य तत्पार्श्वेव्यंजनंसुशीतलजलपात्राणिचस्थापयेत् ॥ ततोऽन्नंमधुम
यंकृत्वा ॐमधुव्वाताऽऋतायतेमधुक्षरन्तिसिंधवः ॥ माध्वीर्न्नः सन्त्वोषधीः ॥ १ ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवᳬरजः ॥ मधुद्यौरस्तु
नः पिता ॥ २ ॥ मधुमान्नोव्वनस्पतिर्मधुमाँऽअस्तुसूर्य्यः ॥ माध्वीर्गावोभवंतुनः ॥ ३ ॥ ॐमधुमधुमध्वित्यभिमंत्रयेत् ॥ ततोऽन्नपात्रं ॥२१॥
न्युब्जाभ्यांव्यस्ताभ्यांकराभ्यामालभ्य ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वधा॥१॥ ॐइदंविष्णुर्विचक्रमेत्रेधा

निदधेपदम् ॥ समूढमस्यपाꣳसुरे ॥ २ ॥ इतिपठित्वा ॥ ॐविष्णो कव्यꣳ रक्षइत्यनयास्वांगुष्ठमधोमुखमनखमन्नेनिवेश्य ॥ ॐइदम
न्नम् ॐइमाआपः ॐइदमाज्यम् ॥ ॐइदंहविरितिपठित्वा ॥ ॐअपहताऽअसुरारक्षाꣳसिवेदिपदः ॥ इत्यन्नपात्रपरितोवामावर्तेनतिलान्वि
कीर्य्य वामकरेणपात्रमत्यजन्दक्षिणकरेणकुशादीन्यादाय॥ ॐअमुकगोत्रेऽस्मन्मातरमुकदेविसांवत्सरिकैकोदिष्टश्राद्धे इदमन्नंसोपकरणम्
अमृतरूपंकव्यंतुभ्यंस्वधा—इत्युत्सृजेत् ॥ ततः ॐअन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्तु इतिप्रार्थ्य गायत्रींत्रिः
सकृद्वाजपेत् ॥ ततः ॐ मधु० वाताऽऋतायते० इत्यादिमंत्रत्रयम् ॥ ॐ मधुमधुमध्वितिचजपेत् ॥ ततः ॐ कृणुष्वपाजइत्याद्यार
क्षोघ्नीऋचः ५ पठित्वा भूमिंतिलैरास्तीर्य मातरंध्यायन् । ॐ उदीरतामवर० इत्यादिपितृमंत्रान् १३ ॥ ॐ सहस्रशीर्षा० इत्यादिपुरु
ष० १६ इतिपुरुषसूक्तम् ॥ ॐआशुः शिशानो० इत्यप्रतिरथंचपठित्वा अन्यानिरुचिस्तवप्रभृतीनिपठेत् ॥ तत उच्छिष्टसमीपेभूमिं
प्रोक्ष्य तत्रास्तृतदक्षिणाग्रकुशोपरि ॐअग्निदग्धाश्चयेजीवा येप्यदग्धाः कुलेमम ॥ भूमौ दत्तेन तृप्यंतु तृप्तायांतुपरांगतिम् ॥ १ ॥ इति
मंत्रेणान्नंप्रकीर्य्य(सव्येन) आचम्य हरिंस्मृत्वा गायत्रीं मधुव्वाता इतित्र्यृचम् मधुमधुमध्वितिचजपेत् ॥ ततोऽपसव्येन चतुरस्रं दक्षिणप्लवं
पिंडदानार्थस्थानंनिर्माय तन्मध्येदर्भपिंजुलीमूलेन ॥ ॐ अपहताऽअसुरारक्षाꣳसिवेदिपदः—इतिमंत्रेणसव्योपगृहीतदक्षिणहस्तेन दक्षि
णाग्रांसकृल्लेखामालिख्य दर्भपिंजुलीमुत्तरस्यांदिशिनिक्षिप्य ॐयेरूपाणिप्रतिमुंचमानाऽअसुराःसन्तःस्वधयाचरंति॥परापुरोनिपुरोयेभरन्त्य
ग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ १ ॥ इतिमंत्रेणज्वलदुल्मुकंरेखोपरिभ्रामयित्वा दक्षिणतोनिदध्यात् ॥ ततउपमूलसकृल्लूनकुशत्रयंरेखो
परिस्तीर्त्वा सव्येन ॐदेवताभ्यः—इतित्रिर्जपेत् ॥ ततोऽपसव्यंकृत्वा पत्रपुटके जलतिलगंधपुष्पाणिकृत्वा तत्पुटकंकुशादीनिचादाय ॐ

अमुकगोत्रेऽस्मन्मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धेपिंडस्थानेऽत्रावनेनिक्ष्वतेस्वधाइतिकुशोपरि अवनेजनंदद्यात् ॥ ततः सर्वस्मादन्ना दुष्णांकिंचित्किंचिदन्नमुद्धृत्य मध्वाज्यातिलजलसहितंपात्रेकृत्वा बिल्वोपमंपिंडंनिर्माय मधुघृताभ्यामभिघार्य्य द्विगुणभुग्नकुशादीनिपिंडं चादाय ॐअमुकगोत्रेऽस्मन्मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धे एषतेपिंडः स्वधानमः—इतिसव्योपगृहीतदक्षिणहस्तेनापितृतीर्थेनकुशोप रिपिंडमवनेजनस्थानेदद्यात् ॥ ततः लेपभागभुजांतृप्तिमुद्दिश्य दर्भमूलेकरंप्रोञ्छ्य हस्तौप्रक्षाल्य सव्येनाचम्यविष्णुंस्मरेत् ॥ ततोऽपस व्यादिकृत्वा दक्षिणामुखः ॐ अत्रमातर्मादयस्व यथाभागमावृषायस्व—इतिपठित्वा वामावर्त्तेनोदङ्मुखीभूत्वा प्रीतमनाः श्वासंनियम्य तेनैवयथापरावृत्य ॐअमीमदंतमातर्यथा भागमावृषायिपत इतिश्वासमुत्सृजेत् ॥ ततोऽवनेजनपात्रंगृहीत्वा ॐअमुकगोत्रेऽस्मन्मा तरमुकदेवि अत्रप्रत्यवनेनिक्ष्वतेस्वधा इतिपिंडोपरिप्रत्यवनेजनंदत्त्वा नीवींविस्रंस्य सव्येनाचामेत्॥ ततोऽपसव्यादिकृत्वा ॐनमस्तेमाता रसायनमस्तेमातः शोषायनमस्तेमातर्जीवायनमस्तेमातः स्वधायै नमस्तेमातर्वीरायनमस्तेमातर्मन्यवेनमस्तेमातर्मातर्नमस्तेगृहान्नोमातर्दे हिसतस्तेमातर्देष्म इतिकृतांजलिः पठित्वा ॐएतत्तेमातर्वासः—इतिपिंडोपरिसूत्रंधृत्वा कुशादीन्यादाय ॥ॐअमुकगोत्रेऽस्मन्मातरमुकदेवि एतत्तेवासः स्वधा—इतिसूत्रमुत्सृजेत् ॥ ततोमातरमुद्दिश्यतदीयपिंडेतूष्णींगंधकुंकुमपुष्पधूपदीपतांबूलपूगीफलदक्षिणादीनिदत्त्वा पिंडशे षान्नंपिंडसमीपेविकिरेत् ॥ ततोऽन्नपात्रे ॐशिवाआपःसंतु—इतिजलम् ॥ ॐसौमनस्यमस्तु—इतिपुष्पम् ॥ ॐअक्षतंचारिष्टंचास्तु—इतिय वांश्चदद्यान्नतंडुलान् ॥ ततोदेशकालौस्मृत्वा ॐअमुकगोत्रायाअस्मन्मातुरमुकदेव्यागंगारूपिण्याःसांवत्सरिकैकोद्दिष्टश्राद्धेदत्तैतदन्नपानादि कमक्षय्यमुपतिष्ठतामिति तिलयुक्तमक्षय्योदकंदद्यात् ॥ ततः प्राङ्मुखः सव्यंकृत्वा कृतांजलिर्दक्षिणांदिशंपश्यन् आशिषोगृह्णीयात् ॥

ॐ अघोरामाताऽस्तु—इतिपठित्वापिंडोपरिपूर्वाग्रांजलधारांदत्त्वा ॐगोत्रंनोवर्द्धतां दातारोनोभिवर्द्धतां वेदाः संततिरेवच ॥ श्रद्धाचनोमा
व्यगमद्बहुदेयंचनोऽस्तु ॥ अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनः संतुमाचयाचिष्मकंचन ॥ एताः सत्याः आशिषः संतु—
इतिप्रार्थयेत् ॥ ततोऽपसव्यादिकृत्वा पिंडोपरिसपवित्रंकुशत्रयंदक्षिणाग्रमास्तीर्य्य जलेन ॐऊर्ज्जंवहंतीरमृतंघृतंपयःकीलालंपरिस्रुतम् ॥
स्वधास्थतर्पयतमेमातरम् ॥ १ ॥ इतिदक्षिणाग्रांजलधारांदद्यात् ॥ ततः अर्घपात्रमुत्तानीकृत्यययथाशक्तिरजतदक्षिणांदद्यात् ॥ द्विगुणभु
ग्नकुशादीनिदक्षिणांचादाय ॐअमुकगोत्रायाअस्मन्मातुरमुकदेव्याः सांवत्सरिकैकोद्दिष्टश्राद्धकर्मणः प्रतिष्ठार्थमिदंरजतंचंद्रदैवतममुकगो
त्रायाऽमुकशर्मणेब्राह्मणायदक्षिणात्वेनदातुमहमुत्सृजे—इतिसंकल्प्य यथासंभवंयथाचारंचदद्यात्॥ततः पिंडमुत्थाप्यस्थाल्यांनिधाय अवघ्रा
णकृत्वा पिंडाधःस्थंसकृल्लूनकुशत्रयमुल्मुकंचवह्नौक्षिपेत् ॥ ततः सव्येन ॐदेवताभ्यइतित्रिर्जपित्वाअपसव्येन ॐअभिरम्यताम्
इतिविसृज्य रक्षादीपंनिर्वाप्य सव्येनहस्तौपादौप्रक्षाल्य आचामेत् ॥ ततः ॐप्रमादादितिपठित्वा कर्म्मपूर्त्तिकामोविष्णुंस्मृत्वा पिंडंगवादि
भ्योदत्त्वा श्राद्धीयवस्तूनिब्राह्मणायप्रतिपाद्य वैश्वदेवबलिकर्मणीकृत्वा ब्राह्मणान्भोजयेत् ॥ ततः इष्टैः सहशेषभोजनंकुर्य्यात् ॥ एवमेव
सापत्नमातृपितृव्यपत्नीभ्रातृपत्नीस्वस्त्रीप्रभृतीनांश्राद्धंज्ञेयम् ॥ इतिश्रीगौडीयश्राद्धप्रकाशेमातृकैकोद्दिष्टश्राद्धप्रयोगः समाप्तः ॥ ॥ छ ॥
॥ अथस्त्रीकर्तृकैकोद्दिष्टश्राद्धप्रयोगः ॥ पूर्वदिनेएकभक्तादिनियमंकृत्वा श्राद्धदिनेप्रातःस्नात्वा शुक्लवस्त्रयुगधारिणीनित्यकर्मसमाप्य
गोमयोपलिप्तेसुसमावृतेदेशेस्वयंपाकंकृत्वा मध्याह्नेपुनःस्नात्वा पूर्वोपकल्पितश्राद्धदेशमागत्यतिलतैलेनदीपंप्रज्वाल्यस्वासनेप्राङ्मुखी
उपविशेत् ॥ ततः कर्मपात्रंजलेनापूर्य्यतत्रगंधपुष्पतिलकुशादीनिनिक्षिप्यरजतादिपवित्रधारणंकृत्वा आचम्य अपवित्रः पवि

त्रोवा० ॥ १ ॥ पुंडरीकाक्षः पुनात्वितिकुशत्रयेणश्राद्धीयद्रव्याणिस्वात्मानंचप्रोक्षयेत् ॥ ततोभूम्यैनमः ॥ काश्यप्यैनमः । अक्षय्यायैनमः । भगवत्यैगयायैनमः । भगवतेगदाधरायनमः । इतिमनोवाक्कायैर्नमस्कारंकुर्यात् ॥ ततःकुशत्रयतिलजलान्या दाय देशकालौसंकीर्त्य अद्यामुकगोत्रस्यअस्मत्पत्युरमुकशर्मणो वसुरूपस्यसांवत्सरिकैकोद्दिष्टश्राद्धमहंकरिष्ये इतिसंकल्प्य देवताभ्यः इतित्रिःपठेत् ॥ ततोदक्षिणामुखोपातितवामजानुस्तिलगौरसर्षपान्गृहीत्वा । नमोनमस्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्ष तांसर्वतोदिशः ॥ १ ॥ इतिसर्वत्रपूर्वादिदिक्षुविकीर्य्य नीवीबंधंकुर्यात् ॥ अथासनादिदानम् ॥ द्विगुणभुग्नकुशत्रयतिलजलान्यादाय अद्या मुकगोत्र अस्मत्पतेऽमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्ध इदमासनंतुभ्यंनमः । इतिपितृतीर्थेनदक्षिणाग्रमासनमुत्सृजेत् ॥ ततः—तिलोऽसि नमःइतितिलान्विकीर्यअर्घपात्रेपवित्रंधृत्वा अद्योनमः—इतिजलंप्रक्षिप्यतिलेभ्योनमः—इतितिलांस्तूष्णींगंधपुष्पाणिचनिक्षिपेत् ॥ ततोऽर्घ पात्रसंपत्तिरस्तु—इतिपठित्वा अर्घपात्रंवामहस्तेकृत्वा तत्रस्थंपवित्रंपलाशपत्रेदक्षिणाग्रंधृत्वा अद्योनमः—इत्यभिमंत्र्यद्विगुणभुग्नकुशतिलज लान्यादाय—अद्यामुकगोत्रअस्मत्पतेऽमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्धे एषतेहस्तार्घोनमः—इत्यर्घपवित्रोपरिदद्दुत्सृजेत् ॥ ततोऽर्घपात्र मासनवामपार्श्वे पत्येस्थानमसि इतिन्युब्जीकुर्यात् ॥ ततोगंधादिदानम् ॥ द्विगुणभुग्नकुशत्रयतिलजलान्यादाय अद्यामुकगोत्र अस्मत्पते ऽमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्ध एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितुभ्यंनमः—इत्युत्सृजेत् ॥ ततः अर्चनंसंपूर्णमस्त्वितिप ठित्वा जलेन आसनंवेष्टयित्वार्धमंडलंकुर्यात् ॥ ( अत्रपरकीयभूमौश्राद्धकरणे इदमन्नमेतद्भूस्वामिपितृभ्योनमः—इतिघृतादियुक्तमन्नंदद्यात् ) ततोभोजनपात्रे उष्णमन्नंसघृतव्यंजनंसुशीतलजलसहितंयथावत्परिविष्यमधुदत्त्वा मधुमधुमध्वित्यभिमंत्र्य अन्नपात्रंन्युब्जाभ्यांन्यस्ताभ्यां

पाणिभ्यांस्पृष्ट्वा विष्णवेनमः—इतिस्वांगुष्ठमनखमन्नेनिवेश्य इदमन्नम् । इमा आपः । इदमाज्यम् । एतत्सर्वंकव्यमित्यन्नजलघृतेषुनिक्षिप्य तिलेभ्योनमः—इतितिलान्पात्रपरितोविकीर्य पात्रंवामकरेणस्पृशन्दक्षिणकरेकुशादीन्यादाय अद्यामुकगोत्र अस्मत्पतेऽमुकशर्मन्सांवत रि कैकोद्दिष्टश्राद्ध इदमन्नंसोपस्करंकव्यममृतरूपंतुभ्यंनमः—इत्युत्सृजेत् ॥ ततः अन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्तु इतिप्रार्थ्य मधुमधुमध्वितिचजपेत् ॥ ततोभूमौतिलान्विकीर्ययथारुचिस्तवादीनियथाशक्तिपठित्वा—नमस्तुभ्यंविरूपाक्ष नमस्तेऽनेकचक्षुषे नमःपिनाकहस्ताय वज्रहस्तायवैनमः ॥ १ ॥ इतिश्लोकमपिपठेत् ॥ ततउच्छिष्टसन्निधौभूमिंप्रोक्ष्य तत्रदक्षिणाग्रकुशत्रयमास्तीर्य व्यंजनघृततिलसहितमन्नंगृहीत्वा अग्निदग्धाश्चयेजीवा येप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यंतु तृप्तायांतुपरांगतिम् ॥ १ ॥ इतिकुशोपरितदन्नंविकीर्य सव्येन आचम्य विष्णुंस्मृत्वामधुमधुमाध्वितिचजपेत्॥ततोऽपसव्यादिना उच्छिष्टसन्निधौचतुरस्रंदक्षिणप्लवंस्थानंनिर्माय तन्मध्ये दर्भपिंजुलीमूलेनदक्षिणाग्रांप्रादेशमात्रांरेखांकृत्वा दर्भपिंजुलीमुत्तरस्यांदिशिनिक्षिप्य ज्वलदुल्मुकंरेखोपरिभ्रामयित्वा दक्षिणतोनिदध्यात् ॥ तत उपमूलसकृल्लूनकुशत्रयंरेखोपरिस्तीर्त्वा प्राङ्मुखी देवताभ्यः—इतित्रिःपठित्वा दक्षिणामुखीपुटकेतिलजलगंधपुष्पाणिकृत्वा।पुटकंगृहीत्वा अद्यामुकगोत्रअस्मत्पतेऽमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्धपिंडस्थानेऽत्रावनेनिक्ष्वतेनमः—इतिकुशोपरि अवनेजनंदद्यात् ॥ किंचिज्जलंपात्रे अवशेषयेत्॥ततस्तिलजलव्यंजनमधुघृतयुतान्नेनपिंडंनिर्मायमधुघृताभ्यामभिघार्य कुशादीनि पिंडंचादाय अद्यामुकगोत्र अस्मत्पतेऽमुकशर्मन्वसुरूप सांवत्सरिकैकोद्दिष्टश्राद्ध एषतेपिंडोनमः—इत्यवनेजनस्थानेकुशोपरिपिंडंदद्यात् ॥ ततोदर्भमूलेकरंप्रोञ्छ्यहस्तौप्रक्षाल्य सव्येनाचम्य विष्णुंस्मरेत् ॥ ततोऽपसव्यादिना पत्येनमः—इतिपठित्वा वामावर्त्तेनोदङ्मुखीभूत्वा श्वासंनियम्य पतिंध्यायन्दक्षिणामुखी पत्येनमः

इतिश्वासमुत्सृजेत् ॥ ततः पूर्वंदत्तावनेजनपात्रंगृहीत्वा अद्यामुकगोत्र अस्मत्पतेऽमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्धपिंडेऽत्र प्रत्यवनेनिक्ष्व तेनमः—इतिप्रत्यवनेजनंदद्यात् ॥ ततोनीवींविस्रंस्य आचम्य अपसव्येन । वसंतायनमस्तुभ्यं ग्रीष्मायचनमोनमः ॥ वर्षाभ्यश्चशरत्संज्ञ ऋतवेचनमःसदा ॥ १ ॥ हेमंतायनमस्तुभ्यं नमस्तेशिशिरायच ॥ माससंवत्सरेभ्यश्च दिवसेभ्योनमोनमः ॥ २ ॥ इतिकृतांजलिःपठेत् ॥ ततः एतत्तेपतेवासोनमः—इतिपिण्डोपरित्रिगुणितसूत्रमूर्णादशांवादत्त्वा कुशादीन्यादाय अद्यामुकगोत्रास्मत्पतेऽमुकशर्मन् एतत्तेवासोनमः—इत्युत्सृजेत् ॥ ततः पितरमुदिश्यतदीयपिण्डेगंधपुष्पधूपदीपतांबूलदक्षिणादीनिदत्त्वापिण्डशेषान्नंपिण्डसमीपेविकिरेत् ॥ ततो भोजनपात्रेशिवा आपःसंतु—इतिजलम् । सौमनस्यमस्तु—इतिपुष्पम् । अक्षतंचारिष्टंचास्तु—इतियवतिलांश्चदद्यात् ॥ ततःअद्यामुकगोत्रस्य अस्मत्पत्युरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धेदत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकंदद्यात् ॥ ततः प्राङ्मुखी सव्येन कृतांजलिराशिषोगृह्णीयात् अघोरःपतिरस्तु—इति पूर्वाग्रां जलधारां दद्यात् ॥ ततः प्राङ्मुखी कृतांजलिः ॥ गोत्रंनोवर्द्धतामित्यादि पठित्वा एताःसत्या आशिषः संत्वित्याशिषः प्रार्थयेत् ॥ ततःपिंडोपरि दक्षिणामुखी सपवित्रकुशत्रयं दक्षिणाग्रमास्तीर्य तदुपरि दक्षिणाग्रां जलधारां दद्यात् ॥ ततोऽर्घपात्रमुत्तानीकृत्य दक्षिणादानम् । अद्यामुकगोत्रस्यपत्युरमुकशर्म्मणः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिदंरजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति दक्षिणांदद्यात् ततःपिंडमुत्थाप्य स्थाल्यांनिधाय अवघ्राणं कृत्वा पिंडाधःस्थतदर्भंचोल्मुकंचवह्नौक्षिपेत् ॥ ततोऽभिरम्यतामितिविसर्जनम् ॥ ततः प्राङ्मुखी देवताभ्य इतित्रिः पठेत् ॥ ततोदक्षिणामुखी हस्ताभ्यांदीपंनिर्वाप्य ततोहस्तौ पादौ प्रक्षाल्याचम्य प्रमादात्कुर्वतामित्यादि पठित्वा श्राद्धसंपूर्णकामतया विष्णुंस्मरेत् ॥ ततः

श्राद्धीयवस्तूनिब्राह्मणायार्प्पयेत् ॥ ततो यथाशक्तिब्राह्मणान्भोजयित्वा बांधवैः सहस्वयमपिभोजनंकुर्यात् ॥ इतिगौडीयश्राद्धप्रकाशे स्त्रीकर्तृकैकोद्दिष्टश्राद्धप्रयोगः ॥ अथविधवाकर्तृकमहालयादिषुपार्वणप्रकारः ॥ तत्र अपुत्रविधवास्वभर्तृतत्पितृपितामहानां सपत्नीकानां तथा स्वपितृपितामहप्रपितामहानां सपत्नीकानांच महालयापरपक्षीयपार्वणश्राद्धंकुर्यात् ॥ तत्रसंकल्पः ॥ देशकालौ संकीर्त्य अद्यामुकगोत्राणां ममभर्तृतत्पितृपितामहानां सपत्नीकानां द्वितीयगोत्राणां ममपितृपितामहप्रपितामहानां सपत्नीकानां तृप्त्यर्थं महालयापरपक्षश्राद्धं करिष्ये इतिसंकल्प्य पूर्वोक्तषड्दैवत्यपार्वणविधिना अमंत्रकं श्राद्धंकुर्यात् ॥ अथवास्वयं संकल्पंकृत्वा ब्राह्मणद्वाराकारयेत् ॥ तत्र (ब्राह्मणकर्तृकपक्षेएवंसंकल्पः) अमुकगोत्राया अमुकनाम्न्या ममयजमान्या भर्तृतत्पितृपितामहानां तथा तस्याएव पितृपितामहप्रपितामहानां तृप्त्यर्थं महालयापरपक्षपार्वणश्राद्धंकरिष्ये इत्युच्चार्य्य पूर्ववत्समंत्रकंप्रयोगंकुर्यात् ॥ इति विधवाकर्तृकषड्दैवत्यपार्वणविधानम् ॥ इतिश्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनगरनिवासिना श्रीवसिष्ठगोत्रोद्भवपंडितश्रीरामकृष्णपौत्रेण श्रीकस्तूरीचन्द्रसूनुना श्रीमहादेवभक्तवाजसनेयिना गौडपंडितश्रीचतुर्थीलालशर्मणा विरचितेगौडीयश्राद्धप्रकाशे पद्धतिखण्डे प्रेततृप्तिविधायकं पंचमंप्रकरणं समाप्तम् ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ अथ जीवच्छ्राद्धपद्धतिः ॥ तावत् पुत्राद्यधिकाररहितः स्वीयमन्यस्यवा देशकालश्रद्धाधनव्यवसायाधिक्येसति जीवच्छ्राद्धंकर्तुमिच्छुर्यस्यांकस्यांचित्कृष्णद्वादश्यांप्रातःस्नानंकृत्वाशुक्लवाससीपरिधाय संध्यादिनित्यावश्यकंसमाप्य निर्विघ्नतार्थंगणेशादिदेवान्पूजयेत् ॥ तद्यथा आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॐअद्यकृष्णद्वादश्यांकरिष्यमाणजीवच्छ्राद्धे निर्विघ्नकामो गणेशनवग्रहकुलदेवतानां पूजन

महंकरिष्ये इतिसंकल्प्य चंदनादिनागणेशनवग्रहान्कुलदेवतांश्च पूजयेत् ॥ ततस्ताम्रपात्रेजलगंधाक्षतपुष्पाणिगृहीत्वा ॐसूर्यायनमः इतिसूर्य्यायाऽर्घ्यंदत्त्वा देशकालौसंकीर्त्य ॐ अद्यकृष्णद्वादश्यांजीवच्छ्राद्धाङ्गभूतमुपवासव्रतंकरिष्यइतिसंकल्प्योपवासंकुर्यात् ॥ ततो मध्याह्नेस्नात्वा मध्याह्नसंध्यांकृत्वा श्रीमहाविष्णुंषोडशोपचारैःसंपूज्य तदग्रेयथायुक्तप्रायश्चित्तं वैतरणीधेनुदानं तिलादिमहाष्ट दानानि तिलपूर्णताम्रपात्रऋणधेनुपापधेन्वादिदानंच यथाशक्तिप्रेतकल्पोक्तवत्कुर्यात्॥एवंयथासंभवंदानानिकृत्वा पुरुषसूक्तोपनिषद्भागव तानि गीताविष्णुसहस्रनामादीनिपुण्यस्तोत्राणिचपठेच्छृणुयाद्वा महामृत्युंजयजपमपिकुर्यात् ॥ इतिद्वादशीकृत्यम् ॥ अथत्रयोद शीकर्म ॥ तत्रादौ प्रातःस्नानादिनित्यक्रियां समाप्य गंगातीरादिदेशे तदऽसंभवे शुद्धायां भूमौगोमयोपलिप्तायां धौतवस्त्रद्वयधरः कुश पाणिः प्राङ्मुखोबद्धशिखः स्वासने उपविश्य आचम्य कुशत्रययवजलान्यादाय देशकालौसंकीर्त्य ॐ अद्यकृष्णत्रयोदश्यां ममामुकगो त्रस्याऽमुकशर्मणो जीवतआत्मनः कर्त्तव्यौर्द्ध्वदैहिकक्रियाया मरणोत्तरभविष्यप्रेतत्वविमुक्तिकामः श्रीपरमेश्वरप्रीत्यर्थं जीवच्छ्राद्ध महंकरिष्ये—इतिसंकल्प्य जलमैशान्यांदिशिक्षिपेत् ॥ ततः ॐ भूरसिभूमिरसीत्यादिनाकलशंसंस्थाप्य मनोजूतिरितिप्रतिष्ठां कृत्वा तत्र वरुणंसंपूज्य प्रार्थ्य तदुपरिस्वर्णमयीं विष्णुप्रतिमांस्थापयेत् ॥ ततोदेशकालौस्मृत्वा ॐ अद्यजीवच्छ्राद्धांगभूतषोडशोपचारैर्विष्णुपू जांकरिष्ये—इतिसंकल्प्य. ॐसहस्रशीर्षा०इत्यादिपुरुषसूक्तेनषोडशोपचारैःसंपूज्य ॐविष्णो क्षमस्व इतिक्षमाप्य तदग्रेतिस्रोजलधेनूःसोप स्कराः सतिलाः संस्थाप्यपूजयेत् ॥ तद्यथा—विष्णोरग्रेचतुर्हस्तपरिमितंमण्डलंकृत्वा तत्रपंचविंशतिकुशपत्ररचितंविष्टरमेकमादाय ॐसो मायपितृमतेस्वधानमः—इतिउत्तरादिशिदक्षिणाग्रंसंस्थाप्य॥एवंद्वितीयंविष्टरम् ॐअग्नयेकव्यवाहनायस्वधानमः—इतिदक्षिणादिशिदक्षिणाग्रं

स्थापयेत् ॥ ततस्तृतीयं द्वयोर्मध्ये ॐयमायांगिरसेस्वधानमः—इतिदक्षिणाग्रेस्थापयेत् ॥ ततस्तत्रक्रमेणत्रीन्कुम्भान् ॐआजिघ्रकलशे तिसंस्थाप्यप्रत्येकं ॐवरुणस्योत्तंभनमितिजलेनापूर्य्य ॐपरिवाजपतिरितिपंचरत्नानिॐकाण्डात्काण्डादितिदूर्वाःॐअश्वत्थेव इतिपंचपल्लवांश्च निक्षिप्यॐऽसोःपवित्रमसीतिसितयुग्मवस्त्रेणावेष्टयेत् ॥ ततःप्रतिकलशंत्रीणिकांस्यपात्राणिपृथक्पृथग्घृतमधुदधिपूरितानिमुखस्थाने स्थापयेत्॥(मुखस्थानंकुशविष्टरमूले)तत्रैवकुष्टं-मांसी-मुरा-उशीर-आमलक-इति पंचौषधिं घ्राणदेशेस्थाप्य (घ्राणदेशमपिकुशविष्टरमूलम्) ततः प्रियंगुपत्राणिआदायप्रत्येकंकर्णयोःस्थाप्य ( कुशविष्टरस्यघ्राणसमीपेकर्णदेशे ) ततोयज्ञोपवीतंशिरःस्थानेप्रत्येकंस्थापयेत् ॥ ततश्चतुस्ताम्रपात्राणितिलपूरितानिप्रत्येकंकुंभंचतुर्दिक्षुसंस्थाप्यप्रत्येककुंभपार्श्वेछत्रमुपानत्कंस्थापयेत् ॥ ततःप्रत्येकंस्वर्णशृंगाणि रौप्यखुराणिचसंस्थाप्यएवंप्रकारेणचतुर्थांशेनत्रीणिवत्सरूपाणितत्रैवकारयेत् ॥ इतिजलधेनुस्थापनप्रकारः ॥ अथपूजनप्रकारः ॥ तत्रतावद्देशकालौसंकीर्त्य ॐअद्यकृष्णत्रयोदश्यांजीवच्छ्राद्धाङ्गभूतजलधेनुत्रयपूजनमहंकरिष्ये इतिसंकल्प्यॐसोमोद्देश्यसवत्सायैजलधेनवेनमः—इत्युत्तरस्थांषोडशोपचारैःसंपूजयेत् ॥ ततः ॐअग्न्युद्देश्यसवत्सायैजलधेनवेनमः—इतिदक्षिणस्थांद्वितीयां० ॥ ॐयमोद्देश्यसवत्सायैजलधेनवेनमः—इतिमध्यस्थांतृतीयांचषोडशोपचारैःपूजयेत् ॥ एवंसंपूज्यॐसोमायत्वापितृमतेस्वधानमः—इतिमंत्रेणउत्तरस्थांनिवेदयेत् ॥ ॐअग्नयेकव्यवाहनायस्वधानमः—इतिदक्षिणस्थां०॥ॐयमायांगिरसेस्वधानमः—इतिमध्यस्थांचनिवेदयेत ॥ ततोऽपराह्णेनिमंत्रितपंचब्राह्मणान्स्नातान्यजमानसवर्णेनाहूतान्प्रांगणेशुचिः कृतांजलिर्देवेषुतिष्ठन्स्वागतमितिब्रूयात् ॥ सुस्वागतमितितैरुक्ते गोमयोपलिप्तायांभूमौपीठाद्यासनेषूपवेश्य दक्षिणहस्तेनब्राह्मणजानुस्पृष्ट्वा देवब्राह्मणौप्राङ्मुखौवस्वादिब्राह्मणांस्त्रीनुदङ्मुखान्निमंत्रयेत् ॥ तद्यथा—ॐअद्यजीवच्छ्राद्धसंबंधि

विश्वेदेवश्राद्धार्थंयुवामहमामंत्रये–इतिदेवविप्रौनिमंत्र्य ॥ ॐअद्यवसुश्राद्धार्थंत्वामहमामंत्रये–इत्येकंवसुश्राद्धार्थंचनिमंत्र्य एवमेवरुद्रादित्य श्राद्धार्थंचएकैकंविप्रंनिमंत्रयेत् ॥ एवंपंचब्राह्मणाभवंति ॥ आमंत्रितोस्मीतिप्रतिवचनम् ॥ ततः ॐअक्रोधनैःशौचपरैः सततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिश्च मयाचश्राद्धकारिणा–इतिब्राह्मणाञ्छ्रावयेत् ॥ भवितव्यमितिप्रतिवचनम्॥ततः इदंवःपाद्यमितिपाद्यमुपनीय विनीतः स्वयमेवतेषांपादौप्रक्षालयेत् ॥ ततः ॐविश्वेदेवाइदमर्घ्यंवःस्वाहानमः–इत्युभयत्रब्राह्मणपादयोर्यवपुष्पगंधोदकैरर्घंदत्त्वा ॐअद्यवस वएषोऽर्घोयुष्मभ्यंस्वधानमः इतित्रसुब्राह्मणपादयोरर्घंदद्यात् ॥ एवमेवरुद्रादित्यब्राह्मणपादयोरर्घंदद्यात् ॥ ततः ॐइदमाचमनीय मितिब्राह्मणेभ्य आचमनार्थंजलंदत्त्वा स्वयमप्याचमनंकृत्वा ब्राह्मणैः सहश्राद्धभूमिमागत्यान्नाभिप्रायेणसिद्धमित्युक्त्वा आसनानिकल्प यित्वा उपस्पृश्य ॥ अत्राध्वमितिदेवब्राह्मणौप्राङ्मुखौ वस्वादिब्राह्मणानुदङ्मुखानुपवेशयेत् ॥ ततस्तेषांपादयोरधस्तात्कुशत्रयंदत्त्वा प्रत्यासनसमीपेतिलतैलेनदीपान्प्रज्वाल्य काककुक्कुटादीञ्श्राद्धापहंतॄनपसारयेच्छ्राद्धदेशावरणंचकुर्यात् ॥ ततःकर्त्ताब्राह्मणानांपुरतः स्वासनेप्राङ्मुख उपविश्य सव्येनकुशपवित्रधारणमाचमनंचकृत्वा ॐअपवित्र० ॐ पुंडरीकाक्षःपुनात्वितिपठित्वा कुशत्रयानातजलेन श्राद्धीयद्रव्याणि स्वात्मानंचाभिसिंचेत् ॥ ततःॐ भूम्यैनमः ॐगयायैनमः ॐभगवतेगदाधरायनमः–इतिनत्वा कुशत्रयतिलजलान्यादाय ॐअद्यजीवच्छ्राद्धांगभूतवसुरुद्रादित्यानां सदैवंपार्वणश्राद्धंकरिष्ये इतिसंकल्प्य कुरुष्वेतिब्राह्मणानुज्ञातोगायत्रींत्रिजंपित्वा ॐदेव ताभ्य–इतित्रिर्जपेत् ॥ ततस्तिलगौरसर्षपान्गृहीत्वा ॐनमोनमस्तेगोविंद इत्यादिमंत्रैः पूर्वोक्तपार्वणवत्सर्वत्रविकीर्यनीवीबंधंकुर्यात्॥ततः ॐयद्देवादेवहेडनमित्यादिकूष्मांडसूक्ताभिमंत्रितजलैरन्नंप्रोक्ष्यहरयेनिवेदयेत ॥ तत उदङ्मुखोदक्षिणंजान्वाच्य यज्ञोपवीत्यंतर्जानुकरो

जलयवसमन्वितमृजुकुशत्रयमादाय ॐअद्यजीवच्छ्राद्धेवस्वादिश्राद्धसंबंधिनोविश्वेदेवाः इदमासनंवोनमः इत्युच्चार्य्यमिलितद्विजह स्तयोर्जलमासिच्य आसनदक्षिणभागस्योपरिदेवतीर्थेनपूर्वाग्रंकुशत्रयंत्यजेत् ॥ ततोदक्षिणाभिमुखः प्राचीनावीतीःपातितवामजानुःद्विगु णभुग्नकुशत्रयतिलजलान्यादाय ॐअद्यजीवच्छ्राद्धे इदमासनंवसुभ्यःस्वधानमः—इतिपठित्वा प्रथमविप्रकरेजलंदत्त्वा आसनवामभागस्यो परिमोटकरूपंकुशत्रयंपितृतीर्थेनदद्यात्॥एवमेवरुद्रादित्येभ्योप्यासनंदद्यात् ॥ ततःसव्येनॐविश्वान्देवानावाहयिष्ये—इतिदेवब्राह्मणौपृष्ट्वा ॥ आवाहय—इत्यनुज्ञातोदेवब्राह्मणांगुष्ठेगृहीत्वा ॐविश्वेदेवासः—इत्यावाह्य ॥ यवोसियवया०इतियवान्विकीर्य ॐविश्वेदेवाःशृणुत०इत्यादिप ठेत्॥विश्वेदेवोत्पत्तिनाम्नोरज्ञाने—आगच्छंतुमहाभागा०इतिश्लोकमपिपठेत्॥ ॐततोऽपसव्येनॐपितॄनावाहयिष्ये—इतिपितृब्राह्मणांगुष्ठंगृही त्वा ॐउशन्तस्त्वा—इत्यावाह्य ॐ अपहता०इतितिलान्विकीर्य ॐआयंतुन० इत्यादिमंत्रंपठेत् ॥ ततोऽर्घपात्रपंचके प्रत्येकमेकैकंपवित्रं धृत्वा ॐशन्नोदेवीरितिमंत्रावृत्त्याप्रतिपात्रंजलंप्रक्षिप्य ॐयवोसीतिदेवपात्रद्वययवान्प्रक्षिप्यॐतिलोसि० इत्यादिमंत्रावृत्त्यावस्वादिपात्रये तिलान्प्रक्षिप्य पंचस्वपिगंधपुष्पाणितूष्णींक्षिपेत्॥ ततःसव्येन ॐदेवार्घपात्रसंपत्तिरस्तु—इतिपठित्वा अस्तुसंपत्तिरित्यनुज्ञातःप्रथमंदेवार्घ पात्रंवामहस्तेकृत्वा तत्रस्थंपवित्रंदेवविप्रकरेपूर्वाग्रंदत्त्वाकिंचिदुदकान्तरंचदत्त्वाॐयादिव्या० इत्यभिमंत्र्य ॐविश्वेदेवाएषवोहस्तार्घःस्वाहान मः—इतिदक्षिणहस्तेनपवित्रोपरि अर्घ्यंदत्त्वा पवित्रसहितमर्घ्यपात्रंपुरतःस्थापयेत् ॥ ततोऽपसव्येनवसुपात्रंवामहस्तेकृत्वा तत्रस्थंपवित्रंतद्वि प्रकरे उत्तराग्रंदत्त्वा ॐयादिव्या०इतिपठित्वा ॥ मोटकादीन्यादाय ॐअद्यवसवः एषवोर्घः स्वधानमः—इतिपितृतीर्थेनपवित्रोपरि अर्घजलं दत्त्वा पवित्रसहितमर्घपात्रमग्रे स्थापयेत् ॥ एवमेवरुद्रादित्येभ्योपितत्तन्नाम्नार्घंदद्यात् ॥ अत्रसंस्रवबहुत्वाऽभावेनसमवनयनाभावात्पात्र

न्युब्जीकरणाभावः अतः सर्वेषांपात्राणामुत्तानमेवस्थापनम् ॥ ततःसव्येनविप्रकरयोर्जलमासिच्य गंधपुष्पधूपदीपादिकंधृत्वा कुशत्र ययवजलान्यादाय ॐविश्वेदेवाः एतानिगंधपुष्पधूपदीपत म्बूलयज्ञोपवीतवासांसि वोनमः इत्युत्सृजेत् ॥ ततःकृतांजलिः ॐ विश्वेषांदेवानामर्चनंसंपूर्णमस्तु—इतिब्रूयात् ॥ ॐ अस्त्वर्चनंसंपूर्णमितिप्रतिवचनम् ॥ ततोऽपसव्येन गंधादिकंधृत्वाविप्रकरेजलमासिच्य मोदकादीन्यादाय ॐ अत्रवसवः एतानिगंधपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसियुष्मभ्यंस्ववानमः—इतिउत्सृजेत् ॥ एवमेवरुद्रादित्येभ्योऽपिगंधादिदद्यात् ॥ ततः पितृणामर्चनंसंपूर्णमस्त्वितिपठित्वा अस्त्वर्चनंसंपूर्णमित्यनुज्ञातः अयंवोगंधः इदंवोमाल्यमित्यादिक्रमेणप्रत्येकं ब्राह्मणेभ्यः प्रतिपादयेत् ॥ नैवपुष्पाणिशिवावर्ज्यंनवार्याणि॥अत्रावसरे अन्यान्यप्याभरणकमंडलुशय्यासनप्रभृतीनिद्रव्याणिफलार्थितयादेयानि ॥ ततो वसुभ्यस्त्वामहंविप्र भोजयामि॥रुद्रेभ्यस्त्वामहंविप्र भोजयामि ॥ सूर्येभ्यस्त्वामहंविप्र भोजयामि—इतिपठित्वा भोजनपात्रस्थापनदेशंसंमार्ज्य नीवारचूर्णेनगोमृत्तिकयावा प्रणीताग्निभस्मनाजलेनवा ब्राह्मणान्वेष्टयित्वामंडलानिकुर्यात् ॥ ततो भोजनपात्राणिदत्त्वा हस्तप्रक्षालनार्थंप्रत्येकं जलंदद्यात् ॥ अथाग्नौकरणम् ॥ तत्रनावद्व्यंजनक्षारवर्जितं घृताक्तमुष्णंश्राद्धीयान्नाग्रभागंकांस्यपात्रे समुद्धृत्य ॐ अग्नौकरणंकरिष्ये—इतिपृष्ट्वा कुरुष्वेत्यनुज्ञातः पित्र्यविधिनावसुब्राह्मणहस्तेजलेवा ॐ अग्नयेकव्यवाहनायस्वाहा ॥ इदमग्नयेकव्यवाहनाय ॥ ॐ सोमायपितृमतेस्वाहा ॥ इदं सोमायपितृमते—इत्याहुतिद्वयं जुहुयात् ॥ ततः शेषमन्नंरुद्रादित्यपात्रयोर्दत्त्वा पिंडार्थंचान्नशेषयेत् ॥ ततः सव्येनदेवपात्रद्वये अपसव्येन वस्वादिपात्रेषुच उष्णमन्नंसघृतमनेकव्यंजनयुतं सुशीतलजलसहितं यथावत्परिविष्य मधुनाभिघार्य्य ॐमधुवाताऽऋतायते इत्यादिऋचामधुमधुमध्वित्यनेनचाभिमंत्रयेत्॥ ततः

( सव्येन ) उत्तानपाणिभ्यां देवपात्रमालभ्य ॐ पृथिवीते० इतिजप्त्वा इदंविष्णु० इत्येतां वैष्णवीमृचमुच्चार्य्याऽधोमुखाद्विजाङ्गुष्ठमनखंस्वहस्ते नगृहीत्वा ॐ विष्णोहव्यरꣳ रक्ष—इतियजुषाऽन्नेनिवेश्य इदमन्नम् इमा आपः इदमाज्यम् एतत्सर्वंहविरित्युक्त्वा ॐ अपहता० इत्यन्नपात्रंपरितोयवान्विकीर्य दक्षिणकरेणकुशत्रययवजलान्यादाय ॐ अद्यत्रस्वादिश्राद्धसंबंधिनोविश्वेदेवाः इममन्नंसोपस्करं हव्यंपरिविष्टंपरिवेक्ष्यमाणंच ब्राह्मणतृप्तिपर्यंतममृतरूपंवः स्वाहानमः—इत्युच्चार्य्य उदकंदेवतीर्थेनविप्रदक्षिणभागे भूमौक्षिपेत् ॥ ततोऽपसव्येनन्युब्जपाणिभ्यांन्यस्ताभ्यां वसुपात्रमालभ्य ॐ पृथिवीते० इदंविष्णु० इत्यादिपठित्वा ॐ विष्णो कव्यरꣳ रक्षइत्यनयापूर्ववदंगुष्ठंनिवेश्य अपहता० इत्यादिना तिलान्पात्रंपरितोविकीर्य्य द्विगुणभुग्नकुशत्रयादीन्यादाय ॐ अद्यजीवच्छ्राद्धे वसवः इदमन्नंसोपस्करंकव्यंपरिविष्टं परिवेक्ष्यमाणंच ब्राह्मणतृप्तिपर्यंतममृतरूपं युष्मभ्यंस्वधानमः—इत्युदकंपितृतीर्थेनविप्रवामभागेभूमौनिक्षिपेत् ॥ एवमेवरुद्रादित्येभ्योपितत्तन्नाम्नोत्सृजेत् ॥ ततः ॐ अन्नहीनमित्यादिप्रार्थ्य जुषध्वमिच्छातः इतिचोक्त्वा भवंतः प्राशयन्तु इतिब्राह्मणेभ्यः सकृत्सकृदपोशानंदद्यात् ॥ तेच वाग्यताः नियमवंतः ॐकारपूर्वंभुंजेरन् ॥ श्राद्धकर्त्तातेष्वश्नत्सु व्याहृतित्रयपूर्वांसप्रणवांगायत्रींत्रिःसकृद्वाजपेत् ॥ ततः पवित्रपाणिर्दर्भेष्वासीनः ॐ मधुवाताऽऋतायते० इतितृचं मधुमधुमध्वितिचपठेत् ॥ ततः(अपसव्येन)ॐ कृणुष्वपाजः—इत्यादिरक्षोघ्नीः पंचऋचः पठित्वा भूमौतिलान्विकीर्य वस्वादिरूपतया ब्राह्मणान्ध्यायन् ॐ उदीरतामवर—इत्यादिपितृमंत्रान्सहस्रशीर्षेत्यादिपुरुषसूक्तम् ॥ ॐ आशुः शिशानः—इत्याद्यप्रतिरथंचपठेत् ॥ ततः अन्यान्यपिरुचिस्तवप्रभृतीनिपवित्राणिपठेत् ॥ अथतृप्तान्ज्ञात्वा ( अपसव्येन ) उच्छिष्टसन्निधौविप्राग्रतोभूमिंप्रोक्ष्य तत्रदक्षिणाग्रकुशत्रयमास्तीर्य्य सर्वप्रकारमन्नंसव्यंजनमुद्धृत्य सतिलमेकीकृत्य ॐ अग्निदग्धाश्चेतिमंत्रेण

कुशोपरितदन्नंविकिरेत् ॥ ततः (सव्येन) आचम्य हरिंस्मृत्वा ब्राह्मणेभ्योजलगंडूषंदत्त्वा गायत्रीं मधुवाता॰इत्यादित्र्यृचंमधुमधुमध्विति चजपेत् ॥ ततस्तृप्ताःस्थ–इतिपृष्ट्वा तृप्ताःस्मइतितैरुक्ते शेषमन्नंकिंक्रियतामितिपृष्ट्वाइष्टैः सहभुज्यतामित्युक्ते पिंडानहंकरिष्ये–इति पृच्छेत् ॥ कुरुष्वेत्यनुज्ञातोऽपसव्यादिनावस्त्रादिब्राह्मणोच्छिष्टसंनिधौ चतुरस्त्रंमण्डलाकारंवाचतुरंगुलोच्छ्रितंसैकतं वस्त्रादिपिंडदानार्थस्था नंनिर्मायतन्मध्यदेशेदर्भपिंजुलीमूलेन ॐ अपहता॰ इतिसव्योपगृहीतदक्षिणहस्तेनदक्षिणाग्रां रेखांसकृदुल्लिख्य दर्भपिंजुलीमुत्तरस्यांदि शिनिक्षिपेत् ॥ ततः ॐ येरूपाणीतिमंत्रेणज्वलदुल्मुकंरेखोपरिभ्रामयित्वा दक्षिणतोनिदध्यात् ॥ ततः उपमूलसकृदाच्छिन्नदक्षिणाग्र कुशत्रयं रेखोपरिस्तीर्त्वा देवताभ्य॰ इतित्रिर्जपेत् ॥ ततः पुटकत्रये जलतिलगंधपुष्पाणिकृत्वा ॥ एकंपुटकंवामहस्तेकृत्वा मोटकादिन्या दाय ॐ अद्यजीवच्छ्राद्धेवसवः अत्रावनेनिग्ध्वंयुष्मभ्यंस्वधा इतिकुशमूले अवनेजनंदत्त्वा एवमेवरुद्रादित्येभ्यःकुशमध्याग्रयोर्दद्यात् ॥ ततः सर्वस्माच्छ्राद्धशेषान्नादुष्णमन्नमुद्धृत्य मध्वाज्यतिलसर्वव्यंजनयुतंपात्रेकृत्वा बिल्वोपमांस्त्रीन्पिंडान्निर्माय मधुघृताभ्यामभि घार्य्य प्रथमंपिंडमादाय मोटकादिना ॐ अमुकगोत्रस्यममामुकशर्मणो मरणोत्तरभविष्यप्रेतत्वविमुक्त्यर्थं जीवच्छ्राद्धेवसवः एषपिंडः युष्मभ्यंस्वधा–इतिकुशमूलेदत्त्वा एवंरुद्रेभ्यः कुशमध्ये पुनः आदित्येभ्यश्चकुशाग्रेपिंडंदद्यात् ॥ ततः कुशमूले लेपभुजांतृप्तिमुद्दि श्य लेपभागभुजः पितरस्तृप्यन्तु–इति करौप्रोञ्छ्य जलेनप्रक्षाल्य सव्येनत्रिराचम्यविष्णुंस्मरेत् ॥ ततः (अपसव्येन) ॐ अत्रपितरोमा दयध्वंयथाभागमावृषायध्वमितिपठित्वा वामावर्त्तेनोदङ्मुखोभूत्वा श्वासंनियम्य तेनैवपथापरिवृत्य ॐ अमीमदंतपितरोयथाभागमावृषा यिषत–इतिजपेत् ॥ ततः पूर्वदत्तावनेजनावशिष्टजलेनापिण्डोपरिप्रत्यवनेजनंदत्त्वानीवीं विस्रंस्यसव्येनाचम्य(अपसव्येन) ॐनमोवःपितरो

रसाय-इति कृतांजलिः पठेत् ॥ ततः ॐ एतद्वः पितरोवासः-इति पठित्वा पिण्डेषुसूत्राणि प्रतिपिण्डमूर्णादशावादत्त्वा ॐ अद्यत्र
सवः एतद्वासो युष्मभ्यंस्वधा-इत्युत्सृज्य एवंरुद्रादित्येभ्योप्युत्सृजेत् ॥ ततोवस्वादीनुद्दिश्य तदीयपिण्डेषुचूर्णागंधपुष्पधूपदीपतां
बूलदक्षिणादीनिदद्यात् ॥ ततोब्राह्मणहस्तेषु ॐ शिवाआपः संत्वितिसकृत्सकृज्जलंदद्यात् ॥ ॐसौमनस्यमस्त्वितिपुष्पाणि ॐ अक्षतं
चारिष्टमस्त्वितियवांश्चदद्यात् ॥ अस्तु इतिप्रतिवचनम् ॥ ततः कुशतिलजलान्यादाय ॥ ॐ अद्यजीवच्छ्राद्धेनमूनांदत्तैतदन्नपानादिक
मक्षय्यमस्तु-इतिविप्रकरे जलंदद्यात् ॥ एवं रुद्राणामादित्यानांच तत्तद्विप्रकरेदद्यात् ॥ ततः सव्यंकृत्वा प्राङ्मुखस्तन्मनाः कृतांजलिर्द
क्षिणां दिशंपश्यन् ॐ अघोराः पितरः संत्वितिवदेत्॥सन्त्वितितैरुक्ते ॐ गोत्रंनोवर्द्धतामित्यादिवदेत् ॥ सन्त्वितिप्रतिवचनम् ॥ ततः
( अपसव्येन)पिण्डोपरिसपवित्रान्कुशानास्तीर्य स्वधांवाचयिष्ये-इतिब्रूयात्॥वाच्यतामित्यनुज्ञातः पितृभ्यःपितामहेभ्यःप्रपितामहेभ्यश्च
स्वधोच्यतामितिवदेत् ॥ अस्तुस्वधेतितैरुक्ते ॐ ऊर्ज्जंवहंतीरितिमंत्रेण सपवित्रकुशोपरिदक्षिणाग्रांजलधारांदद्यात् ॥ ततः पिण्डानुत्थाप
यामि ॥ उत्थापय-इत्यनुज्ञातःपिण्डानुत्थाप्य स्थाल्यांनिधायाऽवघ्राणं कृत्वापिण्डाधःस्थान्सकृदाच्छिन्नदर्भानुल्मुकंचाग्नौक्षिपेत् ॥
ततोऽर्घपात्राणिसंचाल्यदेवब्राह्मणाभ्यांदक्षिणांदद्यात् ॥ तद्यथा ( सव्येन ) कुशत्रययवजलान्यादाय ॐअद्यकृतैतज्जीवच्छ्राद्धांगभूतवस्वा
दिश्राद्धसंबंधिविश्वेषांदेवानां श्राद्धप्रतिष्ठार्थमिदंतिलपूरितकांस्यपात्रं सदक्षिणममुकगोत्राभ्याममुकशर्मभ्यांब्राह्मणाभ्यामहंसंप्रददे
इतिसंकल्प्य पात्रंताभ्यांप्रतिपादयेत् ॥स्वस्तीतिप्रतिवचनम् ॥ ततः ॐअद्यजीवच्छ्राद्धेवसूनांश्राद्धप्रतिष्ठार्थमिमामुत्तरस्थांसोमोदेश्यकांसो
पस्करांजलधेनुममुकगोत्रायामुकशर्मणेवसुस्थानीयब्राह्मणायतुभ्यमहंसंप्रददे-इतिप्रतिपादयेत् ॥ ततःॐअद्यजीवच्छ्राद्धाङ्गभूतरुद्राणांश्रा

द्धप्रतिष्ठार्थमिमांदक्षिणस्थामस्युद्देश्यकांसोपस्करां जलधेनुममुकगोत्रायामुकशर्मणेरुद्रस्थानीयब्राह्मणायतुभ्यमहंसंप्रददे—इतिदद्यात् ॥ पुनः ॐअद्य० आदित्यानांश्राद्धप्रतिष्ठार्थमिमांमध्यस्थांयमोद्देश्यकांसोपस्करांजलधेनुममुकगोत्रायामुकशर्मणे आदित्यस्थानीयब्राह्मणायतुभ्यमहसंप्रददे—इतिब्राह्मणायप्रतिपादयेत् ॥ ततःॐविश्वेदेवाःप्रीयंतामितिभवंतोऽधिब्रुवंतु—इतिदेवद्विजान्वाचयित्वा ॐप्रीयंतांवोविश्वेदेवाः इतिप्रतिवचनान्तरम् ॐवाजेवाजेइतिमंत्रेणवस्वादिब्राह्मणानुत्थाप्य पंक्तिमूर्द्धन्यमंगुष्ठेनगृहीत्वा गृहीतोदकपात्रोविसर्जयेत्॥ एवमेव देवब्राह्मणौविसर्जयेत् ॥ ततस्तान्बहिःस्थितान् ॐआमावाजस्यइतिप्रदक्षिणीकृत्याष्टौपदान्यनुव्रज्यगृहंप्रविशेत्॥ततोरक्षादीपान्निर्वाप्य उच्छिष्टापनयनं पिण्डप्रतिपत्तिंजलादिप्रक्षेपणरूपांकृत्वा हस्तौपादौप्रक्षाल्याचम्य ॐनमोनारायणाय—इतिजपन्विष्णोक्षमस्व स्वस्थानंगच्छ—इत्युक्त्वापुष्पांजलिनाविष्णुंविसृज्य ब्राह्मणेभ्योभूरिभोजनंदत्त्वा वैश्वदेवान्तेस्त्रयंपारणंकृत्वा सायंसंध्यादिकर्मसमाप्यकामकालेशानिशेषकंविष्णुंस्मरन्यथाशक्तिजागरणंकुर्यात् ॥ इतित्रयोदशीकृत्यम् ॥ अथचतुर्दशीकृत्यम् ॥ तावत्प्रातःस्नानादिपंचयज्ञांतंनित्यकृत्यं निर्वर्त्य ब्राह्मणोग्रामस्यपूर्वद्वारेण उत्तरेणक्षत्रियः पश्चिमेनवैश्यः दक्षिणेनशूद्रोयवान्वस्त्राणिलोहखंडानिच ॐजितंतेपुंडरीकाक्ष नमस्ते विश्वभावन ॥ नमस्तेस्तुहृषीकेश महापुरुषपूर्वज—इतिपठन्विकिरन् महानद्यादिकेतीरेकूपेतरजलाशयेवायथासंभवंगच्छेत ॥ तत्रभूमिंसंशोध्य दक्षिणाभिमुखोभूत्वा स्मार्ताग्निंलौकिकाग्निंवास्वयंप्रज्वाल्य चितार्थंस्थानंसंचिंत्य त्रैवर्णिकद्वाराचितांनिर्माय पूर्वप्रज्वालितेग्नौ आज्येनाहुतित्रयंजुहुयात् ॥ ॐभूम्यैस्वाहा ॥ १ ॥ ॐयमायस्वाहा ॥ २ ॥ ॐरुद्रायस्वाहा ॥ ३ ॥ इतिहुत्वा ततःपंचाशत्कुशान्गृहीत्वापुरुषाकारप्रतिकृतिंकुर्यात्॥तद्यथा—ॐअद्यब्रह्मलोकगमनहेतुकाम आत्मप्रतिकृतिंकरिष्ये—अथवा अमुकत्रैवर्णिकद्वाराकारयिष्ये—इति

संकल्प्य मनुष्याकारंपुत्तलकंकृत्वा ऊर्णांसूत्रेणप्रत्यंगंबद्धायवपिष्टेनलिप्त्वा ॐगयादीनिचतीर्थानि—इत्यादिमंत्रैर्जलेसर्वतीर्थान्यावाह्यतेन जलेनप्रतिकृतिंस्नाप्य गोपीचंदनगंगोदकादिनोपलिप्य शुद्धवस्त्रयज्ञोपवीततुलसीपत्रमालादिभिर्भूषितंशवरूपिणंकृत्वा पूर्वनिर्मितचिता यामास्तीर्णकुशायामूर्ध्वमुखंसंस्थाप्यमन्त्रेणाच्छाद्यपिंडदानंकुर्यात् ॥ तत्रदक्षिणाभिमुखः कुशत्रयतिलजलान्यादाय ॐअद्यममामुक गोत्रस्यमरणोत्तरभविष्यप्रेतत्वनिवृत्त्यर्थंयवपिंडदानमहंकरिष्ये—इतिसंकल्प्य चतुष्कोणंमंडलंकृत्वा तत्रदक्षिणाग्रान्दर्भानास्तीर्य्यापि सव्यंकृत्वा यवपिष्टेनतिलमधुघृतदुग्धयुक्तेनपंचपिण्डान्निर्माय एकंपिंडंकुशादीनिचादाय ॐअमुकगोत्रस्यममामुकशर्मणो भविष्यमरणो त्तरमृत्युस्थानभूम्यधिष्ठानदेवताप्रीत्यर्थंमेपमेपिण्डः स्वधा—इतिकुशोपरिदद्यात् ॥ १ ॥ पुनः द्वितीयंपिण्डमादाय ॐअमुक०द्वारदेशे गृहवास्त्वधिदेवताप्रीत्यर्थंमेपमोपिण्डःस्वधा—इतिद्वतीयं० ॥ २ ॥ तृतीयंवृक्षमूले ॐअद्यामुक० मरणोत्तरविश्रांतस्थानेपिशाचराक्षस यक्षप्रीत्यर्थंमेपमेपिण्डःस्वधा—इतितृती० ॥३॥ चतुर्थम् ॐअद्यामुक०मरणोत्तरचत्वराधिष्ठतृखेचरदेवताप्रीत्यर्थंमेपमेपिंडःस्वधा—इतिदद्या त् ॥ ४ ॥ ततःपाषाणलोष्टसंचयेश्मशानदेवताःसंपूज्य गोमयोपलिप्तायांभूमौपंचभूसंस्कारान्कृत्वा तत्रतुलसीचंदनादियज्ञियकाष्ठै र्चितिंनिर्माय तत्रात्मप्रतिकृतिंस्थाप्य: तद्दक्षिणभागेकुशोपरि ॐअद्यचितास्थानेश्मशानवासिभूतादिप्रीत्यर्थंमेपमेपिण्डःस्वधा—इतिपि ण्डंदद्यात् ॥ ततःतद्दक्षिणकुशोपर्यंपिण्डंदत्त्वाततोऽग्निंप्रज्वाल्य ॐक्रव्यादायनमः इतिगंधादिनासंपूज्य ॐअस्मात्त्वमभिजातोसि इतिघृ ताहुतिंदत्त्वा प्रथमंशिरोभागेस्वयंदहेत् ॥ ततःस्थलान्तरेभूमिशुद्धिंकृत्वा तत्र अग्न्यंतरंप्रज्वाल्य मुद्गतंडुलतिलतंडुलचरुस्थालीद्वयनिर्वापं कृत्वा प्रत्येकंमधुक्षीरघृतोदकैःपूरयेत् ॥ तत्समीपेमुद्गपूरितानित्रीणिशरावाणिकृत्वा ॐपृथिव्यैनमस्तुभ्यमित्येकंभूम्यैनिवेद्य ॐय

मायनमस्तुभ्यमित्यनेनद्वितीयंयमाय० ॐरुद्रायश्मशानपतयेनमः इतितृतीयंरुद्रायनिवेदयेत् ॥ ततोदीप्तप्रतिकृतिदाहमाग्निम् ॐकव्या दवाह्नितमायैसुम्यैनमः इतिपठन्क्षीराक्तजलकुंभजलेन निर्वापयेत् ॥ ततः नद्यादिकेस्नात्वा, नाभिमात्रेजलेस्थित्वा दक्षिणामुखः (प्राचीनावीती) ॐयमायस्वधानमः ॥ ॐधर्मराजायस्वधानमः ॥ ॐमृत्यवे० ॥ ॐअन्तकाय० ॥ ॐ वैवस्वताय० ॥ ॐकालायस्व धा० ॥ ॐसर्वप्राणहरायस्वधानमः—इतिप्रत्येकंसतिलजलांजलिंदत्त्वा बाहिरागत्य ॐरुद्रायश्मशानपतयेनमः—इतिमंत्रेणतिलोदकपूर्णकुंभं भुविविकिरेत् ॥ ततो भूमौदक्षिणाग्रकुशत्रयमास्तीर्य्य ॐशुक्रवाहाय रुद्रायस्वधानमः इतिमंत्रं स्मरन् ॐअमुकगोत्राऽमुकशर्मन् इदंतिलोदकंतुभ्यमस्तु—इतितिलोदकं स्वस्मैदर्भोपरिदद्यात् ॥ ततः—पूर्वकृतचरुद्वयोद्धृताभ्यां मुद्गभक्त १—तिलभक्ताभ्यां २—प्रत्येकंपंच पंच—इत्येवंदशपिण्डान्निर्माय मरणोत्तरीयदशपिंडदानेतिकर्त्तव्यतया प्रेतशब्दोच्चारणरहिततया दशपिण्डान्दद्यात् ॥ तद्यथा ॐ अद्यामुकगोत्रस्य ममामुकशर्मणः कर्त्तव्योर्ध्वदेहिकक्रियायां शरीरावयवपूरकदशपिण्डदानमहंकरिष्ये—इतिसंकल्प्य ॥ गौरस्मृति कांस्थाप्य (अपसव्येन) दर्भास्तरणमवनेजनंचकृत्वा तिलजलमधुघृतक्षीरयुक्तमुष्णंपिण्डं कुशतिलजलानिचादाय ॥ ॐअद्येत्यादि० ममामुकगोत्रस्य जीवतआत्मनःकर्त्तव्योर्द्ध्वदेहिकक्रियायांस्वशरीरसंपादनार्थे एपशिरःपूरकः प्रथमः पिण्डोमेस्वधा—इतिदर्भोपरि दद्यात् ॥ १ ॥ एवं कर्णाक्षिनासिकाव्यंगसंपादनार्थंद्वितीयः ॥ २ ॥ गलांसभुजवक्षःसंपादनार्थंतृतीयः ॥ ३ ॥ नाभिलिंगगुदपूरकः चतुर्थः ॥ ४ ॥ जानुजंघापादपूरकः पंचमः ॥ ५ ॥ सर्वमर्मपूरकः षष्ठः ॥ ६ ॥ सर्वनाडीपूरकः सप्तमः ॥ ७ ॥ दन्तलोमादिपूरकोऽ ष्टमः ॥ ८ ॥ वीर्यपूरकोनवमः ॥ ९ ॥ पूर्णत्वतृप्तित्वक्षुत्पिपासाविपर्ययपूरकोदशमः ॥ १० ॥ ततः प्रत्येकंप्रत्यवनेजनं गंधादिदानंच

दत्त्वा प्रतिदिनसंख्यया तिलतोयांजलयस्तिलतोयपात्राणि च दद्यात् ॥ ततः सर्वेषामक्षय्योस्तु—इति पठित्वा प्रसन्नवदनः श्रीविष्णुंस्मरेत् ॥ ततः
पिण्डानामुष्णत्वे निवृत्ते एकैकं पिंडं जलकुंभे निधाय नाभिमात्रे जले गत्वा एकैकं दक्षिणामुखो जलमध्ये क्षिपेत् ॥ ततः पंचपंचाशज्जलकुंभान्
तदभावे शरावाणि वा जलांजलीन्नामगोत्राभ्यां दद्यात् ॥ तद्यथा—ॐ अद्यामुकगोत्रस्यामुकशर्मणो मम जीवत आत्मनः कर्त्तव्यौर्द्ध्वदैहिकक्रिया
यां मरणोत्तरगंतव्यपरलोके क्षुधातृषानिवारणार्थमेते पंचपंचाशत्कुंभास्तिलमधुक्षीरयुताः अथवा अंजलयः अश्वत्थमूले मे स्वधा—इति दद्या
त् ॥ ततो गृहमागत्य सायं गृहद्वारोपांते त्रिकाष्ठिकादौ पात्रद्वयं जलक्षीराभ्यामापूर्य्य ॐ जीवात्रस्नाहि—इति जलपात्रम् ॐ जीव इदं दुग्धं पिबे
ति दुग्धपात्रं च निवेदयेत् ॥ यद्यप्यत्र माल्यं नोक्तं तथापि तदपि बोध्यं प्रकृतौ दर्शनात् ॥ ततो रात्रौ दक्षिणाग्रदर्भेषु उदङ्मुखः स्वपेत् ॥ प्रातरा
द्यादिश्राद्धविधानादेकरात्रमाशौचं वदन्ति ॥ इति चतुर्दशीकृत्यम् ॥ अथामावास्याकृत्यम् ॥ प्रातरमावास्यायां सूर्य्योदयानंतरं स्नात्वाऽग्निश्रा
दिक्रमेण वायांशुधंप्रतोदयाष्टिंस्पृष्ट्वा ततोऽनद्यादितीरे भूमिशुद्धिं कृत्वा गोमयोदकेनोपलिप्य ॥ तत्र सपिण्डस्त्रीद्वारा वा नूतनपात्रैः पाकमार
भेत् ॥ पाके कृते प्रथमं षष्ट्युत्तरत्रिशतघट ३६०—दानमंजलिदानं वा अश्वत्थमूले कुर्यात् ॥ तद्यथा ॐ अद्येत्यादि पठित्वा अमुकगोत्रस्य
ममामुकशर्मणो जीवत आत्मनः कर्त्तव्यौर्द्ध्वदैहिकक्रियायां मरणोत्तरभविष्यप्रेतत्वविमुक्तिकामः षष्ट्यधिकशतत्रयघटदानं वा अंजलिदानं
करिष्ये—इति संकल्प्य दद्यात् ॥ ततः आद्यादिषोडशश्राद्धं प्रेतशब्दरहितं स्वधांतेन कुर्यात् ॥ तद्यथा—कुशत्रयतिलजलान्यादाय अद्येत्यादि
पठित्वा ॐ अमुकगोत्रस्य ममामुकशर्मणो जीवत आत्मनः कर्त्तव्यौर्द्ध्वदैहिकक्रियायां मरणोत्तरभविष्यप्रेतत्वविमुक्तिकामः आद्यादिषोडश
श्राद्धान्यहं करिष्ये इति संकल्प्य पूर्वोक्तप्रेतकल्पीयाद्यादिषोडशश्राद्धविधिना प्रेतशब्दवर्ज्यं स्वधादिप्रयोगेण कुर्यात् ॥ ततः षष्ट्युत्तरशतत्रयघ

वपिण्डान्दीपांश्चदद्यात् ॥ आद्यादिश्राद्धसमीपे कर्पूत्रयं घृतान्नदधिभिःपूरयेत् ॥ ततः शय्यादानंकांचनमूर्त्तिदानं वृषोत्सर्गादिकर्मकृत्वा ततोवसुरुद्रादित्यैःसह सपिण्डनोक्तविधिनासपिण्डनश्राद्धंकुर्यात् । ततोमोक्षधेनुदानं ब्राह्मणभोजनंविष्णुस्मरणम् ॥ इति श्रीपं० चतुर्थी लालगौड०श्राद्धप्र०ब्रह्मपुराणहेमाद्रिकल्पतरुप्रोक्तजीवच्छ्राद्धपद्धतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

अथजलधेनुदानप्रयोगः ॥ ॥ तत्रतावत्पूर्वोक्तविधिनासवत्सांगांपरिकल्प्य प्रातःस्नानादिनित्यक्रियांसमाप्यशुक्लाम्बरधरःशुद्धासनोपरि प्राङ्मुख उपविश्य गणेशंसूर्यादिग्रहांश्चपूजयेत् ॥ ततोदेशकालौसंकीर्त्य सर्वपापक्षयपूर्वकाशेषयज्ञफलप्राप्तिसहितभुक्तिमुक्तिकामोजीवच्छ्राद्धनिमित्तहेतवेजलधेनुदानमहंकरिष्ये-इतिसंकल्प्य ॐकुरुष्वेत्यनुज्ञातःस्वस्त्ययनंपुण्याहवाचनमाचार्यवरणंचकुर्यात् ॥ ततोवरणद्रव्यं गृहीत्वा ॐअद्यकर्त्तव्यजलधेनुदानकर्मण्येभिर्द्रव्यैस्त्वामहंवृणे॥वृतोस्मीतिप्रतिवचनम् ॥ इतिवृत्वाहिरण्मयंश्रीजलशायिनंभगवंतंपुरुषसूक्तेनषोडशोपचारैःपूजयेत्॥ ततोधेनुपूजनम् ॥ ॐसवत्सजलधेनवेनंदिन्यैसुभगायैसुशीलायैसुभद्रायैकामधेनवेनमः॥आवाहनंसमर्पयामि इत्यावाह्यप्रतिष्ठाप्य आसनपाद्यार्घ्याचमनीयस्नानवस्त्रगंधपुष्पधूपदीपनैवेद्यतांबूलगोग्रासादिभिःप्रत्यक्षगोदानप्रकारैःपूजयेत् ॥ ततः प्रदक्षिणीकृत्य ॐ यालक्ष्मीःसर्वभूतानां याचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवी ममपापंव्यपोहतु ॥१॥ देहस्थायाचरुद्राणीशंकरस्यसदा प्रिया ॥ धेनुरूपेण० ॥ २ ॥ विष्णोर्वक्षसियालक्ष्मीः स्वाहाचैवविभावसोः ॥ चंद्रार्कशक्रशक्तिर्या धेनुरूपेणसास्थिता ॥३॥ चतुर्मुखस्य यालक्ष्मीर्यालक्ष्मीर्धनदस्यच ॥ लक्ष्मीर्यालोकपालानां साधेनुर्वरदास्तुमे ॥ ४ ॥ स्वधात्वंपितृमुख्यानां स्वाहायज्ञभुजांतथा ॥ सर्वपापहराधेनुस्तस्माच्छांतिंप्रयच्छमे ॥ ५ ॥ शेषपर्यंकशयनः श्रीशार्ङ्गायुधभूषणः ॥ जलशायीजगद्योनिःप्रीयतांमयिकेशवः ॥६ ॥ इतिप्रार्थ्य

गोपुच्छंगृहीत्वा ॥ अद्येत्यादिदेशकालौसंकीर्त्य । आत्मनः सर्वपापक्षयपूर्वकभगवद्वासुदेवप्रीतिकामोर्जीवतआत्मनःकर्त्तव्यौर्द्ध्वदेहिकक्रियायांमरणोत्तरभविष्यप्रेतभावनिवृत्तयेकर्तव्यजीवच्छ्राद्धेवसुरुद्रादित्यरूपब्राह्मणेभ्योदातव्यदक्षिणार्थमिमांजलधेनुं श्रीहिरण्मयविष्णुप्रतिमायुतां मृन्मयकलशजलपूरितांपंचरत्नगर्भामष्टादशान्नैर्निर्मितां सितवस्त्रयुगच्छन्नां दूर्वापल्लवशोभितां कुष्टमांसीमुरोशीरामलकनासिकायुतां प्रियंगुपत्रश्रवणां यज्ञोपवीताशिरां गुडास्यां शर्कराजिह्वां नवनीतस्तनां स्वर्णनेत्रयुतां क्षौमपुच्छांदिक्चतुष्टयस्थापितताम्रमयतिलपात्रयुतां कांस्यदोहांघृतक्षौद्रवन्मुखीं छत्रोपानद्युतांमृगाजिनोपरिविनिर्मितांदर्भविष्टरसंस्थितामिक्षुदंडपादां सितकमलांसितसूत्राशिरालामगरुकाष्ठनासिकां सुगंधपुष्पयुतांपूगीफलदंतांसितसर्षपरोमकां स्वर्णशृंगींरौप्यखुरांताम्रपृष्ठींगंधादिनासुपूजितांचतुर्थभागवत्ससहितां यथानामगोत्रायब्राह्मणायदातुमहमुत्सृजे॥स्वस्तीतिप्रतिवचनम् ॥ इतिदत्त्वा पूर्वोक्तप्रार्थनांकृत्वा दानप्रतिष्ठार्थंदक्षिणांदद्यात् ॥ इतिजलधेनुदानविधिः॥ अथ जीवच्छ्राद्धकर्मणःसामग्रीलिख्यते ॥ स्वर्णमयीविष्णुप्रतिमा १ स्वर्णशकले २ सुवर्णशलाका १ पंचरत्नपुडिकाः ५ चंदनं कुंकुमं केशरम् अगरु कर्पूरं पुष्पाणि पुष्पमाला धूपः दीपवर्त्तिका मोदकादिनैवेद्यं पूगीफलानि तांबूलानि ऋतुफलानि यज्ञोपवीतानि ताम्रकलशः १ मृन्मयकलशाः २ तिलपूर्णताम्रपात्रं १ श्वेतवस्त्रं रक्तसूत्रं दूर्वा आम्रपल्लवाः कांस्यपात्राणिघृतमधुदधिपूरितानि १२ कुष्ठ–जटामांसी–मुरा–उशीर–आमलकानि तिलपूरितताम्रपात्राणि १२छत्राणि२ उपानहौ २ स्वर्णशृंगाणि ६ रौप्यखुराणि १२ ताम्रपृष्ठानि ३ चतुर्थांशद्रव्यरचितवत्साः ३ श्राद्धसामग्री–वस्त्राणि उत्तरीयवस्त्राणि आसनानि ५ जलपात्राणि ५ भोजनपात्राणि ५ पत्रपुटकानि ५० कर्मपात्रे २ आचमनपात्रम् १ अर्घ्यपात्रेताम्रमये२ तिलाः पीतसर्षपाः तैलदीपकपात्राणि ५ भक्ष्यभो

ज्याद्यन्नं शाकानि घृतदधिमधूनि गंगाजलं कांस्यपात्रं सुशीतलजलं यवाः तंडुलाः वस्त्रखंडानि लोहखंडानि पंचाशद्दर्भरचितत्रिसूत्राणि ४ पंचाशद्दर्भरचितंपुरुषाकारपुत्तलम् १ ऊर्णासूत्राणि, यवपिष्टं, तुलसीपत्रमाला, यज्ञियकाष्ठरचिताचिता १ गोपीचंदनं गंगामृत्तिका शालग्रामप्रतिमासांगा१गोमयं पंचगव्यं दधि दुग्धं शर्करा चरुश्रपणार्थंतंडुलाः । शरावाणि मुद्राः सप्तधान्यम् ॥ गोदानसामग्री शय्यासोपस्करा गोदानम् ऋणधेनुः मोक्षधेनुः प्रायश्चित्तधेनुः वृषोत्सर्गद्रव्याणि कांचनपुरुषः अष्टौ महादानानि पददानं दक्षिणाभूयसी ब्राह्मणभोजनं प्रियंगुपत्राणि गुडं नवनीतं क्षौमवस्त्रं पीतवस्त्रं दोहनपात्रं मृगाजिनानि २ इक्षुदंडान् ४ कंबलानि ३ घण्टाः३ इत्याद्युपकरणानि ॥ अथलिङ्गपुराणोक्तजीवच्छ्राद्धपद्धतिः ॥ तत्रतावत्पुत्राद्यधिकाररहितः स्वीयंश्राद्धंकर्तुमिच्छुर्मरणकालेसमासन्ने कृष्णद्वादश्यामुपवासंकृत्वा पर्वतेवानदीतीरे वनेदेवालयेवा गंधवर्णरसादिभिर्भूमिंविधिनापरीक्ष्य तत्रखननसंप्लावनगोमयोपलेपनादिभिःशुद्धिंसंपाद्यत्रयोदश्यामुक्तस्थानेसंभारानुपकल्पयेत् ॥ ततस्तद्दिनेप्रातर्नद्यादिकेयथाविधिस्नात्वाशुक्लवाससीपरिधाय संध्यादिनित्यकर्मसमाप्य मध्ये पूजार्थं स्थंडिलंकृत्वातत्रलिंगतोभद्रंसर्वतोभद्रंवाविलिख्य तत्प्राग्दिशिहस्तमात्रंचतुरस्रंकुंडमथवा इषुमात्रंस्थंडिलंसैकतंकुर्यात् ॥ ततः स्वासनेप्राङ्मुखउपविश्य आचमनंप्राणायामंचकृत्वा देशकालौसंकीर्त्य ॐ अद्यामुकगोत्रस्यामुकशर्मणोममजीवात्मनः कर्त्तव्यौर्ध्वदैहिकक्रियायांमरणोत्तरभविष्यप्रेतत्वविमुक्तिपूर्वकजीवन्मुक्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थंलिंगपुराणोक्तजीवच्छ्राद्धविधिंकरिष्ये—इतिसंकल्प्य सुमुखश्चेत्यादिस्मरणपूर्वकगणेशनवग्रहकुलदेवान्संपूज्य पुण्याहस्वस्त्ययनंवाचयित्वा आचार्यादिवरणंचकृत्वा तान्वस्त्राङ्गुलीयकदक्षिणाभिः संतोष्य कुंडेस्थंडिलेवापंचभूसंस्कारान्संपाद्य तत्रस्वगृह्योक्तविधिनाऽग्निंस्थापयेत् ततःपूजास्थंडिलपश्चिमतः प्राङ्

सुखउपविश्य ॐ अद्यजीवच्छ्राद्धांगभूतं ब्रह्मादिदेवस्थापनंपूजनंचकरिष्ये—इतिसंकल्प्य पुष्पाण्यादायमंडलेब्रह्मादीन्स्थापयेत् ॥ ( तत्र मंत्राः ) ॐ भूः ब्रह्मणेनमः ब्रह्माणंस्थापयामि ॥ १ ॥ ॐ भुवः विष्णवेनमः विष्णुंस्थापयामि ॥ २ ॥ ॐ स्वः रुद्रायनमः रुद्रंस्थापयामि ॥ ३ ॥ एवंद्वितीयोद्देशेनसर्वत्र ॥ ॐ महः ईश्वरायनमः ॥ ४ ॥ ॐ जनः प्रकृतयेनमः ॥ ५ ॥ ॐ तपः पुद्गलायनमः ॥ ६ ॥ ॐ ऋतंपुरुषायनमः ॥ ७ ॥ ॐ सत्यंशिवायनमः ॥ ८ ॥ ॐ शर्व्वधरांमेगोपाय घ्राणेगंधंशर्व्वायदेवायभूर्नमः ॥ ९ ॥ ॐ शर्व्वधरांमेगोपाय घ्राणेगंधंशर्व्वस्यदेवस्य पत्न्यैभूर्नमः ॥१०॥ ॐ भवजलंमेगोपायजिह्वायांरसंभवायदेवायभुवोनमः ॥११॥ ॐ भवजलंमेगोपायजिह्वायां रसंभवस्यदेवस्यपत्न्यैभुवोनमः ॥ १२ ॥ ॐरुद्राग्निंमेगोपायनेत्ररूपं रुद्रायदेवायस्वर्नमः ॥ १३ ॥ ॐ रुद्राग्निंमेगोपायनेत्ररूपंरुद्रस्यदेवस्यपत्न्यैस्वर्नमः ॥ १४ ॥ ॐउग्रवायुंमेगोपायत्वचिस्पर्शमुग्रायदेवायमहोनमः ॥ १५ ॥ ॐ उग्रवायुंमेगोपायत्वचिस्पर्शमुग्रस्यदेवस्य पत्न्यैमहोनमः ॥ १६ ॥ ॐभीमसुपिरंमेगोपायश्रोत्रेशब्दंभीमायदेवायजनोनमः ॥ १७ ॥ ॐ भीमसुपिरंमेगोपायश्रोत्रेशब्दंभीमस्यदेवस्यपत्न्यैजनोनमः ॥ १८ ॥ ॐ ईशरजोमेगोपाय द्रव्येतृष्णमीशायदेवायतपोनमः ॥ १९ ॥ ॐ ईशरजोमेगोपाय द्रव्येतृष्णामीशस्यदेवस्यपत्न्यैतपोनमः २० ॥ ॐ महादेव सत्यंमेगोपायश्रद्धांधर्म्मेमहादेवाय ऋतंनमः ॥ २१ ॥ ॐ महादेवसत्यंमेगोपायश्रद्धांधर्म्मेमहादेवस्यपत्न्यैऋतंनमः ॥ २२ ॥ ॐपशुपतेपाशंमेगोपाय भोक्तृत्वंभोग्ये पशुपतयेदेवायसत्यंनमः ॥ २३ ॥ ॐ पशुपतेपाशंमेगोपाय भोक्तृत्वंभोग्ये पशुपतेर्देवस्यपत्न्यैसत्यंनमः ॥ २४ ॥ ॐ शिवायसत्यंनमः शिवसत्यंस्थापयामि ॥ २५ ॥ एवंसंस्थाप्य ॐमनोजूतिर्जुषतामितिप्रतिष्ठांकृत्वा उक्तक्रमेणप्रत्येकम् ॐ ब्रह्मादिशिवसत्यांतस्थापितदेवताभ्योनमः—इतितंत्रेणवाषोडशोपचारैः संपूज्य ततः समा

चारान्मंडलमध्ये ताम्रफलशंयथाविधिसंस्थाप्य तत्रैहमंरुद्रंपूजयेत् ॥ ततः अग्नेःपरिस्तरणादिप्रोक्षणपर्य्यंतंयथाशास्त्रंसमाप्य समिद्धतमे ग्नौघृतेन आघारावाज्यभागौहुत्वा स्थंडिलेऽग्निंसंपूज्य समिच्चरुघृतैः पृथक्पात्रस्थैः पृथक्पृथक् होमंकुर्यात् ॥ ( तत्रमंत्राः ) ॐभूर्ब्रह्मणेस्वाहाइदंब्रह्मणे ॥ १ ॥ ॐभुवः विष्णवेस्वाहा इदंविष्णवे ॥ २ ॥ ॐस्वःरुद्रायस्वाहा इदंरुद्राय ॥ ३ ॥ ॐमहः ईश्वरायस्वाहा इदं० ॥ ४ ॥ ॐजनः प्रकृतयेस्वाहा इदं० ॥ ५ ॥ ॐ तपः पुद्गलायस्वाहा इदं० ॥ ६ ॥ ॐ ऋतंपुरुषायस्वाहा इदं० ॥ ७ ॥ ॐसत्यंशिवायस्वाहा इदं० ॥ ८ ॥ ॐशर्वधरांमेगोपायघ्राणेगंधंशर्वायदेवायभूः स्वाहा इदंशर्वायदेवाय ॥ ९ ॥ ॐशर्व्वधरांमेगोपायघ्राणेगंधं शर्वस्यदेवस्यपत्न्यैभूः स्वाहा इदंशर्वस्यदेवस्यपत्न्यै ॥ १० ॥ ॐ भवजलंमेगोपायजिह्वायांरसं भवायदेवायभुवःस्वाहा इदंभवाय ॥ ११ ॥ ॐ भवजलंमेगोपायजिह्वायांरसंभवस्यदेवस्यपत्न्यैभुवःस्वाहा इदंभवपत्न्यै ॥ १२ ॥ रुद्राग्निंमेगोपायनेत्ररूपंरुद्रायदेवायस्वःस्वाहा इदंरुद्राय ॥ १३ ॥ ॐ रुद्राग्निंमेगोपायनेत्ररूपंरुद्रस्यदेवस्य पत्न्यैस्वःस्वाहा इदंरुद्रपत्न्यै ॥ १४ ॥ ॐउग्रवायुंमेगोपायत्वचिस्पर्शमुग्रायदेवायमहः स्वाहा इदमुग्राय ॥ १५ ॥ उग्रवायुंमेगोपायत्वचिस्पर्शमुग्रस्यदेवस्यपत्न्यैमहः इदमुग्रपत्न्यै ॥ १६ ॥ ॐ भीमसुषिरंमेगोपायश्रोत्रेशब्दं भीमायदेवाय जनः स्वाहा इदं भीमाय ॥ १७ ॥ ॐभीमसुषिरंमे गोपायश्रोत्रे शब्दंभीमस्यदेवस्यपत्न्यैजनः स्वाहा इदंभीमपत्न्यै ॥ १८ ॥ ॐईशरजोमे गोपायद्रव्येतृष्णामीशायदेवायतपः स्वाहा इदमीशाय ॥ १९ ॥ ॐईशरजोमेगोपाय द्रव्येतृष्णामीशस्यदेवस्यपत्न्यैतपः स्वाहा इदमीशपत्न्यै ॥ २० ॥ ॐमहादेव सत्यंमेगोपायश्रद्धांधर्मे महादेवायऋतं स्वाहा इदं महादेवाय ॥ २१ ॥ ॐमहादेवसत्यंमेगोपायश्रद्धांधर्म्मेमहादेवस्यपत्न्यैऋतं स्वाहा इदंमहादेवस्यपत्न्यै ॥ २२ ॥ ॐपशुपतेपाशंमे

गोपाय भोक्तृत्वंभोग्येपशुपतये देवायसत्यं स्वाहा इदं पशुपतये ॥ २३ ॥ ॐपशुपतेपाशंमेगोपायभोक्तृत्वं भोग्येपशुपतेर्देवस्य पत्न्यैसत्यं स्वाहा इदं पशुपतेः पत्न्यै ॥ २४ ॥ ॐशिवायसत्यं स्वाहा इदं शिवायसत्यम् ॥ २५ ॥ ॐशिवस्यपत्न्यै स्वाहा इदं शिवस्यपत्न्यै ॥ २६ ॥ इत्येतैः पड्विंशतिमन्त्रहुत्वा पुनः संहारक्रमेण ॐसत्यं शिवायेत्यादिब्रह्मणेस्वाहा इत्यंतमष्टौ तथा पशुपतिपत्न्यादिसर्वान्तमुक्तक्रमेणसंपूज्यघृतचरुसमित्क्रमात्प्रत्येकं होतव्यम् ॥ ततः केवलनवतेन ॐशर्वधरांमेछिन्धि प्राणोगंधंछिन्धि मेऽघंजहिभूः स्वाहा ॥ १ ॥ ॐभवजलंमेछिन्धि जिह्वायांरसं छिन्धिमेऽघंजहिभुवः स्वाहा ॥ २ ॥ ॐ रुद्र आग्निंमेछिंधिनेत्ररूपंछिन्धिमेऽघंजहिस्वः स्वाहा ॥ ३ ॥ ॐ उग्रवायुंमे छिन्धित्वचिस्पर्शं छिन्धिमेऽघंजहि भूर्भुवः स्वः स्वाहा ॥ ४ ॥ एतैश्चतुर्भिर्मन्त्रैः सहस्रंपंचशतंवाष्टोत्तरशतं जुहुयात् ॥ ततः आज्येनैव ॐ प्राणेनिविष्टोऽमृतंजुहोमिशिवोमाविशाप्रदाहायप्राणायस्वाहा ॥ १ ॥ ॐ प्राणाधिपतयेरुद्रायवृषातकायस्वाहा ॥ २ ॥ ॐभूः स्वाहा ॥ ३ ॥ ॐभुवः स्वाहा ॥ ४ ॥ ॐ स्वः स्वाहा ॥ ५ ॥ ॐ भूर्भुवः स्वः स्वाहा ॥ ६ ॥ एतैः षण्मंत्रैरष्टोत्तरशताहुतीर्जुहुयात् ॥ एवं सप्ताहंप्रत्यहं यथोक्तंहुत्वास्वगृह्योक्तस्विष्टकृदादिपूर्णाहुत्यंतंकर्म्मसमाप्य सप्तमेऽहनि विप्रान्निमंत्र्य ॥ शर्व० १ भव० २ रुद्र० ३ उग्र० ४ भीम० ५ ईशान० ६ महादेव ७ पशुपात० ८ इत्येभ्योऽष्टौपिण्डान्दत्त्वा निमंत्रितानष्टौब्राह्मणाञ्छ्राद्धार्हान्भोजयित्वा वस्त्राभरणवाहनशयनकांस्यासनभाजनसुवर्णरजतधेनुतिलक्षेत्रगृहदासीदासदक्षिणादिभिःसंतोष्य ब्राह्मणसहस्रंसदक्षिणं भोजयेत् ॥ दिनत्रयंरुद्रस्यबहुचरुनिवेदनम् ॥ एवंकृतेजीवन्मुक्तः स्यात् ॥ इति लिङ्गपुराणोक्तजीवच्छ्राद्धपद्धतिः ॥ इतिश्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनगरनिवासिना श्रीवसिष्टकुलोद्भवश्रीरामकृष्णपौत्रेणश्रीकस्तूरिचन्द्रसूनुनाश्रीमहादेवभक्तमाध्यंदिनवाजसनेयिनापंडितगौडश्रीचतुर्थीलालशर्म्मणा विरचिते गौडीयश्राद्धप्रकाशे महानिबन्धेपद्धतिखंडे पष्ठंप्रकरणंसमाप्तम् ॥ ६ ॥ ॥ छ ॥

॥अथ शूद्रश्राद्धपद्धतिप्रकरणम्॥उक्ताद्विजानांश्राद्धस्य विधिःकृत्स्नंसमंत्रकम् ॥ अधुनाशूद्रजातीनां करोमिश्राद्धपद्धतिम् ॥१॥ अत्रमरण समयादारभ्यसांवत्सरिकपूर्वकपार्वणान्तंकर्म्मउच्यते ॥ तत्रतावत्पुत्रादिरासन्नमृत्युंपित्रादिंज्ञात्वापूर्वकृतसमस्तपातकनिरासार्थंषडब्दमब्दं सार्द्धाब्दं वा तत्प्रतिनिधिरूपं धेनुदानं तीर्थयात्रा ब्राह्मणभोजनं वा स्वर्णरूप्ययोर्निष्कं[3] तदर्द्धंवा गोवृषमूल्यं यथाश क्त्यनुरूपंप्रायश्चित्तंतद्द्वाराकारयेत् ॥ तदशक्तोस्वयंवाकुर्य्यात् ॥ एवंप्रायश्चित्तंकृत्वा ॥ गोभूतिलहिरण्याज्यवासोधान्यगुडा नि च ॥ रौप्यंलवणमित्याहुर्दशदानान्यनुक्रमात् ॥ ३ ॥ एतानिदशदानानि विप्रेभ्यो यथाशक्तिदद्यात् ॥ ततो वैतरणी धेनुदानं० तिलादीनिर्महादानानि० ॥ शक्तौसत्यांतिलपूर्णपात्रं मोक्षधेनुमृण धेनुमुत्क्रांतिधेनुंचदद्यात् ॥ दुर्मरणमृतेतु चांद्रायणद्वय मथवा पंचदशप्राजापत्यम् ॥ शक्तौसत्यांप्रतिप्राजापत्यमेकैकांगामथवा प्रतिप्राजापत्यं द्वादशब्राह्मणतृप्तिजनकमामान्नंवा तीर्थयात्रा दिद्वाराशुद्धिंसंपाद्यदाहादिकुर्य्यात् ॥ एवमेवऊर्द्ध्वोच्छिष्टाध उच्छिष्टोभयोच्छिष्टादिदोषयुक्तमरणे पूर्वोक्त धेन्वादिरूपंप्रायश्चित्तंसंकल्प्य सूतकान्तेकुर्य्यात् ॥ एवंकर्त्ताप्यधिकाराभावे आत्मनः शुद्धिंसंपाद्य दहनादिकुर्य्यात् ॥ अथमरणसमयकृत्यम् ॥ तत्रतावत्पुण्यस्तोत्रं रामकृष्णादिनामजपंकुर्य्यात्कारयेद्वा ॥ ततः प्राणोत्क्रमणसमये पुत्रादिरधिकारी गंगादितीर्थसमीपे अथवा स्वगृहे गोमयोपलिप्तायां भूमौ गंगोदकमिश्रितनूतनजलेन संस्नाप्य धौतशुक्लवाससीपरिधाप्य चंदनपुष्पमालारुद्राक्षधात्रीतुलसीपत्राद्यैरलंकृत्य पुत्रादिःस्वोत्सङ्ग

१ षडब्देप्राजापत्यानि १८० अब्दे९० सार्द्धाब्दे ४५ इति । २ आमान्नादिद्वारा, शूद्रस्य पक्कान्निषेधात् । ३ चत्वारिंशन्मापाः । ४ गारुडे—तिला लोहं हिरण्यं च कार्पासं लवणं तथा ॥ सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम्, इति ।

स्थापितशिरसः अपगतप्राणस्यमुखे नासिकाद्वये चक्षुर्द्वयेश्रोत्रद्वयेपंचरत्नानि स्वर्णशकलानिवाघृताबिन्दून्क्षित्वा दर्भवत्यांभूमौ तिलान्विकीर्य तत्रोदक्छिरसंस्वापयेत् ॥ ततः प्राणोत्क्रमणानन्तरं पुत्रादयो यथाचारं स्ववपनंकारयित्वा स्नात्वा नववस्त्रैकदेशंपरिधाय तदेकदेशमुत्तरीयंकृत्वा प्रेतं पुनःस्नापयित्वा वाससाच्छाद्य पुष्पाद्यैरलंकृत्य चितायामुत्तानंदक्षिणशिरसं शवंस्थापयेत् ॥ अथपिण्डदानप्रयोगः ॥ पुत्रादिरपसव्येन वामजान्वाच्य मृतदक्षिणपार्श्वेदक्षिणाभिमुख उपविश्य ॥ अद्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्तिपूर्वकमुत्तमलोकप्राप्त्यर्थमौर्ध्वदेहिकंकर्म करिष्ये-इतिसंकल्प्य दक्षिणाग्रंकुशत्रयमास्तीर्यावनेज्य ॥ अद्यामुकगोत्रामुकप्रेत मृतिस्थानेशवनिमित्तक ( ब्रह्मदैवतोवा ) एषतेपिण्डोमयादीयते तवोपतिष्ठतामित्येकंपिण्डंसतिलं पितृतीर्थेनदत्त्वा गृहद्वारानयेत् ॥ तत्र अद्यामुकगोत्रामुकप्रेत द्वारदेशे पांथनिमित्तक ( विष्णुदैवतोवा ) एषतेपिण्डोमयादीयते तवोपतिष्ठतामिति पिंडंदत्त्वा पुत्रादयोबालपुरःसरालौकिकाग्निं पिण्डादिकंचगृहीत्वा शवंप्रच्छादितमुखं प्राक्छिरसमूर्ध्वमुखं पुरदक्षिणद्वारेणारण्येश्मशानदेशंप्रतिनयेयुः ॥[1] ततोग्रामश्मशानयोर्मध्येविश्रामे ॥ अद्यामुकगोत्रामुकप्रेत विश्रान्तौभूतनिमित्तक ( रुद्रदैवतोवा ) एषतेपिण्डोमयादीयतेतवोपातिष्ठतामिति विश्रामपिण्डंदद्यात् ॥ ततः सर्वे बांधवावृद्धादयः प्रेतमनुगच्छेयुः ॥ अथ श्मशानदेशंप्राप्य शुचिदेशे शनैर्दक्षिणशिरसं शवंस्थाप्य चितास्थाने कुशत्रयोपरि अमुकगोत्र अमुकप्रेत चितास्थानेवायुनिमित्तक ( यमदैवतोवा ) एषतेपिण्डोमयादीयतेतवोपातिष्ठतामितिपिण्डंदद्यात् ॥ ततः खननसंप्लावनादिना भूमिंसंशोध्य गोमयेनोपलिप्य तत्र यज्ञियकाष्ठैर्दहनपर्याप्तं दक्षिणोत्तरायतं दारुचयं कृत्वा चिताकाष्ठं

१ अत्र चत्वरे खेचरनिमित्तपिण्डदानं यथाचारम् ।

जलेनप्रोक्ष्य तत्र दक्षिणाशिरसं सवस्त्रमुत्तानमुखं शवंचितौ निदध्यात ॥ ततः शिरःप्रदेशे शुद्धमृदावेदिंकृत्वा पंचसंस्कारान्संपाद्य तत्रक्रव्यादसंज्ञकमग्निंप्रज्वाल्य ॥ क्रव्यादायनमः इतिगंधमाल्यादिभिः संपूज्य ॥ त्वंभूतभृज्जगद्योनिस्त्वं भूतपरिपालकः ॥ मृतः संसारिकस्तस्मादेनं त्वंस्वर्गतिंनय ॥ १ ॥ इतिप्रार्थ्य शवहस्ते साधकनाम्ना पिण्डंदद्यात ॥ अमुकगोत्रामुकप्रेत शवहस्ते साधकनिमित्तक एषते पिण्डो मयादीयतेतवोपतिष्ठतामिति दद्यात् ॥ ततः पुत्रादिर्यथाचारं बहुलतृणान्गृहीत्वा अग्नौप्रज्वाल्य प्रदक्षिणंपरिक्रम्य ॥ कृत्वातुदुष्कृतं कर्म जानानावाप्यजानता ॥ मृत्युकालवशंप्राप्य नरंपंचत्वमागतम् ॥१॥ धर्माधर्मसमायुक्तं लोभमोहसमावृतम् ॥ दहेयंसर्वगात्राणि दिव्याँल्लोकान्सगच्छतु ॥ २॥ इतिमंत्रद्वयेनाशिरःस्थानेऽग्निंदद्यात् ततोर्धेदग्धे आज्याहुतिंदत्त्वासजलंकुंभमादायपादतोऽप्रदक्षिणांत्रिःपरिक्रम्ययथाचारमश्मनाकुम्भंभित्त्वा ॥ अनवेक्षमाणा बालपुरःसराःस्नानार्थंनद्यादिकेगच्छेयुः ॥ तत्रोदकसमीपंगत्वापूर्वधृतं वस्त्रंप्रक्षाल्यपुनःपरिधायवामानामिकयाजलमालोडचशूद्रादयःस्नात्वाशुद्धवाससीपरिधाय सव्येनाचम्याऽपसव्येनजले पाषाणपृष्ठेवाशुचितीरदेशेदक्षिणाग्रकुशत्रयोपरि ऋजुदर्भतिलपूर्णांजलिना पितृतीर्थेन अमुकगोत्रामुकप्रेतएषतिलतोयाञ्जलिस्तेमयादीयतेतवोपतिष्ठतामितिसर्वेदक्षिणमुखाः सकृत्त्रिर्दशवादद्युः ॥ ततःसव्यंकृत्वा आचम्यजलाशयादुत्तीर्यस्नानवस्त्रंनिष्पीडच शुचौदेशेशाद्वलवत्युपविश्यान्सपिण्डानन्येसुहृद इतिहासपुराणादिविविधकथाभिःसंसाराऽनित्यतांदर्शयेयुः ॥ ततःपश्चादनवलोकयंतोऽधोमुखा बालानग्रतःकृत्वा यमं

१ शिरःस्फोटनानंतरं तिलमिश्रांदद्यादिति । २ हेमाद्रिविष्णुपुराणयोः--सपिण्डीकरणंयावदृजुदर्भैः पितृक्रिया । सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेदिति । ३ एकवारं त्रिवारंवा दशवारमथापिवा--इतिगारुडात् । ४ अहरहर्नयमानो गामश्वं पुरुषंपशून् । वैवस्वतो न तृप्येत सुरया इव दुर्मतिरिति ।

गाथांगायन्तःपंक्तिभूताग्राममंप्रत्यायांति ॥ ततोगृहद्वारसमीपेस्थित्वानिंबपत्राणिदंतैर्विदश्याचम्य गोमयसर्षपवृषांबुदूर्वाग्नीनालभ्यपादेन पापाणमाक्रम्यगृहंप्रविशेयुः वृद्धाःशोकापनोदनंकुर्युः ॥ इतिदाहविधिः ॥ अथसूर्यास्तमयादूर्ध्वंरात्रावन्तरिक्षे चतुष्पथेश्मशानेवात्रिकाष्टिकायामेकस्मिन्नपक्वेमृन्मयेपात्रे उदकं द्वितीये क्षीरंचनिधाय अपसव्येनदक्षिणामुखउपविश्य ॥ अमुकगोत्रस्यामुकप्रेतस्य आप्यायनार्थं तापोपशमनार्थंचाकाशेमृन्मयेपात्रेक्षीरोदकयोर्निधानंकरिष्येइतिसंकल्प्य ॥ श्मशानानलदग्धोसि परित्यक्तोसिबांधवैः ॥ इदंनीरमिदं क्षीरमत्रस्नाहिइदंपिब ॥१॥ इतिपठित्वा ॥अमुकगोत्रामुकप्रेत अनेनजलेनस्नाहि इदंक्षीरंपिब इतिनिवेदयेत्॥एतत्क्षीरोदकानिधानमेकाहं वादिनत्रयंवादशाहंयथाचारंप्रत्यहंरात्रौकर्त्तव्यम् ॥ ततः त्र्यहमुपवासः क्रीतलब्धाशनंवा अधःशय्यासनं सर्वेषांयावदशौचम् ॥ इच्छया प्रथमादिदशाहपर्यंतं कुटुंबैःसहभोजनंतच्चादिवैव ॥ बहिः प्रेतायदीपोदेयः॥ इति दाहप्रकरणम् ॥ अथाऽस्थिसंचयनम् ॥ तच्चप्रथमतृतीयचतुर्थसप्तमनवमेषुभौमार्कमंदतिथियुग्मैकपादद्विपादत्रिपादकर्तृनक्षत्रधनिष्ठादिपंचकवर्जदिनेषुकार्यम् ॥ शूद्राणांविशेषतोदशमेह्नि ॥ तत्रप्रयोगः ॥ श्राद्धदिनेसामग्रींसंपाद्य श्मशानसमीपेगत्वाशुचिभूमौश्राद्धस्थानंप्रकल्प्यगोमयोदकेनप्रोक्ष्य गौरमृत्तिकयाच्छाद्यातिलैर्विकिरेत् ततोनद्यादिकेस्नात्वा स्वासने उपविश्य कुशपवित्रादिधारणं कृत्वा आचम्य 'पुण्डरीकाक्षायनमः'–इतिश्राद्धसामग्रींस्वात्मानंचप्रोक्षयेत्॥ततो देशकालौ संकीर्त्य (अपसव्येन) अमुकगोत्रस्याऽमुकप्रेतस्य प्रेतत्वनिवृत्त्या उत्तमलोकप्राप्त्यर्थमस्थिसंचयनश्राद्धंकरिष्ये–इत्युक्त्वा दक्षिणामुखोवामजानुनिपात्य कुशचटंनिधाय ॥ इहलोकंपरित्यज्य गतोसिपरमांगतिम् ॥ मनसावायुरूपेण चटेत्वाहंनियोजये ॥१॥इति निमन्त्रयेत् ॥ ततः कुशत्रयतिलजलान्यादाय ॥ अमुकगोत्रामुकप्रेत इदंमासनंतेमयादीयनेतत्रोपविश्यतामित्यासनमृजुकुशत्रयरूपमुत्सृ

श्राद्ध- ३१॥ जेत् ( न मोटकहृपम् ) ॥ ततस्तिलान्विकीर्य अर्घपात्रे कुशपत्रमेकंधृत्वा तत्रजलतिलगंधपुष्पाणिप्रक्षिप्य तदर्घपात्रं [illegible] प्रकाशः
कृत्वापवित्रंपलाशपत्रंधृत्वा ॥ अमुकगोत्रामुकप्रेत एषतेहस्तार्घोमयादीयतेतवोपतिष्ठतामितिदक्षिणहस्तेनार्घंदद्यात् ॥ ततो [illegible]
त्वा ॥ अमुकगोत्रामुकप्रेत एतानिगन्धपुष्पधूपदीपतांबूलवासांसितेमयादीयंतेतवोपतिष्ठतामित्युत्सृजेत् ॥ ततःपात्रेसघृत [illegible]
जलपात्रंचधृत्वा वामकरेणपात्रंस्पृशन् अमुकगोत्रामुकप्रेत इदमन्नंघृताद्युपस्करसहितंतेमयादीयतेतवोपतिष्ठतामितिवामभागेजलमुत्सृजेत् ॥
ततोऽन्नपात्रसमीपे पिण्डदानार्थं सिकताभिर्वेदिं निर्माय तत्रकुशत्रयमास्तीर्य पत्रपुटके जलतिलगन्धपुष्पाणिकृत्वा तत्पुटकं [illegible]
अमुक० प्रेत अत्रावनेनिक्ष्व ते मयादीयतेतवोपतिष्ठतामितिकुशत्रयोपरि अवनेजनंदद्यात् ॥ ततोघृततिलदधिशर्करादियुक्तेनान्नेन पिण्डं
निर्माय वामहस्तेकृत्वा दक्षिणहस्ते कुशत्रयादीन्यादाय ॥ अमुक० प्रेत अस्थिसंचयनिमित्तकश्राद्धे एषतेपिण्डोमयादीयतेतवोपतिष्ठता
मितिवामान्वारब्धदक्षिणहस्तेनकुशोपरिपिण्डंदद्यात् ॥ ततोहस्तौप्रक्षाल्य अवनेजनपात्रेण अमुक० प्रेत अत्रप्रत्यवनेनिक्ष्व तेमयादीयते
तवोपतिष्ठतामितिप्रत्यवनेजनंदद्यात् ॥ ततः पिण्डोपरिसूत्रंदत्त्वा ॥ अमुक० प्रेत एतद्वासस्तेमयादीयते० इत्युत्सृजेत् ॥ ततः पिण्डंगंध
पुष्पधूपदीपतांबूलपूगीफलादिभिः संपूज्य । अमुक० प्रेत एतानिगंधपुष्पधूपदीपपूगीफलादीनितेमयादीयंते० इत्युत्सृजेत् ॥ ततः अमुक
प्रेतस्यास्थिसंचयनिमित्तकश्राद्धेयद्दत्तमन्नपानादिकम् तदुपतिष्ठतामित्यक्षय्योदकंदत्त्वा सपवित्रंकुशत्रयंपिण्डोपरिनिधाय सतिलगंध [illegible]
जलेन जलधारांदद्यात् ॥ अनादिनिधनोदेवः शंखचक्रगदाधरः ॥ अक्षय्यःपुण्डरीकाक्षः प्रेतमोक्षप्रदोभव ॥ १ ॥ अतसीपुष्पसंकाशं पीत ॥२३२॥
वाससमच्युतम् ॥ येनमस्यंतिगोविंदं नतेषांविद्यतेभयम् ॥२॥ इतिपठित्वा॥अमुक० प्रेत अत्रपिण्डेजलधारातेमयादीयतेतवोपतिष्ठतामिति

दक्षिणाग्रां जलधारां दद्यात् ॥ ततः पिण्डमुत्थाप्य पात्रे निधाय दक्षिणाद्रव्यं कुशत्रयादीनि चादाय अमुकगोत्रस्यामुकप्रेतस्य कृतैतदस्थिसंचयनिमित्तकश्राद्धप्रतिष्ठार्थमिदं रजतं तन्मूल्योपकल्पितं वा द्रव्यममुकब्राह्मणाय दक्षिणात्वेन दातुमहमुत्सृजे—इति संकल्प्य दद्यात् ॥ ततः कर्मपूर्त्तिकामो विष्णुं स्मृत्वा श्राद्धवस्तूनि विप्राय प्रतिपादयेज्जले वा क्षिपेत् ॥ पिण्डादिकं गवादिभ्यो दद्यात् ॥ इति श्राद्धप्रयोगः ॥ एवं श्राद्धं विधाय गंधपुष्पधूपदीपनैवेद्यादिकं गृहीत्वा श्मशानसमीपमागत्य चिताया उत्तरत उपविश्य ॥ क्रव्यादमुखेभ्यो देवेभ्यो नमः इति मंत्रेण श्मशानवासिदेवान्गंधपुष्पधूपदीपनैवेद्यादिभिः श्मशाने पूजयेत् ॥ ततो बलिदानं—गंधपुष्पाद्यर्चितमामान्नबलिं गृहीत्वा ॥ येऽस्मिञ्छ्मशाने देवाः स्युर्भगवंतः सनातनाः ॥ तेऽस्मत्सकाशाद्गृह्णंतु बलिमष्टांगमक्षयम् ॥ प्रेतस्यास्य शुभाँल्लोकान्प्रयच्छंतु च शाश्वतान् ॥ अस्माकमायुरारोग्यं सुखं च ददतां चिरम् इति पठित्वा एषोऽष्टाङ्गबलिः शंकरादिश्मशानवासिदेवताभ्यो नमम—इत्येकं बलिं दत्त्वा एवं प्रदक्षिणक्रमेणाऽपरबलित्रयं पूर्वादिषु त्रिषु द्वारेषु दद्यात् ॥ ततस्तान्बलीन्क्षीरेणाभ्युक्ष्य शंकरादिदेवताः स्वीयं स्वीयं स्थानं गच्छंतु—इति विसृज्य ततोऽपसव्यं कृत्वा सदुग्धजलेन चितिं प्रोक्ष्य पलाशशाखया चितेर्भस्मापोह्याङ्गुष्ठकानिष्ठिकाभ्यां शिरसः उरसः पाण्योः पार्श्वयोः पादयोरस्थीन्यादाय पंचगव्येन प्रोक्ष्य गंगोदकेन प्रक्षाल्य गंधाद्यर्चितानि क्षौमवस्त्रेणावेष्ट्य मृन्मयेन वकुंभे निधाय शरावेण पिधाय वनवृक्षमूले वा भूमौ निखाय भस्म नद्यादितोये क्षिप्त्वा चितिदेशं दिक्त्वा गोमयेन विलिप्य तत्र पू[illegible] पूजां [illegible] लिमंत्रेण आमान्नबलिचतुष्टयं दद्यात् ॥ तान्क्षीरेणाभ्युक्ष्य विसर्जयेत् ॥ ततो गृहमागत्य म

१ अत्र ब्रह्मपुराणे पिण्डत्रयदा[illegible] तु मध्यमम् ॥ तृतीयं [illegible] श्राद्धं [illegible]

चैलोबंधुभिः स्नायात् ॥ शिष्टान्यस्थीनिगंगायांक्षिपेत् ॥ तत्प्रकारः—कदाचित्तद्दिनेवापुत्रादिरस्थिकुंभंगृहीत्वा तान्यस्थीनिपंचगव्येन प्रक्षाल्य हिरण्यमुक्ताह्रूप्यप्रवालमध्वाज्यतिलैःसयोज्य मृत्संपुटेनिधाय तीर्थंगत्वास्नात्वा दक्षिणांदिशंपश्यन्नमोस्तुधर्माय इतिजलंप्रविश्य समेप्रीतोऽस्तु इतिगंगायांक्षिप्त्वा स्नात्वा सूर्यंनमस्कृत्य विप्रेभ्योदक्षिणांदत्त्वा गृहमागत्य यथाचारंश्राद्धतर्पणब्राह्मणभोजनादिकुर्यात्॥एवंकृ तेप्रेतक्रियाकर्त्रोश्चस्वर्गःस्यात् ॥ इत्यस्थिसंचयनम् ॥ अथदशगात्रश्राद्धानि ॥ तत्रप्रयोगः ॥ पुत्रादिर्ग्रामाद्बहिर्देवतायतनेवानद्यादितीरेवा गृहद्वारिशुचिदेशेयथाचारंप्रेतस्यमूर्द्धादिनिष्पत्त्यर्थंपिण्डदानंकुर्य्याम् ॥ तत्रादौनद्यादिकेस्नात्वा नूतनमृन्मयभांडेनजलमानीयश्राद्धस्थानं गत्वा पवित्रेपरिधाय आचम्य शुचिभूमौपिण्डदानस्थानादैशान्यांदिशि अग्निंप्रज्वाल्य तत्रतैजसेवामृन्मयेतंडुलान्छ्रपयित्वा अपसव्यं कृत्वा दक्षिणामुख उपविश्य पातितवामजानुर्गौरमृत्तिकयापिण्डार्थंदक्षिणप्लवंस्थानंनिर्माय गोमयोदकेनोपलिप्य तत्रदक्षिणाग्रंकुशत्रयास्तर णंकुर्य्यात् ॥ ततःपत्रपुटकेजलतिलगंधपुष्पाणिप्रक्षिप्य तत्पुटकंगृहीत्वा अमुकगोत्रामुकप्रेत शिरःपूरकप्रथमपिण्डस्थाने अत्रावनेनिक्ष्वते मयादीयतेतवोपतिष्ठतामितिकुशत्रयोपरिकिंचिज्जलंपितृतीर्थेनदद्यात् ॥ ततश्चरुणाअथवासक्तुनावायवचूर्णेनतिलघृतमधुदुग्धशर्करायुतंक पित्थमात्रंपिण्डंकृत्वा कुशत्रयादीनिपिण्डंचादाय ॥ अमुकगोत्रामुकप्रेत शिरःपूरकएषप्रथमः पिण्डस्तेमयादीयतेतवोपतिष्ठतामितिव मान्वारब्धदक्षिणकरेणपितृतीर्थेनकुशोपरिपिण्डंदद्यात् ॥ ततः प्रत्यवनेजनदानम् ॥ अमुक० प्रेत शिरःपूरकप्रथमपिण्डेऽत्रप्रत्यवनेनिक्ष्व

१ दशाहाभ्यंतरे यस्य गंगातोयेस्थि मज्जति । गंगायां मरणंयाहक्ताहक्फलमवाप्नुयादितिगारुडात् । २ हेमाद्रौ—पितृशब्दं स्वधां चैव न प्रयुंजीत कर्हिचित्॥उपतिष्ठतामयं पिण्डः प्रेतायेति समुच्चरेत् ॥ तूष्णीं धूपं प्रसेकं च दीपं पुष्पं तथैव च ॥ अशुद्धस्त्रिपुवणषु इदं दद्यान्न संशय इति ॥ ३ अस्थिसंचयनादूर्ध्वं दशगात्रं समाचरेदितिगारुडात् ।

तेमयादीयतेतवोपतिष्ठतामितिपिण्डोपरिपूर्ववद्द्यात् ॥ ततः प्रेतमुद्दिश्य तूष्णींमेवोर्णासूत्रगन्धभृंगराजपुष्पधूपदीपतांबूलानिपिण्डे दत्त्वा ॥ अमुकगोत्रप्रेतशिरःपूरकप्रथमपिण्डे एतान्यूर्णासूत्रगन्धपुष्पधूपदीपतांबूलपूगीफलानितेमयादीयंतेतवोपतिष्ठंतामित्युत्सृजेत् ॥ ततः पिण्डस्थार्चनविधेः परिपूर्णतास्तु ॥ ततः पात्रे जलदुग्धतिलगन्धपुष्पाणिकृत्वा ॥ अमुकगोत्र० प्रेत शिरःपूरकप्रथमपिण्डे एषतिल तोयांजलिस्तेमयादीयतेतवोपतिष्ठतामित्येकंत्रयंवादशकंजलांजलिंपिण्डोपरिदद्यात् ॥ ततस्तिलतोयपूर्णपुटकं पिण्डसमीपेधृत्वा ॥ अमुकगोत्र०प्रेत शिरःपूरकप्रथमश्राद्धे एतत्तेतिलतोयपात्रंमयादीयतेतवोपतिष्ठतामित्येकंदद्यात्॥ततः अनादिनिधनोदेवःशंखचक्रगदाधरः॥ अक्षय्यः पुण्डरीकाक्षः प्रेतमोक्षप्रदोभव॥१॥अतसीपुष्पसंकाशं पीतवाससमच्युतम्॥येनमस्यंतिगोविंदं नतेषांविद्यतेभयम् ॥२॥ इतिप्रार्थ्य काकेभ्योबलिंदद्यात्॥काकोसियमदूतोसि गृहाणबलिमुत्तमम् ॥ यमद्वारेगतंप्रेतं तमाप्यायितुमर्हसि ॥ १ ॥ ततःपिण्डं जलेक्षिपेद्गवेवादद्या द्वायसान्वाखादयेत्॥ततः स्नात्वा गृहमागत्यगोग्रासंदत्त्वा निरामिषमेकवारंभक्षयेत्॥इतिप्रथमदिनकर्म॥एवमेवद्वितीयादिदिवसेषुद्वितीया दिपिण्डदानम् ॥ तत्रविशेषः ॥ द्वितीयदिने—अमुकगोत्रप्रेत कर्णाक्षिनासिकापूरकोद्वितीयः पिण्डस्तेमयादीयतेतवोपतिष्ठताम् ॥ अमुकप्रे त द्वितीयदिने—द्वौतिलतोयाञ्जलीद्वेतिलतोयपात्रेचतेमयादीयेतेतवोपतिष्ठेतामितिदद्यात् ॥ २ ॥ तृतीयदिने—गलांसभुजवक्षःपूरकस्तृतीयः पिण्डस्तेमयादीयतेतवोपतिष्ठताम् ॥ अमुकप्रेत तृतीयदिनेत्रयस्तिलतोयांजलयस्त्रीणितिलतोयपात्राणिचतेमयादीयन्तेतवोपतिष्ठंताम्॥३॥

१ मृतश्चपञ्चमादूर्ध्वमव्रतः सव्रतोपि वा ॥ पायसेन गुडेनापि पिण्डान्दद्याद्दशक्रमात्॥एकादशं द्वादशं च वृषोत्सर्गविधिं विना ॥ महादानविहीनंच पौगंडे कृत्यमाचरेत् ॥ जीवमाने च पितरि न पौगंडे सपिण्डनम् ॥ अतस्तस्य द्वादशाहन्येकोद्दिष्टं समाचरेदितिगारुडात् ॥

चतुर्थदिने नाभिलिंगगुदपूरकश्चतुर्थः पिण्डस्ते मयादीयते० ॥ चत्वारस्तिलतोयाञ्जलयःचत्वारितिलतोयपात्राणिच तेमयादीयन्तेतवोप
तिष्ठंतामिति ॥ ४ ॥ पंचमदिने जानुजंघापादपूरकः पञ्चमः पिण्डस्तेमयादीयते०॥पंचतिलतोयांजलयः पंचतिलतोयपात्राणिचतेमयादी
यन्ते० ॥५॥ षष्ठदिने सर्वमर्मपूरकः षष्ठः पिण्डस्तेमयादीयते०॥षट्तिलतोयाञ्जलयः षट्तिलतोयपात्राणिचतेमयादीयंते० ॥६॥सप्तमदिने
सर्वनाडीपूरकःसप्तमःपिण्डस्तेमयादीयते०॥सप्ततिलतोयाञ्जलयःसप्ततिलतोयपात्राणिचतेमयादीयंते०॥७॥अष्टमदिनेदन्तलोमादिपूरकोऽ
ष्टमः पिण्डस्तेमयादीयते० ॥ अष्टौतिलतोयाञ्जलयः अष्टौतिलतोयपात्राणिचतेमयादीयन्ते० ॥८॥ नवमदिने वीर्यपूरकोनवमः पिण्डस्ते
मयादीयते०॥नवतिलतोयाञ्जलयः नवतिलतोयपात्राणिचते मयादीयन्ते०॥९॥ दशमदिने अमुकगोत्रप्रेतक्षुत्पिपासापूरकोदशमः पिण्डस्ते
मयादीयतेतवोपतिष्ठताम् ॥ अमुकप्रेत० दशतिलतोयांजलयस्तेमयादीयंते० ॥ अमुक० प्रेत दशतिलतोयपात्राणिचतेमयादीयंतेतवोपति
ष्ठंतामिति ॥१०॥अन्यत्सर्वसमानम् ॥अत्यशक्तौतुदिनत्रयंवापिण्डदानंकार्यंत्र्यहाशौचेतुप्रथमदिवसेत्रीन्पिण्डान्द्वितीयदिनेचतुरस्तृतीयदि
नेपित्रीन्पिण्डान्दद्यात् ॥ सद्यआशौचपक्षेतु एकस्मिन्नेवदिनेदशपिण्डान्दद्यात्॥येनद्रव्येणप्रथमपिण्डोदत्तस्तत्सजातीयेनैवपिण्डान्तरंदद्या
त्॥येनपुत्रादिनाप्रथमःपिण्डोदत्तःसएवपिण्डांतरमपिदद्यात् ॥अत्रकेचिन्नवश्राद्धं विषमदिवसेदशाहमध्येकुर्वन्तितत्राधिकंफलंभवति ॥ अ
करणेप्रत्यवायोनास्ति॥इच्छाचेत्कर्त्तव्यम्॥विधिस्तुपूर्ववत्॥इतिदशगात्रश्राद्धानि॥अथाशौचान्तदिनकृत्यम् ॥तत्रप्रेतस्पृष्टवासांस्यंत्यानामा
श्रितानांचदत्त्वा मृन्मयपाकभांडादीनिचत्यक्त्वागृहशुद्धिंविधायकेशलोमनखान्यथाचारंवापयित्वा सर्षपकल्केनतिलामलकैर्वाशिरश्चोन्मृ
ज्यशुद्धजलेनस्नानंचकृत्वा वासोयुगंपरिधाय आचम्य वाग्यतोवृषभंगांसुवर्णंगोरोचनंदधिदूर्वांचस्पृष्ट्वा शूद्रोयष्टिंसंस्पृश्य शुद्धोभवेत्॥अथैका

दशाहदिनकर्म॥तत्रतावच्छूद्राणांवृषोत्सर्गः[1] ॥ तस्यप्रयोगः॥प्रागुदक्प्रवणेविविक्तेनिर्जनेवनेगोमध्येवत्सतरीचतुष्टयेनद्वाभ्यामेकेनवासहितंत्रिहायनंसर्वलक्षणविशिष्टंवृषंवस्त्रमाल्यकिंकिणीघंटाहेमपट्टिकादिभिर्भूषयित्वा तत्रानयेत् ॥ तत आचम्य पूर्वाभिमुखःकुशत्रयतिलजलान्यादायदेशकालौसंकीर्त्य ॥ अद्यैकादशेह्नि अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थंस्वर्गलोकप्राप्त्यर्थं वृषोत्सर्गंकरिष्ये–इतिसंकल्प्य ऐशान्यांकलशंसंस्थाप्य तत्रताम्रं रुद्रंनिधाय नाममंत्रेणषोडशोपचारैः संपूज्य अग्निंस्थापयेत् ॥ ततोहस्ते पुष्पचंदनतांबूलवासांस्यादाय देशकालौसंकीर्त्य अद्यकर्त्तव्यवृषोत्सर्गांगभूतहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनतांबूलवासोभिर्ब्रह्मत्वेनत्वामहंवृणे ॥ वृतोस्मीतिप्रतिवचनम् ॥ इतिब्रह्माणंवृत्वा एवमेवहोतारं वृणुयात् ॥ ततो होता हस्तमात्रं चतुरस्रं स्थण्डिलंकृत्वा कुशैःपरिसमुह्य तानैशान्यांपरित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेनमध्येप्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य अनामिकांगुष्ठाभ्यांमृदमुद्धृत्य ऐशान्यांक्षिप्त्वा तंदेशंजलेनाभ्युक्ष्य तत्रतूष्णींकांस्यपात्रस्थमग्निंस्थापयेत् ॥ ततोऽग्नेर्दक्षिणतः शुद्धमासनंदत्त्वा तदुपरिप्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय अत्रत्वंमेब्रह्माभव इत्यभिधाय ब्राह्मणं तदभावे कुशनिर्मितंकल्पितासने उपवेशयेत् ॥ ततः प्रणीतापात्रंजलेनापूर्य्य कुशैराच्छाद्य ब्रह्माणमवलोक्याऽग्नेरुत्तरतः कुशोपरिनिदध्यात् ॥ ततः प्रागग्रैश्चतुर्भिर्दर्भैः आग्नेयादीशानांतं० ब्रह्मणोग्निपर्यंतं नैर्ऋत्याद्वायव्यान्तमग्नितः प्रणीतापर्यंतं क्रमेण अग्नेःपरिस्तरणं कृत्वा अग्नेः पश्चिमादिशिपवित्रच्छेदनार्थंकुशत्रयम् ३ पवित्रार्थं साग्रमनन्तगर्भंकुशपत्रद्वयम् २ प्रोक्षणीपात्रम् आज्यस्थालीआचरुस्थाली संमार्जन

१ (हेमाद्रौ) एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः । पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि इति ।

कुशत्रयमुपयमनकुशत्रयंसमिधस्तिस्रः स्रुव आज्यंगव्यंतंडुलान्दुग्धं तण्डुलपिष्टं तण्डुलाद्यन्नपूर्णपात्रं दक्षिणांच पवित्रच्छेदनकुशान् पूर्वदिशि क्रमेणासादनीयम् ॥ ततः कुशपत्रद्वयमादाय अग्रतः २ प्रादेशमात्रंप्रमाप्य कुशत्रयेणच्छित्त्वा पवित्राभ्यां प्रणीतोदकमुत्पूय प्रणीतोदकंत्रिःप्रोक्षण्यांनिधाय प्रोक्षण्युदकंभूमौत्रिःक्षिप्त्वापवित्रे प्रोक्षण्यांनिधाय प्रणीतोदकेनप्रोक्षणीप्रोक्षणं प्रोक्षणीजलेनासादितवस्तुसेचनमग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिधाय आज्यस्थाल्यामाज्यंनिरूप्य चरुस्थाल्यांतण्डुलान्निक्षिप्य प्रणीतोदकेनतांस्त्रिःप्रक्षाल्य तत्रप्रणीतोदकंदुग्धंचप्रक्षिप्य आज्यंपायसंपिष्टंचरुंचश्रपणार्थं युगपदग्नौनिधाय तृणंप्रज्वाल्य प्रदक्षिणमाज्यचर्वोः समंताद्भ्रामयित्वा वह्नौतत्प्रक्षिप्य दक्षिणहस्तेनस्रुवमादायाधोमुखमग्नौतापयित्वा सव्येपाणौकृत्वा दक्षिणहस्तेन संमार्जनकुशानामग्रैरग्रंमध्यैर्मध्यंमूलैर्मूलंस्रुवंसंमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनःप्रतप्य स्रुवंदक्षिणतोनिदध्यात् ॥ ततः स्वयमाज्यंचरुंच उद्वास्य स्वपुरतः आज्यं तदुत्तरतश्चरुंनिधाय आज्यंप्रोक्षणीवदुत्पूयावेक्ष्य सत्यपद्रव्येतन्निरसनम् ॥ पुनः प्रोक्षण्युत्पवनम् ॥ ततउत्थाय उपयमनकुशान्वामहस्तेकृत्वा प्रजापतिंमनसाध्यात्वा तूष्णीमग्नौघृताक्ताः समिधस्तिस्रः प्रक्षिपेत् ॥ तत उपविश्य सपवित्रप्रोक्षण्युदकेनाग्निंपर्युक्ष्य प्रणीतापात्रेपवित्रेनिधाय पातितदक्षिणजानुः कुशाग्रेणब्रह्मणान्वारब्धः सुसमिद्धेऽग्नौ आज्येनजुहुयात् ॥ तत्र ब्राह्मणद्वारातूष्णींहोमः॥ इहरतिः स्वाहा इदमग्नये १ इहरमध्वंस्वाहा इदमग्नय २ इहधृतिः स्वाहा इदमग्नये ३ इहस्वधृतिःस्वाहा इदमग्नये ४ अग्नयेस्वाहा इदं॰ ५ अग्नयेस्वाहा इदं॰ ६ इतिषड् हुत्वा ॥ प्रजापतये स्वाहा इदं॰ १ इंद्राय॰ इदं॰ २ अग्नये॰ इदं॰ ३ सोमाय॰ इदं॰ ४ इत्याघारावाज्यभागौचहुत्वा पायसंतंडुलपैष्टकंचादाय संस्रवांविनैव जुहुयात् ॥ अग्नयेस्वाहा इदं॰ १ रुद्राय॰ इदं॰ २ शर्वाय॰ इदं॰ ३ पशुप

तये० इदं० ४ उग्राय० इदं० ५ अशनये० इदं० ६ भवाय० इदं० ७ महादेवाय० इदं० ८ ईशानायस्वाहा इदमीशानाय ९ इतिहुत्वा पिष्टकेन पूष्णे स्वाहा इदंपूष्णे १ ततः पायसपिष्टकाभ्याम् अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते इतिजुहुयात् ॥ तत आज्येन अग्नये० इदं० १ वायवे० इदं० २ सूर्याय० इदं० ३ अग्नीवरुणाभ्यांस्वाहा इदं० ४ अग्नये० इदं० ५ वरुणादिभ्यः स्वाहा इदं० ६ वरुणाय० इदं० ७ प्रजापतये० इदं० ८ इतिमनसाहुत्वा स्थंडिलपरितोदिक्पालेभ्योमाषभक्तबलीन्दद्यात् ॥ अत्रपूर्णाहुतिहोमोबर्हिर्होमश्चकृताऽकृतः ॥ ततो भस्मवंदनंसंस्रवप्राशनमाचमनंचकृत्वा प्रणीताजलेनशिरःसंमृज्य पवित्रे अग्नौप्रक्षिप्य ऐशान्यां प्रणीतांन्युब्जीकुर्यात् ॥ ततो ब्रह्मणेपूर्णपात्रदानं ब्रह्मग्रंथिविमोकश्च ॥ ततो होत्रे सुवर्णदक्षिणांदत्त्वा रुद्रंनमस्कृत्य दक्षिणपार्श्वेत्रिशूलेनपरस्मिंश्चक्रेणव्यत्ययेनवा यथाचारं कुंकुमेनवृषमंकयित्वा लोहकारमाहूयचिह्नयेत् ॥ ततो वत्सतरीसहितंवृषभं स्नापयित्वा लोहघंटानूपुरकनकपट्टिकादिभिः सर्वानलंकृत्य प्रणम्य वृषभस्यदक्षिणकर्णे—वृषोहिभगवान्धर्मश्चतुष्पादः प्रकीर्त्तितः ॥ वृणोमितमहं भक्त्यासमांरक्षतुसर्वदा ॥ १ ॥ इति जपित्वा उदङ्मुखः ( सव्येन ) वृषपुच्छंगृहीत्वा ॥ कुशत्रयतिलजलान्यादाय ॥ अद्यैकादशेह्नि काश्यपगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्तिपूर्वकाक्षय्यस्वर्गलोकप्राप्तिकाम एनंवृषंरुद्रदैवतं यथाशक्त्यलंकृतंगंधाद्यर्चितं त्रिशूलचक्रांकितंयुवानंवत्सतरीयुतममुकगोत्रायामुकप्रेताय अहमुत्सृजामि युष्मभ्यंपतिंददाम्येतेन पत्यास्वच्छंदंचरत तेनश्रीरुद्रः प्रीयतामित्युक्त्वासतिलजलंभूमौक्षिपेत् ॥ ततोऽपसव्यंकृत्वा सतिलंपुच्छंगृहीत्वा दक्षिणामुखः अमुकगोत्रप्रेत इदंतेवृषवत्सतर्योःपुच्छोदकमुपतिष्ठतामित्युक्त्वा अंजलिंदत्त्वा ॥ नमः पितृभ्योमातृभ्यो बंधुभ्यश्चाविनृप्तये ॥ मातृपक्षाश्चयेकेचिद्येचान्येपितृपक्षजाः ॥

गुरुश्वशुरबंधूनां येकुलेषुसमुद्भवाः ॥ येप्रेतभावमापन्नायेचान्ये श्राद्धवर्जिताः ॥ वृषोत्सर्गेणनेसर्वे लभंतांप्रीतिमुत्तमामित्यंजलित्रयं दद्यात् ॥ ततः ( सव्येन ) अयंहिवोमयादत्तः सर्वासांपतिरुत्तमः ॥ तुभ्यंचैवमयादत्ताः पत्न्यःसर्वामनोरमाः ॥ वृषएषमयादत्तस्तं तारयतुसर्वदा ॥ १ ॥ इतिप्रार्थ्य ॥ दाताब्राह्मणानाहूयवक्रोक्तिभिःपदैः ॥ नचाज्यंनचतत्क्षीरं पातव्यंकेनचित्कचित् ॥ नवाह्योसौवृषश्चैषामृतेगोमूत्रगोमये ॥ १ ॥ इतिश्रावयेत् ॥ ततः आमान्नेनत्रिप्रभृतीन्ब्राह्मणान्संतोष्य ॥ बहुतोयतृणेऽरण्ये अथवा बहुगोधनसंकुले गोकुलेवत्सतरीयुतोगोपातिःक्षेपणीयः ॥ निर्गते गोपतौ विप्रेभ्योदक्षिणांरुद्रकुंभंचदत्त्वा विष्णुंस्मरेत् ॥ एवंवृषोत्सर्गविधिंनरोयः करोति भक्त्यानिजपूर्वजानाम्॥ उद्धृत्यतान्दुर्गतिपंकमग्नान्स्वयंमलोकं समुपैतिशंभोः ॥ इतिवृषोत्सर्गपद्धतिः॥ अथगोदानप्रयोगः ॥तत्र आशौचान्तद्वितीयेह्नि पुण्यदेशेयथोक्तलक्षणवतींगांसंस्थाप्य ब्राह्मणमुपवेश्य स्वयं गोपुच्छदेशेप्राङ्मुखः कुशत्रयतिलजलान्यादाय अद्येत्यादिदेशकालौसंकीर्त्य अमुकगोत्रस्यामुकप्रेतस्यस्वर्गकामो गोदानमहंकरिष्ये ॥ तदंगतया गोब्राह्मणस्यचपूजनमहंकरिष्ये—इति संकल्प्य ब्राह्मणंपाद्यादिभिः संपूज्य हस्तेपुष्पचंदनतांबूलवासांस्यादाय करिष्यमाणगोदानार्थमनेनद्रव्येण त्वामहंवृणे ॥ वृतोस्मीतिप्रतिवचनम् ॥इतिवृत्वाधेनुंपूजयेत्॥ तद्यथा—आवाहयाम्यहंदेवींसुरभिंलोकमातरम्॥यस्याः शरणमाविष्टः सर्वपापैः प्रमुच्यते॥१॥इत्यावाहनम्॥ सर्वदेवप्रियंदेविचंदनंमलयोद्भवम्॥ कस्तूरीकुंकुमाढ्यंच गोगंधंप्रतिगृह्यताम्॥२॥इतिगंधम्॥ऐरावतकुलेजाताशतक्रतुप्रियासदा॥यालक्ष्मीः सर्वभूतानांयाचदेवेष्ववस्थिता॥धेनुरूपेणसादेवीममपापंव्यपोहतु॥३॥इतिपुष्पा०॥अथाङ्गपूजा॥आस्यायनमः॥ शृङ्गाभ्यांनमः ॥ पृष्ठाभ्यांनमः॥पुच्छायनमः॥पूर्वपद्भ्यांनमः॥पश्चिमपद्भ्यांनमः॥वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः॥आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यताम्॥४॥इति

धूपं० ॥ साज्यंचवर्त्तिसंयुक्तं वह्निनायोजितंमया ॥ दीपंगृहाणसुरभे मयादत्तंहिभक्तितः॥५॥ इतिदीपं०॥वैष्णवीसुरभेमातर्नित्यं विष्णुपदे स्थिता॥नैवेद्यंहिमयादत्तंगृह्यतांपापहारिणि॥६॥इतिनैवेद्यंतृणानिच॥आच्छादनंचकौशेयं शुद्धंचैवसुनिर्मलम्॥सुरभ्यैदीयमानंतु प्रीयतांकेशवःसदा ॥ ७ ॥ इतिवस्त्रम् ॥ यत्तेमयार्पितंशुद्धं घंटांचामरमंडितम् ॥ सुरभेतद्गृहाणेदं मुनित्रिदशवंदिते ॥८॥इतिघंटाचामरौ ॥ एवंगंधादिभिःसंपूज्य प्रदक्षिणांकृत्वा उदङ्मुखोगोपुच्छंगृहीत्वा कुशत्रयतिलजलैस्तर्पणंकुर्य्यात्॥तत्रथा—देवासुरास्तथायक्षा नागागंधर्वराक्षसाः॥पिशाचागुह्यकाःसिद्धाःकूष्मांडास्तरवःखगाः॥१॥जलेचराभूनिलयावाय्वाधाराश्चजन्तवः॥प्रीतिमेतेप्रयांत्वाशुमद्दत्तेनाम्बुनाखिलाः॥२॥आब्रह्मणोये पितृवंशजातामातुस्तथावंशभवामदीयाः॥वंशद्वयेस्मिन्ममदासभूता भृत्यास्तथैवाश्रितसेवकाश्च॥३॥ तेसर्वेतृप्तिमायांतु गोपुच्छोदकतर्पणैः॥इतितर्पणंकृत्वा॥गावोममाग्रतःसंतुगावोमेसंतुपृष्ठतः॥गावोमेहृदयेसन्तुगवांमध्येवसाम्यहम्॥१॥इतिप्रार्थ्य गोपुच्छंकुशादीनिचादाय अद्याशौचान्तद्वितीयेह्नि अमुकगोत्रस्यामुकप्रेतस्य स्वर्गकामः इमां गां सवत्सांसुपूजितांपयस्विनींसुवर्णशृंगींरौप्यखुरांताम्रपृष्ठींवस्त्रयुगच्छन्नांकांस्यपानीयपात्रांपैत्तलदोहांरुद्रदेवताममुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ इतिगोपुच्छंसतिलकुशोदकंहस्तेदद्यात् ॥ स्वस्तीतिप्रतिवचनम् ॥ ततोदानप्रतिष्ठार्थंहिरण्यदक्षिणांदत्त्वाविसृजेत् ॥ इतिगोदानप्रयोगः॥अथशूद्राणामेकादशाहश्राद्धप्रयोगः ॥ तत्रप्रातर्नद्यादौस्नात्वाशुद्धवाससीपरिधायनित्यावश्यकंसमाप्य नद्यादितीरेदेवालयेवागत्वा तत्रश्राद्धभूमिंपरिकल्प्य गोमयोदकाभ्यामुपलिप्य ज्वलदंगारैः संशोध्यगौरमृत्तिकयाऽऽच्छाद्यतिलैर्गौरसर्षपैश्चविकिरेत् ॥ ततोमध्याह्नेपुनःस्नात्वा पूर्वरचितश्राद्धदेशमागत्यातिलतैलेनदीपंप्रज्वाल्यसंस्थाप्यकाककुक्कुटादीञ्श्राद्धापहर्तॄनपसारयेत् ॥ तत आसनेउपविश्य सव्येनाचम्य ॥ अपवित्रः० ॥ पुंडरीकाक्षःपुनात्विति

जलेनश्राद्धद्रव्याणिस्वात्मानंचप्रोक्ष्य॥भूम्यैनमः॥गयायैनमः॥गदाधरायनमः॥इतिनत्वाकुशत्रयतिलजलान्यादाय देशकालौसंकीर्त्य अपसव्येन ॥ अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थं पितृसमत्वप्राप्त्यर्थमाद्यमासिकत्रैपक्षिकद्वितीयमासिकतृतीयमासिकचतुर्थ० पंचम० ऊनषष्ठ० षष्ठ० सप्तम० अष्टम० नवम० दशम० एकादश० ऊनाब्दिक० द्वादशमासिकानि स्वस्वकालेकर्त्तव्यानि षोडशश्राद्धानि[1] सपिण्डीकरणाधिकारसिद्ध्यर्थमेकादशेहन्यपकृष्यएकोद्दिष्टविधिनातन्त्रेणकरिष्ये[2] इतिसंकल्पयेत् ( एकादशमासाभ्यन्तरेऽधिमासपाते[3] षोडशपदस्थानेसप्तदशपदंप्रयोज्यम् ) ततोदेवताभ्यइतित्रिर्जपित्वा अपसव्येनदक्षिणाभिमुखः पातितवामजानुः तिलगौरसर्षपान्गृहीत्वा ॥ नमोनमस्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः ॥ १ ॥ इतिसर्वत्रविकीर्यनीवीबंधंकुर्य्यात् ॥ ततः कुशत्रयतिलजलान्यादाय ॥ काश्यपगोत्रामुकप्रेत आद्यश्राद्धे इदमासनंतेमयादीयतेतवोपतिष्ठतामित्युक्त्वा ऋजुकुशत्रयरूपमासनंप्रथमंसर्वतः पश्चिमगतंदक्षिणाग्रमुत्सृजेत् १ ( नात्रमोटकरूपम् ) एवंमासिकश्राद्धनिमित्तक० २ त्रैपक्षिक० ३ द्वितीयमासिक० ४ तृतीय० ५ चतुर्थ० ६ पंचम० ७ ऊनषाण्मासिक० ८ षाण्मासिक० ९ सप्तम० १० अष्टम० ११ नवम० १२ दशम० १३ एकादश० १४ ऊनाब्दिक० १५ द्वादशमासिक १६ निमित्तकान्यासनानिक्रमेणपूर्वपूर्वगतान्युत्सृजेत् ॥ ततः तिलेभ्योनमः—इतितिलान्विकीर्य दर्भहस्तस्तेषु ॥ इहलोकंपरित्यज्य गतोसिपरमांगतिम् ॥ मनसावायुरूपेण घटेत्वाहंनिमंत्रये ॥ १ ॥ इतिप्रेतमावाहयेत् ॥ ततःपो

१ जातूकर्ण्यः—द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा । त्रैपाक्षिकाब्दिकेचेति श्राद्धान्येतानि षोडश इति । २ स्मृतिरत्नावल्याम्—द्वादशाहे यदा कुर्यात्पितुः पुत्रः सपिण्डनम् । एकादशेह्निकुर्वीत प्रेतश्राद्धानि षोडश इति । ३ संवत्सरस्य मध्ये तु यदि स्यादधिमासकः ॥ तदा त्रयोदशे मासि क्रिया प्रेतस्य वार्षिकी । इति गारुडे ।

डशाऽर्घपात्रोपारि एकैकंप्रादेशमात्रंसाग्रंदर्भदलंधृत्वा तेषुअद्भ्योनमः इतिजलंक्षिप्त्वा तिलेभ्योनमः इतितिलान् तूष्णींगंधपुष्पाणिच प्रक्षिपेत् ॥ ततः प्रथमपात्रंगृहीत्वा तत्रस्थितंदर्भदलंपलाशपत्रेधृत्वा अद्भ्योनम इत्यर्घपात्रमभिमंत्र्य काश्यपगोत्रामुकप्रेत आद्यश्राद्धे एषतेहस्तार्घोमयादीयतेतवोपतिष्ठतामिति पवित्रसंज्ञकदर्भोपर्य्यर्घजलंक्षिपेत् ॥ एवंमासिकादिपंचदशश्राद्धनिमित्तकान्यर्घजलानिनिक्षिपेत् ॥ अर्घ्यपात्राणिचपुरतउत्तानतयाएवस्थापयेत् ( नन्युब्जम् ) ॥ ततोगंधपुष्पधूपदीपतांबूलवासांसिधृत्वा काश्यपगोत्रामुकप्रेत आद्यादिद्वादशमासिकांतषोडशश्राद्धनिमित्तकान्येतानि गंधपुष्पधूपदीपतांबूलवासांसितेमयादीयन्ते तवोपतिष्ठंतामित्येकतंत्रेणोत्सृजेत् ॥ ततोगौरमृद्भस्मादिनामंडलंकृत्वा ( परकीयभूमौश्राद्धकरणेतद्भूस्वामिने इदमन्नमेतद्भूस्वामिपितृभ्योनमः इतिबलिंदत्त्वा ) एकस्मिन्वाषोडशपात्रेषु आमान्नंसोपस्करंसजलंपरिविष्य मधुदत्त्वा मधुमधुमध्वितिचाभिमंत्रयेत् ( नात्रपात्रालम्भोवाहो ) ततःअन्नपात्रंपरितास्तिलान्विकीर्य वामकरेण पात्रंस्पृशन् ॥ काश्यपगोत्रामुकप्रेत आद्यादिद्वादशमासिकान्तषोडशश्राद्धनिमित्तकमिदमन्नंघृताद्युपस्करसहितंतेमयादीयते तवोपतिष्ठतामित्यासनवामभागेजलमुत्सृजेत् ( नात्रपैतृकोजपः ) ॥ विकिरमपिन कुर्यात् ॥ ततोऽन्नपात्रसमीपे पिण्डदानार्थं सिकताभिः षोडशवेदिकाः कृत्वा गोमयोदकेनाभ्युक्ष्य प्रत्येकं दक्षिणाग्रकुशत्रयास्तरणं कुर्यात् ॥ ततः षोडशपुटकेष्वेकस्मिन्पुटके वा जलतिलगन्धपुष्पाणिकृत्वा तत्पुटकंगृहीत्वा ॥ काश्यपगोत्रामुकप्रेत आद्यश्राद्धपिण्ड

---

१ हेमाद्रिगारुडकारिकासु–आशिषो द्विगुणा दर्भा जपाशीः स्वस्तिवाचनम् । पितृशब्दः स्वसंबन्धः शर्मशब्दस्तथैव च ॥ आवाहः पात्रालंभश्च उल्मुकोल्लेखनादिकम् । तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैव च । प्रदक्षिणाविसर्गश्च सीमांतं गमनं तथा । अष्टादश पदार्थास्तु प्रेतश्राद्धे विवर्जयेत्–इति ।

स्थानेऽत्रावनेनिक्ष्वतेमयादीयते तवोपतिष्ठतामितिवेदिकायां कुशत्रयोपरि अवनेजनजलंकिंचिद्दद्यात् ॥ १ ॥ एवमेव मासिकादिपिण्ड स्थानेषु प्रत्येकमवनेजनंदद्यात् ॥ ततश्चरुणासक्तुनावा आमान्नेन घृतमधुतिलयुक्तेन षोडशपिण्डान्निर्माय प्रथमंपिण्डं कुशत्रया दीनि चादाय ॥ काश्यपगोत्रामुकप्रेत आद्यश्राद्धे एतत्ते पिण्डंमयादीयते तवोपतिष्ठतामिति सव्योपगृहीतदक्षिणहस्तेन कुशोपरि पितृ तीर्थेनावनेजनस्थानेदद्यात् ॥ १ ॥ एवं मासिक०२ त्रैपक्षिक०३द्वितीयमासि०४तृतीयमासि०५चतुर्थ०६पंचम० ७ ऊनषाण्मासि० ८ षाण्मासिक० ९ सप्तममासिक० १० अष्टम० ११ नवम० १२ दशम० १३ एकादश० १४ ऊनाब्दिक० १५ द्वादशमासिक १६ श्राद्धनिमित्तकपिण्डानिक्रमेण दद्यात् ॥ ततो हस्तौप्रक्षाल्य सव्येनाचम्य हरिंस्मृत्वा अपसव्येन अवनेजनपात्रं गृहीत्वा काश्यप गोत्रामुकप्रेताद्यश्राद्धपिण्डे अत्रप्रत्यवनेनिक्ष्व ते मयादीयते तवोपतिष्ठतामिति प्रथमपिण्डोपरि प्रत्यवनेजनं दद्यात् ॥ एवमेव मासिका दिपंचदशपिण्डेषु क्रमेण प्रत्यवनेजनंदद्यात् ॥ ततोनीवींविस्रंस्य सव्येनाचम्य हरिंस्मृत्वा अपसव्येन प्रतिपिण्डं सूत्रत्रयंदत्त्वा काश्यपगोत्रामुकप्रेत आद्यादिद्वादशमासिकान्तषोडशश्राद्धपिण्डेषु एतानिवासांसि ते मया दीयन्ते तवोपतिष्ठंतामित्युत्सृजेत् ॥ ततः पिण्डान्गंधपुष्पधूपदीपतांबूलपूगीफलादिभिः संपूज्य एकस्मिन्पत्रपुटके शिवा आपः सन्तु इतिजलं सौमनस्यमस्तु इतिपुष्पम् अक्षतं चारिष्टंचास्तु इतितिलांश्चदत्त्वा कुशत्रयादीन्यादाय काश्यपगोत्रस्यामुकप्रेतस्य आद्यादिद्वादशमासिकान्त षोडशश्राद्धेषु यद्दत्तमन्नपानादिकं तदुपतिष्ठतामित्यक्षय्योदकंदद्यात् ॥ ततः पिण्डोपरिसपवित्रंकुशत्रयं निधाय ॥ सतिलदुग्धेनजलेन दक्षिणाग्रांधारांदद्यात् ॥ अनादिनिधनोदेवः शंखचक्रगदाधरः॥अक्षय्यः पुण्डरीकाक्षः प्रेतमोक्षप्रदोभव॥१॥अतसीपुष्पसंकाशं पीतवास

समच्युतम्॥येनमस्यंतिगोविन्दं नतेषांविद्यतेभयम् ॥२॥नारायणसुरश्रेष्ठ लक्ष्मीकान्त वरप्रद॥अनेनतर्पणेनाद्य प्रेतमोक्षप्रदोभव ॥ ३ ॥ काश्यपगोत्रामुकप्रेत अन्नजलधारास्तेमयादीयन्ते तवोपतिष्ठन्तामितिदद्यात् ॥ ततः पिण्डानुत्थाप्य कुशानग्नौक्षिप्त्वाहस्तौप्रक्षालयेत् ॥ ततो रजतदक्षिणामादाय काश्यपगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्तिपूर्वकसद्गतिप्राप्त्यर्थं कृतैतदाद्यादिद्वादशमासिकान्तषोडश श्राद्धकर्मणः सांगतासिद्ध्यर्थमिदंरजतंचन्द्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणात्वेनदातुमहमुत्सृजे इतिदद्यात् ॥ ततो देव ताभ्यः० इतित्रिःपठित्वा रक्षादीपंनिर्वाप्य हस्तौपादौप्रक्षाल्याचामेत ॥ ततः कर्म्मपूर्त्तिकामोविष्णुंस्मृत्वा प्रमादादितिपठित्वा श्राद्धवस्तूनि विप्राय प्रतिपादयेद्गाधेजलेवाक्षिपेत् ॥ ततः पिण्डान्गोभ्यो वायसेभ्यो वा दद्याद्गाधेजलेवाक्षिपेत ॥ ततः एकादशामान्नानि विप्रेभ्योदत्त्वा शय्यादिदानैः परितोषयेत् ॥ इत्याद्यादिषोडशश्राद्धपद्धतिः ॥छ॥ ॥ अथशय्यादिदानम् ॥ तत्र प्रयोगः ॥ तत्रादौ सारदारुमयींदृढां दन्तपत्रहेमपट्टाद्यैरलंकृतां हंसतूलीप्रतिच्छन्नांशुभ्रगण्डोपधानकां प्रच्छादनपटीयुक्तां गन्ध धूपाधिवासितां पुष्पतांबूलकुंकुमकर्पूरागरुचन्दनदीपकोपानच्छत्रचामरव्यजनासनसप्तधान्यघृतपूर्णकुंभसहितां शय्यामासाद्य तत्र हैमंकांचनपुरुषंस्थापयेत् ॥ ततो देशकालौसंकीर्त्य अद्याशौचान्तद्वितीयेह्नि काश्यपगोत्रस्यामुकप्रेतस्य स्वर्गकामः शय्या दानंकरिष्ये—इतिसंकल्प्य देयब्राह्मणं गन्धादिनासंपूज्य इमां सोपकरणांशय्यां ददामीतिद्विजकरेजलंदत्त्वा ददस्वेतिप्रतिवचना नन्तरं विप्रंशय्यायामुपवेशयेत ॥ ततः सोपकरणशय्यायैनमः—इतिशय्यांनमस्कृत्य कांचनपुरुषं गन्धपुष्पधूपदीपनैवेद्यतांबूला दिभिः संपूज्य नमस्कृत्य कुशत्रयतिलजलान्यादाय ॥ अद्याशौचान्तद्वितीयेह्नि काश्यपगोत्रस्यामुकप्रेतस्यपरलोकेसुखशयनार्थं स्व

गलोकप्राप्त्यर्थमिमांसोपस्करांशय्यां कांचनपुरुषप्रतिमायुतां विष्णुदैवत्याममुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे–इतिसतिल कुशोदकं विप्रहस्तेदद्यात् ॥ स्वस्तीति विप्रोवदेत् ॥ ततः शय्यादानप्रतिष्ठार्थंहिरण्यंदत्त्वा शय्यांसंस्पृशेत् ॥ ततोदाता–यथानकृष्ण शयनं शून्यंसागरजातया ॥ शय्याममाप्यशून्यास्तु तथाजन्मनिजन्मनि ॥ १ ॥ इतिप्रार्थ्यप्रणम्यविसृजेत् ॥ इतिशय्यादानम् ॥ अथत्रयो दशपददानम् ॥ तत्र आसनम् १ उपानहौ २ छत्रं ३ मुद्रिका ४ कमण्डलुम् ५ अन्नं ६ जलं ७ भाजनानि ८ वस्त्राणि ९ आज्यम् १० यज्ञोपवीतम् ११ यष्टिम् १२ तांबूलम् १३ इमानित्रयोदशदानद्रव्याणियथाशक्तिसंपाद्य कुशत्रयतिलजलान्यादाय देशकालौसंकीर्त्य (अपसव्येन) काश्यपगोत्रस्यामुकप्रेतस्यपरलोके सुखप्राप्त्यर्थमसद्गतिनिवारणार्थमिमानि आसनोपानच्छत्रमुद्रिकाकमण्डल्वन्नजल भाजनवस्त्राज्ययज्ञोपवीतयष्टितांबूलानि त्रयोदशदानानि नानादैवतानि नानानामगोत्रेभ्यो ब्राह्मणेभ्योदातुमहमुत्सृजे–प्रेतायउपतिष्ठंताम् ॥ एभिःपददानैरमुकप्रेतस्य प्रेतत्वनिवृत्तिःसद्गतिप्राप्तिरितिपठित्वा यथाचारंदद्यात् ॥ ततः शक्तौसत्यांगाःवाहनंयानंदासीदासवेश्मरत्नादी निचप्रेतमुद्दिश्य विप्रेभ्योदद्यात् ॥ इतित्रयोदशपददानम् ॥ अथोदकुंभदानम् ॥ तच्च[1] एकादशाहादारभ्ययावत्संवत्सरंदातव्यम् ॥ परन्त्वाधु निकाआपत्कल्पेन सपिण्डनस्यमुख्यतयाद्वादशाहकालत्वादेकस्मिन्नेव दिने पूर्वोक्तसान्नोदकुंभनिमित्तकषष्ट्यधिकशतत्रयांजलिदानंपि ण्डानांदानंचकुर्वन्त्यतस्तथैवलिख्यते ॥ तत्रप्रयोगः ॥ कुशत्रयतिलजलान्यादाय काश्यपगोत्रस्यामुकप्रेतस्य मरणदिनादारभ्यसंवत्सर पर्य्यंतं तृषानिवृत्त्यर्थं प्रतिदिनसान्नोदकुंभनिमित्तकषष्ट्यधिकशतत्रयांजलिदानं करिष्ये–इतिसंकल्प्य दक्षिणामुखःपातितवामजा

१ स्मृतिसमुच्चये–एकादशाहात्प्रभृति घटस्तोयान्नसंयुतः ॥ दिनेदिने प्रदातव्यो यावत्स्याद्वत्सरः सुतेगिति ।

नुरपसव्येन ऋजुकुशत्रयतिलजलैस्तर्पयेत् ॥ अमुकगोत्रामुकप्रेत एषतिलतोयांजलिस्ते मयादीयतेतवोपतिष्ठतामित्यश्वत्थादौ ३६० दद्यात् ॥ एवमेव क्षुधानिवारणार्थं ३६० पिण्डदानंकुर्य्यात् ॥ तत्र काश्यपगोत्रस्यामुकप्रेतस्य संवत्सरपर्यंतं क्षुधानिवारणार्थं प्रतिदिनश्राद्ध निमित्तकषष्ट्यधिकशतत्रयपिण्डदानंकरिष्य इतिसंकल्प्य हस्तमात्रकेस्थण्डिलेदर्भानास्तीर्य अमुकगोत्रामुकप्रेतप्रथममासिकश्राद्धनिमित्तकानीमानि त्रिंशत्पिण्डानितेमयादीयन्तेतवोपतिष्ठंतामिति त्रिंशत्पिण्डानि ३० दद्यात् ॥ एवमेव द्वितीयादिमासेषु ॥ इत्येकादशाहदिन कर्म ॥छ॥ ॥ अथशूद्राणांसपिण्डनश्राद्धम् ॥ तत्राधुनिका द्वादशाहे[1] अनुकल्पेनकुर्वंति तैथवलिख्यते ॥ तत्रादौसपिण्डनादिने प्रातः स्नात्वा नित्यावश्यकं समाप्य मध्याह्नेपुनः स्नात्वाशुक्लधौतवाससी परिधाय गोमयोपलिप्तायांभूमौ सपिण्डादिद्वारा पाकंकारयेत् ॥ ततोमृति स्थाने श्राद्धभूमिंपरिकल्प्यगोमयोदकेनोपलिप्य गौरमृत्तिकयाच्छात्र तत्र श्राद्धसामग्रीं जलपूरितान्द्वादशवर्धाश्चैकामामान्नपूरितांत्रर्घनींच संपाद्य आसनसमीपेतिलतैलेनदीपंप्रज्वाल्यस्थापयेत् ॥ काककुक्कुटादीनपसारयेच्छ्राद्धदेशावरणंचकुर्य्यात ॥ ततः स्वासनेप्राङ्मुखउपविश्य (सव्येन) दर्भपवित्रधारणंकृत्वाआचम्य ॥ अपवित्रः पवित्रो० इतिपठित्वा पुण्डरीकाक्षः पुनात्विति श्राद्धवस्तूनि स्वात्मानंचसिंचेत् ॥ ततः भूम्यैनमः ॥ भगवत्यैगयायैनमः ॥ भगवते गदाधरायनमः इतिप्रणम्य ॥ कुशत्रयतिलजलान्यादायदेशकालौ स्मृत्वा ॥ (अपसव्येन) काश्यपगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्त्या उत्तलोकप्राप्त्यर्थममुकगोत्रैरमुकप्रेतपितृपितामहप्रपितामहैरमुकामुकदासैः सह मृतद्वादशाहेपार्वणैकोद्दिष्टोभयात्मकं सपिण्डीकरणश्राद्धमहंकरिष्य इतिसंकल्पयेत् ॥ ततोदेवताभ्यः पितृभ्य

१ हेमाद्रिमाधवगारुडेषु—आनंत्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात्॥अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते—इति।नंत्र—मंत्रवर्ज्ज हि शूद्राणां द्वादशेहनि कीर्त्तितमिति ।

श्वेतित्रिः पठित्वा तिलान्गौरसर्षपान्गृहीत्वा ॥ नमोनमस्ते गोविन्द पुराणपुरुषोत्तम ॥ इदं श्राद्धं हृषीकेश रक्षतां सर्वतो दिशः ॥१॥ अग्नि
ष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ॥ तथा बर्हिषदः याम्यां ये पितरः स्थिताः ॥२॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ॥ अधश्चो
र्ध्वमपि कोणेषु हविष्मन्तः ॥३॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥ सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु वै ॥४॥ त्रायुष्मतपितॄणां च तृप्ति
र्भवतु शाश्वती ॥ इत्यनेन तिलान् सर्वतो विकीर्य ग्रन्थिं कुर्यात् ॥ अथासनादिदानम् ॥ तत्रादौ उदङ्मुख उपविश्य (सव्येन)
सजघनं दक्षिणं जान्वाच्य कुशत्रययवजलान्यादाय ॥ अद्य अस्मत्पितामहादित्रयश्राद्धसंबंधिनः कामकालसंज्ञका विश्वेदेवा इदमासनं वो नमः
इत्युच्चार्य्य देवतीर्थेन पूर्वाग्रं कुशत्रयं दैवमंडले उत्सृजेत् ॥ ततः कामकालसंज्ञकान्विश्वान्देवानावाहयिष्ये इत्युक्त्वा कामकालेभ्यो नमः ॥ आग
च्छन्तु महाभागा विश्वेदेवा महाबलाः ॥ ये यत्र योजिताः श्राद्धे सावधाना भवन्तु ते ॥१॥ इत्यनेनाऽऽवाहयेत् ॥ ततोऽर्घपात्रे कुशपत्रे धृत्वा देवतीर्थे
न देवेभ्यो नम इति जलं यवेभ्यो नम इति यवान् गंधपुष्पे च क्षिपेत् ॥ ततोऽर्घपात्रमादाय तत्रस्थे पवित्रे पलाशपत्रे धृत्वा ॥ अर्घ्यो नमः इत्यभिमंत्र्य ॥
अद्यपितामहादित्रयश्राद्धसंबंधिनः कामकालसंज्ञका विश्वेदेवा एष वो हस्तार्घो नमः इत्यर्घं दत्त्वा पात्रे पवित्रादि कृत्वा विश्वेभ्यो देवेभ्यः
स्थानमसीत्युत्तानं स्थापयेत् ॥ ततो गंधादिदानम् ॥ तत्र गंधपुष्पधूपदीपवस्त्रादिकमासने धृत्वा कुशत्रययवजलान्यादाय ॥ अद्यपितामहा
दित्रयश्राद्धसंबंधिनः कामकालसंज्ञका विश्वेदेवा एतानि गंधपुष्पधूपदीपतांबूलवासांसि वो नमः इत्युत्सृजेत् ॥ ततो विश्वेषां देवानाम
र्चनं संपूर्णमस्त्विति पूर्णतां वाचयित्वाऽग्रे भुवं संमृज्य पलाशादिपत्रावलीर्न्यस्य गौरमृत्तिकया भस्मना वार्घमंडलं कुर्य्यात् ॥ एवं देवक्रियाकाण्ड

१ कात्यायनः-अनंतर्गर्भिणं साग्रं कौशं द्विदलमेव च ॥ प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ एतदेव हि पिञ्जूल्या लक्षणं समुदाहृतमिति ।

निर्वर्त्य पित्रादिश्राद्धदेशमागत्यासनेदक्षिणामुखउपविश्य अपसव्यंकृत्वा सजवनंवामंजान्वाच्य कुशत्रयतिलजलान्यादाय ॥ अद्य काश्यपगोत्रस्यामुकदासप्रेतस्य इदमासनमुपतिष्ठतामितिऋजुकुशत्रयरूपंदक्षिणाग्रमासनं प्रेतमंडलेस्थापयेत् ॥ ततो द्विगुणभुग्नकुशत्रयतिलजलान्यादाय काश्यपगोत्रपितामहामुकदास इदमासनं तुभ्यंनमः ॥ इतिप्रथमासनंमोटकरूपंदक्षिणाग्रंपाश्चिमगतंपितामहाय उत्सृजेत् ॥ एवंप्रपितामहायवृद्धप्रपितामहायचोत्सृजेत् ॥ ततः पितॄनावाहयिष्ये इत्युक्त्वा आवाहय इत्यनुज्ञातस्तिलान्विकीर्य पितृभ्योनमः इतिपठेत् ॥ ततोऽर्घपात्रचतुष्टये दर्भदलमेकैकंपवित्रसंज्ञकंदक्षिणाग्रंधृत्वा ॥ अद्भ्योनम इतिप्रत्येकं जलंप्रक्षिप्य तिलेभ्योनम इतितिलान् तूष्णीं गंधपुष्पाणिच निक्षिपेत् ॥ ततः प्रेतार्घपात्रमादाय तत्रस्थंपवित्रंपलाशपत्रेधृत्वा अद्भ्योनमः इतिपात्रमभिमंत्र्य ॥ अमुकगोत्रामुकप्रेत एषतेऽर्घोमयादीयतेतवोपतिष्ठतामित्युक्त्वा पितृतीर्थेनपवित्रोपारि अर्घजलंकिंचिद्दद्यात्॥अर्घपात्रंचपवित्रजलसहितंपुरतः स्थापयेत् ॥ अथपात्रमेलनम् ॥ एवंप्रेतायार्घ्यंदत्त्वा प्रेतार्घ्यशेषंपितामहादिपात्रेषुसंयोजयेत् ॥तत्रप्रयोगः॥(सव्येन) कुशत्रयादीन्यादायदेशकालौसंकीर्त्य ( अपसव्येन ) काश्यपगोत्रस्यामुकदासप्रेतस्य प्रेतत्वनिवृत्तिपूर्वकंसद्गतिप्राप्त्यर्थं तत्पितृपितामहप्रपितामहानामर्घैः सहार्घसंयोजयिष्य इतिसंकल्पयेत् ॥ ततः प्रेतार्घपात्रंगृहीत्वा तत्रस्थंपवित्रं पितामहार्घपात्रे निधाय प्रेतार्घपात्रंदक्षिणहस्तेकृत्वा ॥ अमुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थं पितृसमत्वप्राप्त्यर्थंचतदर्घपात्रस्थंप्रथमांशजलं काश्यपगोत्रस्यप्रेतापितुरमुकदासस्यवसुरूपस्यार्घपात्रेण सहसंयोजयिष्ये -इतिप्रथमांशमर्घेणैवार्घेक्षिपेत् ॥ ततः तेनवसुलोकप्राप्तिः ॥१॥पुनः प्रेतपवित्रं प्रपितामहार्घपात्रेनिधाय अमुकप्रेतस्य०

१ मैथिलरुद्रधरकृतश्राद्धविवेके-पात्रत्रयमग्रधृत्वाइत्यादिप्रपंचः स्वरुच्या एवकल्पितः स शिष्टैर्नादरणीयः प्रमाणशून्यत्वात् ।

प्रेतपितामहस्यामुकदासस्यरुद्ररूपस्यार्घपात्रेण सहसंयोजयिष्ये—इति द्विती
तदर्घपात्रस्थं द्वितीयांशजलं काश्यपगोत्रस्य
यांशं प्रेतार्घपात्रजलमर्घेणैवार्घे क्षिपेत् ॥ तेनरुद्रलोकप्राप्तिः ॥ २ ॥ ततः प्रेतपवित्रं वृद्धप्रपितामहार्घपात्रे कृत्वा ॥ अमुक
प्रेतस्य प्रेतत्व॰ तदर्घपात्रस्थं तृतीयांशजलं काश्यपगोत्रस्य प्रेतप्रपितामहस्यामुकदासस्यादित्यरूपस्यार्घपात्रेण सह संयो
जयिष्ये—इतितृतीयांशंप्रेतार्घपात्रजलमर्घेणैवार्घे क्षिपेत् ॥ तेनआदित्यलोकप्राप्तिः ॥ ३ ॥ इतिपात्रमेलनम् ॥ ततः प्रेतपवित्रं
प्रेतार्घपात्रेकृत्वा तत्पात्रंप्रेतासनवामप्रदेशेस्थापयेत् ॥ अथपितामहादिभ्योर्घदानम् ॥ तत्रपितामहार्घपात्रंगृहीत्वा तत्रस्थंपवित्रं
तदग्रेपलाशपत्रेधृत्वा ॥ अर्घ्योनमः—इत्यर्घपात्रमभिमंत्र्यदक्षिणकरेकृत्वा ॥ काश्यपगोत्रपितामहामुकदास एपतेहस्ताऽर्घोनमः ॥ इति
पितृतीर्थेनपवित्रोपरिजलंदद्यात् ॥ एवमेवप्रपितामहवृद्धप्रपितामहाभ्यांदद्यात् ॥ अवशिष्टजलसहितान्यर्घपात्राणिपुरतःस्थापयेत्॥ ततोवृ
द्धप्रपितामहार्घपात्रस्थानिजलादीनिप्रपितामहार्घपात्रेकृत्वा ॥ तत्सर्वंपितामहार्घपात्रेकृत्वा ॥ तत्पितृभ्यः स्थानमसीत्यासनवामप्रदेश
भूमावधोमुखंस्थापयेत् ॥ तदुपरिप्रपितामहाद्यर्घपात्रद्वयंस्थापयेत्॥स्थापितान्यर्घपात्राणिदक्षिणादानपर्यंतंनोद्धरेन्नचालयेत्॥ततोगंध,दि
दानम् ॥ गंधपुष्पधूपदीपतांबूलवासांसिधृत्वा कुशत्रयतिलजलान्यादाय ॥ अमुकगोत्रप्रेतसपिंडीकरणश्राद्धे एतानिगंधपुष्पधूपदीपतांबू
लवासांसितेमयादीयंते तवोपतिष्ठंतामितिप्रेतायोत्सृजेत् ॥ पुनर्द्विगुणभुग्नकुशत्रयादीन्यादाय ॥ काश्यपगोत्रपितामहामुकदास एतानिगंध
पुष्पधूपदीपतांबूलवासांसितुभ्यंनमः इतिपितामहायोत्सृजेत् ॥ एवमेवप्रपितामहायवृद्धप्रपितामहायचोत्सृजेत् ॥ ततः पितॄणामर्चनंसंपूर्णं
मांस्त्वितिपठित्वा सर्वत्रभुवंसंमृज्यपलाशादिपत्रावलीःस्थापयेत् ॥ अथाग्नौकरणम् ॥ ततःश्राद्धीयादामान्नादन्नंगृहीत्वा अग्नौकरणंकरिष्यइति

पृष्ट्वा कुरुष्वेत्यनुज्ञातः ( अपसव्येन ) पत्रपुटकादिस्थजलेव्यंजनक्षारवर्जितम्॥अग्नयेकव्यवाहनायनमः इदमग्नये० १सोमायपितृमतेनमः इदंसोमायपितृमते २ इतिहुत्वाहुतशेषंपितामहादिपात्रेषुतूष्णींदत्त्वापिण्डार्थमवशेषयेत् ॥ ( नप्रेतपात्रेदानम् नचविश्वेदेवपात्रे ॥ नहि स्मृताःशेषभाजो विश्वेदेवाः पुराणगैरितिवाक्यात् )ततः( सव्येन)देवपात्रेऽन्यदामान्नंदत्त्वादैवपूर्वंचतुर्गुणंद्विगुणंसमंवा आमान्नंसोपस्करंदत्त्वा मधुनाभिघार्य मधुमधुमध्वित्यभिमंत्रयेत् ॥ ततः सव्यादिनादेवपात्रमुत्तानकराभ्यामालभ्य विष्णवेनमः इत्यङ्गुष्ठंदत्त्वा यवेभ्योनम इतिप रितोयवान्विकीर्य्य वामकरेणपात्रंस्पृशन्दक्षिणकरेणकुशत्रययवजलान्यादाय ॥ अद्यास्मत्पितामहादित्रयश्राद्धसंबंधिनः कामकालसंज्ञ का विश्वेदेवा इदमामान्नंसोपस्करंहव्यममृतरूपंवोनमः—इत्युदकंदेवतीर्थेनदक्षिणभागेभूमौक्षिपेत् ॥ ततोऽपसव्यादिनाप्रेतपात्रवर्जं पितामहा दिपात्रत्रयालंभः॥ प्रेतपात्रस्यतुपरितः तिलेभ्योनम इतितिलान्विकीर्य कुशत्रयादीन्यादाय काश्यपगोत्रामुकप्रेतसापिण्डीकरणश्राद्धे इद मन्नंसोपस्करंसजलंतेमयादीयतेतवोपतिष्ठतामितिवामभागेजलमुत्सृजेत् ॥ ततोहस्तप्रक्षालनंकृत्वापितामहपात्रंन्युब्जाभ्यांव्यस्ताभ्यां पाणिभ्यांस्पृष्ट्वा ॥ विष्णवेनमः इत्यङ्गुष्ठंदत्त्वा ॥ तिलेभ्योनम इतितिलान्परितोविकीर्य ॥ वामकरेणपात्रंस्पृशन् द्विगुणभुग्नकुशत्र यादीन्यादाय ॥ काश्यपगोत्र पितामहामकदास इदमन्नंसोपस्करंसजलममृतरूपंतुभ्यंनमः इतिपितृतीर्थेन आसनवामभागेजलमुत्सृ जेत्॥एवमेवप्रपितामहायवृद्धप्रपितामहायचामान्नमुत्सृजेत् ॥ ततः अन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्त्वितिप्रार्थ्य मधुमधुमध्वितिचपठेत्॥ततःसप्तव्याधादशार्णेषु मृगाः कालंजरेगिरौ॥चक्रवाकाःशरद्वीपे हंसाःसरसिमानसे॥तेऽभिजाताःकुरुक्षेत्रे ब्राह्मणावेद पारगाः॥प्रस्थितादूरमध्वानं यूयंतेभ्योऽवसीदत॥इतिपठित्वा रुचिस्तवादिकंपठेत्॥ततः पितामहपात्रसन्निधौभूमिंप्रोक्ष्य तत्रदक्षिणाग्रंकुशत्र

यमास्तीर्य्य आमान्नमादायसव्यंजनतिलमेकीकृत्य॥अग्निदग्धाश्चयेजीवा येप्यदग्धाः कुलेमम॥भूमौदत्तेनतृप्यंतु तृप्तायान्तुपरांगतिम्॥१॥
इतिकुशोपरिपितृतीर्थेनविकिरेत्॥ततः सव्येनाचम्यविष्णुंस्मृत्वा अपसव्येनप्रेतपिण्डार्थंवेदिंनिर्मायतत्पूर्वगतमपरांपितामहादित्रयपिण्डदा
नार्थंचवेदिंकुर्य्यात् ॥ ततः पितामहादिवेदिमध्येदर्भमूलेनदक्षिणाग्रांरेखांकृत्वा उल्मुकंभ्रामयित्वा उभयत्रसकृदाच्छिन्नकुशान्दक्षिणाग्रा
स्तीर्त्वापात्रचतुष्टयेजलतिलगंधपुष्पाणिकुर्यात्॥ततःप्रथमपात्रमादाय ॥ काश्यपगोत्रामुकप्रेतसपिण्डीकरणश्राद्धे अत्रावनेनिक्ष्वतेमयादी
यतेतवोपतिष्ठतामितिप्रथमवेदिकायांकुशोपारि अवनेजनंदद्यात् ॥ ततोऽपरपुटकंगृहीत्वा काश्यपगोत्रपितामहामुकदास अत्रावनेनिक्ष्वते
नमः इतिद्वितीयवेदिकायांकुशमूलेपितामहायावनेजनंदद्यात् ॥ एवमेवप्रपितामहायकुशमध्ये वृद्धप्रपितामहायकुशाग्रेऽवनेजनंदद्यात् ॥ त
तोगृहपाकेनवापायसेनसक्तुभिर्वाऽऽमान्नेनमध्वाज्यतिलव्यंजनसहितेन चतुरः पिण्डान्कृत्वा मधुघृताभ्यामाभिघार्य्य ॥ प्रथमपिण्डं कुशत्र
यादीनिचादाय काश्यपगोत्र अमुकदासप्रेत सपिण्डीकरणश्राद्ध एतत्तेपिण्डंमयादीयते तवोपतिष्ठतामिति पितृतीर्थेन प्रथमवेदि
कायां कुशोपारिदद्यात् ॥ ततोद्वितीयपिण्डं द्विगुणभुग्नकुशादीन्यादाय काश्यपगोत्रपितामहामुकदास एतत्तेपिण्डंनमः इतिद्वितीय
वेदिकायां प्रथमावनेजनस्थाने सव्योपगृहीतदक्षिणहस्तेनपितृतीर्थेनपितामहायपिण्डंदद्यात् ॥ एवमेवप्रपितामहाय वृद्धप्रपितामहायच
पिण्डंदद्यात् ॥ ततः पितामहादिपिण्डास्तरणकुशमूले लेपभागभुजस्तृप्यन्तु–इतिकरंप्रोञ्छ्य हस्तौप्रक्षाल्यसव्येनाचम्यविष्णुंस्म
रेत् ॥ ततोऽपसव्येन प्रेतावनेजनपात्रमादाय काश्यपगोत्रामुकप्रेतात्रप्रत्यवनेनिक्ष्वतेमयादीयते तवोपतिष्ठतामितिप्रेतपिण्डोपारि प्रत्य
वनेजनंदद्यात्॥ततः प्रेतपिण्डं सूत्राच्छादनगंधपुष्पधूपदीपतांबूलादिभिरभ्यर्च्य ॥ अनेनपिण्डदानेन प्रेतस्यसद्गतिः उत्तमलोकावाप्तिः ॥

अथपिण्डसंयोजनम् ॥ तत्रादौ पिण्डसूत्रादिकमपनीयहस्तद्वयेनसुवर्णरजतशलाकां तदभावे दर्भमयींरज्जुं मधुघृताक्तामादाय तया प्रेतपिण्डंसमंत्रेधाविभजेत् ॥ तत्रदेशकालौस्मृत्वा काश्यपगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्तिपूर्वकपितृसमत्वप्राप्त्यर्थं वस्वादिलोकप्राप्त्यर्थंच अमुकगोत्राणां तत्पितृपितामहप्रपितामहानांपिण्डैः सह अमुकप्रेतस्यपिण्डसंयोजनंकरिष्ये—इतिसंकल्प्य ॥ ततः प्रेतपिण्डस्य प्रथमभागमादाय वामहस्तेकृत्वा दक्षिणहस्तेपितामहपिण्डंधृत्वा काश्यपगोत्रस्यामुकप्रेतस्य पिण्डप्रथमशकलममुकगोत्रस्य प्रेतपितुरमुकदासस्यवसुरूपस्य पिण्डेनसहसंयोजयिष्ये—इत्युक्त्वा पितामहपिण्डेनसह मधुघृताक्तंवर्तुलंचकृत्वा काश्यपगोत्रपितामहामुकदासएषते पिण्डोनमः इतिकुशमूले पितृतीर्थेनदद्यात् ॥ तेनवसुलोकप्राप्तिः ॥ १ ॥ ततोद्वितीयं प्रेतपिण्डभागं तत्पितामहपिण्डंच गृहीत्वा ॥ काश्यपगोत्रस्यामुकप्रेतस्य द्वितीयंपिण्डशकलं काश्यपगोत्रस्य प्रेतपितामहस्य रुद्ररूपस्य पिण्डेनसह संयोजयिष्ये इत्युक्त्वा प्रपितामहपिण्डेनियोज्य काश्यपगोत्र प्रपितामहामुकदास एषतेपिण्डोनमः इतिकुशमध्येदद्यात् ॥ तेनरुद्रलोकप्राप्तिः॥२॥पुनस्तृतीयभागमादाय ॥काश्यपगो० अमुक प्रेतस्य तृतीयं पिण्डशकलं काश्यपगोत्रस्य प्रेतप्रपितामहस्यादित्यरूपस्यपिण्डेनसह संयोजयिष्ये इत्युक्त्वा वृद्धप्रपितामहपिण्डेपूर्ववन्नियोज्य० काश्यपगोत्र वृद्धप्रपितामहामुकदास एषतेपिण्डोनमः इतिकुशाग्रेदद्यात् ॥ तेन आदित्यलोकावाप्तिः ॥३॥ एवंप्रेतभागेनसह पिण्डत्रयं प्रत्येकमेकीकृत्य समंवर्तुलंकृत्वा ॥ ततः—एषवोनुगतः प्रेतः पितरस्तंददामिवः ॥ शुभं भवतु शेषाणां जायंतांचिरजीविनः ॥ १ ॥ इतिपिण्डानभिमृशेत् ॥ ( अत ऊर्ध्वंकदाचिद्भ्रांत्यापिप्रेतशब्दोनकार्य्यः ) ॥ततस्तूष्णींवामावर्त्तेन उदङ्मुखोभूत्वा श्वासंनियम्य तेनैवपथापरावृत्य पितृभ्योनमः इतिपिण्डोपरि श्वासमुत्सृजेत् ॥ ततः पूर्वदत्तावनेजनपात्रं

गृहीत्वा ॥ काश्यपगोत्र पितामहासुकदास अत्रप्रत्यवनेनिक्ष्वतेनमः इतिपितामहपिण्डोपरिप्रत्यवनेजनंदद्यात्॥एवमेव प्रपितामहवृद्ध
प्रपितामहपिण्डोपरिप्रत्यवनेजनंदद्यात् ॥ ततोनीवीं विस्रंस्य आचम्य॥वसंतायनमस्तुभ्यं ग्रीष्मायचनमोनमः॥ वर्षाभ्यश्चशरत्संज्ञऋतवेच
नमः सदा ॥ हेमंतायनमस्तुभ्यं नमस्तेशिशिरायच ॥ माससंवत्सरेभ्यश्च दिवसेभ्योनमोनमः ॥ इतिऋतुरूपान्पितॄन्नमस्कुर्य्यात् ॥
ततः पितृभ्योनमः इतिप्रत्येकंपितामहादिपिण्डोपरिसूत्रत्रयंदत्त्वा कुशादीन्यादाय काश्यपगोत्राः पितामहप्रपितामहवृद्धप्रपिता
महा असुकासुकदासा एतानिवासांसि युष्मभ्यंनमः इत्युत्सृजेत् ॥ ततः पिण्डान्गंधपुष्पधूपदीपतांबूलदक्षिणादिभिः संपूज्य पिण्ड
शेषान्नं पिण्डसमीपेविकिरेत् ॥ ततः सव्यंकृत्वाहस्तौप्रक्षाल्य उदङ्मुखोदेवान्नपात्रे शिवा आपः संतु इतिजलम् ॥ सौमनस्यमस्त्व
तिपुष्पम् ॥अक्षतंचारिष्टंचास्तु—इतियवांश्चनिक्षिपेत्॥एवमेव (अपसव्येन)पित्रादिपात्रचतुष्टये प्रत्येकंजलपुष्पतिलान् दत्त्वा॥काश्यपगोत्र
स्यपितुरसुकदासस्य सपिण्डीकरणश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामिति पित्रेऽक्षय्योदकंदद्यात् ॥ एवमेवपितामहादीनामप्य
क्षय्योदकंदद्यात् ॥ ततः(सव्येन ) प्राङ्मुखः कृतांजलिर्दक्षिणांदिशंपश्यन् अघोराः पितरःसंतु—इति पठित्वा समाचारात्पूर्वाग्रांजलधारांद
द्यात् ॥ततः गोत्रंनोवर्द्धतां दातारोनोऽभिवर्द्धंतां संततिश्चवर्द्धतां श्रद्धाचनोमाव्यगमद्बहुदेयंचनोऽस्तु ॥ अन्नंचनोबहुभवेदतिथींश्चलभेमहि
याचितारश्चनःसंतु माचयाचिष्मकंचन ॥एताः सत्या आशिषः संतु—इतिब्राह्मणद्वारायाचेत॥ततोऽपसव्येन पिण्डोपरिसपवित्रान्कुशाना
स्तीर्य ॥ पितृभ्योनमः इति तदुपरि दक्षिणाग्रांजलधारांदद्यात् ॥ ततः पिण्डानुत्थाप्याघ्रायस्थाल्यांनिधापयेत् ॥ पिण्डाधारसकृदा
च्छिन्नदर्भानुल्मुकंचवह्नौक्षिपेत् ततोऽर्घपात्राण्युत्तानीकृत्य सव्येनदेवदक्षिणांदद्यात् ॥ तत्रकुशत्रययवजलहिरण्यद्रव्यमादाय ॥

अद्यास्मत्पितामहादित्रयसंबंधिकामकालसंज्ञकानां विश्वेषांदेवानां कृतैतच्छ्राद्धप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायदातुमहमुत्सृजे इतिदद्यात् ॥ ततोऽपसव्यादिनाद्विगुणभुग्नकुशत्रयादि रजतद्रव्यंचादाय ॥ काश्यपगोत्रस्यपितुरमुकदासस्य कृतैतत्सपिण्डीकरणश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दातुमहमुत्सृजे–इति पितृश्राद्धदक्षिणांदद्यात ॥ एवमेव पितामहप्रपितामहवृद्धप्रपितामहानांक्रमेणश्राद्धदक्षिणांद्यात् ॥ ( दैवेरजतनिषेधः ) ततः सव्येन देवताभ्यः० इति त्रिर्जपित्वाविश्वेदेवाःप्रीयंतामितिब्रूयात्॥ततोऽपसव्येन द्वादशसजलघटसंकल्पंकुर्यात्॥तत्रद्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥काश्यपगोत्रस्यास्मत्पितुरमुकदासस्यपरलोकेक्षुत्पिपासानिवृत्त्यर्थमिमे द्वादशकुंभाः सान्नोदका नानानामगोत्रेभ्यः ब्राह्मणेभ्योदातुमहमुत्सृजे–इतिसंकल्प्य सुशीतलजलोपेताः सर्वोपस्करसंयुताः एतेघटामयादत्ताः स्वर्गद्वार्युपतिष्ठतामितिपठित्वायथाचारंदद्यात् ॥ ततः पितॄन्विसृज्य । श्राद्धीयदीपान्पाणिभ्यां निर्वाप्य हस्तौपादौप्रक्षाल्य आचम्य कर्मपूर्त्तिकामो विष्णुंस्मरेत् ॥ ततः पिण्डान्गामजं वायसान्वाखादयेत् ॥ अग्नौजलेवाक्षिपेत् ॥ ततो बलिकर्मकृत्वा यथाशक्तिदशप्रभृतिब्राह्मणान् आमान्नेनतोषयेत्॥ततोऽतिथिबांधवादिभिः सह स्वयमपिभोजनं कुर्यात् ॥ इतिसपिण्डनश्राद्धपद्धतिः समाप्ता॥ अथद्वादशाहेसपिण्डनोत्तरं वैतरणीधेनुदानंशय्यादानंचकुर्वंति ॥ एकादशाहे सद्ब्राह्मणाऽलाभात्॥ तद्विधिस्तुपूर्ववज्ज्ञेयः॥ अथशूद्राणाम् ऊनमासिकादिपंचदशसान्नोदकुंभदानं[1] तच्चसप्तदशाहाच्चतुर्दशदिनादारभ्यप्रतिमासंकार्यम्॥तत्र तावदाचम्य विष्णुंस्मृत्वा सान्नोदकुंभमुपनीय ॥ कुशत्रयतिलजलान्यादाय ॥ देशकालौ संकीर्त्य ॥ काश्यपगोत्रस्य पितुरमुकदासस्य

१ गोभिलः–यस्यसंवत्सरादर्वाग्विहिता तु सपिण्डता। विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडश–इति ।

क्षुत्तृषोपशांत्यर्थं यावद्वत्सरं तावत्प्रतिमासं सान्नोदकुंभदानंकरिष्ये इति संकल्पंकुर्यात् ॥ ततोऽपसव्यंकृत्वा दक्षिणामुखः पातितवामजानुर्द्विगुणभुग्नकुशत्रयतिलजलान्यादाय ॥ अमुकगोत्रपितरमुकदास ऊनमासिकसान्नोदकुंभश्राद्धे इदमासनंतेनमः इति पित्रेमोटकरूपमासनं तिलजलसहितंदक्षिणाग्रमुत्सृजेत ॥ पुनर्द्विगुणभुग्नकुशत्रयादीन्यादाय ॥ काश्यपगोत्रपितरमुकदास ऊनमासिकश्राद्धे अयं सान्नोदकुंभस्तुभ्यंनमः इतिसंकल्प्य ब्राह्मणायदद्यात् ॥ ततः अद्यकृतैतत्सान्नोदकुंभदानप्रतिष्ठार्थमिदंरजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणांदातुमहमुत्सृजे–इति दक्षिणांदद्यात ॥ एवमेवमासिकादिचतुर्दशश्राद्धनिमित्तकसान्नोदकुंभदानंकुर्यात् ॥ प्रतिमासंकरणाशक्तौ पुत्रजन्मादिवृद्धिप्राप्तौ ऊनषाण्मासिकेत्रैपाक्षिकेवा सप्तदशेऽहनियथाचारं सर्वाण्यपकृष्यतंत्रेणकुर्यात् ॥ ( वृद्ध्युत्तरनिषेधनात ) ॥ तत्रप्रयोगः ॥ देशकालौसंकीर्त्य ॥ अमुकगोत्रस्यपितुरमुकदासस्यक्षुत्तृपोपशांत्यर्थमूनमासिकं१ मासिकं२ त्रैपाक्षिकं३ द्वितीयमासिकं ४ तृतीयमासिकं५ चतुर्थ०६ पंचम०७ ऊनषाण्मासिकं ८ षाण्मासिकं ९ सप्तम०१० अष्टम०११ नवम०१२ दशम० १३ एकादश० १४ ऊनाब्दिकं१५ च एतानिपंचदशसान्नोदकुंभश्राद्धानिस्वस्वकालकर्त्तव्यानि इदानींममकुलेभविष्यवृद्धिनिमित्तत्वात्सर्वाण्यपकृष्यसांकल्पेनविधिनातंत्रेणसद्यः करिष्ये इतिसंकल्पयेत् ॥ ततोऽपसव्यंकृत्वा द्विगुणभुग्नकुशत्रयादीन्यादाय ॥ काश्यपगोत्र पितरमुकदास ऊनमासिकाद्यूनाब्दिकान्तपंचदशसान्नोदकुंभश्राद्धनिमित्तकमिदमासनं पंचदशधाविभज्यतुभ्यंनमः इत्यासनंदक्षिणाग्रमुत्सृजेत् ॥ ॥२४४॥ पुनः काश्यपगोत्र पितरमुकदास ऊनमासिकाद्यूनाब्दिकान्तपंचदशश्राद्धनिमित्तकानि इमानिपंचदशसान्नोदकुंभानितुभ्यंनमः इतिसंक

१ द्वादशाहेचषाण्मासे त्रिपक्षेवाथवत्सरं । उदकुंभाःप्रदातव्या मार्गेतस्यसुखायवै ॥ इतिगारुडात् ।

ल्प्य दानप्रतिष्ठादक्षिणासहितपंचदशसान्नोदकुंभानिब्राह्मणेभ्योदद्यात् ॥ इतिसान्नोदकुंभदानम् ॥ अथऊनमासिकादिपंचदशश्राद्धानि ॥ तावच्चतुर्दशेऽहनि । ऊनमासिकैकोद्दिष्टंकृत्वा क्रमेणमासिकादिश्राद्धानिकुर्यात् ॥ प्रतिमासंकरणाऽशक्तौपुत्रजन्मविवाहादिवृद्धिप्राप्ता ऊनमासिके त्रैपक्षिकेवा ऊनषाण्मासिके एकद्वित्रिन्यूनदिने भौमार्कमंदनंदातिथियुग्मैकपादद्विपादत्रिपादचतुर्दशीशुक्रवारकर्तृनक्षत्रभद्रा व्यतीपातादिवर्जिते एकस्मिन्नेवदिनेपंचदशश्राद्धानिकुर्यात् ॥ तत्रप्रयोगः ॥ श्राद्धपूर्वदिने एकभक्तादिनियमंविधाय श्राद्धदिनेप्रातः स्नात्वा धौतवाससीपरिधाय नित्यकार्यंकृत्वा मध्याह्नेपुनः स्नात्वा गोमयादिनासंस्कृतंश्राद्धदेशमागत्य तिलतैलेनदीपंप्रज्वाल्य स्वासने प्राङ्मुखउपविशेत् ॥ ततः पवित्रधारणंकृत्वा आचम्य अपवित्रः पवित्रोवा० इतिपठित्वा पुंडरीकाक्षः पुनातु इतिजलेनद्रव्याणिस्वात्मानंचप्रोक्षयेत् ॥ भूम्यैनमः ॥ गयायैनमः ॥ गदाधरायनमः इति नत्वा कुशत्रयतिलजलान्यादाय देशकालौसंकीर्त्य अद्यकाश्यपगोत्रस्यपितुरमुकदासस्य यावत्सांवत्सरं तावत्क्षुत्तृप्त्यर्थमूनमासिकं १ मासिकं २ त्रैपक्षिकं ३ द्वितीयमासिकं ४ तृतीय० ५ चतुर्थ० ६ पंचम० ७ ऊनषाण्मासिकं ८ षष्ठमासिकं ९ सप्तम० १० अष्टम० ११ नवम० १२ दशम० १३ एकादशमासिकं १४ ऊनाब्दिकं १५ च एतानिपंचदशश्राद्धानिस्वस्वकालेकर्त्तव्यानि इदानींममकुलेभविष्यवृद्धिनिमित्तत्वात्सर्वाण्यपकृष्य एकोद्दिष्टविधिनातंत्रेण

---

१ गालवः--ऊनषाण्मासिकंषष्ठे मासार्द्धेऽनमासिकम् ॥ त्रैपक्षिकंत्रिपक्षेस्यादूनाब्दं द्वादशेतथा--इति । २ एकद्वित्रिदिनैरूने त्रिभागेनोनएववा ॥ श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः--इति । ३ हेमाद्रौगार्ग्यः--नंदायां भार्गवदिने चतुर्दश्यांत्रिपुष्करे ॥ ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्--इति । ४ माधवीयेशांख्यायनिः--सपिंडीकरणादर्वागपकृष्यकृतान्यपि ॥ पुनरप्यपकृष्यंतेवृद्ध्युत्तरनिषेधनादिति ॥ निषेधश्चकात्यायनेनोक्तः--निवृत्त्यवृद्धितंत्रंतु मासिकानिनतंत्रयोदिति ।

सद्यः करिष्ये इतिसंकल्प्य विष्णुंस्मरेत् ॥ ततोऽपसव्यंकृत्वा । दक्षिणामुखः पातितवामजानुस्तिलगौरसर्षपान्गृहीत्वा नमोनमस्तेगो विंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः॥१॥इतिसर्वत्रविकीर्य नीवीबंधंकुर्यात् ॥ ततो मोटकतिलजलान्यादाय काश्य पगोत्र पितरमुकदास ऊनमासिकाद्यूनाब्दिकान्तपंचदशश्राद्धनिमित्तकैकोद्दिष्टश्राद्धे इदमासनंतुभ्यंनमः इत्युच्चार्य्य पितृतीर्थेन मोटक रूपदक्षिणाग्रकुशत्रयात्मकमासनमुत्सृजेत् ॥ ततः तिलेभ्योनमः इतितिलान्विकीर्य अर्घपात्रोपरिपवित्रंधृत्वा तत्र अर्घ्योनमः इतिज लंप्रक्षिप्य तिलेभ्योनमः इतितिलान् तूष्णींगंधपुष्पेनिक्षिपेत् ॥ ततोऽर्घपात्रसंपत्तिरस्तु इतिपठित्वा अर्घपात्रं वामहस्ते कृत्वा तत्र स्थंपवित्रं पलाशपत्रे धृत्वा अर्घ्योनमः इत्यर्घपात्रमभिमंत्र्य मोटकादीन्यादाय अद्य काश्यपगोत्र पितरमुकदास ऊनमा सिकाद्यूनाब्दिकान्तपंचदशश्राद्धनिमित्तक एषतेहस्तार्घोनमः इत्युच्चार्य्य दक्षिणकरेण पितृतीर्थेन पवित्रोपरि सावशेषम् अर्घंदद्या त् ॥ अर्घपात्रंच पितृवामपार्श्वे पित्रेस्थानमसीतिन्युब्जींकुर्य्यात् ॥ दक्षिणादानपर्यंतं न चालयेत् ॥ ततो गंधपुष्पधूपदीपादिकं धृत्वा मोटकादीन्यादाय अद्यकाश्यपगोत्र पितरमुकदास ऊनमासिकाद्यूनाब्दिकान्तपंचदशश्राद्धनिमित्तकानि एतानि गंधपुष्प धूपदीपतांबूलवासांसितुभ्यंनमः इत्युत्सृजेत् ॥ ततः अर्चनं संपूर्णमस्त्वित्युक्त्वा गौरमृत्तिकया जलेनवा आसनं वेष्टयित्वार्घ मंडलंकुर्यात् ॥ अत्रपरकीयभूमौश्राद्धकरणे इदमन्नंभूस्वामिपितृभ्योनमः इतिघृतादियुक्तमन्नंदद्यात् ॥ ततो भोजनपात्रे उष्णमन्नं सघृतम् अनेकव्यंजनयुतं सुशीतलजलसहितं यथावत्परिविष्यमधुदत्त्वा मधुमधुमध्वित्यभिमंत्रयेत् ॥ ततः अन्नपात्रं न्युब्जपा णिभ्यांन्यस्ताभ्यां स्पृष्ट्वा विष्णवेनमः इतिपठित्वा स्वाङ्गुष्ठमनखम् विष्णवेनमः इत्यन्नेनिवेश्य इदमन्नम् इमाआपः इदमा

ज्यम् एतत्सर्वंकव्यमितिपठित्वा तिलेभ्योनमः । इत्यन्नपात्रपरितस्तिलान्विकीर्य्य वामकरेणपात्रमत्यजन्दक्षिणकरेणमोटकादीन्या
दाय अद्यकाश्यपगोत्रपितरमुकदासऊनमासिकाद्यूनाब्दिकान्तपंचदशश्राद्धनिमित्तकमिदमन्नंसोपस्करंकव्यम् अमृतरूपंतुभ्यंनमः इत्यु
दकंपितृतीर्थेनपित्रासनवामभागेभूमौक्षिपेत्॥ततःअन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्तु इतिप्रार्थ्य मधुमधुमाध्वि
तिजपेत्॥ततः सप्तव्याधादशार्णेषु मृगाःकालंजरेगिरौ॥चक्रवाकाःशरद्वीपे हंसाःसरसिमानसे ॥१॥ तेभिजाताःकुरुक्षेत्रे ब्राह्मणावेदपारगाः॥
प्रस्थितादूरमध्वानं यूयंतेभ्योऽवसीदथ॥२॥इतिपठित्वा अन्यानिसप्तार्चिरुचिस्तवप्रभृतीनियथाशक्तिजपेत् ॥ ततः उच्छिष्टसन्निधौभूमिंप्रो
क्ष्य तत्र दक्षिणाग्रंकुशत्रयमास्तीर्य्य सर्वप्रकारमन्नंसव्यंजनमुद्धृत्यसतिलमेकीकृत्य अग्निदग्धाश्चयेजीवा येप्यदग्धाः कुलेमम॥भूमौदत्तेनतृ
प्यन्तु तृप्तायांतुपरांगतिम्—इतिकुशोपरितदन्नंविकीर्य(सव्येन)आचम्य हरिंस्मृत्वा मधुमधुमाध्वितिचजपेत् ॥ततोऽपसव्येन उच्छिष्टसन्निधौ
चतुरस्रंदक्षिणप्लवंस्थानंनिर्माय तन्मध्येदर्भपिंजूलीमूलेनदक्षिणाग्रांप्रादेशमात्रांरेखांकृत्वा दर्भपिंजूलीमुत्तरस्यांदिशिनिक्षिपेत् ॥ ततो
ज्वलदुल्मुकंरेखोपरिभ्रामयित्वादक्षिणतोनिदध्यात्॥ ततः उपमूलसकृल्लूनकुशत्रयंरेखोपरिस्तीर्त्वा देवताभ्यः०इतित्रिःपठेत्॥ततःसतिलज
लपात्रंगृहीत्वा अद्य काश्यपगोत्रपितरमुकदास ऊनमासिकाद्यूनाब्दिकान्तपंचदशश्राद्धपिण्डस्थानेऽत्रावनेनिक्ष्वतेनमः इतिकुशो
परि अवनेजनंदद्यात् ॥ किंचिज्जलंपात्रे अवशेषयेत् ॥ ततोगृहपाकेनवा पायसेनसक्तुभिर्वायवपिष्टेन मध्वाज्यतिलव्यंजनसहितंबिल्वोपमंपि
ण्डंनिर्माय मधुघृताभ्यामभिघार्य्य मोटकादियुतमादाय अद्यकाश्यपगोत्रपितरमुकदासऊनमासिकाद्यूनवार्षिकान्तपंचदशश्राद्धनिमि
त्तक एषतेपिण्डोनमः—इतिसव्योपगृहीतदक्षिणहस्तेनावनेजनस्थानोपिण्डंदद्यात् ॥ ततोलेपभागभुजस्तृप्यंतु—इतिदर्भमूलेकरंप्रोञ्छ्य

हस्तौप्रक्षाल्य सव्येनाचम्यहरिंस्मरेत्॥ततोऽपसव्यादिना पित्रेनम इतिपठित्वा वामावर्त्तेनोदङ्मुखोभूत्वा प्रीतमनाःश्वासंनियम्यतेनैवपथा परावृत्य पित्रेनमः इतिश्वाससमुत्सृजेत् ॥ ततःपूर्वदत्तावनेजनपात्रजलेन अद्यकाश्यपगोत्रपितरमुकदासअत्रप्रत्यवनेनिक्ष्वतेनमः इति पिण्डोपरिप्रत्यवनेजनंदत्त्वा नीवींविस्रंस्य सव्येनाचम्य(अपसव्येन)वसंतायनमस्तुभ्यं ग्रीष्मायचनमोनमः॥वर्षाभ्यश्चशरत्संज्ञऋतवेचनमः सदा ॥ १॥ हेमन्तायनमस्तुभ्यं नमस्तेशिशिरायच॥माससंवत्सरेभ्यश्च दिवसेभ्योनमोनमः॥२॥इतिकृताञ्जलिःप्रार्थयेत् ॥ततःएतत्तेवासो नमःइतिपिण्डोपरिसूत्रमूर्णादशांवादत्त्वा काश्यपगोत्रपितरमुकदास एतत्तेवासोनम इत्युत्सृजेत्॥ततःपितरमुद्दिश्यतदीयपिण्डेगन्धपुष्पधूप दीपतांबूलदक्षिणादीनिदत्त्वा पिण्डशेषान्नंपिण्डसमीपेविकिरेत्॥ततोभोजनपात्रेशिवाआपःसंतु इतिजलं सौमनस्यमस्तु इतिपुष्पम्॥ अक्षतं चारिष्टमस्त्वितियवांस्तिलांश्चदद्यात् ॥ ततः अद्यकाश्यपगोत्रस्यपितुरमुकदासस्य ऊनमासिकाद्यूनाब्दिकान्तपंचदशश्राद्धनिमित्तकद त्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकंदद्यात् ॥ ततः प्राङ्मुखः ( सव्येन ) कृतांजलिराशिषोगृह्णीयात् ॥ अघोरः पिताऽ स्तुइति ॥ ततः गोत्रंनोवर्द्धतां दातारोनोऽभिवर्द्धतां संततिश्चवर्द्धतां श्रद्धाचनोमाव्यगमद्बहुदेयंचनोऽस्तु ॥ अन्नंचनोबहुभवेदतिथींश्चलभे महि ॥ याचितारश्चनःसंतुमाचयाचिष्मकंचन ॥एताःसत्याआशिषःसंतु इतिवदेत् ॥ ततोऽपसव्येन पिण्डोपरिसपवित्रंकुशत्रयमा स्तीर्य्य पित्रेनमः इतिदक्षिणाग्रांजलधारांदद्यात ॥ ततः पिण्डमुत्थाप्य स्थाल्यांनिधाय अवघ्राणंकृत्वा पिण्डाधःस्तृतदर्भं चोल्मुकं वह्नौनिक्षिप्य अर्घपात्रमुत्तानीकृत्ययथाशक्तिरजतदक्षिणांदद्यात् ॥ अद्यकाश्यपगोत्रस्यपितुरमुकदासस्य कृतैतदूनमासिका द्यूनाब्दिकान्तपंचदशश्राद्धनिमित्तकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणात्वेन दातुमहमुत्सृजे

इतिदद्यात् ॥ ततः अभिरम्यतामितिविसृज्य देवताभ्यः॰इतित्रिःपठित्वा रक्षादीपंनिर्वापयेत् ॥ ततः ( सव्येन ) हस्तौपादौप्रक्षाल्य आचम्य प्रमादात्कुर्वतांकर्म्म प्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोः संपूर्णंस्यादितिश्रुतिः—इतिपठित्वा कर्म्मपूर्त्तिकामोविष्णुं स्मरेत् ॥ ततः पिण्डंगामजंवायसान्वाखादयेत् ॥ अग्नौजलेवाक्षिपेत् ॥ ततोवैश्वदेवबलिकर्मणीकृत्वा श्राद्धद्रव्याणि ब्राह्मणायप्रतिपाद्य यथाशक्तिब्राह्मणान् आमान्नेनतोषयेत्॥ततः यस्यस्मृत्याचनामोक्त्या तपोयज्ञक्रियादिषु॥न्यूनंसंपूर्णतांयाति सद्योवंदेतमच्युतम्॥१॥इतिपठित्वा अतिथिसुतभृत्यबांधवादिभिः सह स्वयंभुंजीत॥ ततोमंगलाचरणंकुर्यात् ॥ एवमेवमातृपितृव्यभ्रात्रादिश्राद्धप्रयोगः ॥ इतिशूद्राणाम् ऊनमासिकाद्यूनाब्दिकान्तपंचदशश्राद्धनिमित्तकैकोद्दिष्टश्राद्धप्रयोगः॥॥छ॥अथशूद्रसांवत्सरिकैकोद्दिष्टश्राद्धपद्धतिः॥तावत्क्षयाहपूर्वदिनेनिरामिषमेकवारंभुक्त्वा तद्दिनेरात्रौप्रदोषान्ते विप्रंनिमंत्रणंकृत्वा श्राद्धदिनेप्रातः श्वेतवस्त्रयुगलेनस्नात्वा नित्यावश्यकंसमाप्य श्राद्धभूमिं गोमयोदकेनोपलिप्य ज्वलदंगारैः संशोध्य गौरमृत्तिकयाच्छाद्य तिलैर्गौरसर्षपैश्चविकीर्य वस्त्रादिनावेष्टयित्वा तत्र श्राद्धसामग्रींसंपादयेत् ॥ ततोमध्याह्नेपुनः स्नात्वाशुक्लवाससीपरिधाय श्राद्धभूमिमागत्यासनसमीपेतिलतैलेनदीपंप्रज्वाल्य स्थापयेत् ॥ दीपरक्षाद्विजेनकार्या ॥ काककुक्कुटादींश्छ्राद्धापहंतॄनपसारयेत् ॥ ततः कर्तास्वासनेप्राङ्मुखउपविश्य सव्येनाचम्य॥अपवित्रः पवित्रोवा सर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षं सबाह्याभ्यंतरःशुचिः ॥१॥ पुंडरीकाक्षः पुनातु इतिपठित्वा कुशत्रयानीतजलेनश्राद्धदेयद्रव्याणिस्वात्मानंच सिंचेत् ॥ ततः वैष्णव्यैनमः ॥ काश्यप्यैनमः ॥ अक्षय्यायैनमः ॥ भूम्यैनमः ॥ इतिनत्वा भगवत्यैगयायैनमः ॥ भगवतेगदाधरायनमः इतिमनोवाक्कायैर्नमस्कारंकुर्यात् ॥ ततः कुशत्रयतिलजलान्यादाय देशकालौसंकीर्त्य अद्यामुकगोत्रस्य पितुरमुकदासस्य सांवत्सरिकैको

दिष्टश्राद्धमहंकरिष्ये इतिसंकल्प्य विष्णुर्विष्णुर्विष्णुरितिजपित्वा ॥ देवताभ्यःपितृभ्यश्चेतित्रिःपठेत् ॥ ततोऽपसव्यंकृत्वा द
क्षिणामुखः पातितवामजानुः तिलगौरसर्षपान्गृहीत्वा नमोनमस्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतोदिशः ॥ १ ॥
अग्निष्वात्ताःपितृगणा० इत्यादिपठित्वा पूर्वादिदिक्षु अधस्तादूर्ध्वंकोणेषुचसर्वत्र तिलान्गौरसर्षपांश्चविकीर्य्य वामे दक्षिणेवा कटिभागे
नीवीबंधंकुर्य्यात् ॥ ततः आसनादिदानम् मोटकतिलजलान्यादाय ॥ अद्यकाश्यपगोत्रपितरमुकदास सांवत्सरिकैकोद्दिष्टश्राद्धे इदमासनं
तुभ्यंनमः इत्युच्चार्य्यपितृतीर्थेन मोटकरूपंदक्षिणाग्रमासनमुत्सृजेत् ॥ ततः तिलेभ्योनमः इतितिलान्विकीर्य्य अर्घपात्रोपरि
पवित्रंधृत्वा तत्र अब्धोनमः इतिजलंप्रक्षिप्य तिलेभ्योनमः इतितिलान् तूष्णींगंधपुष्पे निक्षिपेत् ॥ ततोऽर्घपात्रसंपत्तिरस्तु इतिपठित्वा
अर्घपात्रंवामहस्तेकृत्वा तत्रस्थंपवित्रं पलाशपत्रेधृत्वा अब्धोनमः इत्यभिमंत्र्य मोटकादीन्यादाय काश्यपगोत्रपितरमुकदास
एषते हस्तार्घोनमः इत्युच्चार्य दक्षिणकरेण पितृतीर्थेन पवित्रोपरिसावशेषमर्घंदद्यात् ॥ अर्घपात्रंच पितृवामपार्श्वे पित्रेस्थानमसी
तिन्युब्जीकुर्य्यात् ॥ दक्षिणादानपर्यंतं नचालयेत् ॥ ततोगंधपुष्पधूपदीपादिकंधृत्वा मोटकादीन्यादाय अद्यकाश्यपगोत्रपितरमुक
दास एतानिगंधपुष्पधूपदीपतांबूलवासांसितुभ्यंनमः इत्युत्सृजेत् ॥ ततः अर्चनंसंपूर्णमस्त्वितिपठित्वा गौरमृत्तिकयाजलेनवा
आसनंवेष्टयित्वार्घमंडलंकुर्य्यात् ॥ ( अत्रपरकीयभूमौश्राद्धकरणे इदमन्नमेतद्भूस्वामिपितृभ्योनमः इतिघृतादियुक्तमन्नंदद्यात् ) ॥
ततोभोजनपात्रे उष्णमन्नं सघृतव्यंजनं सुशीतलजलसहितम् आमान्नंवायथावत्परिविष्य मधुदत्त्वा मधुमधुमध्वित्यभिमंत्रयेत् ॥
ततः अन्नपात्रं न्युब्जपाणिभ्यांव्यस्ताभ्यांस्पृष्ट्वा विष्णवेनमः इतिपठित्वा स्वाङ्गुष्ठमनखमन्ने निवेश्य इदमन्नम् इमाआपः इदमाज्यम्

एतत्सर्वंकव्यम् इतिपाठित्वा तिलेभ्योनमः इतितिलान्विकीर्य वामकरेणपात्रंस्पृशन्दक्षिणकरेण मोटकादीन्यादाय अद्यकाश्यपगोत्र पितरसुकदास सांवत्सरिकैकोद्दिष्टश्राद्धे इदमन्नंसोपस्करं कव्यम् अमृतरूपंतुभ्यंनमः इत्युदकं पितृतीर्थेन पित्रासनाद्वामभागेभूमौ क्षिपेत् ॥ ततः अन्नहीनंक्रियाहीनं विधिहीनंचयद्भवेत्॥तत्सर्वमच्छिद्रमस्तु इतिप्रार्थ्य मधुमधुमधिवितिचजपेत् ॥ ततः सप्तव्याधादशार्णेषु मृगाःकालंजरेगिरौ॥चक्रवाकाःशरद्वीपे हंसाः सरसिमानसे॥१॥ तेभिजाताःकुरुक्षेत्रे ब्राह्मणावेदपारगाः॥प्रस्थितादूरमध्वानं यूयंतेभ्योऽवसीदथ ॥ २ ॥ इतिपठित्वा अन्यान्यपि सप्तार्चिरुचिस्तत्रप्रभृतीनियथाशक्तिपठेत् ॥ ततः उच्छिष्टसन्निधौभूमिंप्रोक्ष्य तत्रदक्षिणाग्रकुशत्रयमास्तीर्य व्यंजनघृततिलसहितमन्नंगहीत्वा अग्निदग्धाश्चयेजीवा येप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यंतु तृप्तायान्तुपरांगतिम् इतिकुशोपरितदन्नंविकीर्य सव्येनाचम्य हरिंस्मृत्वा मधुमधुमधिवितिचजपेत् ॥ ततोऽपसव्यादिना उच्छिष्टसन्निधौ चतुरस्रंदक्षिणप्लवंस्थानंनिर्माय तन्मध्येदर्भपिंजूलीमूलेन दक्षिणाग्रां प्रादेशमात्रांरेखां कृत्वा दर्भपिंजूलीमुत्तरस्यांदिशिनिक्षिपेत् ॥ ततोज्वलदुल्मुकंरेखोपरिभ्रामयित्वा दक्षिणतोनिदध्यात्॥ततः उपमूलसकृल्लूनकुशत्रयंरेखोपरिस्तीर्त्वा देवताभ्यः० इतित्रिःपठेत्॥ततः सतिलजलपात्रं गृहीत्वा अद्यकाश्यपगोत्रपितरसुकदास अत्रावनेनिक्ष्वतेनमः इतिकुशोपरि अवनेजनंदद्यात ॥ किंचिज्जलंपात्रे अवशेषयेत्॥ततो गृहपाकेन वा पायसेन सक्तुभिर्वा यवपिष्टेन मध्वाज्यतिलव्यंजनसहितं बिल्वोपमंपिण्डंनिर्माय मधुघृताभ्यामभिघार्य्यमोटकादियुतमादाय अद्यकाश्यपगोत्रपितरसुकदास सांवत्सरिकैकोद्दिष्टश्राद्धे एषतेपिण्डोनमः इतिसव्योपगृहीतदक्षिणहस्तेनावनेजनस्थाने पिण्डंदद्यात् ततोलेपभागभुजस्तृप्यन्तु इति दर्भमूलेकरंप्रोञ्छ्य हस्तौप्रक्षाल्य सव्येनाचम्यहरिंस्मरेत् ॥ ततोऽपसव्यादिना नित्रेनमः इतिपठित्वा वामावर्त्तेनोदङ्मुखोभूत्वा

प्रीतमनाःश्वासंनियम्य तेनैवपथापरावृत्य पित्रेनम इतिश्वाससमुत्सृजेत् ॥ ततः पूर्वदत्तावनेजनपात्रजलेन अद्यकाश्यपगोत्रपितरमुकदास अत्रप्रत्यवनेनिक्ष्वतेनमः इतिपिण्डोपरिप्रत्यवनेजनंदत्त्वा नीवींविस्रंस्य सव्येनाचम्य ( अपसव्येन ) वसंतायनमस्तुभ्यं ग्रीष्मायचनमो नमः॥वर्षाभ्यश्चशरत्संज्ञऋतवेचनमःसदा॥ १॥हेमंतायनमस्तुभ्यंनमस्तेशिशिरायच॥माससंवत्सरेभ्यश्चादिवसेभ्योनमोनमः॥२॥इतिकृतांज लिः पठेत् ततः एतत्तेपितर्वासोनमः इति पिण्डोपरि त्रिगुणितसूत्रमूर्णां दशांवा दत्त्वा काश्यपगोत्रपितरमुकदास एतत्तेवासोनमः इत्युत्सृजेत् ॥ ततः पितरमुद्दिश्यःतदीयपिण्डे गंधपुष्पधूपदीपतांबूलदक्षिणादीनिदत्त्वा पिण्डशेषान्नंपिण्डसमीपे विकिरेत् ॥ ततोभोज नपात्रे शिवाआपः संतु इतिजलं सौमनस्यमस्तु इतिपुष्पम् अक्षतंचारिष्टं चास्तु इतियवतिलांश्चदद्यात् ततः अद्यकाश्यपगोत्रस्य पितुरमुकदासस्य सांवत्सरिकैकोद्दिष्टश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमुपातिष्ठतामित्यक्षय्योदकंदद्यात् ॥ ततः प्राङ्मुखः ( सव्येन ) कृतांज लिराशिषो गृह्णीयात् ॥ अघोरः पिताऽस्तु इति ॥ ततः गोत्रंनोवर्द्धतां दातारोनोभिवर्द्धतां संततिश्चवर्द्धतां श्रद्धाचनोमाव्यगमद्बहुदेयं चनोऽस्तु॥अन्नंचनोबहुभवेदतिथींश्चलभेमहि॥याचितारश्चनःसंतुमाचयाचिष्मकंचन॥एताः सत्या आशिषः संतु इतिवदेत्॥ततोऽपसव्येन पिण्डोपरि सपवित्रंकुशत्रयंधृत्वा पित्रेनमः इतिदक्षिणाग्रांजलधारांदद्यात् ॥ ततः अर्घपात्रमुत्तानीकृत्य यथाशक्तिरजतदक्षिणांदद्यात् ॥ अद्यकाश्यपगोत्रस्यपितुरमुकदासस्य कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणा त्वेनदातुमहमुत्सृजे इतिदत्त्वा पिंडमुत्थाप्य स्थाल्यांनिधाय अवघ्राणंकृत्वा पिण्डाधस्तृतदर्भंचोल्मुकंचवह्नौक्षिपेत् ॥ आभि रम्यतामितिविसृज्य देवताभ्यः० इतित्रिःपठित्वा रक्षादीपंनिर्वापयेत्॥ततः (सव्येन) हस्तौपादौप्रक्षाल्य आचम्य प्रमादादितिपठित्वा कर्म्म

पूर्त्तिकामो विष्णुंस्मरेत् ॥ ततःपिण्डं गामजं वायसान्वा खादयेत् ॥ अग्नौ जलेऽवाक्षिपेत् ॥ ततो वैश्वदेवबलिकर्मणी कृत्वा श्राद्धद्रव्याणि ब्राह्मणाय प्रतिपाद्य यथाशक्ति ब्राह्मणान् आमान्नेन तोषयेत्ततोऽतिथिसुतभृत्यबांधवादिभिः सह स्वयं भुंजीत ॥ एवमेव मातृभ्रातृपितृव्यादिश्राद्धप्रयोगः ॥ इतिश्रीश्राद्धप्रकाशेशूद्रक्षयाहैकोद्दिष्टश्राद्धपद्धतिः समाप्ता ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ अथशूद्रस्यपार्वणश्राद्धप्रयोगः ॥ तत्रतावत्पूर्वदिनकृत्यम् ॥ कर्तापूर्वेद्युर्निरामिषमेकवारंभुक्त्वा तद्दिनेरात्रौप्रदोषान्ते असंभवे प्रातर्वा श्राद्धारंभसमयेवा यथावकाशं विप्रगृहंगत्वा ब्राह्मणनिमंत्रणंकुर्यात् ॥ ततः श्राद्धकर्त्ता द्विर्भोजनं दूरगमनं मैथुनं भारोद्वहनं श्रमं हिंसां क्रोधं त्वरां प्रमादं कलहं क्षौरं च वर्जयेत् ॥ शुचिः सत्यवादी क्षमी ब्रह्मचारीचभवेत् ॥ अथश्राद्धदिनपूर्वाह्णकृत्यम् ॥ कर्ताब्राह्मे मुहूर्त्ते उत्थाय यथोपदेशं शौचविधिंकृत्वा आचम्यदंतधावनं नतुकुर्यात् ॥ ततो नद्यादौस्नात्वा धौतवाससीपरिधाय नित्यकर्मसमाप्य श्राद्धभूमिंगोमयोदकेनोपलिप्य गौरमृत्तिकयाऽऽच्छाद्य तिलैर्गौरसर्षपैश्चविकिरेत् ॥ तत्रश्राद्धसामग्रींसंपाद्य अपराह्णे स्नात्वाशुक्लवाससी द्वेपरिधाय ब्राह्मणैः सहश्राद्धभूमिमागत्य आसनानिदत्त्वा देवब्राह्मणान्प्राङ्मुखान्पितृब्राह्मणानुदङ्मुखानुपवेशयेत् ॥ तदभावे कुशमयद्विजान् वास्थापयेत् ॥ ततः प्रत्यासनसमीपे तिलतैलेनदीपंप्रज्वाल्य काककुक्कुटादीञ्श्राद्धापहंतृनपसारयेत् ॥ दीपरक्षाद्विजैरेवकार्या श्राद्धदेशावरणंचकुर्यात् ॥ ततः कर्तास्वासने प्राङ्मुखउपविश्य सव्येनाचम्य कमपात्रंजलेनप्रपूर्य गंधपुष्पकुशान्क्षिप्त्वा तज्जलेन अपवित्रः पवित्रोवा० इतिपुंडरीकाक्षायनमः० इतिश्राद्धीयद्रव्याणिस्वात्मानंचप्रोक्षयेत् ॥ ततः वैष्णव्यैनमः काश्यप्यैनमः अक्षय्यायै

१ सचोपदेष्टृब्राह्मणवशादनियतशाखया कार्य इति मदनपालः तन्न ॥ अनियतस्य धर्मत्वाऽयोगात्तेन शूद्रावाजसनेयिन इति गौडग्रंथे दक्षोक्तेर्हरिहरभाष्यादिसंवादाच्छिष्टाचाराच्च माध्यंदिनशाखयोच्यते इति ।

नमः भूम्यैनमः इतिभूमिंनत्वा श्राद्धदेशंगयात्मकत्वेन तदेकदेशस्थं गदाधरंचध्यात्वा तयोः भगवत्यैगयायैनमः भगवतेगदाधरा
यनमः इतिमनोवाक्कायैर्नमस्कारंकुर्यात् ॥ ततः कुशत्रयतिलजलान्यादाय देशकालौसंकीर्त्य अद्यामुकगोत्राणामस्मत्पितृपितामहप्र
पितामहानाममुकामुकदासानां तथाऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकदासानां सदैवंपावर्णश्राद्धं पितृतृप्तिकामोहंक
रिष्ये–इतिसंकल्प्य विष्णुंत्रिःस्मरेत् ॥ ततो देवताभ्यः पितृभ्यश्च महायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायै नित्यमेवनमोनमः–इतित्रिः
स्मृत्वा यवतिलगौरसर्षपान्गृहीत्वा ॥ नमोनमस्तेगोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतो दिशः ॥ १ ॥ तिलारक्षंत्वसु
राद्दर्भारक्षंतुराक्षसात् ॥ वह्निर्वैश्रोत्रियंरक्षेदतिथिःसर्वरक्षकः ॥ २ ॥ इतिपठित्वा अग्निष्वात्ताःपितृगणाः प्राचींरक्षंतुमेदिशम् ॥ तथाबर्हिषदः
पान्तु याम्यांयेपितरःस्थिताः ॥ ३ ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपिसोमपाः ॥ अधोर्ध्वमपिकोणेषु हविष्मन्तश्चसर्वदा ॥ ४ ॥ इत्यादि
भिरधस्तादूर्ध्वंकोणेषुच सर्वत्रतिलान्गौरसर्षपांश्च विकीर्य्य ( अपसव्येन ) वामेदक्षिणेवाकटिभागे यथाचारं नीवीबंधोविधेयः ॥ अथा
सनादिदानम् ॥ तत्रादौ उदङ्मुखः सजघनंदक्षिणं जान्वाच्य ( सव्येन ) कुशत्रयमादाय अद्यास्मत्पित्रादित्रयश्राद्धसंबंधिनः पुरूरवा
र्द्रवसंज्ञका विश्वेदेवा इदमासनं वोनमः इत्युच्चार्य्य देवतीर्थेन पूर्वाग्रं कुशत्रयमुत्सृजेत् ॥ एवंमातामहादिदेवेभ्योऽपिदद्यात् ॥ ततो
दक्षिणामुखः ( अपसव्येन ) वामंजान्वाच्य द्विगुणभुग्नकुशत्रयतिलजलान्यादाय अद्यकाश्यपगोत्रास्मत्पितृपितामहप्रपितामहामुका
मुकदासा इदमासनंत्रेधात्रिभज्य युष्मभ्यंनमः इत्युच्चार्य्य पितृतीर्थेन मोटकरूपमासनं दक्षिणाग्रमुत्सृजेत् ॥ एवमेव माताम
हादिभ्योप्यासनं दद्यात् ॥ ततः सव्यादिना सयवकरः पुरूरवार्द्रवसंज्ञकान्विश्वान्देवानावाहयिष्ये इत्युच्चार्य्य आगच्छंतुमहाभागा
विश्वेदेवामहाबलाः ॥ येचात्रयोजिताःश्राद्धे सावधानाभवंतुते॥इत्यावाह्य यवेभ्योनमः इतियवान्विकिरेत् ॥ ततोऽपसव्यादिनासतिलहस्तः

पितृनावाहयिष्ये मातामहादींश्चावाहयिष्ये इत्युक्त्वातिलेभ्योनमः इतितिलान्विकिरेत्ततः ( सव्येन ) देवपात्रद्वये ( अपसव्येन ) पितृपात्र द्वयेच दर्भपवित्रमेकैकंधृत्वा अद्भ्योनम इतिप्रत्येकंजलंप्रक्षिप्य देवपात्रयोः यवेभ्योनमः इतियवान्पितृपात्रद्वये तिलेभ्योनमः इतितिलान्प्र क्षिप्य सर्वत्रतूष्णीमेव गंधपुष्पाणिनिक्षिपेत् ॥ ततोऽर्घपात्राणिसंपन्नानि इत्युक्त्वा ( सव्येन ) प्रथमं देवार्घपात्रं वामहस्तेकृत्वा तत्रस्थंप वित्रं पलाशपत्रेदत्त्वा अद्भ्योनमः इत्यभिमंत्र्य कुशत्रययवजलान्यादाय अद्यास्मत्पित्रादित्रयश्राद्धसंबंधिनः पुरूरवार्द्रवसंज्ञकाविश्वेदेवा एषवो ऽर्घोनमः इतिदक्षिणहस्तेनदेवतीर्थेनपवित्रोपरि अर्घंदत्त्वा पवित्रसहितमर्घपात्रंदेवपुरतःस्थापयेत् ॥ एवमेवमातामहादिदेवेभ्योप्यर्घंद द्यात् ॥ ततोऽपसव्यादिना पित्रर्घपात्रंगृहीत्वा पवित्रंपलाशपत्रेदत्त्वा अद्भ्योनमः इतिपात्रमभिमंत्र्य मोटकादीन्यादाय अद्यकाश्यप गोत्रास्मत्पितृपितामहप्रपितामहामुकामुकशर्मा एषहस्तार्घस्तेघाविभज्य युष्मभ्यंनमः इतिदक्षिणहस्तस्थपितृतीर्थेनपवित्रोपरि अर्घजलं सावशेषंदद्यात् ॥ अर्घपात्रंचपुरतःस्थापयेत् ॥ एवमेवमातामहादिभ्याप्यर्घदद्यात् ॥ ततः सव्यंकृत्वा विश्वेभ्योदेवेभ्यः स्थानमसीतिप वित्रजलयुतंदेवार्घपात्रमासनदक्षिणपार्श्वे उत्तानंक्रमेणस्थापयेत् ॥ ततोऽपसव्यादिना पितामहप्रपितामहार्घपात्रजलादीनि पितृपात्रेकृत्वा एवमेवप्रमातामहवृद्धप्रमातामहयोः पात्रस्थजलादीनिमातामहपात्रेकुर्यात् ॥ ततः सव्येन पितृपात्रस्थजलेनप्राङ्मुखोनेत्रांजनंकृत्वाशिर सि अभ्द्योनमः इत्यभिषेकंकुर्य्यात् ॥ ततोऽपसव्यंकृत्वा पितृभ्यः स्थानमसीतिप्रथमंपितृपात्रंपित्रासनवामप्रदेशभूमावधोमुखंसंस्थाप्य तदुपरिपितामहपात्रंतदुपरिप्रपितामहपात्रंचदद्यात् ॥ एवं मातामहेभ्यः स्थानमसीतिमातामहपात्रंन्युब्जीकृत्यप्रमातामहवृद्धप्रमाता महपात्राभ्यामाच्छादयेत् ॥ एतत्पात्रद्वयंदक्षिणादानपर्यंतंनोद्धरेन्नचालयेत् ॥ अथ गंधादिदानम् ॥ सव्यादिकृत्वा गंधपुष्पधूपदीपादिकं धृत्वा कुशत्रययवजलान्यादाय अत्रास्मत्पित्रादित्रयश्राद्धसंबंधिनःपुरूरवार्द्रवसंज्ञकाविश्वेदेवा एतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीत

वासांसि वोनमः इत्युच्चार्य्यगंधाद्युत्सृजेत् ॥ एवमेवमातामहादिदेवेभ्योपिदद्यात् ॥ ततःकृतांजलिःकर्ताविश्वेषांदेवानामर्चनंसंपूर्णमस्त्विति ब्रूयात् ॥ ततोऽपसव्यादिना पितृपक्षे गंधादिकंधृत्वाद्विगुणभुग्नकुशत्रयतिलजलान्यादाय अद्यकाश्यपगोत्रा अस्मत्पितृपितामहप्रपितामहामुकामुकदाना एतानिगंधपुष्पधूपदीपतांबूलवासांसित्रेधाविभज्य युष्मभ्यंनमः इतिपित्रादिभ्योगंधाद्युत्सृज्य एवमेव मातामहादिभ्योप्युत्सृजेत् ॥ ततः कृतांजलिर्भूत्वा पितॄणामर्चनंसंपूर्णमस्त्वितिब्रूयात् ॥ एवंगंधाद्यर्चनंविधाय भोजनपात्रस्थापनदेशंसंमार्ज्य पात्राणिदत्त्वा गोरमृत्तिकयाजलेनवाप्रत्येकमासनंवेष्टयित्वाक्रमेणमंडलम् अभ्युक्षणंवाकुर्यात् ॥ अथाग्नौकरणम् ॥ तत्रव्यंजनक्षारवर्जितंघृताक्तमन्नंकांस्यपात्रेसमुद्धृत्य ( सव्येन ) दक्षिणकरेणरजतादिपात्रस्थजले अग्नयेकव्यवाहनायनमः इदं० सोमायपितृमतेनमः इदं—इत्याहुतिद्वयंजुहुयात् ॥ ततोहुतशेषमन्नंदेवपात्रद्वये अपसव्येन पित्रादिपात्रद्वयेचदत्त्वापिण्डार्थमवशेषयेत् ॥ अत्रपरकीयभूमौश्राद्धकरणे इदमन्नमेतद्भूस्वामिपितृभ्योनमः इतिघृतादियुक्तमन्नंदर्भेषुदद्यात् नस्वगृहे ॥ ततः सव्येन देवपात्रद्वये अपसव्येन पित्रादिपात्रद्वयेच आमान्नंसघृतमनेकव्यंजनयुतं सुशीतलजलसहितंयथावत्परिविष्यमधुदत्त्वा मधुमधुमध्वित्यभिमंत्रयेत् ॥ ततः सव्येन उत्तानपाणिभ्यांप्रथमंदेवान्नपात्रमालभ्य विष्णवेनमः इतिपठित्वा अधोमुखंस्वाङ्गुष्ठमनखम् अन्नेनिवेश्य इदमन्नम् इमाआपः इदमाज्यम् एतत्सर्वंहविरित्युक्त्वा अन्नपात्रपरितोयवान्विकीर्य्य वामेनकरेणपात्रंस्पृशन्दक्षिणकरेणकुशत्रयादीन्यादाय अद्यास्मत्पित्रादित्रयश्राद्धसंबंधिनःपुरूरवार्द्रवसंज्ञकाविश्वेदेवा इदमन्नंसोपस्करंहव्यम् अमृतरूपंपारिविष्टंवोनमः इत्युदकंदेवतीर्थेनदेवदक्षिणभागेभूमौनिक्षिपेत् ॥ एवमेवमातामहादिदेवेभ्योऽप्युत्सृजेत् ॥ ततोऽपसव्यादिना पितृपात्रंन्युब्जपाणिभ्यांव्यस्ताभ्यांस्पृष्ट्वा विष्णवेनमः इतिपठित्वा अधोमुखंस्वाङ्गुष्ठमनखम् अन्नेनिवेश्य इदमन्नम् इमाआप इदमाज्यम् एतत्सर्वंकव्यम् इत्युक्त्वातिलेभ्योनमः इतितिलान् अन्नपात्रपरितोविकीर्य वामकरेणपात्रंस्पृश

न्दक्षिणकरेणद्विगुणभुग्नकुशत्रयार्दीन्यादाय अद्यास्मत्पितृपितामहप्रपितामहामुकामुकदासा इदमन्नंसोपस्करंकव्यम् अमृतरूपंपरिविष्टंत्रेध ।
विभज्य युष्मभ्यंनमः इत्युदकंपितृतीर्थेनपित्रासनवामभागेभूमौनिक्षिपेत् ॥ एवमेवमातामहादिभ्योप्युत्सृजेत् ॥ ततः अन्नहीनंक्रिया
हीनं विधिहीनंचयद्भवेत् ॥ तत्सर्वमच्छिद्रमस्तु ॥ इतिप्रार्थ्य मधुमधुमध्वितिचजपेत् ॥ ततः सप्तव्याधादशार्णेषु मृगाःकालंजरे
गिरौ ॥ चक्रवाकाःशरद्द्वीपे हंसाःसरसिमानसे ॥१॥ तेऽभिजाताःकुरुक्षेत्रे ब्राह्मणावेदपारगाः ॥प्रस्थितादूरमध्वानं यूयंतेभ्योऽवसीदथ ॥२॥
इतिपठित्वासप्तार्चिस्तवंशृणुयात ॥ अमूर्त्तानांचमूर्त्तानांपितॄणांदीप्ततेजसाम् ॥ नमस्यामिसदातेषां ध्यायिनांदिव्यचक्षुषाम् ॥ १ ॥ इंद्रा
दीनांचनेतारो दक्षमारीचयोस्तथा ॥सप्तर्षीणांतथान्येषां तान्नमस्यामिकामदान् ॥ २ ॥ मन्वादीनांमुनींद्राणां सूर्याचंद्रमसोस्तथा ॥ तान्न
मस्याम्यहंसर्वान्पितरश्चार्णवेषुच ॥३॥ नक्षत्राणांग्रहाणांच वाय्वग्न्योर्नभसस्तथा ॥द्यावापृथिव्योश्चतथा नमस्यामिकृतांजलिः ॥४॥ देवर्षी
णांग्रहाणांच सर्वलोकनमस्कृतान् ॥ अभयस्यसदादातॄन्नमस्येहंकृतांजलिः ॥ ५ ॥ प्रजापतेःकश्यपाय सोमायवरुणायच ॥ योगेश्वरेभ्यश्च
तथा नमस्यामिकृतांजलिः ॥ ६ ॥ नमोगणेभ्यःसप्तभ्यस्तथालोकेषुसप्तसु ॥ स्वयंभुवेनमस्यामि ब्रह्मणेयोगचक्षुषे ॥ ७ ॥ सोमाधारान्पि
तृगणान्योगमूर्त्तिधरांस्तथा ॥ नमस्यामितथासोमं पितरंजगतामहम् ॥ ८ ॥ अग्निरूपांस्तथैवान्यान्नमस्यामिपितॄनहम् ॥ अग्नीषोममयंवि
श्वं यतएतदशेषतः ॥ ९ ॥ येतुतेजसियेचैते सोमसूर्य्याग्निमूर्त्तयः ॥ जगत्स्वरूपिणश्चैव तथाब्रह्मस्वरूपिणः ॥ १० ॥ तेभ्योऽखिलेभ्यो
योगिभ्यः पितृभ्योयतमानसः ॥ नमोनमोनमस्तेमे प्रसीदंतुस्वधाभुजः ॥ ११ ॥ पितरऊचुः ॥ स्तोत्रेणानेनचनरो योऽस्मांस्तोष्यतिभक्ति
तः ॥ तस्यतुष्टावयंभोगानात्मज्ञानंतथोत्तरम् ॥ १२ ॥ शरीरारोग्यमर्थंच पुत्रपौत्रादिकंतथा ॥ प्रदास्यामोनसंदेहो यच्चान्यदपिवांछितम्
॥ १३ ॥ तस्मात्पुण्यफलंलोके वांछद्भिः सततंनरैः ॥ पितॄणांचाक्षयांतृप्तिं स्तव्यस्तोत्रेणमानवैः ॥ १४ ॥ पठिष्यंतिद्विजाग्र्याणां भुंजतां

पुरतःस्थिताः ॥ अस्माकमक्षयंश्राद्धं तद्भविष्यत्यसंशयम् ॥१८॥ इति ॥ ततोऽन्यान्यपिरुचिस्तोत्रप्रभृतीनियथाशक्तिशृणुयात् ॥ ततः उच्छिष्टसन्निधौभूमिंप्रोक्ष्य तत्रदक्षिणाग्रंकुशत्रयमास्तीर्य्य आमान्नमादायसव्यंजनतिलमेकीकृत्य अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतृप्यन्तु तृप्तायांतुपरांगतिम् ॥ १ ॥ इतिकुशोपरिपितृतीर्थेनतदन्नंविकिरेत् ॥ ततः सव्येन आचम्यहरिंस्मृत्वा मधुमधुमध्वितिपठेत् ॥ ततोऽपसव्येनपित्राद्युच्छिष्टसन्निधौचतुरस्रंदक्षिणप्लवंरमणीयं पित्रादित्रयपिण्डपातनार्थंसिकताभिःस्थानंनिर्माय तथामातामहाद्युच्छिष्टसन्निधौमातामहादिपिण्डपातनार्थंतादृशमेवस्थानंकुर्यात् ॥ तत्र उभयत्रमध्यदेशेदर्भपिंजूलीमूलेनतूष्णींदक्षिणाग्रां रेखांसकृल्लिखित्वा दर्भपिंजूलीमुत्तरस्यांदिशिनिक्षिप्यज्वलदुल्मुकंरेखोपरिभ्रामयित्वा दक्षिणतोनिदध्यात् ॥ ततः उपमूलस कृदाच्छिन्नदक्षिणाग्रकुशत्रयंरेखोपरिस्तीर्त्वा पत्रपुटकपट्कजलतिलगंधपुष्पाणिकृत्वा एकपात्रंगृहीत्वा अद्यकाश्यपगोत्रपितर मुकदास अत्रावनेनिक्ष्वतेनमः इतिकुशमूलेपित्रेपितृतीर्थेन अवनेजनंदद्यात् ॥ एवंपितामहायकुशत्रयमध्येप्रपितामहायकुशाग्रे अव नेजनंदद्यात् ॥ एवमेवमातामहादिभ्योपिदद्यात् ॥ ततोगृहपाकेन वा पायसेन सक्तुभिर्वायवपिष्टेनमध्वाज्यतिलव्यंजनसहितान्बि ल्वोपमान्पट्पिण्डान्निर्माय मधुघृताभ्यामभिघार्य्य पित्रादिभ्योदद्यात् ॥ तत्रप्रथमंपिण्डंमोदकादीनिचादाय अद्यकाश्यपगोत्रपितरमु कदास एतत्तेपिण्डंनमः इतिप्रथमावनेजनस्थानेसव्योपगृहीतदक्षिणहस्तेनापितृतीर्थेनदद्यात् ॥ एवमेवापितामहादिभ्यः पंचभ्यः प्रत्येकंतत्तदवनेजनस्थानेपिण्डंदद्यात् ॥ ततः प्रपितामहादूर्ध्वंत्रयाणांलेपभुजांतृप्तिमुद्दिश्यपित्रादिकपिण्डाधारकुशमूले लेपभागभुजः पितरस्तृप्यंतु इतिपठित्वा हस्तंप्रोञ्छ्यजलेनहस्तौप्रक्षालयेत् ॥ ततः सव्येन द्विराचम्यहरिंस्मरेत्ततोऽपसव्येन पितृभ्योनमः इतिपठि त्वा वामावर्त्तेनोदङ्मुखोभूत्वाप्रीतमनाः श्वासंनियम्यतेनैवपथापरावृत्यपितृभ्योनम इतिश्वासमुत्सृजेत्॥एवंमातामहपक्षेपिकुर्यात्॥ततः पूर्व

दत्त्वावनेजनपात्रंगृहीत्वा अद्यकाश्यपगोत्रपितरमुकदास अत्रप्रत्यवनेनिक्ष्वतेनमः इतिपिण्डोपरिप्रत्यवनेजनंदद्यात ॥ एवमेवपितामह
पिण्डोपरिप्रत्येकंप्रत्यवनेजनंदद्यात् ॥ ततोनीवींविस्रंस्य आचम्य अपसव्येनकृतांजलिः—वसंतायनमस्तुभ्यं ग्रीष्मायचनमोनमः ॥ वर्षा
भ्यश्चशरत्संज्ञ ऋतुभ्यश्चनमःसदा॥१॥हेमंतायनमस्तुभ्यं नमस्तेशिशिरायच॥माससंवत्सुरेभ्यश्च दिवसेभ्योनमोनमः॥२॥इतिपठित्वा पितृ
भ्योनमः ॥ मातामहेभ्योनम ॥ इतिप्रार्थयेत् ॥ ततः पितृभ्योनमः ॥ मातामहेभ्योनमः इतिपठित्वा षट्सुपिण्डेषु सूत्राणिप्रतिपिण्डमूर्णा
दशांवादत्त्वा ॥ अद्यकाश्यपगोत्राऽस्मत्पितृपितामहप्रपितामहाऽमुकामुकदासा एतानिवासांसियुष्मभ्यंनमः इत्युत्सृजेत् ॥ एवंमाताम
हादिभ्योप्युत्सृजेत् ॥ ततः पित्रादीनुद्दिश्यतदीयपिण्डेषु तूष्णींगंधपुष्पधूपदीपतांबूलदक्षिणादीनिदद्यात् ॥ पिण्डशेषान्नंचपिण्डसमीपे
विकिरेत् ॥ ततः सव्यापसव्याभ्यां देवपितृभोजनपात्रेषु शिवाआपः संतु इतिसकृत्सकृज्जलं सौमनस्यमस्तु इति पुष्पाणि अक्षतं
चारिष्टमस्त्वितियवांश्चदद्यात ॥ ( नतंडुलान् ) ततः मोटकादीन्यादाय अद्यकाश्यपगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकामुक
दासानां दत्तैतदन्नपानादिकमक्षय्यमस्तु इतिसतिलमक्षय्योदकंभोजनपात्रेदद्यात् ॥ एवमेवमातामहेभ्योऽप्यक्षय्यो दकंदद्यात् ॥ततःसव्येन
प्राङ्मुखस्तन्मनाः कृतांजलिर्दक्षिणांदिशंपश्यन् अघोराः पितरः संतु अघोरामातामहाश्चसंतु॥गोत्रंनोवर्धतां दातारोभिवर्धंतां संततिश्चव
र्द्धतां श्रद्धाचनोमाव्यगमत् बहुदेयंचनोस्तु अन्नंचनोबहुभवेत् अतिथींश्चलभमहि याचितारश्चनः संतु माचयाचिष्मकंचन इत्याशिषोगृह्णी
यात् ॥ ततः पिण्डोपरि सपवित्रकुशानास्तीर्य पित्रादिभ्योमातामहेभ्यश्च स्वधोच्यतामितिपठिते दक्षिणाग्रांजलधारांदद्यात्॥ततोऽर्घपात्रा
ण्युत्तानीकृत्य(सव्येन)देवदक्षिणांदद्यात्॥ तत्रहिरण्यकुशत्रयादीनिचादाय अद्यास्मत्पित्रादित्रयश्राद्धसंबंधिनांपुरूरवार्द्रवसंज्ञकानांविश्वेषां
देवानां कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदंहिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणेब्राह्मणाय दक्षिणात्वेन दातुमहमुत्सृजे—इतिसंकल्प्य

दद्यात् ॥ एवंमातामहादिदैवश्राद्धदक्षिणामपिदद्यात् ॥ ततोऽपसव्यादिनारजतद्रव्यंकुशादीनिचादाय अद्यकाश्यपगोत्राणामस्मत्पितृ पितामहप्रपितामहानाममुकामुकदासानांकृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतममुकशर्मणेब्राह्मणाय दक्षिणात्वेनदातुमहमुत्सृजे इतिपितृदक्षिणांदद्यात् ॥ एवमेवमातामहादिश्राद्धदक्षिणामपिदद्यात् ॥ (दैवेरजतनिषेधः) ततः पिण्डानुत्थाप्यस्थाल्यांनिधाय अवघ्राणं कृत्वा पिंडाधःस्थान्सकृदाच्छिन्नान्दर्भानुल्मुकद्वयं च वह्नौक्षिपेत् ॥ ततः सव्येन विश्वेदेवाः प्रीयंतामिति प्रार्थ्य (अपसव्येन) उत्तिष्ठतपितरः विश्वेदेवैः सह इतिपितॄन् विसृज्य मंडलंप्रदक्षिणीकृत्य नमस्कृत्योपविशेत् ॥ ततो–देवताभ्यःपितृभ्यश्च महायोगिभ्यएवच ॥नमः स्वाहायै स्वधायै नित्यमेवनमोनमः इतित्रिः पठित्वा रक्षादीपं निर्वाप्य हस्तौपादौप्रक्षाल्य आचम्य प्रमादात्कुर्वतां कर्म० इति विष्णुं स्मरेत् ॥ ततःपिण्डान्गामजंवायसान्वाखादयेत् ॥ अप्सुजलेवाक्षिपेत् ॥ (पुत्रकामःपितामहपिण्डं ऋतुस्नातायै पितृभक्तायैसाध्व्यैधर्मपत्न्यैदद्यात् ॥ साशुचिर्वाग्यतापुत्रकामा पितृभ्योनमः इतिपठित्वाऽश्नीयात् ततोवैश्वदेवबलिकर्मणीकृत्वाश्राद्धीयद्रव्याणिब्राह्मणेभ्यः प्रतिपाद्यदशाऽशेषांवाब्राह्मणानामान्नादिनातोषयेत् ॥ ततः अतिथिसुतभृत्यबांधवादिभिः सहस्वयमपिभोजनंकुर्यात् ॥ तद्दिनेश्राद्धकर्ता द्यूताध्वगमनमैथुनायासकलहपुनर्भोजनाहिंसादीनि न कुर्यात् ॥ इतिपंडितगौडश्रीचतुर्थीलालविरचितेश्राद्धप्रकाशेशूद्रपार्वणश्राद्धपद्धतिः समाप्ता ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ अथशूद्राणामाभ्युदयिकश्राद्धम् ॥ तच्चपुत्रजन्मविवाहयज्ञप्रतिष्ठावृषोत्सर्गतीर्थयात्रादिमंगलकृत्येषुकर्त्तव्यम् ॥ तत्रतावच्छ्राद्धात्पूर्वं षोडशमातरःपूजनीयाः ॥ तत्राविधिः ॥ कर्ताप्रातःस्नानादिनित्यकर्मसमाप्यस्वासनेप्राङ्मुख उदङ्मुखोवा उपविश्याचम्य देशकालौ संकीर्त्य अद्यकाश्यपगोत्रोऽमुकदासोहं करिष्यमाणामुककर्मनिमित्तकाभ्युदयिकश्राद्धाङ्गभूतगणपतिसहितषोडशमातृकास्थापनंपूजनं

चकरिष्ये इति संकल्प्य ॥ सुमुखश्चैकदंतश्च इत्यादिस्मरणपूर्वकगणेशादींस्तंडुलपुंजेषु स्थापयेत् ॥ तत्रादौपुष्पाण्यादाय श्रीगणपते इहागच्छ इहतिष्ठ १ गौरि इहागच्छ इहतिष्ठ २ पद्मे इहागच्छ इह० ३ शचि इहागच्छ इह० ४ मेधे इहागच्छ इह० ५ सावित्रि इहागच्छ इह० ६ विजये इहा० ७ जये इहा० ८ देवसेने इहा० ९ स्वधे इहा० १० स्वाहे इहा० ११ मातर इहागच्छत इहतिष्ठत १२ लोकमातरः इहागच्छत इहतिष्ठत १३ हृष्टे इहागच्छेहतिष्ठ १४ पुष्टे इहा० १५ तुष्टे इहा० १६ आत्मकुलदेवते इहागच्छ इहतिष्ठ १७ इत्यावाह्य मातरः सुप्रतिष्ठिताः भवंतु इति पुष्पाणि विकीर्य्य नाममंत्रेणप्रत्येकं तंत्रेणवा पाद्यार्घाचमनीयस्नानवस्त्रगंधपुष्पधूपदीपनैवेद्यतांबूलदक्षिणादीनि समर्प्य गणपतिसहिताः षोडशमातरः प्रीयंतामिति प्रार्थ्य क्षमध्वमितिक्षमापयेदिति ॥ ततः ब्राह्मी माहेश्वरीचैव कौमारी वैष्णवीतथा ॥ वाराहीचतथेंद्राणी चामुंडाः सप्तमातरः–इति सप्तमातॄरावाह्य संपूज्य ॥ कुडचे घृतेन सप्तपंचवाधारा उत्तरोत्तरक्रमेणकृत्वा ॥ वसोर्धारायैनमः इतिषोडशोपचारैः संपूज्य नांदीश्राद्धं कुर्यात् ॥ तत्रप्रयोगः ॥ तावच्छ्राद्धसामग्रीं संपाद्य ब्राह्मणैः सह श्राद्धभूमिमागत्य आसनानिदत्त्वा देवपितृब्राह्मणानष्टौ चतुरोवा प्राङ्मुखानुदङ्मुखान्वोपवेशयेत् ॥ तदभावे कुशमयचटान्वास्थापयेत् ॥ ततोरक्षादीपंनिधाय आचम्य स्वासने प्राङ्मुख उदङ्मुखोवा उपविश्य आचम्य कर्मपात्रंजलेनप्रपूर्य गंधपुष्पदूर्वायवदध्यादिनिक्षिप्य तज्जलेन अपवित्रः पवित्रोवा० पुंडरीकाक्षायनमः इति श्राद्धद्रव्याणि स्वात्मानंच प्रोक्षयेत् ॥ ततो भूम्यै नमः विष्णवेनमः इतिनत्वा कुशत्रययवजलान्यादाय देशकालौस्मृत्वा ॥ अद्यामुकगोत्राणामस्मन्मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनाम् असुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकामुकदासानांनांदीमुखानां तथा अमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकदासानां नांदीमुखानाम् अमुककर्मनिमित्तकाभ्युदयिकश्राद्धमहंकरिष्ये–इतिसंकल्प्य

विष्णुंस्मरेत् ॥ ततोयवगौरसर्षपान्गृहीत्वा नमोनमस्ते गोविंद पुराणपुरुषोत्तम ॥ इदंश्राद्धंहृषीकेश रक्षतांसर्वतो दिशः ॥१॥ इति पठित्वा सर्वत्रविकीर्य नीवीबंधं कुर्यात ॥ अथपाद्यादिदानम् ॥ ( सर्वं सव्येन देवतीर्थेन प्रदक्षिणकर्मणा यवैश्चकर्त्तव्यम् ) पाद्यपात्रंगृहीत्वा अद्यमात्रादित्रयपित्रादित्रयमातामहादित्रयश्राद्धसंबंधिनःसत्यवसुसंज्ञकाविश्वेदेवाः इदंवः पाद्यंपादावनेजनंपादप्रक्षालनं वृद्धिर्नमः इतिदद्यात् ॥ ततः काश्यपगोत्रास्मन्मातृपितामहीप्रपितामह्योऽमुकामुकदेव्यः नांदीमुख्यः इदंवः पाद्यंपादावनेजनंपादप्रक्षालनं वृद्धिर्नमः काश्यपगोत्रास्मत्पितृपितामहप्रपितामहाः अमुकामुकदासाः नांदीमुखाः इदंवः पाद्यं पादावनेजनंपादप्रक्षालनंवृद्धिर्नमः ॥ द्वितीयगोत्राः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकामुकदासाः नांदीमुखाः इदंवः पाद्यंपादावनेजनंपादप्रक्षालनं वृद्धिर्नमः ॥ अथासनम् ॥ सत्यवसुसंज्ञकाविश्वेदेवाः इदमासनं वोनमः अत्राध्वम् इत्युक्त्वाकुशत्रयपूर्वाग्रमुत्सृजेत् ॥ एवं सर्वत्र नांदीश्राद्धे क्षणः कर्त्तव्यः प्राप्नुतां भवंतौ प्राप्नवाव इतिपठेत् ॥ काश्यपगोत्रास्मन्मातृपितामहीप्रपितामह्योऽमुकामुकदेव्यः नांदीमुख्यः इदमासनंत्रेधाविभज्यवो नमः अत्राध्वम् इत्यासनंदत्त्वा नांदीश्राद्धेक्षणः कर्त्तव्यः प्राप्नुतांभवंतौप्राप्नवाव इति० ॥ काश्यपगोत्राऽस्मत्पितृपितामहप्रपितामहा अमुकामुकदासाः नांदीमुखाः इदमासनं त्रेधाविभज्यवोनमः । अत्राध्वं नांदीश्राद्धेक्षणः कर्त्तव्यः प्राप्नुतांभवंतौप्राप्नवाव इति० ॥ द्वितीयगोत्राऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकामुकदासाः नांदीमुखाः इदमासनं त्रेधाविभज्यवोनमः अत्राध्वं प्राप्नुतांभवंतौ प्राप्नवाव इत्यासनंदद्यात् ॥ ततोऽर्घपात्रमादाय ॥ सत्यवसुसंज्ञकाविश्वेदेवा एषवोर्घोनमः इत्यर्घंदत्त्वा काश्यपगोत्राः मातृपितामही प्रपितामह्यः एषहस्तार्घस्त्रेधाविभज्य युष्मभ्यंनमः ॥ काश्यपगोत्राः पितृपितामहप्रपितामहाः एषहस्तार्घस्त्रेधाविभज्ययुष्मभ्यंनमः ॥ द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहा एषहस्तार्घस्त्रेधाविभज्य युष्मभ्यंनमः इत्यर्घदानंकुर्यात् ॥ ततः सर्वत्र गंधपुष्पधूपदीप

तांबूलवासांसिक्रमेणधृत्वाकुशत्रययवजलान्यादाय अद्य सत्यवसुसंज्ञकेभ्यो विश्वेभ्योदेवेभ्यः इदंगंधाद्यर्चनंनमः संपद्यतांवृद्धिः॥ काश्यपगो
त्राभ्यःमातृपितामहीप्रपितामहीभ्योनांदीमुखीभ्यः इदंगंधाद्यर्चनंनमः संपद्यतांवृद्धिः॥काश्यपगोत्रेभ्यः पितृपितामहप्रपितामहेभ्योनांदीमु
खेभ्यःइदंगंधाद्यर्चनंनमः संपद्यतांवृद्धिः ॥ अमुकगोत्रेभ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्योनांदीमुखेभ्यः इदंगंधाद्यर्चनंनमःसंपद्यतां
वृद्धिः॥ततः एतेगंधपुष्पधूपदीपतांबूलाच्छादनांताः सर्वे उपचाराः संपूर्णाभवंतु इति प्रार्थयेत् ॥ ततोर्धचंद्रमंडलमभ्युक्षणंवाकृत्वा पात्रेष्वा
मान्नानिद्विगुणानिसमानिवाहिरण्यंदत्त्वा प्रोक्ष्य पात्रमालभ्ययवान्विकीर्यान्ने विष्णवेनमः इत्यङ्गुष्ठंदत्त्वा॥कुशत्रयादीन्यादाय॥सत्यवसुसं
ज्ञकाविश्वेदेवाःनांदीमुखाःइदंवः युग्मब्राह्मणभोजनपर्याप्तं द्विगुणमामंसोपस्करम् आममूल्यभूतंयथाशक्ति हिरण्यं वा अमृतरूपेण संप्रददे
नमम संपद्यतांवृद्धिः ॥ततः काश्यपगोत्रा मातृपितामहीप्रपितामह्योऽमुकामुकदेव्यः नांदीमुख्य इदंवः युग्मब्राह्मणभोजनपर्याप्तं द्विगुण
मामं सोपस्करम् आममूल्यभूतं यथाशक्तिहिरण्यंवा अमृतरूपेणसंप्रददेनमम संपद्यतांवृद्धिः॥काश्यपगोत्राःपितृपितामहप्रपितामहाःइदंवः
युग्मब्राह्मणभोजनपर्याप्तं द्विगुणमामंसोपस्करम् आममूल्यभूतंयथाशक्तिहिरण्यंवा अमृतरूपेण संप्रददेनमम संपद्यतांवृद्धिः ॥ अमुकगोत्रा
मातामहप्रमातामहवृद्धप्रमातामहाः इदंवः युग्मब्राह्मणभोजनपर्याप्तं द्विगुणमामं सोपस्करम् आममूल्यभूतंयथाशक्तिहिरण्यंवा अमृतरूपेण
संप्रददे नमम संपद्यतांवृद्धिः अत्रपिण्डाः कृताऽकृताः पिण्डदानपक्षे वेदित्रयंनिर्माय पूर्वाग्राःरेखाः तिस्रः कृत्वादर्भानास्तीर्य नवपात्राणि
जलयवगंधपुष्पैः पूरयित्वा पात्रमेकमादाय काश्यपगोत्रे मातरमुकदेवि नांदीमुखि अत्रावनेनिक्ष्वतेनमः इति कुशमूले मात्रेऽवने
जनंदत्त्वा पात्रान्तरेण कुशमध्ये पितामह्यै कुशाग्रे प्रपितामह्यै चावनेजनंदद्यात् ॥ एवं द्वितीयवेदिकायांपित्रादिभ्यस्तृतीयवेदिकायां माता
महादिभ्यश्चप्रत्येकमवनेजनंदद्यात् ॥ ततोयवदधिबदरघृतमिश्रितामान्नेनसक्तुनावानवपिण्डान्निर्माय एकंपिण्डंकुशादींश्चादाय अत्र

काश्यपगोत्रेमातरमुकदेविनांदीमुखिएषतेपिंडोनमः इतिदेवतीर्थेनमात्रेतदवनेजनस्थानेपिण्डंदत्त्वा पितामहीप्रपितामहीभ्यांतत्तदवने
जनस्थानेपिण्डंदद्यात् ॥ एवमेवपितृपितामहप्रपितामहेभ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्यश्चतत्तदवनेजनस्थानेक्रमेणपिण्डान्दद्या
त् ॥ ततोऽवनेजनपात्रंगृहीत्वा काश्यपगोत्रेमातरमुकदेविनांदीमुखि अत्रप्रत्यवनेनिक्ष्वतेनमः इतिमातृपिण्डोपरिप्रत्यवनेजनंदत्त्वा
पितामह्यादिभ्योपिक्रमेणतत्तत्पिण्डोपरिप्रत्यवनेजनंदद्यात् ॥ ततोनीवींविस्रंस्य आचम्यहरिंस्मरेत् ॥ ततःपिण्डेषुसूत्राणिदत्त्वा संकल्प्यगं
धपुष्पधूपदीपतांबूलादिभिः प्रत्येकंपिण्डानभ्यर्च्य॥शिवाआपः संतु इतिजलं सौमनस्यमस्तु इतिपुष्पाणि अक्षतंचारिष्टंचास्तु इतियवां
श्चप्रत्येकंपात्रेषुनिक्षिप्य नांदीमुख्योमातरः प्रीयंतां नांदीमुखाःपितरःप्रीयंतांनांदीमुखाःमातामहाश्चप्रीयंताम् इत्युदकंदत्त्वा कृतांजलिःगोत्रं
नोवर्द्धताम् दातारोनोभिवर्धंताम् संततिश्चवर्द्धताम् श्रद्धाचनोमाव्यगमत् बहुदेयंचनोस्तु अन्नंचनोबहुभवेत् अतिथींश्चलभेमहि याचितारश्च
नःसंतु माचयाचिष्मकंचन । इत्याशीःप्रार्थयेत् ॥ ततः । पिण्डोपरिसपवित्रकुशान्धृत्वा तूष्णींतदुपरिपूर्वाग्रांजलधारांदत्त्वादक्षिणांदद्यात्
( अत्रफलमूलयवमयी एवदक्षिणातन्निष्क्रयहिरण्यद्रव्यंवा ) दक्षिणाद्रव्यंकुशत्रयादींश्चादाय ॥ अद्यसत्यवसुसंज्ञकानांविश्वेषांदेवानांकृतै
तन्नांदीश्राद्धकर्मणः सांगतासिद्ध्यर्थंद्राक्षामलकयवमूलभूतांतन्निष्क्रयद्रव्यंवा दक्षिणांदातुमहमुत्सृजे इतिसंकल्प्यदद्यात् ॥ पुनः का
श्यपगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनांनांदीमुखीनां कृतैतन्नांदीश्राद्धकर्मणःसांगतासिद्ध्यर्थं द्राक्षामलकयवमूलभूतां
निष्क्रयद्रव्यंवादक्षिणांदातुमहमुत्सृजे इति ॥ एवंपितॄणांमातामहानांचश्राद्धदक्षिणांक्रमेणदद्यात् ॥ ततः मातापितामहीचैव तथैवप्रपि
तामही ॥ पितापितामहश्चैव तथैवप्रपितामहः ॥ १॥ मातामहस्तत्पिताच प्रमातामहकादयः ॥ एतेभवंतुसुप्रीताः प्रयच्छंतुसुमंगलम्॥२॥
इतिप्रार्थ्य पिण्डान्विसृज्यकर्मपूर्त्तिकामोविष्णुंस्मरेत् ॥ इतिश्राद्धप्रकाशेशूद्राणामाभ्युदयिकश्राद्धपद्धतिःसमाप्ता ॥ ॥ छ ॥

अथ दुर्मरणमृतानांशूद्राणांनारायणबलिप्रयोगः ॥ तत्रतावत्सूतकान्तेपुण्यदेशेतीर्थेगृहेवापंचभूसंस्कारांविधाय तत्रसामग्रींसंस्थाप्यनद्यां दौस्नात्वाधौतवाससीद्वेपरिधाय नित्यकर्मसमाप्यगणपतिनवग्रहान्पूजयेत् ॥ ततोदुर्मरणमृतप्रायाश्चित्तंकार्यम् ॥ तद्यथा–देशकालौस्मृत्वा अमुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणदोषपरिहारार्थं कुगतिनिवारणार्थं सद्गतिप्राप्त्यर्थंनारायणबल्याधिकारार्थंचपंचदशप्राजापत्यात्मकं प्रायश्चित्तं प्रतिप्राजापत्यंयथाशक्तिधेनुमूल्यम् अथवा अमुकसंख्यापारिमितगीताविष्णुसहस्रनामपाठान्ब्राह्मणद्वारायथाकालेनाचरिष्ये इति संकल्प्य यथाशक्तिधेनुमूल्यगीताविष्णुसहस्रनामपाठा आमान्नतीर्थयात्रादिद्वारासंपादयेत् ॥ ततः आचम्य देशकालौस्मृत्वा अमुक गोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिपूर्वकाक्षय्यस्वर्गलोकप्राप्तिकामस्तथा चतुःषष्टिदुर्मरणांतर्गतयत्किंचिद्दुर्मरणदोषपरिहारार्थं श्रीनारायणप्रीत्यर्थंनारायणबलिकर्माहंकरिष्ये–इतिसंकल्प्य स्वपुरतश्चतुरस्रंस्थंडिलंकृत्वा तदुपरिश्वेतवस्त्रमास्तीर्य तत्रतंडुलैरष्टदलंसंपाद्य ईशानादिष्वष्टशक्तीनांस्थापनम् ॥ तद्यथा–कुशत्रयतिलजलान्यादाय अमुकगोत्रस्य० प्रेतस्य रोगोत्पत्तिमरणावसाने ऊर्ध्वोच्छिष्टाध उच्छिष्टोभयोच्छिष्टाकृतस्नानाशौचमरणमरणसमयहरिनामोच्चारवर्जितामेध्यकेशास्थिस्पर्शेत्यादिनानादोषपरिहारार्थं प्रेतत्वनिवृत्त्यर्थम् असद्गतिविनाशार्थं सद्गतिविष्णुलोकप्राप्त्यर्थंच सत्येशस्थापनप्रतिष्ठापूजनमहंकरिष्ये इतिसंकल्प्य पुष्पाण्यादाय ईशाने रुक्मिण्यैनमः रुक्मिणीमावाहयामिस्थापयामि १ एवंसर्वत्र ॥ पूर्वे सत्यभामायै० सत्यभामां० २ आग्नेय्यां० जांबवत्यै०जांबवतीं० ३ दक्षिणे नाग्निजित्यै० नाग्निजितीं० ४ नैर्ऋत्ये कालिंद्यै० कालिंदीं० ५ पश्चिमे मित्रविंदायै० मित्रविंदां० ६ वायव्ये लक्ष्मणायै० लक्ष्मणां० ७ उत्तरे चारुहासिन्यैनमः चारुहासिनीमावाहयामिस्थापयामि ८ इतिसंस्थाप्य मध्ये ताम्रकलशंस्थापयेत् ॥ तस्यविधिः ॥ तत्रादौभूमिंसंपूज्यपृथ्वित्वयाधृतालोका देवित्वंविष्णुनाधृता ॥ कलशाधारभूतांहि पवित्रंकुरुचासनम् इतिभूमिंस्पृशेत् ॥१॥ तत्र यवोसिधा

न्यराजोसि सर्वोत्पत्तिकरः शुभः॥प्राणिनांजीवनोपायः कलशाधःक्षिपाम्यहम्॥२॥इतिधान्यंक्षिप्त्वातस्योपरिकलशंस्थापयेत्॥गंगेचयमुने चैव गोदावरिसरस्वति॥नर्मदेसिंधुकावेरि कुंभेस्मिन्सन्निधिंकुरु॥३॥इतिजलेनप्रपूर्य गंधंक्षिप्त्वा सर्वौषध्यः सप्तमृदः पंचपल्लवान्दूर्वां पंचरत्नानिहिरण्यंपूगीफलंचनिक्षिपेत्॥ततः॥जीवनंसर्वलोकानां लज्जायारक्षणंपरम्॥सुवेषधारिवस्त्रंहि कलशंवेष्टयाम्यहम्॥४॥इति वस्त्रेणसंवेष्ट्य धान्यपूर्णमिदंपात्रंस्थापितंकलशेयतः॥तेनायंकलशःपूर्णःपूर्णाःसंतुमनोरथाः॥५॥इतिपूर्णपात्रंनिधायश्रीफलंधृत्वापुष्पमालादिभिःशोभितं कृत्वा तत्र—मकरस्थंपाशहस्तं शुभवर्णकिरीटिनम् ॥ आवाहयेप्रतीचीशंवरुणंजलनायकम् ॥ भोवरुणइहागच्छइहतिष्ठ इत्यावाह्य ॥ वरुणायनमः इतिसंपूज्य कलशस्यमुखेविष्णुः कंठेरुद्रःसमाश्रितः ॥ मूलेतस्यस्थितोब्रह्मा मध्ये मातृगणाःस्मृताः ॥१॥ कुक्षौतुसागराः सप्त सप्तद्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदः सामवेदोप्यथर्वणः ॥ अंगैश्चसहिताःसर्वे कलशंतुसमाश्रिताः॥२॥ इत्यभिमंत्र्य देवदानवसंवादे इत्यादिप्रार्थयेत् ॥ इतिकलशस्थापनम् ॥ अतःपरंस्वर्णमयींसत्येशमूर्त्तिंदुग्धजलपंचामृतस्नापितांकलशोपरिसंस्थाप्य अष्टशक्तिसहितः सत्येशः सुप्रतिष्ठितोवरदोभवतु इतिप्रतिष्ठांकुर्यात् ॥अथपूजनम् ॥ उर्व्यांक्षीरसमुद्रेस्मिन्व्योम्निसत्येचसंस्थितः ॥ अत्रत्वंसत्ययासार्द्धंसत्येशभवसन्निधौ॥१॥भगवन्सत्येशइहागच्छइहतिष्ठ इत्यावाहनम्॥सोमसूर्याग्निसंकाशं पद्ममष्टदलान्वितम्॥ गृहाणासनंसत्येशत्रैलोक्यस्थितिकारण ॥२॥सत्येशायनमःआसनंसमर्पयामि॥रत्नाभरणसर्वांग सर्वदेवनमस्कृत ॥ पाद्यंगृहाणदेवेश गंधपुष्पाक्षतैर्युतम्॥३॥इतिपाद्यं०सत्येशसुखभूयिष्ठसत्येशमुक्तिदायक॥सत्येशसत्ययायुक्तगृहाणार्घ्यंनमोस्तुते॥४॥ इत्यर्घ्यं०॥गंगाजलसमानीतं सुवर्णकलशस्थितम् ॥ गृहाणाचमनंदेवत्रैलोक्यस्यापिपावन॥५॥इत्याचमनम्॥क्षीरसागरकल्लोलैःस्नाहिपापनिषूदन॥त्राहिमांभूतभव्येश दत्तेनजलबिंदुना॥६॥ इतिस्नानम् ततः पंचामृतस्नानम् ॥ अभिषेकःआचमनं०हरस्वसर्वदुरितं येनाहंवेष्टितोहरे ॥ वस्त्रेणानेनशुभ्रेणसत्येशकुरुवाञ्छितम्॥७॥ इतिवस्त्रं०यज्ञ

योगेतथासांख्येपवित्रत्वंसदोच्यते॥यज्ञोपवीनदानेनकुरुमांसर्वपावनम् ॥८॥ इतियज्ञोपवीतं०॥सुगंधंचंदनंदिव्यंकेशरागरुसंयुतम्॥विलेपनं
सुरश्रेष्ठ सर्वपापहरोभव॥९॥इतिचंदनं०॥सत्येशायनमस्तुभ्यं मूर्तामूर्तस्वरूपिणे॥वासुदेवनृसिंहाख्यकपिलादित्यभूधर॥१०॥ इतिपुष्पाणि॥
वल्लभांतेजगन्नाथकोमलातिमनोहराम॥गृहाणतुलसींविष्णोययासंतोषितोहरिः॥११॥इतितुलसीपत्राणि०॥शक्तिवृंदयुतोदेवपूजाधूपंसुरेश्वर ॥
गृहाणत्वंतुसत्येशसत्ययासहरक्षमाम्॥१२॥इतिधूपं०॥ज्योतीरूपमरूपंत्वा वदंतिमुनिपुंगवाः॥ज्योतिर्मध्येस्थितोदेवदीपंगृह्णन्नमोस्तुते॥१३॥
इतिदीपम्॥त्रातात्वमेवसत्येशसत्ययासहचिंत्यते॥गृहाणदेवदेवेशममनैवेद्यमुत्तमम्॥१४॥इतिनैवेद्यं०॥नारायणनमस्तेस्तुवासुदेवनमोनमः॥
त्रैलोक्यजगदाधारत्राहिमांमधुसूदन॥१५॥इतिआचमनं०॥नमस्तेदेवदेवेशपुराणपुरुषोत्तम॥पापोपशमनार्थायप्रीत्यर्थंप्रतिगृह्यताम् ॥१६॥
इतिऋतुफलम्॥पूगीफलंसकर्पूरंतांबूलंसुमनोहरम्॥पवित्रकरणंनित्यंतांबूलंप्रतिगृह्यताम्॥१७॥ इतितांबूलं० ॥ अनेकजन्मसंभूतंपापंछिन्धि
सुरेश्वर॥मयादत्तावंदानेनभुक्तिमुक्तिप्रदोभव॥१८॥इतिहिरण्यदक्षिणां०॥वाराहाच्युतयज्ञेशलक्ष्मीकान्तसुरेश्वर ॥ पुत्रपौत्रप्रदोविष्णोपापशत्रो
निरंजन॥१९॥इतिनीराजनम्॥प्रभोसत्येशसत्यानांविभोविष्णोसुरेश्वर॥हरदुःखंचरोगंचपापंजन्मशतोद्भवम्॥२०॥अनिरुद्धेशगोविंदविष्णो
चक्रिन्नमोस्तुते पूजांगृहाणदेवेश प्रीयस्वगरुडध्वज॥ २१ ॥ इतिनमस्कारः॥(अत्राष्टौशक्तीनांपूजापृथक्कार्या) अथप्रार्थना॥ अपराधसह
स्राणि लक्षकोटयुतानिच॥नश्यंतितत्क्षणात्पापं सत्येशस्यचपूजनात्॥सत्येशपंचवक्त्रस्त्वंलक्ष्म्यासहजगत्पते॥वासुदेवःस्थितःपूर्वेनृसिंहोद
क्षिणेस्थितः॥कपिलःपश्चिमास्येतु वाराहश्चोत्तरेस्थितः॥ ऊर्ध्ववक्त्रेच्युतोज्ञेय एतद्वेवक्त्रपंचकम्॥सत्येशसंस्थितंराजन्पूजाकालेसदैवहि॥क्षी
रोदपूर्णचंद्रास्यपद्मकर्णिकसंस्थितम्॥पद्मकौमोदकीशंखचक्राण्यस्त्राणिबिभ्रतम्॥२२॥इतिप्रार्थ्य॥सनालिकेरार्घदानम्॥सत्येशायनमस्तुभ्यं
पापारेपरमेश्वर ॥मयादत्तार्घदानेनप्रेतमुक्तिप्रदोभव॥१॥ इत्यर्घंदत्त्वानालिकेरमर्पयेत्॥ततःप्रायश्चित्ताङ्गत्वेनब्राह्मणभोजनसंकल्पः॥ततोहस्ते

जलमादाय कृतेनानेनपूजनेन अष्टशक्तिसहितः श्रीसत्येशः प्रीयतामित्युत्सृजेत्॥अथपंचकलशस्थापनम्॥तत्रादौ कुशत्रयतिलजलान्यादाय देशकालौसंकीर्त्य काश्यगोत्रस्य० प्रेतस्यप्रेतत्वविमुक्तिपूर्वकविष्णुलोकप्राप्तिकामस्तथाचतुःषष्टिदुर्मरणांतर्गतयत्किंचिद्दुर्मरणनिमित्तकनारायणबलिकर्मांगतयाविहितंपंचकलशपंचदेवतास्थापनपूजनमहंकरिष्ये इतिसंकल्प्य सत्येशाद्दक्षिणभागे स्थंडिलेपूर्वादिदिक्षुमध्ये च क्रमेणपंचकलशान्पूर्वोक्तविधिनास्थापयेत् ॥ वस्त्रवेष्टनंपृथक्पृथक् ॥ पंचकलशेषु पंचधान्यानांस्थापनम्॥ ब्रह्मकलशेगोधूमाः १ विष्णुकलशेतंडुलाः २ रुद्रकलशेमुद्गाः ३ यमकलशेमाषाः ४ प्रेतकलशेतिलाः स्थाप्याः ५ ब्रह्माराैप्यमयःकार्यो विष्णुःस्वर्णमयोभवेत् ॥ रुद्रस्ताम्रमयःकुर्याद्यमोलोहमयःस्मृतः ॥ सीसमयस्तत्पुरुषः पंचमूर्त्तिरुदाहृताः ॥ १ ॥ ततोब्रह्मादिमूर्तीनां दुग्धजलधारयाग्न्युत्तारणं कृत्वाक्रमेणपंचकलशोपरिसंस्थाप्य पंचदेवानामावाहनंकुर्यात् ॥ तत्रप्रयोगः ॥ पूर्वदिशिक्षीरोदकपूरितेकलशे श्वेतवस्त्रवेष्टितायांरजतप्रतिमायांब्रह्माणम् ॥ आवाहयामिदेवेशं ब्रह्ममूर्तिंपितामहम् ॥ पुस्तकंचाक्षसूत्रंच शूलहस्तेकमंडलुम् ॥ १ ॥ हंसपृष्ठसमारूढं देवतागणसेवितम् ॥ आगच्छभगवन्ब्रह्मन्कुंभेस्मिन्संस्थितोभव ॥ २ ॥ भगवन्ब्रह्मन्निहागच्छ इहतिष्ठ इत्यावाह्यब्रह्मणेनमः इतिस्थापयेत् ॥ १ ॥ पश्चिमदिशिगंगोदकपूरितेकलशेपीतवस्त्रवेष्टितायांस्वर्णप्रतिमायांविष्णुम् ॥ आवाहयामिदेवेशं विष्णुंत्रैलोक्यपूजितम् ॥ शंखचक्रगदापद्मचतुर्बाहुंसुशोभनम् ॥ १ ॥ गरुडंचसमारूढं लक्ष्मीगणसमायुतम् ॥ आगच्छभगवन्विष्णो कुंभेस्मिन्संस्थितोभव ॥ २ ॥ भगवन्विष्णोइहागच्छ इहतिष्ठ ॥ विष्णवेनमः इतिस्थापयेत् ॥ २ ॥ उत्तरादिशिमधुघृतसंयुतेकलशेरक्तवस्त्रवेष्टितायांताम्रप्रतिमायांशिवम् ॥ आवाहयामिदेवेशं शिवंत्रैलोक्यधारिणम् ॥ वृषभंचसमारूढं चंद्रार्धकृतशेखरम् ॥ १ ॥ त्रिशूलायुधसंयुक्तं मुंडमालाविभूषितम् ॥ उमगाणसमायुक्तं नागयज्ञोपवीतकम् ॥ आगच्छदेवदेवेश कुंभेस्मिन्संस्थितोभव ॥ २ ॥ भगवन् शिव इहागच्छ इहतिष्ठ ॥ शिवायनमः

इतिस्थापयेत् ॥ ३ ॥ दक्षिणादिशिकलशे कृष्णवस्त्रवेष्टितायांलोहप्रतिमायांधर्मराजम् ॥ आवाहयामिदेवेशं यमंजंतुभयंकरम् ॥ रौद्र मूर्तिंविरूपाक्षं कृष्णांजनसमप्रभम् ॥ १ ॥ माहिषंरथमारूढं दंडायुधसमन्वितम् ॥ कर्मणांसाक्षिणंदेवं धर्मार्थकामचिंतनम् ॥ आगच्छ धर्मराजेंद्र कलशेस्मिँस्थितोभव ॥ २ ॥ भगवन्यमराज इहागच्छइहतिष्ठ इत्यावाह्य यमायनमःइतिस्थापयेत् ॥ ४ ॥ मध्यमेकलशेकृष्णवस्त्रवेष्टितायांसीसकप्रतिमायांतत्पुरुषम् ॥ तत्पुरुषमावाहयामिस्थापयामि भगवँस्तत्पुरुष इहागच्छइहतिष्ठ तत्पुरुषायनम इति स्थापयेत् ॥ ५ ॥ एवमावाहनंस्थापनंचकृत्वापुष्पाक्षतान्विकीर्यनाममंत्रेणप्रत्येकंषोडशोपचारैःसंपूज्य नमस्कृत्य इदमत्रगंधपुष्पधूप दीपनैवेद्यफलतांबूलदक्षिणाद्युपचाराः पंचदेवताभ्योनमम ॥ पंचदेवतापूजनविधेःपारिपूर्णतास्तु इति प्रार्थयेत् ॥ ततः पंचाक्षरद्वादशाक्षराष्टाक्षरमंत्रजपकरणार्थं ब्राह्मणान्वृत्वाजपांस्तद्वाराकारयेत् ॥ अथ पंचदेवतानांतर्पणम् ॥ ताम्रंगंधपुष्पतिलदुग्धगंगोदकसर्वौषधियवमिश्रितजलेनपात्रंप्रपूर्य कुशत्रयतिलजलान्यादाय अद्यकाश्यपगोत्रस्य अमुकप्रेतस्यासद्गतिदुर्मृत्युविनाशसद्गतिप्राप्त्यर्थं ब्रह्मादिदेवानां स्वैःस्वैर्नाममंत्रैस्तर्पणंकरिष्ये इतिसंकल्प्य देवमुद्दिश्यतर्पयेत् ॥ तत्रादौ ब्रह्मतर्पणम् ॥ ब्रह्मातृप्यताम् १ आत्मभूस्तृप्यताम् २ सुरज्येष्ठस्तृप्यताम् ३ परमेष्ठीतृप्यताम् ४ पितामहस्तृ० ५ हिरण्यगर्भस्तृ० ६ लोकेशस्तृ० ७ स्वयंभूस्तृ० ८ चतुराननस्तृ० ९ धातातृप्यताम् १० अब्जयोनिस्तृ० ११ द्रुहिणस्तृ० १२ विरिंचिस्तृ० १३ कमलासनस्तृ० १४ स्रष्टातृ० १५ प्रजापतिस्तृप्यताम् १६ वेधास्तृप्यताम् १७ विधातातृप्यताम् १८ विश्वसृट्तृप्यताम् १९ विधिस्तृप्यताम् २० कमलोद्भवस्तृ० २१ रजोमूर्तिस्तृ० २२ सत्यकस्तृ० २३ हंसवाहनस्तृप्यताम् २४ निधनस्तृप्यताम् २५ नाभिजन्मातृप्यताम् २६ अनेन तर्पणेन भगवान्ब्रह्माप्रीयताम् इति ब्रह्मतर्पणम् ॥

अथ विष्णुतर्पणम् ॥ केशवस्तृप्यताम् १ नारायणस्तृप्यताम् २ माधवस्तृप्यताम् ३ गोविंदस्तृ० ४ विष्णुस्तृ० ५ मधुसूदनस्तृ० ६ त्रिविक्रमस्तृ० ७ वामनस्तृ० ८ श्रीधरस्तृ० ९ हृषीकेशस्तृ० १० पद्मनाभस्तृ० ११ दामोदरस्तृ० १२ वासुदेवस्तृ० १३ संकर्षणस्तृ० १४ प्रद्युम्नस्तृ० १५ अनिरुद्धस्तृ० १६ मत्स्यस्तृ० १७ कूर्मस्तृ० १८ वाराहस्तृ० १९ नारसिंहस्तृ० २० वामनस्तृ० २१ रामस्तृ० २२ श्रीरामस्तृ० २३ कृष्णस्तृ० २४ बुद्धस्तृ० २५ कल्किस्तृ० २६ शौरिस्तृ० २७ वैकुंठस्तृ० २८ महाबलस्तृ० २९ पुरुषोत्तमस्तृ० ३० अजस्तृ० ३१ पद्मनाभस्तृ० ३२ अनंतस्तृ० ३३ कपिलस्तृ० ३४ शेषस्तृ० ३५ हलायुधस्तृ० ३६ बलभद्रस्तृप्यताम् ३७ अच्युतस्तृप्यताम् ३८ श्रीपतिस्तृप्यताम् ३९ सत्येशस्तृप्यताम् ४० अनेनतर्पणेनभगवान्विष्णुःप्रीयतामितिप्रार्थयेत् ॥ इति विष्णुतर्पणम् ॥ अथ रुद्रतर्पणम् ॥ भवस्तृप्यताम् १ भवनाशस्तृ० २ महादेवस्तृ० ३ उग्रस्तृ० ४ उग्रनाशनस्तृ० ५ शर्वस्तृ० ६ शशिमौलिस्तृ० ७ रुद्रस्तृ० ८ नीलकंठस्तृ० ९ शिवस्तृ० १० भवहारिस्तृ० ११ ईशानस्तृ० १२ सर्वकामप्रदस्तृ० १३ देवाधिदेवस्तृ० १४ शंकरस्तृ० १५ शूलपाणिस्तृ० १६ शंभुस्तृ० १७ स्वयंभूस्तृ० १८ पार्वतीपतिस्तृ० १९ स्थाणुस्तृ० २० त्रिनेत्रस्तृ० २१ शशिभूषणस्तृ० २२ महेश्वरस्तृप्यताम् २३ हरस्तृ० २४ पशुपतिस्तृप्यताम् २५ अनेनतर्पणेनभगवान्रुद्रःप्रीयतामितिप्रार्थयेत् ॥ इति रुद्रतर्पणम् ॥ अथ यमतर्पणम् ॥ यमस्तृप्यताम् १ धर्मराजस्तृ० २ मृत्युस्तृ० ३ अंतकस्तृ० ४ वैवस्वतस्तृ० ५ कालस्तृ० ६ सर्वभूतक्षयस्तृ० ७ औदुंबरस्तृ० ८ दध्नस्तृ० ९ नीलस्तृ० १० परमेष्ठीतृ० ११ वृकोदरस्तृ० १२ चित्रस्तृ० १३ चित्रगुप्तस्तृप्यताम् १४ पितृपतिस्तृ० १५ समवर्तीतृप्यताम् १६ परेतराट्तृप्यताम् १७ कृतांतस्तृ० १८ यमुनाभ्रातातृ० १९ शमनस्तृ० २० यमराट्तृप्यताम् २१ दंडधरस्तृ० २२ श्राद्धदेवस्तृ० २३ अनेनतर्पणेनयमः प्रीयतामितिप्रार्थयेत् ॥ इति यमतर्पणम् ॥ अथ तत्पुरुष

तर्प्पणम् ॥ अनादिनिधनोदेवः शंखचक्रगदाधरः ॥ अक्षय्यःपुंडरीकाक्षः प्रेतमोक्षप्रदोभव ॥ १ ॥ तत्पुरुषस्तृप्यताम् ॥ नारायणसुर
श्रेष्ठ लक्ष्मीकान्तवरप्रद ॥ अनेनतर्पणेनाद्य प्रेतमोक्षप्रदोभव ॥ २ ॥ तत्पुरुषस्तृप्यताम् ॥ जयत्वंदेवदेवेश जयाजन्मजयाधर ॥
जयकामदभक्तानां प्रभोविष्णोनमोनमः ॥ ३ ॥ तत्पुरुषस्तृप्यताम् ॥ हिरण्यगर्भपुरुषप्रधानव्यक्तरूपिणे ॥ श्रीनमोवासुदेवायशु
द्धज्ञानस्वरूपिणे ॥ ४ ॥ तत्पुरुषस्तृ० ॥ अच्युतानंतगोविंद विष्णोमाधवकेशव ॥ अस्यजीवस्यमोक्षार्थं सुप्रीतोभवतर्पणे ॥ ५ ॥ तत्पुरु
षस्तृ० ॥ अतसीपुष्पसंकाशं पीतवाससमच्युतम् ॥ येनमस्यंतिगोविंदं नतेषांविद्यतेभयम् ॥६॥तत्पुरुषस्तृप्यताम् ॥ अनेनतर्पणेनभगवां
स्तत्पुरुषः प्रीयतामितिप्रार्थयेत् ॥ ततः पंचदेवतानांतर्पणं परिपूर्णमस्तु॥अनेनपंचदेवतातर्पणेनकृतेन(अपसव्यम्) काश्यपगोत्रस्य अमुक
प्रेतस्य असद्गतिविनाशः सद्गतिप्राप्तिरितिपठेत् ॥ ततस्तर्पणकर्मणः सांगतासिद्ध्यै आमान्नंतन्निष्क्रयद्रव्यंवासंकल्प्यदद्यात् ॥ इति
पंचदेवतर्प्पणम् ॥ अथप्रायश्चित्तहोमः ॥ तत्रतावदग्निस्थापनम् ॥ होताहस्तमात्रंचतुरस्रंस्थंडिलं कृत्वा कुशैःपरिसमुह्य तानैशा
न्यांपरित्यज्य गोमयोदकेनोपलिप्यस्रुवमूलेन मध्येप्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेणत्रिरुल्लिख्यानामिकांगुष्ठाभ्यांमृदमुद्धृत्य ऐशान्यां
क्षिप्त्वा तंदेशंजलेनाभ्युक्ष्य तूष्णीं कांस्यपात्रस्थमग्निंस्थापयेत् ॥ ततोऽग्नेर्दक्षिणतःशुद्धमासनंविधायतदुपरिप्रागग्रान्कुशानास्तीर्य
अग्निंप्रदक्षिणं कारयित्वा ब्रह्माणमुदङ्मुखंतत्रोपविश्यास्मिन्नारायणबलिहोमकर्मणि त्वंमे ब्रह्माभव इति प्रार्थयेत् ॥ ततः प्रणीतापात्रं
पुरतः कृत्वा वारिणापरिपूर्य्य कुशैराच्छाद्य ब्रह्माणमवलोक्याग्नेरुत्तरतःकुशोपरि निदध्यात् ॥ ततः परिस्तरणं प्रागग्रैश्चतुर्भिश्चतु
र्भिर्दर्भैः आग्नेयादीशानांतं ब्रह्मणोऽग्निपर्यंतं नैर्ऋत्याद्वायव्यांतमग्नितः प्रणीतापर्यंतं परिस्तरणं कृत्वा अग्नेरुत्तरतः पश्चिम
दिशिपवित्रच्छेदनार्थं कुशत्रयं पवित्रार्थंसाग्रमनन्तर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रमाज्यस्थाली चरुस्थाली संमार्जनकुशाः ३

उपयमनकुशाः ३ समिधस्तिस्रः स्रुवः आज्यं तंडुलान् अन्नपूर्णपात्रं च पवित्रच्छेदनकुशानांपूर्वपूर्वदिशि क्रमेणासादनीयम् ॥ ततः कुशपत्रद्वयमादाय अग्रतः प्रादेशमात्रंप्रमाप्य कुशत्रयेण च्छित्त्वा सपवित्रकरेण प्रणीतोदकंत्रिःप्रोक्षणीपात्रेनिधाय अनामिकाङ्गुष्ठाभ्यांपवित्रेगृहीत्वा त्रिरुत्पवनम्॥ ततःप्रोक्षणीपात्रंगृहीत्वा पवित्राभ्यांत्रिरुत्पूय प्रणीतोदकेनप्रोक्षणीपात्रमभ्युक्ष्य प्रोक्षणीजलेनासादितवस्तुसेचनम् ॥ अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रंनिदध्यात् ॥ ततः आज्यस्थाल्यामाज्यंनिक्षिप्य प्रणीतोदकेन तंडुलान्प्रक्षाल्य चरुपात्रे प्रणीतोदकंदत्त्वा तत्रतंडुलान्प्रक्षिप्यचरुमाज्यंचगृहीत्वायुगपदग्नौनिधाय सिद्धेचरौतृणादिप्रज्वाल्यप्रदक्षिणमुभयोरुपरिभ्रामयित्वावह्नौ प्रक्षिपेत् ॥ततस्त्रिः स्रुवप्रतपनं सम्मार्जनकुशानामग्रैरन्तरतोमूलैर्बाह्यतःस्रुवंसंमृज्यप्रणीतोदकेनाभ्युक्ष्यपुनस्त्रिःप्रतप्यदक्षिणतोनिदध्यात् ॥ ततःआज्यंचरुंचानीय स्वपुरतःआज्यंतदुत्तरतश्चरुंनिधाय आज्यं प्रोक्षणीवत्त्रिरुत्पूय अवेक्ष्य सत्यपद्रव्येतन्निरसनं पुनःप्रोक्षण्युत्पवनम् ॥ ततः उत्थायोपयमनकुशान्वामहस्तेकृत्वाप्रजापतिंमनसाध्यात्वा तूष्णीमग्नौ घृताक्तास्तिस्रः समिधः प्रक्षिपेत् ॥ ततः उपविश्य सपवित्रप्रोक्षण्युदकेनाग्निंपर्युक्ष्य प्रणीतापात्रेपवित्रेनिधाय पातितदक्षिणजानुः कुशाग्रेण ब्रह्मणान्वारब्धः सुसमिद्धतमेग्नौ आज्येनजुहुयात् ॥ ( तत्रब्राह्मणद्वारा तूष्णीं स्वाहांतोहोमः ) प्रजापतये स्वाहा इदंप्रजापतये १ इतिमनसा इंद्राय स्वाहा इदं० २ इत्याघारौ अग्नये स्वाहा इदं० ३ सोमायस्वाहा इदंसोमाय इत्याज्यभागौ ४ ॥ ततोऽग्निंसंपूज्य विष्णवे स्वाहा इदंविष्णवे २ इतिचतुर्विंशत्याज्याहुतीर्हुत्वा ॥ लोमभ्यः स्वाहा इतिलोमभ्यः २ त्वचे स्वाहा इदं०२ लोहिताय० इदं०२ मेदोभ्यः० इदं०२ मांसेभ्यः० इदं०२ स्नायुभ्यः० इदं०२ आस्थिभ्यः०इदं०२ मज्जाभ्यः० इदं०२ रेतसे० इदं० १ पायवे० इदं० १आयासाय० इदं० १ प्रयासाय० १ संयासाय० १वियासाय० १ उद्यासाय० १ शुचे० १ शोचते० १ शोचमानाय० १ शोकाय० १ तपसे० १तप्यते० १तप्यमानाय० १ तप्ताय० १घर्म्माय० १

निष्कृत्यै० १ प्रायश्चित्यै० १ भेषजाय० १ यमाय० १ अंतकाय० १ मृत्यवे० १ ब्रह्मणे० इदं० १ब्रह्महत्यायै० इदं१विश्वेभ्योदेवेभ्यो० इदं०१द्यावापृथिवीभ्यां स्वाहा इदं० १ इतितूष्णीं ४२ आज्याहुतीर्हुत्वा चरुमादायाभिघार्यहस्तेनैवजुहुयात् ॥ गणपतयेस्वाहा इदं० ४ सूर्याय० इदं०४चंद्रमसे०इदं०४ भौमाय० इदं०४बुधाय० इदं०४बृहस्पतये० इदं० ४ शुक्राय० इदं४ शनैश्चराय०इदं० ४ राहवे० इदं०४ केतवे० इदं०४इतिहुत्वा॥विष्णवेस्वाहा इदं विष्णवे नमम इति षोडशचर्वाहुतीः पुनर्जुहुयात् ॥ ततः नमोभगवतेवासुदेवाय स्वाहा इदं विष्णवे इति तिलयवाहुतयः १०८अष्टोत्तरशतंहुत्वा अग्नयेस्विष्टकृते० इदं०इतिस्विष्टकृत् आज्येन अग्नये०इदं १ वायवे० इदं०२ सूर्याय० इदं० ३ अग्निवायुसूर्येभ्यः० इदं० ४ अग्नीवरुणाभ्यां० इदं० ५ अग्नये० ६ वरुणादिभ्यः७वरुणाय०८प्रजापतये०९इति होमंकुर्यात् ॥ ततः स्थंडिलस्यसमंतात्पूर्वादिदिक्षु इंद्रादिदशदिक्पालेभ्योमाषभक्तबलिदानंकृत्वा ॥ मृडाग्नयेस्वाहा इदंमृडाग्नयेनमम इतिपूर्णाहुतिंदद्यात् ॥ ततः स्तरणक्रमेणबर्हिरुत्थाप्याज्येनाभिघार्य्य ॥ अग्नयेस्वाहा इदं० इति हस्तेनैवजुहुयात् ॥ ततोभस्मवंदनं संस्रवप्राशनमाचमनंचकृत्वा प्रणीताजलेनशिरः संमृज्य पवित्रे अग्नौप्रक्षिप्य ईशान्यांप्रणीतान्युब्जीकुर्यात् ॥ततोब्रह्मणेपूर्णपात्रदानम् ॥ अद्यकृतैतन्नारायणबलिकर्मांगतयाविहितंप्रायश्चित्तहोमसांगतासिद्ध्यर्थमिदंपूर्णपात्रंप्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायदातुमहमुत्सृजे इतिसंकल्प्यदद्यात् ॥ ब्रह्मग्रंथिविमोकः ॥ ततो यथाशक्तिब्राह्मणान् आमान्नेन तन्निष्क्रयद्रव्येणवासंतोष्य अनेनकर्मांगदेवताः प्रीयंताम् इतिप्रार्थयेत् ॥ प्रायश्चित्तहोमविधेः परिपूर्णतास्तु ॥ अनेनप्रायश्चित्तांगहोमेनकृतेन अमुकगोत्रप्रेतस्य दुर्मरणदोषनिवृत्तिः सद्गतिप्राप्तिः ॥इतिप्रायश्चित्तहोमः ॥ अथैकादशविष्णुश्राद्धानि ॥ तत्रादौपूर्वाभिमुखः उपविश्य पवित्रधारणंकृत्वा आचम्य एकादशघटान्संस्थाप्य विष्णुःशिवोयमश्चैवसोमश्चहव्यवाहनः ॥ कव्यश्चमृत्युरुद्रश्चपुरुषश्चक्रमानिमान् ॥ प्रेतस्तुदशमःप्रोक्तोविष्णुरेकादशः

स्मृतः ॥ इत्येवैकादशप्रोक्ताः श्राद्धेस्मिन्नधिकारिणः ॥ अपवित्रः पवित्रोवा० पुंडरीकाक्षायनमः इतिकुशत्रयजलेनश्राद्धीयद्रव्याण्यात्मानं चासिंचेत् ॥ ततोयवान्गृहीत्वा प्रथमचटे विष्णुश्राद्धेक्षणमुपतिष्ठताम्० ॥ द्वितीयेशिवश्राद्धेक्षणमुपतिष्ठताम्० ॥ तृतीयेयमश्राद्धे० चतुर्थे सोमराज० पंचमेहव्यवाहन० षष्ठेकव्यवाहन० सप्तमेमृत्यु० अष्टमेरुद्र० नवमेपुरुष० दशमेप्रेतश्राद्धे० एकादशेविष्णुश्राद्धेक्षणमुपतिष्ठताम् ॥ इतिसर्वत्रविकीर्य प्रथमंविष्णवे एतत्पाद्यंपादावनेजनंपादप्रक्षालनं० ॥ एवंसर्वत्र एषवः पादार्घः ॥ इदमत्रचंदनंपुष्पम् ॥ इदमाचमनम् ॥ एवंचटपूजांकृत्वा आचमनम् ॥ यवगौरसर्षपैर्दिग्बंधः ॥ पूर्वेनारायणःपातुवारिजाक्षस्तुदक्षिणे ॥ प्रद्युम्नःपश्चिमेपातुवासुदेवस्तथोत्तरे ॥ उर्ध्वंगोवर्धनोरक्षेदधस्ताच्चत्रिविक्रमः ॥ १ ॥ इति ॥ ततः कुशत्रययवजलान्यादाय देशकालौस्मृत्वा अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थंमसद्गतिविनाशार्थं सद्गतिप्राप्त्यर्थं चतुःषष्टिदुर्मरणांतर्गतयत्किंचिद्दुर्मरणदोषनिवृत्त्यर्थं नारायणबलिकर्मांगभूतैकादशविष्णुश्राद्धानिविष्ण्वादिविष्णुपर्यंतानि एकोद्दिष्टविधिना एकतंत्रेणाहंकरिष्ये इतिसंकल्प्य एकादशचटेषु क्रमेण आसनदानम्॥प्रथमं विष्णवे इदमासनम् १ द्वितीयंशिवाय इदमासनम् २ एवंसर्वत्र॥यमायसपरिवाराय०३सोमराजाय०४हव्यवाहनाय०५कव्यवाहनाय० ६ मृत्यवे०७रुद्राय०८पुरुषाय०९ (अपसव्येन)प्रेताय इदमासनमुपतिष्ठतां०१०(सव्येन)हस्तप्रक्षालनंसर्वत्र विष्णवेइदमासनम्॥११॥ततः एकादशार्घपात्रपूरणम्॥तेष्वेकैकंदर्भदलपवित्रम्॥अद्भ्योनम इत्युदकपूरणम्॥यवेभ्योनम इतियवप्रक्षेपः॥ प्रेतपात्रेतिलेभ्योनम इतितिलान् तूष्णींचंदनपुष्पाणि एकादशार्घपात्राणाम् अर्घ्यार्चनविधेः परिपूर्णतास्तु इतिपठेत् ॥ ततः अर्घपात्रस्थपवित्रं पलाशपत्रे धृत्वा अर्घपात्रमादाय अद्भ्योनमः इत्यभिमंत्र्य ॥ विष्णो एषतेऽर्घोनमः १ इतिदेवतीर्थेन पवित्रोपर्यर्घ्यजलंक्षिप्त्वासपवित्रमर्घपात्रं पुरतः स्थापयेत् ॥ एवंसर्वत्र ॥ शिव० २ यमसपरिवार ३ सोमराज० ४ हव्यवाहन० ५ कव्यवाहन० ६ मृत्यो० ७ रुद्र० ८ पुरुष० ९

( अपसव्येन ) अमुकगोत्र० प्रेत एषतेहस्तार्घोमयादीयतेतवोपतिष्ठतामिति० १० ततः ( सव्यम् ) हस्तप्रक्षालनं पुनः विष्णो एषतेऽर्घोनमः ११ अत्र नपात्रन्युब्जीकरणंनार्घवंदनं तत्र एकादशचटेषु गंधपुष्पधूपदीपतांबूलवासांसिधृत्वा कुशत्रययवजलान्यादाय अद्येत्यादिपठित्वा० एतानिगंधपुष्पधूपदीपतांबूलवासांसिविष्ण्वादिविष्णुपर्यंतेभ्यः प्रत्येकं एकतंत्रेणवा अक्षय्यमस्तु इत्युत्सृज्य ॥ अमीषामेकादशश्राद्धानामर्चनविधेः परिपूर्णतास्तु इतिप्रार्थयेत् ॥ आचमनम् ॥ ततः एकादशपात्रेषु आमान्नं निष्क्रयद्रव्यंवापृथक् परिविष्यमधुदत्त्वा पात्रमालभ्य विष्णवेनमः इत्यंगुष्ठंनिवेश्य यवान्विकीर्य इदमन्नंसोपस्करंमदत्तममृतरूपंविष्णवेनमःइत्युत्सृजेत् १ ॥ एवं शिवाय० २ यमायसपरिवाराय० ३ सोमराजाय० ४ हव्यवाहनाय० ५ कव्यवाहनाय०६ मृत्यवे०७ रुद्राय० ८ पुरुषाय० ९ (अपसव्येन) अमुकगोत्र० प्रेत इदमन्नंसोपस्करं तेमयादीयतेतवोपतिष्ठताम् इत्युत्सृजेत् १०॥ ततः( सव्येन ) हस्तौप्रक्षाल्य विष्णवे० ११ अन्नमुत्सृजेत्॥ ततःपिण्डदानार्थं चतुरस्राः प्रादेशमात्रा एकादशवेदिकाः कृत्वासर्वत्रकुशानास्तीर्य ॥ अवनेजनपात्रेण प्रथमंविष्णो अवनेनिक्ष्वतेनमः इत्यवनेज्य एवं शिवादिभ्योपिक्रमेणदद्यात् ॥ ततःपिण्डदानम् ॥ तिलघृतमधुयुतेनान्नेन एकादशपिण्डान्कृत्वा ॥ एकंपिण्डंकुशादी न्यादाय विष्णो एपतेपिण्डोनमः इतिप्रथमस्थानेकुशोपरिदद्यात् ॥ १ एवंक्रमेण शिव० २ यमसपरिवार० ३ सोमराज० ४ हव्यवाहन० ५ कव्यवाहन० ६ मृत्यो० ७ रुद्र० ८ पुरुष० ९ ( अपसव्येन ) अमुकगोत्र० प्रेत एपते पिण्डोमयादीयतेतवोपतिष्ठतामितिपितृतीर्थेन दशमस्थानेकुशोपरिपिण्डंदद्यात् ॥ १० ॥ ततः सव्येनाचम्य विष्णो एपतेपिण्डोनमः इत्येकादशंदद्यात् ॥ ततः हस्तौप्रक्षाल्य आ चम्यविष्णुंस्मरेत् ॥ ततोऽवनेजनपात्रेण विष्णो अत्रप्रत्यवनेनिक्ष्वतेनमः इतिप्रथमपिण्डेप्रत्यवनेजनंदत्त्वाक्रमेणशिवादिभ्योदद्यात् ॥ ततः सर्वत्रसूत्रचंदनपुष्पतुलसीशमीपत्रधूपदीपतांबूलपूगीफलादीनिदत्त्वा ॥ पिण्डानामर्चनविधेःपरिपूर्णतास्तु ( अपसव्येन ) एभि

रेकादशश्राद्धपिण्डैः अमुकगोत्रस्यप्रेतस्यसद्गतिः उत्तमलोकप्राप्तिः ॥ ततः ( सव्येन ) आचमनम् ॥ एकस्मिन्पत्रपुटे शिवाआपः संतु । इतिजलम् ॥ सौमनस्यमस्तु इतिपुष्पम् ॥ अक्षतंचारिष्टंचास्तु इतियवांश्चनिक्षिपेत् ॥ ( अपसव्येन ) सुप्रोक्षितजलेन पिण्डोपरि सिंचनम् ॥ अमुकगोत्रस्यप्रेतस्यसद्गतिः उत्तमलोकप्राप्तिः ॥ ततः ( सव्येन ) विष्णोः यद्दत्तमन्नपानादिकंतदुपतिष्ठतां यस्योद्दिष्टं तस्योपतिष्ठताम् ॥ एवंसर्वत्रशिवादीनांदद्यात् ॥ ततः पिण्डोपरि एकादशपवित्राणि समर्प्य एकादशपिण्डोपरिजलधाराःपयोधारांवा अहमुत्सृजामीतिपठित्वा ताम्रपात्रेजलदुग्धसर्वौषधितिलयवतुलसीचंदनहिरण्यादिप्रक्षिप्य ताम्रपात्रेण पिण्डोपरिपृथक्पृथक् नाममंत्रेण विष्णवे नमः१ शिवायनमः २यमायसपरिवाराय०३ सोमराजाय०४ हव्यवाहनाय०५कव्यवाहनाय०६रुद्ररूपाय०७मृत्यवे०८ पुरुषाय०९ प्रेताय०१०विष्णवेनमः११इतिजलधारांदद्यात्॥ततःअनादिनिधनोदेवःशंखचक्रगदाधरः॥अक्षय्यःपुंडरीकाक्षःप्रेतमोक्षप्रदोभव ॥११॥ अतसीपुष्पसंकाशं०॥२॥कृष्णकृष्णकृपालोत्वमगतीनांगतिर्भव॥संसारार्णवमग्नानां प्रसीदपुरुषोत्तम३॥नारायणसुरश्रेष्ठ लक्ष्मीकान्तजनार्दन॥अनेनतर्पणेनाथ प्रेतमोक्षप्रदोभव॥४॥इतिप्रार्थयेत् ॥ ततोदक्षिणादानंतावत् ॥ हिरण्यंवस्त्ररजते गुडाज्यंलवणंतथा ॥ लोहदंडस्तिलाधान्यं महिषींचामरंददेत् ॥ एतानिएकादशदानानितन्मूल्यद्रव्यंवापुरतःसंस्थाप्य देशकालौस्मृत्वा अमुकगोत्रस्यप्रेतस्यदुर्मरणनिमित्तकनारायणबलिविहितैकादशश्राद्धसांगतासिद्ध्यर्थमिमानि हिरण्यादीन्येकादशदानानिविष्ण्वादिविष्णुपर्यंतानांप्रीतये नानानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृजे इत्युत्सृज्य विष्णोःप्रसादादेकादशश्राद्धानांपरिपूर्णतास्तु ॥ ( अपसव्यम् ) एभिरेकादशश्राद्धैःकृतैरमुकप्रेतस्यप्रेतत्वनिवृत्तिःअसद्गतिविनाशःसद्गतिप्राप्तिः ॥ ततः ( सव्येन ) पिण्डानुत्थाप्यप्रवाह्य चटान्विसृज्य आचम्य

कर्मपूर्तिकामोविष्णुंस्मरेत् ॥ श्राद्धीयवस्तुब्राह्मणायदद्याज्जलेवाक्षिपेत् ॥ इत्येकादशश्राद्धपद्धतिः समाप्ता ॥ अथपंचश्राद्धप्रयोगः ॥
तत्रादौसव्येनाचमनं कर्मपात्रपूरणम् ॥ अपवित्रःपवित्रोवाइतिप्रोक्षणम् ॥ कुशत्रययवजलान्यादाय अद्य०नारायणबल्यंगभूतपंचदेवताश्रा
द्धान्येकतंत्रेणाहंकरिष्ये इत्युच्चार्य्य पंचघटान्स्थापयेत् ॥ ततःप्राङ्मुखःकुशोपग्रहःयवान्गृहीत्वा प्रथमंब्रह्मश्राद्धेक्षणमुपतिष्ठताम् १ विष्णु
श्राद्धेक्षणम्०२रुद्रश्राद्धेक्षणम्०३यमश्राद्धे०४तत्पुरुषश्राद्धेक्षणमुपतिष्ठताम् ५ इतिसर्वत्रविकीर्य ब्रह्मणेएतत्पाद्यंपादावनेजनंपादप्रक्षालनं
नमः एवंविष्ण्वादिभ्यः॥ततःएषवःपादार्घःइदमत्रचंदनंपुष्पम् इदंवःआचमनम् इतिचटपूजांविधाय आचमनंकृत्वा यवगौरसर्षपान्गृहीत्वा
पूर्वेनारायणःपातु वारिजाक्षस्तुदक्षिणे॥प्रद्युम्नःपश्चिमेपातु वासुदेवस्तथोत्तरे ॥ ऊर्ध्वंगोवर्धनोरक्षेदधस्तात्त्रिविक्रमः ॥ १ ॥ इतिसर्वत्रविकी
र्य नीवीबंधंकुर्यात् ॥ ततः पंचश्राद्धोपहाराणांपवित्रतास्तु इति अन्नादिप्रोक्ष्य कुशत्रयादीन्यादाय देशकालौ स्मृत्वा ( अपसव्यम् )
अमुकगोत्रस्यामुकप्रेतस्यसद्गतिप्राप्त्यर्थं नारायणबल्यंगभूतं पंचदेवताश्राद्धमहंकरिष्ये इतिसंकल्प्य ( सव्येन ) ब्रह्मणे इदमासनंनमः १
विष्णवे इदमासनंनमः २ रुद्रायइदं० ३ यमायइदं० ४ तत्पुरुषायइदं०५ इतिप्रत्येकंकुशत्रयं पूर्वाग्रमुत्सृजेत्॥ततोहस्तप्रक्षालनम् अर्घपा
त्रपूरणम् ५ कुशपवित्रधारणम् ५ अद्योनमः इत्युदकं यवेभ्योनमः इतियवान् तूष्णींगंधपुष्पाणिचप्रक्षिपेत् ॥ ततः अर्घपात्राणामर्चन
विधेः परिपूर्णतास्तु इतिपठित्वा प्रथमपात्रस्थंपवित्रंपलाशपत्रेधृत्वा अद्योनमः इत्यभिमंत्र्य ब्रह्मन्नेषतेहस्तार्घोनमः इतिदेवती
र्थेनपवित्रोपरि अर्घजलंदद्यात् ॥ एवंसर्वत्र ॥ ततः पूजनंगंधपुष्पधूपदीपतांबूलवासांसिप्रत्येकंधृत्वा अद्येत्यादिपठित्वा एतानिगंधपुष्प
धूपदीपतांबूलवासांसि ब्रह्मादितत्पुरुषेभ्यः प्रत्येकमक्षय्यमस्तु इत्युत्सृज्य अमीषांपंचश्राद्धानामर्चनविधेः परिपूर्णतास्तु इतिप्रा

र्थयेत् ॥ आचमनम् ॥ ततः पंचपात्रेषु आमान्नंतन्निष्क्रयद्रव्यंवापृथक्पृथक् परिविष्य मधुदत्त्वा पात्रमालभ्य विष्णवेनमः इत्यंगुष्ठं
निवेश्य यवान्विकीर्य इदमन्नं सोपस्करं मद्दत्तममृतरूपं ब्रह्मणेनमः इत्युत्सृजेत् १ ॥ एवं विष्णवे० २ रुद्राय० ३ यमाय० ४ तत्पुरु
षाय० ५ चोत्सृजेत् ॥ ततः पिंडदानार्थं पंचस्थानानिनिर्माय प्रत्येकंकुशत्रयमास्तीर्य ॥ अवनेजनपात्रेण ब्रह्मन् अत्रावनेनिक्ष्वतेनमः ॥
इतिप्रथमस्थाने अवनेज्य ॥ एवं विष्णु० २ शिव० ३ रुद्र० ४ तत्पुरुषेभ्योप्यवनेजनंक्रमेणदद्यात् ॥ ततः तिलघृतमधुयुतेनान्नेन पंच
पिंडान्कृत्वा एकंपिंडं कुशत्रयादीन्यादाय ब्रह्मन् एषते पिण्डोनमः इतिप्रथमस्थाने कुशोपरिदद्यात् ॥ १ ॥ एवं क्रमेण विष्णवे० २
रुद्राय० ३ यमाय० ४ तत्पुरुषाय० ५ चदद्यात् ॥ ततो हस्तप्रक्षालनमाचमनं विष्णुस्मरणंचकुर्यात् ॥ ततोऽवनेजनपात्रेण ब्रह्मन् अत्र
प्रत्यवनेनिक्ष्वतेनमः इतिप्रथमपिण्डेप्रत्यवनेजनंदत्त्वा क्रमेणविष्ण्वादिभ्योदद्यात्॥ततः सर्वेषुपिण्डेषु सूत्राच्छादनगंधपुष्पधूपदीपतांबूल
पूगीफलादीनिदत्त्वा पिण्डार्चनाविधेः परिपूर्णतास्तु इतिप्रार्थ्य एभिः पंचश्राद्धपिण्डैः (अपसव्यम्) अमुकगोत्र० प्रेतस्य सद्गति
प्राप्तिः असद्गतिविनाशः इतिपठेत्॥ततः (सव्येन) आचमनं सुप्रोक्षितादिकरणं शिवाआपः संतु सौमनस्यमस्तु अक्षतंचारिष्टंचास्तु इति
जलपुष्पाक्षतान्क्षिप्त्वा ॥ ब्रह्मणेयद्दत्तमन्नपानादिकं तदुपतिष्ठतामिति॥एवं विष्ण्वादीनाम् अक्षय्योदकंदद्यात् ॥ ततः पिण्डोपरि पवित्राणि
समर्प्य ताम्रपात्रे जलदुग्धतिलसर्वौषधियवतुलसीहिरण्यादीनिप्रक्षिप्य तेनजलेन पिण्डोपरि पृथक्पृथक् नाममंत्रेण ब्रह्मणेनमः ब्रह्मन्
इमांतेजलधारामुत्सृजामि इतिप्रथमपिण्डेजलधारांदद्यात् ॥ एवं विष्णुरुद्रयमतत्पुरुषपिण्डेषुक्रमेणदद्यात् ॥ ततः अनादिनिधनोदेवः० १
अतसीपुष्पसंकाशं० २ नारायणसुरश्रेष्ठ० ३ कृष्णकृष्णकृपालोत्वं० ४ इतिप्रार्थ्य॥दक्षिणाद्रव्यंगृहीत्वा अद्यकृतैतत्पंचश्राद्धकर्मणःसां
गतासिद्ध्यर्थमिमांदक्षिणां ब्रह्मादिप्रेतपर्यंतेभ्यः प्रत्येकमक्षय्यमस्त्वितिदद्यात् ॥ ततः पंचदानानि ॥ भूमिंसस्यवतींधेनुं सुवर्णंचक्रमात्ति

लान् ॥ वृषभंसहिरण्यंच पंचश्राद्धेषुदक्षिणा॥१॥ यथाशक्तिकुर्यात् ॥ ततः पंचघटदानम् ॥ अद्येत्यादिपठित्वा अमुकगोत्रस्य० प्रेतस्यप्रे
तत्वनिवृत्त्यर्थमुत्तमगतिप्राप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबल्यंगभूतब्रह्मकर्मणःसांगतासिद्ध्यर्थं ब्रह्मप्रसन्नतार्थमिमंतीर्थवारिपूरितंसफ
लंवस्त्रोपवीतान्नप्रतिमानालिकेरसहितं मृन्मयकलशंब्रह्मदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायदातुमहमुत्सृजे ॥ अनेनब्रह्माप्रीयताम् ॥
एवं विष्णुरुद्रयमतत्पुरुषाणांप्रीतये क्रमेणोत्सृज्यदद्यात् ॥ ततः पंचश्राद्धपरिपूर्णतास्तु ॥ एभिः पंचश्राद्धैः कृतैः अमुकप्रे
तस्य सद्गतिप्राप्तिरसद्गतिविनाशः इतिपठेत् ॥ ततः पिण्डानुत्थाप्य प्रवाह्य घटान्विसृज्यदीपंनिर्वाप्य हस्तौपादौप्रक्षाल्या
चम्य कर्मपूर्त्तिकामोविष्णुंस्मरेत् ॥ श्राद्धीयवस्तूनिब्राह्मणेभ्यः प्रतिपादयेज्जलेवाक्षिपेत् ॥ ततोयथाशक्तिब्राह्मणान्दीनांधपंगुप्रभृतीं
श्चामान्नेननिष्क्रयद्रव्येणवासंतोष्य घृतेमुखावलोकनंकृत्वास्नानंकुर्यात् ॥ इतिशूद्राणांनारायणबलिप्रयोगः ॥ अथनारायणबल्युपक
रणानि॥विष्णोः स्वर्णप्रतिमे २। रजतप्रतिमा १।ताम्रप्र० १। लोहप्र० १।सीसकप्र०१।स्वर्णशकलानि८।पंचरत्नानि५।चंदनम्। केशरम्।
कर्पूरम्। धूपः। दीपवर्तिकाः५०। पुष्पाणिविचित्राणि ॥ तुलसीपत्राणि। बिल्वपात्राणि। दूर्वाः। नैवेद्यम्मोदकादि। तांबूलानि। पूगी
फलानि२५।ऋतुफलानि।एला।नालिकेरफलानि६।दुग्धम्।दधि।गोमूत्रम्।गोमयम्।मधु।यज्ञोपवीतानि५।रक्तसूत्रम्।कुंकुमम्। श्वेतवस्त्राणि
१५रक्तवस्त्रे २।पीतवस्त्रे२। कृष्णवस्त्रे २। कौशेयम्। तंडुलाः। गोधूमाः। मुद्गाः।माषाः।तिलाः। यवाः। मेवा।गुग्गुलुः।शर्करा। ताम्र
कलशः१। मृन्मयकलशाः ५। शरावाः ५०। पत्रपुटकानि ५०। मृन्मयोपकुंभाः१०। सप्तमृत्तिकाः७। पंचपल्लवाः५।सर्वौषध्यः। गंगामृ
त्तिका।गंगोदकम्।सिंदूरम्।गौरसर्षपाः।समिधः।आज्यम्।गव्यम्।स्रुवा। प्रणीता१। प्रोक्षणी १।आज्यस्थाली१।चरुस्थाली१।पत्रावल्यः १०।
कार्पासम्।लवणम्।रजतम्।वस्त्रम्।गुडम्।तैलम्।धान्यम्।लोहदंडः१।महिषीमूल्यम्।धेनुमूल्यम्।चामरमूल्यम्।भूमिमूल्यम्।पलाशपत्राणि।

वृषभमूल्यम्।आमान्नम् १०।कुशाः।आसनानि४।ताम्रपात्रम् १अर्घ्यपात्रम् १आचमनपात्रम् १वेष्टनार्थंवस्त्रम्।गौरमृत्तिका।पूर्णपात्रम्।कांस्यपात्रम् १कटोरिके २दक्षिणाद्रव्यम्।गीतापाठः। विष्णुसहस्रनामपाठः ॥ द्वादशाक्षरपंचाक्षराष्टाक्षरमंत्रजपाःशमीपत्राणि । पेटिका १लगुडम् १ शय्या सोपस्करा ॥ यवचूर्णप्रस्थानि ३ इत्याद्युपकरणानि ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

अथ पंचकशांतिप्रयोगः ॥ तावत् मरणदिनकृत्यम् ॥ तत्रदर्भाणां पंचप्रतिमा मनुष्याकृतीः कृत्वा ऊर्णासूत्रेणावेष्ट्य यवपिष्टेनानुलिप्य स्थंडिलेपूर्वादिदिक्षुमध्येच संस्थापयेत् ॥ ततोदेशकालौस्मृत्वा ( अपसव्येन ) अमुकगोत्रस्य अमुकप्रेतस्य धनिष्ठादिपंचकमरणसूचित वंशारिष्टविनाशार्थं पंचकविधानंकरिष्ये इतिसंकल्प्य ( सव्येन ) प्रेतवाहायनमः प्रेतवाहमावाहयामि १ प्रेतसखाय० प्रेतसखं० २ प्रेतपाय० प्रेतपं० ३ प्रेतभूमिपाय० प्रेतभूमिपं० ४ प्रेतहर्त्रे० प्रेतहर्त्तारं० ५ इत्यावाह्यसंस्थाप्य गंधपुष्पधूपदीपनैवेद्यतांबूलादिभिर्नाममंत्रेणपूजयेत्॥ ततोगंधमाल्याद्यर्चितांप्रतिमांदाहसमयेप्रेतस्योपरिन्यसेत् ॥ प्रथमांशिरसि १ द्वितीयांदक्षिणकुक्षौ २ तृतीयां वामकुक्षौ ३ चतुर्थींनाभौ ४ पंचमींपादयोर्मध्ये ५ तदुपरिताभ्योनाममंत्रैर्घृताहुतीर्दत्त्वा ताभिः सहशवंविधिनादहेत् ॥ ततः सूतकान्तेशांतिंकुर्यात् ॥ इतिपंचकमरणविधानम् ॥ अथशांतिप्रयोगः ॥ तत्रसूतकांतेतीर्थेगत्वा तत्रस्नात्वा अहतवस्त्रेपरिधाय स्वासनेप्राङ्मुख उपविश्य आचम्य कुशोपग्रहःतत्रशुद्धमृदामंडलंकृत्वा तत्रकलशपंचकं पूर्व-दक्षिण-पश्चिमोत्तरासु मध्येच क्रमेण पूर्वोक्तविधिनास्थापयित्वा तद्दक्षिणपार्श्वेगणेशनवग्रहचतुर्दशयमानांस्थापनंकुर्य्यात् ॥ तद्यथा-देशकालौसंकीर्त्य ( अपसव्येन ) अमुकगोत्रस्यामुकप्रेतस्य पंचकजनितदुर्मरणदोषशांत्यर्थं ( सव्यं ) ममगृहे सपरिवारस्यायुरारोग्यसुखश्रीप्राप्त्यर्थं पंचकशांतिकर्माहंकरिष्ये इतिसंकल्प्य ॥ सुमुखश्चैकदंतश्चेत्यादिस्मरणपूर्वकगणेशनवग्रहान्संपूजयेत् ॥ ततः स्थापितकलशेषुगंगोदकसर्वौषधिदूर्वामृत्तिकापंचपल्लव

पूगफलपंचरत्नादीनिनिक्षिप्य वस्त्रवेष्टनं धान्यसमर्पणंचकृत्वा तदुपरि पंचनक्षत्रदेवतानांप्रतिमाःस्वर्णमयीःस्थापयेत् ॥ अथावाहनंपूजनंच ॥ पूर्वदिशिदुग्धजलपूरिते कलशेवस्त्रवेष्टितायांस्वर्णप्रतिमायां वसून्० ॥ वसुभ्योनमः वसून् आवाहयामि स्थापयामि॥१॥ इतिस्थापयेत् ॥ दक्षिणे दध्युदकपूरिते० वरुणं०वरुणायनमः वरुणमावाहयामिस्थापयामि॥२॥इतिस्थापयेत्॥पश्चिमे घृतोदकपूरितेकलशे अजैकपादम् ॥ अजैकपादायनमः अजैकपादमावाहयामि स्थापयामि॥३॥ इतिस्थापयेत् ॥ उत्तरे गोमयोदकपूरितेकलशे अहिर्बुध्न्यम्॥ अहिर्बुध्न्यायनमः अहिर्बुध्न्यमावाहयामिस्थापयामि ॥४॥ इति स्थापयेत ॥मध्यस्थेगोमूत्रोदकपूरितेकलशेपूषणं पूष्णेनमः पूषणमावाहयामिस्थापयामि ॥ ५ ॥ इतिस्थापयेत् ॥ इत्यावाह्यवस्वादयोदेवाः सुप्रतिष्ठिताभवन्तु इति प्रतिष्ठाप्य आवाहनमंत्रैः षोडशोपचारैः प्रत्येकंपूजयेत् ॥ अनेनपूजनेनवस्वादयोदेवाःप्रीयंतामितिपठित्वाचतुर्दशयमानांस्थापनंकुर्यात् ॥ तद्यथा— यमायनमः यममावाहयामिस्थापयामि ॥ १ ॥ एवं सर्वत्र ॥ धर्मराजाय० धर्मराजम्०२मृत्यवे० मृत्युम्० ३ अंतकायनमः अंतकम्० ४ वैवस्वताय० ५ कालाय० ६ सर्वभूतक्षयाय० ७ औदुंबराय० ८ दध्नाय० ९ नीलाय० १० परमेष्ठिने० ११ वृकोदराय० १२ चित्राय० १३ चित्रगुप्तायनमः चित्रगुप्तमावाहयामिस्थापयामि १४ इत्यावाह्यपुष्पाणिविकीर्य चतुर्दशयमेभ्योनमः इतिषोडशोपचारैः पूजयेत् ॥ अथाग्निस्थापनम् ॥ होता हस्तमात्रंचतुरस्रंस्थंडिलंकृत्वाकुशैः परिसमुह्यतानैशान्यांपरित्यज्य गोमयोदकेनोपलिप्यस्रुवमूलेन मध्येप्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेणत्रिरुल्लिख्य अनामिकांगुष्ठाभ्यांमृदमुद्धृत्य ऐशान्यांक्षिप्त्वातंदेशंजलेनाभ्युक्ष्यतूष्णींकांस्यपात्रस्थमग्निंस्थापयेत् ॥ ततोदक्षिणतोब्रह्मासनादिचरुश्रपणाग्निपर्युक्षणांतंकर्मकृत्वा आज्येनजुहुयात् ॥ ब्राह्मणद्वाराहोमः ॥ प्रजापतयेस्वाहा इदं० १ इंद्राय० इदम्० २ अग्नये० इदम्० ३ सोमाय० इदं० ४ इत्याघारावाज्यभागौहुत्वा अग्निंसंपूज्य गणपतिनवग्रहेभ्यश्चरुहोमंकु

र्यात्॥ततः वस्वादिपंचप्रधानदेवानांप्रत्येकं समिच्चरुतिलाज्यादिद्रव्यैरष्टोत्तरशतमष्टाविंशतिमष्टौवाहुतीर्जुहुयात् ॥ तत्रमंत्राः ॥ वसुभ्यः स्वाहा इदं० १०८ वरुणायस्वाहाइदं० १०८ अजैकपदेस्वाहाइदम्० १०८ अहिर्बुध्न्यायस्वाहा इदम्० १०८ पूष्णेस्वाहा इदं० १०८ इति ॥ यमायस्वाहा इदं० ८ धर्मराजाय० इदं० ८ मृत्यवे० इदं० ८ अंतकाय० इदम्० ८ वैवस्वताय० इदं०८कालाय० इदं०८सर्वभक्षयाय० ८ औदुंबराय० ८ दध्नाय० ८ नीलाय० ८ परमेष्ठिने० ८ वृकोदराय० ८ चित्राय० इदं ०८ चित्रगुप्ताय० इदं० ८ इतितिलहोमंकृत्वा ॥ चरुणा अग्नयेस्विष्टकृतेस्वाहा इदं० इतिस्विष्टकृद्धोमंकुर्यात् ॥ ततः आज्येन अग्नये० इदं० १ वायवे० इदं० २ सूर्याय० इदं० ३ अग्निवायुसूर्येभ्य० इदम्० ४ अग्नीवरुणाभ्यां० इदम्० ५ अग्नये० इदम्० ६ वरुणादिभ्यः० इदमु० ७ वरुणाय० इदं० ८ प्रजापतये० इदं० ९ इतिनवाहुतीर्हुत्वास्थंडिलंपरितोदिक्पालेभ्योमाषभक्तबलीन्दद्यात ॥ अथपूर्णाहुतिः ॥ मृडाग्नयेस्वाहा इदंमृडाग्नयेनमम—इतिपूर्णाहुतिंहुत्वास्तरणक्रमेणबर्हिरुत्थाप्याज्येनाभिघार्य्य अग्नये० इदमु० इतिहस्तेनैवजुहुयात् ॥ ततोभस्मवंदनं संस्रवप्राशनमाचनंचकृत्वाप्रणीताजलेनाशिरः संमृज्यपवित्रे अग्नौप्रक्षिप्य ऐशान्यांप्रणीतांन्युब्जीकुर्यात् ॥ ततोब्रह्मणेपूर्णपात्रदानं ब्रह्मग्रंथिविमोकश्च ॥ ततःपंचमूर्त्तिदानम् ॥ अद्येत्यादिपठित्वा अमुकप्रेतस्यपंचकमृत्युदोषपरिहारद्वारापुत्रादीनांसर्वारिष्टनिवृत्त्यर्थमिमांस्वर्णमयींधनिष्ठाप्रतिमांवसुदैवतांसतिलान्नांसघटांसोपस्करामयुकगोत्रायामुकशर्मणेब्राह्मणायदातुमहमुत्सृजे इतिसंकल्प्यदद्यात् ॥ १ ॥ एवं द्वितीयांवरुणदैवतांसमाषान्नां०॥२॥तृतीयामजैकपाददैवतांससर्षपान्नां०॥३॥चतुर्थीमहिर्बुध्न्यदैवतांसमुद्गान्नां०॥४॥ पंचमींपूषदेवतांससप्तधान्यां ॥ ५ ॥ इति ॥ ततः षड्ब्राह्मणभोजनसंकल्पः ॥ ततः पंचकलशोदकेनयजमानस्यसपरिवारस्याभिषेकः ॥ ततः पंचदानानि ॥ पयस्विनीगाम्१महिषीम्२सप्तधान्यम्॥३॥सहिरण्यंकृष्णवस्त्रातिलदानम्॥४॥सहिरण्यघृतम्॥५॥ इतिदत्त्वाकर्मकारयित्रेदक्षिणांदद्यात्॥ततोदेवताः

अग्निंच विसृज्यब्राह्मणेभ्योभूयसींदक्षिणांदत्त्वा अनेनपंचकशांतिकर्मणा ( अपसव्यं ) अमुक ० प्रेतस्य पंचकजनितदुर्मरणदोषनिवृत्तिः ( सव्यं ) ममगृहेसकलदुरितोपशांतिरस्तु इतिपठेत् ॥ ततः कर्मपूर्त्तिकामोविष्णुंस्मृत्वा शांत्युपकरणानि ब्राह्मणेभ्योदत्त्वा घृतेमुखावलोकनं कृत्वास्नायात्॥ इतिपंचकशांतिप्रयोगः॥अथ ग्रंथाऽलंकारो ग्रन्थकर्तृणामुभयकुलवर्णनं च॥देशे विशाले हि मरौ बभूव बीकोजिनामा नृपतिः पुरा हि ॥ तस्यैव नाम्ना खलु राजधानी लोके बिकानेर इति प्रसिद्धा ॥१॥ तच्छास्ता राजनीतिज्ञो गङ्गासिंहो महीपतिः ॥ विद्वाञ्छूरो हि धर्मात्मा गोविप्रप्रतिपालकः ॥ २ ॥ यस्य प्रीतिरभूद्रम्या गोरुण्डे सप्तमे नृपे ॥ नृपाणां भारतीयानां प्राप्तोच्चा पदपद्धतिः ॥ ३ ॥ तस्यैव राज्येऽतिमनोहरे पुरे श्रीरत्नदुर्गे नृपदुर्गमे शुभे ॥ विद्यासदाचारयुतैश्च सद्द्विजैर्वैश्यैर्धनाढ्यैर्बहुभिश्च मण्डिते ॥ ४ ॥ आसीद्वसिष्ठान्वयगौडविप्रो माध्यन्दिनीयो बुधजीवराजः ॥ विवृद्धमानो विदुषां समाजे सुज्ञैर्नरैः सर्वसमृद्धिभाक्सः ॥ ५ ॥ तस्यात्मजा बाणमितास्तु सद्गुणाः सुवेदविद्याध्ययने च नैपुणाः ॥ आयातयातद्विजशुद्धप्राङ्गणा वीर्येण संताडितवैरिदुर्गणाः ॥ ६ ॥ एतेषु मुख्यः किल रामकृष्णो ज्ञानेन स्वल्पीकृतसर्वतृष्णः ॥ स्वबुद्धितः खण्डितवैरिप्रश्नः सुभक्तिसंतर्पितदेवकृष्णः ॥ ७ ॥ तस्याऽभवन्नाममिताः सुपुत्राः स्वधर्मरक्ताः सुकलत्रमित्राः ॥ गृहेषु संलेखितरम्यचित्राः श्रीकान्तपूजानिरताः पवित्राः ॥ ८ ॥ इमानि नामानि भवन्ति तेषां चतुर्भुजाख्यो विबुधोऽग्रजातः ॥ कस्तूरिचन्द्राभिधसज्जनोऽन्योऽपरो गुणी ज्येष्ठसुखस्तु रामः ॥ ९ ॥ तत्रापि मध्या निजवंशपालकाः कस्तूरिचन्द्राख्यमहत्सु सत्कृताः ॥ तेषां सुपुत्रावनवन्द्यवन्दितावास्तां किल द्वौ नितरां धरातले ॥ १० ॥ चातुर्थिलालाख्यगुरुमुखाख्यौ सुज्ञौ गुणाढ्यौ निजधर्मरक्तौ ॥ ज्येष्ठस्तयोर्वै खलु पण्डिताग्र्यः श्रीशम्भुपादाब्जविलग्नचित्तः ॥ ११ ॥ षट्शास्त्रवेत्ता श्रुतिकर्मरक्तः परोपकारी सुनिबन्धकर्ता॥ दाता मनस्वी द्विजदेवभक्तो हुतावशिष्टान्नसदानुरक्तः॥ १२ ॥यत्प्रसूर्हरबाईति पिता कस्तूरिचन्द्रकः ॥ मातामहश्च श्रीरामो मातुलो विष्णु

दत्तकः ॥ १३ ॥ सूत्रं कात्यायनं यस्य शाखा माध्यन्दिनी किल ॥ श्रीवसिष्ठकुलं वित्तं स चतुर्थाख्यपण्डितः ॥ १४ ॥ एतादृशो गौड कुले शताब्द्यां निबन्धकर्त्ता न बभूव कश्चित् ॥ द्विःपञ्चनिबन्धा रचिता हि येन शिवस्य साम्बस्य वरप्रसादात् ॥ १५ ॥ शान्तिप्रतिष्ठाश्राद्धानां ज्योतिषोत्सर्गकर्मणाम् ॥ अनुष्ठानविधेश्चापि संस्काराणां विधेस्तथा ॥ १६ ॥ प्रायश्चित्तेश्च शुद्धेश्च वैद्यकोद्यापनस्य च ॥ तथा सद्धर्मणां ग्रन्था रचिता द्वादश त्विमे ॥१७॥ ग्रन्थस्तृतीयस्तत्रायं पूर्णतामगमच्छुभः ॥ अनेन प्रीयतां शम्भुर्भवान्या सह सर्वदा ॥१८॥ स्वस्ति श्रीमान्महाराजो भूपालिवरहीरकः ॥ चिरंजीयात्सतां मान्यो गङ्गासिंहो महीपतिः ॥ १९ ॥ धनवृद्धिर्धर्मवृद्धिः प्रजावृद्धिः सुखप्रदा ॥ आयुर्वृद्धिश्च भूयाद्वै महाराजस्य सन्ततम् ॥ २० ॥ श्रीमत्प्रभुप्रतापेन गोव्याघ्रादिगणोऽखिलः ॥ युगपच्चैकदेशे हि जलं पास्यति निर्भयः ॥ २१ ॥ सर्वाः प्रजाः प्रजायन्ते सुखिनः खलु राजनि ॥ श्रीमति शासति राज्यं विद्यावृद्धिर्भविष्यति ॥ २२ ॥ इति श्रीमन्महाराजाधिराजराजराजेन्द्रक्षत्रियकुलार्कमरुदेशाधिपतिश्रीगङ्गासिंहवर्म्मबीकानेरराज्यान्तर्गतश्रीरत्नगढनिवासिना गौडवंशावतंसवासिष्ठगोत्रोद्भवपण्डितश्रीरामकृष्णपौत्रेण श्रीकस्तूरिचन्द्रात्मजेन श्रीमहादेवभक्तनाम्नानिबंधकर्त्रा पण्डितश्रीचतुर्थीलालशर्म्मणा विरचिते चातुर्थीलालभास्करे महानिबन्धे गौडीयश्राद्धप्रकाशे तृतीये ग्रन्थे शूद्रश्राद्धविधानप्रकरणं समाप्तम् ॥ ७॥ ॥ समाप्तोऽयं ग्रन्थः ॥ ७ ॥

इदं पुस्तकं मुम्बय्यां खेमराजश्रीकृष्णदास इत्यनेन स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये मुद्रितम् ।

संवत् १९६५, शके १८३० ॥

१--२ उभयत्र प्रेहेवेतिहस्वत्वम् ।

श्रीगणेशाय नमः ॥ अथ पर्णनरदाहविधानम्—बृहद्गारुडे—अस्थीनि चेन्न लभ्यन्ते प्रोषितस्य नरस्य च ॥तेषां च हि गतिस्थानं विधानं कथयाम्यहम् ॥ १ ॥ पश्चात्पुत्तलकं कार्य्यं सर्वौषधिसमन्वितम् ॥ पलाशस्य च वृन्तानां विभागं शृणु काश्यप ॥ २ ॥ कृष्णाजिनं समास्तीर्णं कुशैश्च पुरुषाकृतिम् ॥ शतत्रयषष्टियुक्तवृन्तैः प्रोक्तोऽस्थिसञ्चयः ॥ ३ ॥ विन्यस्य तानि वृन्तानि अङ्गेष्वेषु पृथक्पृथक् ॥ चत्वारिंशच्छिरोभागे ग्रीवायां दश विन्यसेत् ॥ ४ ॥ विंशत्युरःस्थले दद्याद्विंशतिर्जठरे तथा ॥ बाहुद्वये शतं दद्यात्कटिदेशे च विंशतिम् ॥ ५ ॥ ऊरुद्वये शतं चापि त्रिंशज्जंघाद्वये न्यसेत् ॥ दद्याच्चतुष्टयं शिश्ने षड् दद्या षणद्वये ॥ ६ ॥ दशपादांगुलीभागे एवमस्थीनि विन्यसेत् ॥ नारिकेलं शिरःस्थाने तुम्बं दद्याच्च तालुके ॥ ७ ॥ पञ्चरत्नं मुखे दद्याज्जिह्वायां कदलीफलम् ॥ अन्त्रेषु नालिकं दद्याद्वालुकां घ्राणमेव च ॥ ८ ॥ वसायां मृत्तिकां दद्याद्धरितालमनःशिलाः ॥ पारदं रेतसः स्थाने पुरीषे पित्तलं तथा ॥ ॥ मनःशिला तथा गात्रे तिलकल्कं तु संधिषु ॥ यवपिष्टं तथा मांसे मधु शोणितमेव च ॥ १० ॥ केशेषु च जटाजूटं त्वचायां च मृगत्वचम् ॥ कर्णयोस्तालपत्रं च स्तनयोश्चैव गुञ्जिका ॥ ११ ॥ नासायां शतपत्रं च कमलं नाभिमंडले ॥ वृन्ताकं वृषणद्वंद्वे लिङ्गे स्याद्गृंजनं शुभम् ॥ १२ ॥ घृतं नाभ्यां प्रदेयं स्यात्कौपीने च त्रपुः स्मृतम् ॥ मौक्तिकं स्तनयोर्मूर्ध्नि कुंकुमेन विलेपनम् ॥ १३ ॥ कर्पूराऽगुरुधूपैश्च शुभैर्माल्यैः सुगन्धिभिः ॥ परिधानं पट्टसूत्रं हृदये दीपकं न्यसेत् ॥ १४ ॥ ऋद्धिवृद्धी भुजौ द्वौ च चक्षुर्भ्यां च कपर्दकम् ॥ दन्तेषु दाडिमीबीजान्यङ्गुलीषु च चम्पकम् ॥ १५ ॥ सिन्दूरं नेत्रकोणे च ताम्बूलाद्युपहारकम् ॥ सर्वौषधियुतं प्रेतं कृत्वा पूजां यथोदिताम् ॥ १६ ॥ साग्निके चापि विधिना यज्ञपात्रं न्यसेत्क्रमात् ॥ श्रियः पुनन्तु

मे शिर इमं मे वरुणेन च ॥ १७ ॥ प्रेतस्य पावनं कृत्वा शालग्रामशिलोदकैः ॥ विष्णुमुद्दिश्य दातव्या सुशीला गौः पयस्विनी ॥१८॥ तिला लौहं हिरण्यं च कार्प्पासं लवणं तथा ॥ सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ॥ १९ ॥ तिलपात्रं ततो दद्यात् पददानं तथैव च ॥ कर्तव्यं वैष्णवं श्राद्धं प्रेतमुक्त्यर्थमात्मनः ॥ २० ॥ प्रेतमोक्षं ततः कुर्य्याद्धृदि विष्णुं प्रकल्प्य च ॥ एवं पुत्तलकं कृत्वा दाहयेद्विधिपूर्वकम् ॥ २१ ॥ तच्छुद्धये तु संस्कर्ता पुत्राद्यैर्निष्कृतिं चरेत् ॥ त्रीन्कृच्छ्रान्षड्द्वादश च तथा पंच दशापि च ॥ २२ ॥ प्रायश्चित्तनिमित्तानुसारेण विधिवत्स्मृतः ॥ अशक्तौ गोहिरण्यादिप्रत्याम्नायं चरेदपि ॥ २३ ॥ आत्मनोऽनधिकारित्वे शुद्धिमेवं चरेद्बुधः ॥ अशुद्धेन तु पदतमुद्दिश्याशुद्धिमेव च ॥ २४ ॥ नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ॥ शुद्धिं सम्पाद्य कर्तव्यं दहनाद्यौर्ध्वदेहिकम् ॥ २५ ॥ अकृत्वा निष्कृतिं यस्तु कुरुते दहनादिकम् ॥ मतिपूर्व्वममत्या च क्रमात्तन्निष्कृतिं शृणु ॥ २६ ॥ कृत्वाग्निमुदके स्नानं स्पर्शनं वहनं कथाम् ॥ रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुध्यति ॥ २७ ॥ एषामन्यतमं प्रेतं यो वहेत दहेत वा ॥ कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत् ॥ २८ ॥ निमित्ते लघुनि स्वल्पं महन्महति कल्पयेत् ॥ मया तेऽयं समाख्यातो दुर्मृतस्य विधिः खग ॥ २९ ॥ तदा मृतं विजानीयाद्दीपनिर्वाणमागतः ॥ अग्निदाहं ततः कुर्य्यात् सूतकं च दिनत्रयम् ॥ ३० ॥ दशाहं गर्त्तपिंडं च कर्तव्यं प्रेतपूर्वकम् ॥ एवं विधिं ततः कुर्य्यात्ततः प्रेतश्च मुक्तिभाक् ॥ ३१ ॥ मतिभ्रांत्या प्रतिकृतेः कृते दाहे स वै यदि ॥ आयाति तेन कर्त्तव्यमज्जनं घृतकुंडके ॥ ३२ ॥ जातकर्म्मादिसंस्काराः कर्त्तव्याः पुनरेव तु ॥ ऊढामेव स्वकां भार्य्यामुद्वहेद्विधिवत्पुमान् ॥ ३३ ॥ वर्षे पंचदशे पक्षिन् द्वादशे वा गते सति ॥ अज्ञातस्य प्रोषितस्य कृत्वा प्रतिकृतिं दहेत् ॥ ३४ ॥

आश्वलायनगृह्यसूत्रेऽपि ॥ अस्थिनाशे पलाशवृंतानां त्रीणि षष्टिशतानि च । पुरुषप्रतिकृतिं कृत्वाऽशीत्यूर्ध्वं तु शिरसि । ग्रीवायां दश योजयेत् । उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा । बाहुभ्यां च शतं दद्याद् दद्यादंगुलिभिर्दश । दशार्द्धं वृषणयोरष्टार्द्धं शिश्न एव च । ऊरुभ्यां च शतं दद्यात्रिंशतं जानुजंघयोः । पादांगुलीषु च दश एतत्प्रेतस्य लक्षणम् ॥ ऊर्णासूत्रेण संवेष्ट्य यवपिष्टेन लेपयेत् ॥ वायुपुराणे–कृष्णपक्षे पंचदश्यामष्टम्यां वा समाहितः । एकादश्यां विशेषेण ततः प्रभृति सूतकम् । त्रिरात्रं सर्ववर्णानामेष धर्मो व्यवस्थितः ॥ शुद्धितत्त्वे–पर्णनरं दहेन्नैव प्राक् त्रिपक्षात्कथंचन । पितृहा मातृहाष्टम्यां नैव दर्शे दहेद्यदि । आशौचाभ्यंतरे यदि दाहं न कुर्यात्तदा मरणदिनावधि त्रिपक्षानंतरम् अमावास्यायां कृष्णाष्टम्यामेकादश्यां वा दाहः कार्य्यः । इति पर्णनरदाहविधानम् ॥ अथ पर्णनरदाहप्रयोगः ॥ त्रिपक्षादनंतरममावास्यायां कृष्णाष्टम्यामेकादश्यां वा तीर्थादौ गत्वा यथाविधि स्नानं कृत्वा संध्यादिनित्यावश्यकं विधाय विष्णुं षोडशोपचारैः संपूज्य विदेशमरणजन्यदोषपरिहारार्थमष्टौ कृच्छ्रान् प्रायश्चित्तत्वेन कुर्य्यात् । तद्यथा । देशकालौ संकीर्त्य अमुकस्य विदेशमरणजन्यप्रत्यवायपरिहारार्थमष्टौ कृच्छ्रान् अमुकप्रत्याम्नायेनाऽहमाचरिष्ये इति संकल्प्य । तदानीमेव ब्राह्मणेभ्यो यथाशक्तिप्रत्याम्नायद्रव्यं दद्यात् ॥ असंभवे संकल्पमात्रं कृत्वा अन्यत्कुर्यात् । पुनर्देशकालौ स्मृत्वा । अमुकस्य देशांतरमृतस्य एव दाहार्थं पर्णवृंतादिभिर्नराकृतिं करिष्ये, इति संकल्प्य शुद्धायां भूमौ कृष्णमृगचर्मास्तीर्य तदुपर्य्येकं शिरो दक्षिणोत्तरायतं निधाय तदुपरि पलाशवृंतानि तदभावे शरवृंतानि न्यसेत् । तद्यथा । चत्वारिंशच्छिरसि४०, दश ग्रीवायां १०, त्रिंशतमुरसि३०, विंशतिं जठरे२०, बाहुद्वये शतम् १००, दश हस्तांगुलीषु १०, पंच वृषणयोः ५, चत्वारि लिंगे ४, ऊरुद्वये शतम् १००, जानुजंघयोः त्रिंशत् ३०, दश पादांगुलीषु च१०,

दद्यात्॥एवं षष्ट्यधिक३६० शतत्रयमितैः शरपर्णैः शरीरं निर्माय ऊर्णासूत्रेण शरेण सह बद्ध्वा जलालोडितयवपिष्टेन अनुलिम्पेत्।ततः शक्तौ सत्यां वक्ष्यमाणान्यन्यान्यपि तत्तदंगेषु कार्याणि। शिरसि नारिकेलम्। तालुस्थाने वर्तुलं तुंबीफलम्। मुखे पंचरत्नम्। जिह्वायां कदलीफलम्। दंतेषु दाडिमबीजानि। कर्णयोस्तालपत्रे। नेत्रयोः कपर्दकौ। नेत्रकोणेषु सिंदूरम्। नासिकायां तिलपुष्पे वालुकां वा॥ स्तनयोर्गुंजाद्वयम्। नाभिमंडले कमलम्। आम्रफलं वा। वृषणयोर्वृंताकद्वयम्। लिंगे गृंजनम्।नाभौ घृतम्।अंत्रेषु नालिकाम्।भुजद्वये ऋद्धिवृद्धी।अंगुलीषु चम्पकम्।वाते मनःशिलाम्।पित्ते हरितालम्।कफे समुद्रफेनम्।रुधिरे मधु।पुरीषे गोमयम्।मूत्रे गोमूत्रम्।केशेषु जटाजूटम्। त्वचायां मृगत्वचम्।गात्रे मनःशिलां लेपयेत्। लोमसि ऊर्णासूत्राणि।मांसस्थाने यवपिष्टम्।रेतसि पारदम्।कौपीने त्रपु।मूर्ध्नि कुंकुमेन विलेपनम्। परिधाने पट्टसूत्रम्। उपहारे तांबूलम्। एवं सुशोभितं कृत्वा पंचगव्येन पंचाऽमृतेन च स्वस्वमंत्रेण प्रोक्षणं कुर्यात्॥ तद्यथा। गायत्र्या गोमूत्रेण मानस्तोके० इति गोमयेन आप्यायस्वेति दुग्धेन दधिक्राव्णो इति दध्ना तेजोसीत्याज्येन च प्रोक्षयेत्।पुनः पयः पृथिव्यामिति गोदुग्धेन। दधिक्राव्णो इति दध्ना। घृतं घृत० इति घृतेन मधुवाता इति मधुना अपा ठं० रसमुद्वयेति शर्करोदकेन च स्नापयेत्। ततः आपोहिष्ठेति तिसृभिः। वरुणस्योत्तं० तत्त्वायामि० इमम्मेवरुण० इत्यादिवारुणमंत्रैः कुशोदकेन प्रोक्ष्य अहतं वस्त्रं परिधापयेत्। यज्ञोपवीतद्वयं मंत्रेण परिधापयेत्। ततो गंधपुष्पमालादिभिः कर्पूराऽगरुसुधूपैश्च तं भूषयित्वा मंत्रेण प्राणप्रवेशं भावयेत्। ॐ प्राणाः शिशुर्महीनां० १ इति मन्त्रं पठित्वा। ॐ यन्मेयमं वैवस्वतम्० १ इति स्पृष्ट्वा जपेत्। ॐ अयं स देवदत्त इति तमभिमृश्य। उशन्नाग्निश्चेन्मृताधानवदग्निं श्रौतं स्मार्तं चोत्पाद्य। अयमस्यावसथ्याग्निरयमस्यश्रौताग्निरिति वदेत्। ततः। शालग्रामशिलोदकेन

गंगोदकेन च संप्रोक्ष्य वैतरण्यादिदानम् । अष्टौ महादानानि च दत्त्वा समाचारात्तस्य नाभिदेशे घृतदीपमदीर्घकालावस्थायिनं न्यस्य दीपस्य नाशे तस्य प्राणस्योत्क्रांतिर्ज्ञातव्या । ततो दाहविधिना पुत्तलं दग्ध्वा स्वशुद्ध्यर्थं त्रीन् षट् द्वादश पञ्चदश वा कृच्छ्रान् प्रायश्चित्तानुसारेण गोहिरण्यादिप्रत्याम्नायद्वारा संपाद्य दशगात्राद्यौर्ध्वदेहिकं सर्वं कुर्यात् । एवं कृते प्रेतस्य मुक्तिर्भवति इति पर्णनरदाहप्रयोगः ॥ अथ त्रिपिंडीश्राद्धविधानम् ॥ स्कंदपुराणे—नारद उवाच ॥ देवदेव महादेव त्रैलोक्यस्याघनाशन ॥ प्रेतपीडाभिभूतानां कथं मुक्तिर्वद प्रभो ॥ १ ॥ श्रीविष्णुरुवाच ॥ बाला युवानो वृद्धाश्च कुले यस्य मृता ननु ॥ लुप्तपिण्डा लुप्ततोयाः स्नानं धर्मं विना मृताः ॥ २ ॥ खट्वायां दुष्टसंस्पृष्टा ये मृता वंदिवेश्मनि ॥ विना मंत्राग्निना दग्धा येऽपमृत्युवशं गताः ॥ ३ ॥ शूद्रान्नसेविनो ये च तत्कलत्रापहारिणः ॥ परदाररता ये च परद्रव्यापहारकाः ॥ ४ ॥ वेदशास्त्रविहीनाश्च तथा ये वेदनिंदकाः ॥ आत्माभिमानिनो ये च परपीडापरायणाः ॥ ५ ॥ एवं नानाविधा विप्राः प्रेत्य प्रेता भवंति ते ॥ स्त्रियश्च पुरुषाश्चैव इहैवाप्यन्यजन्मनि ॥ ६ ॥ कुले ग्रामे वने गेहे पीडां कुर्वंति ते च वै ॥ कलहो यत्र नित्यं हि मलिनत्वं दारिद्र्यता ॥ ७ ॥ दैन्यं विपर्ययमृतिः सा पीडा प्रेतसंभवा ॥ राजचौराग्निदुष्टैश्च ह्रियते यद्धनं वने ॥ ८ ॥ पापकर्मरतं वित्तं सा पीडा प्रेतसंभवा ॥ आत्मधर्मविहीनो यः परधर्मरतो भवेत् ॥ परगेहनिवासश्च सा पीडा प्रेतसंभवा ॥ ९ ॥ परस्त्रीषु परस्वेषु परद्रोहेषु ये रताः ॥ परवृत्तिं हि चेच्छंति सा पीडा प्रेतसंभवा ॥ १० ॥ पुत्रद्वेषः पितुर्द्वेषस्तथा द्वेषस्तु बंधुषु ॥ नानाजातिषु यो द्वेषः सा पीडा प्रेतसंभवा ॥ ११ ॥ एवं नानाविधाः पीडाः प्रेताः कुर्वंति जंतुषु ॥ तेषां पीडाविनाशार्थं त्रिपिण्डीश्राद्धमाचरेत् ॥ १२ ॥ तीर्थे देवालये नद्याः संगमे चाश्रमे तथा ॥ तडागेऽश्वत्थमूले वा त्रिपिण्डीश्राद्धमिष्यते ॥ १३ ॥ अदैवं श्राद्धमे

तद्धि विप्राभावे वटुत्रयम् ॥ दर्भाणां तत्र बालस्तु युवानः स्थविरास्तथा ॥ १४ ॥ अनादिष्टसुगोत्रं तु प्रेतश्राद्धे प्रपूजयेत् ॥ यवपिष्टैः पायसेन तिलैः पिण्डत्रयं त्यजेत् ॥ १५ ॥ देशकालादिकं स्मृत्वा विष्णुपूजां समाचरेत् ॥ पौरुषेण तु सूक्तेन विष्णुमंत्रेण वा सुतम् ॥ १६ ॥ स्थाप्य रम्यं तु कलशं सर्वोपस्करसंयुतम् ॥ प्रतिपूज्य महाविष्णुं बद्ध्वा चैव वटुत्रयम् ॥ १७ ॥ कलशेषु तिथौ चैतं मंत्रराजमुदीरयेत् ॥ इमं लोकं परित्यज्य गतोऽसि परमां गतिम् ॥ १८ ॥ मनसा वायुरूपेण कुशे त्वां योजयाम्यहम् ॥ दत्त्वा पिंडत्रयं विप्रं प्रतिपूज्य यथाक्रमम् ॥ १९ ॥ गोदानं भूमिदानं च तिलदानं तथैव च ॥ हिरण्यसर्पिर्दानं च वस्त्रदानं गुडस्य तु ॥ २० ॥ रौप्यदानं लवणकं दश दानानि भागशः ॥ दत्त्वा तानि महाबाहो विष्णुतर्पणमाचरेत् ॥ २१ ॥ शंखोदकेन पयसा मिश्रेण तु तिलैः सह ॥ सूक्तेन पौरुषेणाथ मंत्रैरन्यतमैः शुभैः ॥ २२ ॥ ततस्तु प्रार्थयेद्देवं शंखचक्रगदाधरम् ॥ हृषीकेशं जगन्नाथं पुंडरीकायतेक्षणम् ॥ २३ ॥ त्वया संरक्षिता देवा दैत्यभीतेर्जनार्दन ॥ तथा मां प्रेतपीडाभ्यो रक्षस्व शरणागतम् ॥ २४ ॥ ततो विसर्जनं कृत्वा वटूनां कलशैः सह ॥ गोदानानि ततो दत्त्वा यथोक्तानि यथाक्रमम् ॥ २५ ॥ ब्राह्मणान्भोजयेद्भक्त्या पायसेन घृतेन च ॥ एवं यः कुरुते मर्त्यस्तस्य पीडानिवारणम् ॥ २६ ॥ भविष्यति सदा पुत्रसुखं भुंक्ते स्ववेश्मनि ॥ इति त्रिपिंडीश्राद्धविधानम् ॥ ॥ छ ॥ ॥ छ ॥

श्रीगणेशाय नमः ॥ ॥ अथ त्रिपिण्डीश्राद्धपद्धतिः प्रारभ्यते ॥ तत्रादौ कर्त्ता तीर्थे गत्वा शुचिः सन् पूर्वमेव प्रकल्पिते गोमयोपलिप्तस्थाने कृतकुशोपग्रहः स्वाचान्तः प्राणायामाऽङ्गन्यासं कृत्वा देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं विष्णुषोडशोपचारपूजामहं करिष्ये। इति संकल्प्य षोडशोपचारैरशक्तौ पञ्चोपचारैर्यथोक्तपूजनं कुर्यात् ॥ ततो दक्षिणाभिमुख उपविश्य सम्मुखे कलशत्रयस्थापनं कुर्यात् ॥

भूरसीति मंत्रेण भूम्यै नमः ।भूमिस्पर्शः ॥ धान्यमसीति धान्यम् ॥ आजिघ्रकलशमिति कलशाय नमः कलशं स्थापयामि॥ वरुणस्योत्तं
भनमसीति वरुणाय नमः जलम् ॥ यवोसियवयास्मादिति यवान् ॥ याओषधीरिति ओषधीः ॥ याःफलिनीरिति फलम् ॥ हिरण्यगर्भेति
पंचरत्नम् ॥ तदुपरि सुवर्णमूर्तिस्थापनम् ॥ मूर्तेर्वस्त्रेण वेष्टनम् ॥ मनोजूतिरिति प्रतिष्ठाप्य देवानावाहयेत् ॥ प्रथमकलशे ॐ इदंविष्णु
र्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरे ॥ इति सत्त्वरूपं विष्णुमावाहयामि स्थापयामि ॥ द्वितीयकलशे—ब्रह्मजज्ञानं प्रथमंपुरस्ता
द्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्च विवः ॥ इति रजोरूपं ब्रह्माणमावाहयामि
स्थापयामि ॥ तृतीयकलशे—ॐ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः ॥ बाहुभ्यामुततेनमः ॥ इति तमोरूपं रुद्रमावाहयामि स्थापयामि ॥
ततस्त्रयाणां पूजनम् ॥ तत्र त्रयाणां ब्राह्मणानां वरणम् ॥ तेभ्यः कुण्डलमुद्रिकावस्त्रदानम् ॥ अथ घटत्रयस्थापनम् ।
आचमनम् । विष्णुस्मरणम् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुख उपविश्य प्रागग्रेषु कुशेषु उदङ्मुखोपविष्टानां त्रयाणामेव
ब्राह्मणानां निमन्त्रणं कुर्यात् ॥ कुशजलतिलान्गृहीत्वा ॐ श्राद्धक्षणं क्रियताम् । करवाम इति ॥ यथा प्राप्नुवन्तु भवन्तः ।
प्राप्ताः स्मः "अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः । भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥ सर्वायासविनिर्मुक्तैः
कामक्रोधविवर्जितैः ॥" भवद्भिस्त्रिपिण्डीश्राद्धं पितृकार्यं सम्पाद्यमेव प्रसीदत ॥ इति नियमाञ्श्रावयेत् । यथा नामगोत्र अनिर्दि
ष्टसापेक्षकः सत्त्वरूपविष्णुशर्म्मन् एतत्ते पाद्यं पाद्यावनेजनं पादप्रक्षालनम् । एष अर्घः । इदमत्र चन्दनं च पुष्पं पादार्घे इदमाचमनी
यम् । एवमपरद्वये—यथानामगोत्र अनिर्दिष्टसापेक्षक रजोरूपब्रह्मशर्म्मन् एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनम् । एष अर्घः । इदमत्र

चंदनं च पुष्पं पादार्घं । इदमाचमनीयम् ॥ एवं तृतीये—यथानामगोत्र अनिर्दिष्टसापेक्षक तमोरूपरुद्रशर्म्मन् एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनम् । एष अर्घः । इदमत्र चन्दनं च पुष्पं पादार्घं इदमाचमनीयम् ॥ ततः सव्यम् । आचमनम् । उपग्रहकुशत्यागः । पुनः कुशोपग्रहः । प्राणायामः । अपसव्यम् । दिग्बन्धनम् । "पूर्वे नारायणो देवो दक्षिणे मधुसूदनः ॥ पश्चिमे वामनो देव उत्तरे च गदाधरः ॥१॥ ऊर्ध्वं तु पुण्डरीकाक्ष अधस्ताद्विष्णुदेवताः"॥नीवीबन्धनम्।सव्यम्। "श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ॥ ताभ्यां चैव नमस्कारं कृत्वा श्राद्धं समाचरेत् ॥ १ ॥ सप्त व्याधा दशार्णेषु मृगाः कालंजरे गिरौ ॥ चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥ २ ॥ तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ॥ प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥ ३ ॥" ततो देवताभ्य इति त्रिर्जपेत् ॥ ततः कर्मपात्रोदकपूरणम् ॥ आसनम् । मध्ये तिलयवतुलसीचन्दनप्रक्षेपः । कर्मपात्राभिमंत्रणम् । ॐ यद्देवा अवरो वरेण्यो वरदो वाहो धरणीधरः ॥ इत्यामन्त्रैः पाकप्रोक्षणम् । अपवित्रः पवित्रो वा इत्यादिश्लोकं पठेत् । त्रिपिण्डीश्राद्धोपहाराणां पवित्रताऽस्तु।सव्यम् । देशकालादिकं स्मृत्वा मम शरीरस्य पुत्रकलत्रादेश्च सर्वेष्टजनस्य प्रेतपीडोपशांत्यर्थं [अपसव्यम्] यथानामगोत्राणामनिर्दिष्टसापेक्षकानां सत्त्वरजस्तमोरूपाणां विष्णुब्रह्मरुद्रशर्म्मणाम् । असद्गतिविनाशपूर्वकस्वर्गलोकाद्यक्षयविष्णुलोकप्राप्त्यर्थं त्रिपिण्डीश्राद्धमहं करिष्ये इति संकल्पः ॥ आसनम् । यथानामगोत्राय अनिर्दिष्टसापेक्षकाय सत्त्वरूपाय विष्णुशर्म्मणे इदमासनं स्वधा । हस्तप्रक्षालनम् । उपग्रहविष्टरार्थम् । इमे कुशाः । एवम् । यथानामगोत्राय अनिर्दिष्टसापेक्षकाय रजोरूपाय ब्रह्मशर्म्मणे इदमासनं स्वधा । यथानामगोत्राय अनिर्दिष्टसापेक्षकाय तमोरूपाय रुद्रशर्म्मणे इदमासनं स्वधा ॥ अर्घपात्रपूरणम् । एकैकं पवित्रम् । शन्नो देवीत्युद

कम् । तिलोसि सोमदैवत्यो गोसवो देवनिमितः ॥ प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणाहि नः स्वधा ॥ इदमत्र चंदनं च पुष्पम् । अर्घपात्राणामर्चनविधेः परिपूर्णताऽस्तु स्वधा भवतु । अस्तु स्वधा । पवित्राणां पूजनम् । या दिव्या आपः पयसा संबभूवुर्याऽ आन्तरिक्षाऽउत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः सᳬस्योनाः सुह वा भवन्तु ॥ यथानामगोत्र अनिर्दिष्टसापेक्षक सत्त्वरूप विष्णुशर्म्मन् एष तेऽर्घः ॥ एवं रजोरूप० । एवं तमोरूप० । अत्र संस्रवाभावः । नार्घवन्दनम् । न पात्रन्युब्जीकरणम् । [ सव्यम् ] ब्राह्मणानां पूजनम् । वाससां संप्रदानम् । पुष्पमालायज्ञोपवीतदानम् । धूपदीपौ । अर्च्चनसंकल्पः । [ अपसव्यम् ] यथादत्त गन्धाद्यर्चनम् । यथानामगोत्राय अनिर्दिष्टसापेक्षकाय सत्त्वरूपाय विष्णुशर्म्मणे अक्षय्यमस्तु स्वधा ॥ एवं रजोरूपाय तथा तमोरूपाय अर्च्चनं गन्धादिकं स्वधा ॥ अस्य श्राद्धस्य विधेः परिपूर्णताऽस्तु [ सव्यम् ] आचमनम् । ब्राह्मणानां परिवेषणम् । मधुपायसमिष्टान्नकृशरमाषान्नैर्भोजयेत् । ब्राह्मणभोजनसंकल्पः ॥ [ अपसव्यम् ] इदमन्नं घृताद्युपस्करसहितं यद्दत्तं यच्च दास्यामि तृप्तिपर्यन्तं तत्सर्वं यथानामगोत्राय अनिर्दिष्टसापेक्षकाय सत्त्वरूपाय विष्णुशर्मणे अक्षय्यमस्तु स्वधा ॥ एवं रजोरूपाय तमोरूपायेति वक्तव्यम् [ सव्यम् ] ततस्तेभ्योऽपोशनार्थं जलदानम् । ब्राह्मणैस्तु बलिदानादिवर्जं जले प्राशनमात्रपूर्वकं भोक्तव्यं यथा विधिः ॥ ततो यज्ञोपवीती प्राङ्मुखो यजमानो गायत्र्यादिकं जपित्वा मधुवातेति त्र्यृचं च ब्राह्मणा स्वदितमिति वक्तव्यम् । सुस्वदितमिति प्रतिवचनम् । [ अपसव्यम् ] पिण्डस्थाने रेखाकरणम् । अपहताऽअसुरा रक्षाᳬसि वेदिषदः ॥ इति रेखोपरिदक्षिणाग्रान् कुशानास्तीर्य ततोऽवनेजनं दद्यात् । यथानामगोत्र अनिर्दिष्टसापेक्षक सत्त्वरूप विष्णुशर्म्मन् अवनेनिक्ष्व एवं ब्रह्मन्० । एवं रुद्र० । यदि तु प्रेतोऽज्ञातनामगोत्रो

भवेत् तदाऽमुकगोत्र सत्त्वरूप अमुकप्रेत एवं रजोरूपाऽमुकप्रेत तमोरूपाऽमुकप्रेतेति प्रयोक्तव्यमिति ॥ ततः पिण्डद्रव्ये--मधुवा ताऽऋतायते मधु क्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ मधुनक्तमुतोषसो मधुमत्पार्थिव ठं० रजः । मधुद्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ॐ मधु मधु मधु ॥ ततः । पिण्डस्थाने समूलदक्षिणाग्रान् कुशान्कृत्वा तत्र सर्वतस्तिलान्प्रक्षिपेत् । ततो यवादिपिष्टेषु मधुरत्रयं संयोज्य क्रमेण पिण्डत्रयं कृत्वा प्रथमं यवपिण्डमादाय पितृवंशेत्यादिश्लोकान्पठेत् । तिलयुक्तं पिण्डं वक्ष्यमाणैर्मन्त्रैर्दद्यात् "पितृवंशे मृता ये च मातृवंशे तथैव च ॥ गुरुश्वशुरबंधूनां ये चान्ये बान्धवाः स्मृताः ॥ १ ॥ ये मे कुले लुप्तपिण्डाः पुत्रदारैर्विवर्जिताः ॥ क्रियालोपगता ये च जात्यन्धाः पंगवस्तथा ॥ २ ॥ विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ॥ भूमौ दत्तेन पिण्डेन तृप्ता यांतु परां गतिम् ॥३॥ इदं यवमयं पिण्डं मधुसर्पिःसमन्वितम् ॥ ददामि तस्मै प्रेताय यः पीडां कुरुते मम ॥४॥ ये केचित्प्रेतरूपेण वर्तंते पितरो मम ॥ यवपिण्डप्रदानेन तृप्तिं गच्छन्तु शाश्वतीम् ॥५॥ ये केचिद्दिवि तिष्ठन्ति प्रेताः सात्त्विकरूपिणः ॥ सात्त्विकपिण्डदानेन तृप्तिं गच्छन्तु मेऽक्षयाम् ॥ ६ ॥ यथानामगोत्र अनिर्दिष्टसापेक्षकसत्त्वरूपविष्णुशर्मन् एष ते पिण्डः स्वधा नमः ॥ १ ॥ द्वितीयं व्रीहिपिण्डमादाय पितृवंशेति पूर्ववत्पठित्वा पिण्डं दद्यात् । तत्र मंत्राः ॥ "इमं व्रीहिमयं पिण्डं मधुरत्रयसंयुतम् ॥ तन्मुक्तये प्रयच्छामि पीडां ये कुर्वते मम ॥ १ ॥ ये केचिद्वायुरूपेण वर्तन्ते पितरो मम ॥ तण्डुलपिण्डदानेन व्रजंतु गतिमुत्तमाम् ॥ २ ॥ अन्तरिक्षे च ये जाता राजसा वायुरूपिणः ॥ राजसपिण्डदानेन तृप्यन्तु संमुदान्विताः ॥ ३ ॥ यथा०रा० ब्रह्मशर्म्मन् एष ते पिण्ड इत्यादिकं पठेत् तृतीयं तिलमयं पिण्डमादाय पितृवंशेति पठेत् । "इमं तिलमयं पिण्डं मधुना सर्पिषा युतम् ॥ तेभ्यो ददामि ये पीडां मे कुले कुर्वते

सदा ॥ १ ॥ ये केचित्तामसाः प्रेता भूमौ तिष्ठन्ति सर्वदा ॥ तेन पिण्डप्रदानेन तृप्तिं गच्छंतु ते ध्रुवाम् ॥ २ तमोरूपाश्च ये कोचिद्वर्त्तंते पितरो मम ॥ तिलपिण्डप्रदानेन ते तृप्यन्तु क्षुधार्दिताः ॥ ३ ॥ तमोरूप रुद्रशर्म्मन् पठेत्। अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् अमीमदन्तापितरो यथाभागमावृषायिपत ॥ इति जपित्वा उदङ्मुखीभूयश्वासं नियम्य तेनैव यथासुखं परावर्त्य—अमीमदन्तापितरो यथाभागमावृषायिपत ॥ इति जपित्वा यथा० प्रत्यवनेनिक्ष्व ते स्वधा ॥ यथा० प्रत्यवनेनिक्ष्व ते स्वधा॥यथा० प्रत्यवनेनिक्ष्व ते स्वधा इति विसर्जनं कृत्वा—नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरः पितरो नमो वः॥ इति षडञ्जलिकरणम्॥गृहान्नः पितरो दत्त सतोवः पितरो देष्म इति जपम् । एतद्वः पितरो वासः इति सूत्राणि प्रतिपिण्डं गन्धपुष्पधूपदीपनैवेद्यादि दत्त्वा यथाक्रमं पिण्डेभ्यो मातुलिंगबीजजंबीरतित्तिडीभिर्बहुवचनोपदेश्यैस्त्रिभिस्त्रिभिः फलै रर्घदानम्॥तत्र वाक्यम् इमानि गन्धादिकानि एष मातुलुंगबीजफलार्घश्च यथानामगोत्राय अनिर्दिष्टसापेक्षकाय सत्त्वरूपाय विष्णुशर्मणे अक्षय्यमस्तु स्वधा ॥ यथा० इमानि गन्धपुष्पधूपदीपनैवेद्यानि ब्रह्मशर्म्मणे अक्ष० ॥ इमानि गन्धपुष्पधूपदीपनैवेद्यानि एष तित्तिडीफलार्घश्च यथा० तमोरूपाय रुद्रशर्मणे अक्षय्यमस्तु स्वधा ॥ पिण्डानामर्चनाविधेः परिपूर्णतास्तु॥ अनेन पिण्डदानेनास्मत्कुले अनिर्दिष्टसापेक्षकाणाम् अक्षय्यतृप्तिरस्तु ॥ गयायां पिण्डदानेन या तृप्तिस्सा तृप्तिरस्तु ॥ त्रिपिण्डश्राद्धेनिमित्तं परिपूर्णमस्तु ॥ [सव्यम्] आचमनम् । विष्णुतर्पणम् । तत्रादावाचमनमुपग्रहकुशत्यागपूर्वकम् ॥ पुनः कुशोदग्रहणम् । ततो देशकालौ स्मृत्वा यथानामगोत्राणां० महातृषोपशमनार्थं विष्णुलोकप्राप्त्यर्थं तत्कर्माङ्गभूतं विष्णुतर्पणमहं करिष्ये । इति संकल्पं कृत्वा चंदनतुलसीयवतिलसर्वौषधिदुग्धामि-

श्रितं जलं कृत्वा शंखोदकेनशालग्रामशिलोपरि तदभावेकुशखंडादौ वैदिकपौराणिकवैष्णवमंत्रान्पठन् तर्पणं कुर्यात्॥ॐसहस्रशीर्षा०॥२२॥ आदित्यै व्युन्दनमसि० । तद्विष्णोः० । ऊर्गसि० । एषा ते शुक्र० । अग्नेस्तनूरसि० । रक्षोहणो वो बलगह० । उरुविष्णो० । अत्यन्यॉं २ याते धामान्युश्मसि० । मित्रावरुणाभ्यां त्वा० । उपया० स्यादित्ये धातारातिः इन्द्रश्च विश्वेदेवा अꣳ अन्युप्ल० सोमꣳ राजानं० । अग्निरेकाक्षरेण० । प्रपर्वतस्य० । वरास्त्वाधापयंतु० विष्णोः क्रमोऽसि० । विष्णोः कर्माणि० । तद्विष्णोः० । अग्निभागोऽसि० । प्रोथदश्वो० । आपितॄन् अग्नयेस्वाहा ॥ वायुष्ट्वा० । अश्वस्तू० । पृश्निस्तिरश्चीन० । कृष्णग्रीवा० । उन्नतऋषभो० । एता ऐन्द्राग्ना० । कृष्णाभौमा० । धूमा च संत्यया० । कृष्णग्रीवा० । बभ्रव उपध्वस्ता धूमा बभ्रुनीकाशाः प्रजापतये च० ॥ ऐरापह्लोरु० । खड्गो वैश्वदेवः० । शादन्दद्भि० । इंद्राग्न्योः पक्षतिः । अथैतान्० । तन्मित्रस्य० आकृष्णेन० । अग्न इन्द्र० । त्रीणि पदा० । तद्विप्रासो० । एवमेतैर्मन्त्रै स्तर्पणं कृत्वा पौराणिकैर्मन्त्रैस्तर्पणं कुर्यात् । ते च मन्त्राः--अनादिनिधनो देवः शंखचक्रगदाधरः ॥ अक्षयः पुण्डरीकाक्षः प्रेतमोक्षप्रदोभव ॥ १॥ अतसीपुष्पसंकाशं पीतवाससमच्युतम् ॥ ये नमस्यंति गोविन्दं न तेषां विद्यते भयम्॥२॥ कृष्ण कृष्ण कृपालो त्वमगतीनां गतिर्भव॥संसारार्णवमग्नानां प्रसीद परमेश्वर ॥३॥ नारायण सुरश्रेष्ठ लक्ष्मीकांत वरप्रद ॥ अनेन तर्पणेनाथ प्रेतमोक्षप्रदो भव॥४॥ हिरण्यगर्भः पुरुषः प्रजानां व्यक्तिकारकः ॥ अस्य प्रेतस्य मोक्षार्थं सुप्रीतो भव तर्पितः ॥५॥अथ विष्णुनामभिस्तर्पणम् ॥ केशवस्तृप्यतु० । पद्मनाभस्तृ० । जनार्दनस्तृ० । अनंतस्तृ० । दामोदरस्तृ० । हृषीकेशस्तृ० । पुण्डरीकाक्षस्तृ० । माधवस्तृ० । मधुसूदनस्तृ० ।

वामनस्तृ० । कृष्णस्तृ० । वासुदेवस्तृ० । वैकुण्ठस्तृ० ।विष्णुस्तृ० ।अच्युतस्तृ० ।श्रीपतिस्तृ० ।श्रीधरस्तृ० ।गोविन्दस्तृ० ।त्रिविक्रमस्तृ० । चक्रपाणिस्तृ० । गदाधरस्तृ० । नारसिंहस्तृ० । श्रीरामस्तृ० । नारायणस्तृ० । उपेन्द्रस्तृ० । शार्ङ्गपाणिस्तृ० । श्रीवत्सलाञ्छनस्तृ० । पीताम्बरस्तृ० असुरान्तकस्तृ० ।चतुर्भुजस्तृ० ।नरोत्तमस्तृ० ।पुरुषोत्तमस्तृ० ।अनिरुद्धस्तृ० ।संकर्षणस्तृ० । वासुदेवस्तृ० ।अधोक्षजस्तृ० । यज्ञवाराहस्तृ० । गोपालस्तृ० । गोपीपतिस्तृ० । गुणातीतस्तृ० । गरुडध्वजस्तृ० । चाणूरमथनस्तृ० । परमात्मा तृ० । परमेश्वरस्तृ० । निरामयस्तृ० । निर्विकारस्तृ० । निर्विकल्पस्तृ० । निष्कलंकस्तृ० । निर्गुणस्तृ० । सर्वेश्वरस्तृ० । हिरण्यगर्भस्तृ० । वेदपुरुषस्तृ० । ज्योतिःस्वरूपस्तृ० । प्रद्युम्नस्तृ० । शेषशायीतृ० । जगन्नाथस्तृ० । गदाधरस्तृ० । गरुडवाहनस्तृ० । मुकुन्दस्तृ० । धरणीधरस्तृ० । अक्षयमोक्षप्रदस्तृप्यतु ॥ शेषोदकं शालग्रामशिलोपरि पिंडोपरि च० ॥ [ अपसव्यम् ]यथानामगोत्राणां मोक्षार्थम् इदमुदकमुपतिष्ठतु ॥ अथ कलशोदकं पिंडोपरि सिञ्चेत् । प्रथमं कलशं गृहीत्वा--"विष्णुकलशे स्थितं तोयं विष्णुसूक्ताभिमंत्रितम् ॥ अभिषिञ्चन्तु तत्तोयं प्रेतत्वं च निवर्तयेत्" ॥ १ ॥ विष्णुलोकप्राप्तिरस्तु ॥ द्वितीयं कलशं गृहीत्वा--"ब्रह्मकलशे स्थितं तोयं ब्रह्मसूक्ताभिमंत्रितम् ॥ अभिषिञ्चन्तु तत्तोयं प्रेतत्वं च निवर्तयेत्" ॥२॥ब्रह्मलोकप्राप्तिरस्तु॥तृतीयं कलशं गृहीत्वा--"रुद्रकलशे स्थितं तोयं रुद्रसूक्ताभिमंत्रितम् ॥ अभिषिञ्चन्तु तत्तोयं प्रेतत्वं च निवर्तयेत्"॥३॥रुद्रलोकप्राप्तिरस्तु ॥[सव्यम्]आचमनम्।सुप्रोक्षितादिकरणम्।ततो ब्राह्मणाः स्वस्ति भवंतो ब्रुवंतु इति ब्रूयात् । स्वस्ति सर्वेभ्यः इति प्रतिवचनम् ॥ [ अपसव्यम् ] अक्षय्योदकदानम् । यथानाम० यद्दत्तमन्नपानादिकं तदुपतिष्ठताम् । एवं रजोरूपतमोरूपस्य० येषामुद्दिष्टं तेषामक्षय्यमस्तु । [ सव्यम् ] गोत्रं नो वर्द्धताम् । दातारो नोऽभिवर्द्धन्ताम् । वेदाः संततिरेव च"

श्रद्धा च नो माव्यगमद्बहुदेयं च नोस्तु । अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥ मायाचेथाः । एताः सत्या आशिषः सन्तु ॥ [ अपसव्यम् ] स्वधां वाचयिष्ये । वाच्यतामित्यनुज्ञातः अनिर्दिष्टसापेक्षकेभ्यः स्वधोच्यताम् । अस्तु स्वधेत्युच्यमाने ऊर्जं वहंतीरमृतं घृतं पयः कीलालम्परिस्रुतम् ॥ स्वधास्थतर्प्पयत मे पितॄन् ॥ इत्युदकधारां दद्यात् ॥ दक्षिणादानम्--कृतैतत्रिपिंडीश्राद्धसांगतासिद्ध्यर्थं वस्त्रं तन्निष्क्रयीभूतं द्रव्यं वा दक्षिणां मुखवासताम्बूलं यथानामगोत्राय०अक्षय्यमस्तु। स्वधाकृतैस्त्रिपिण्डी० । यथानामगोत्राय० रुद्रशर्म्मणे अक्षय्यमस्तु । स्वधावस्त्रदानम् । शय्यादानम् । कमंडलुदानम् । छत्रदानम् । उपानद्दानम् । गोदानम् । भूमिदानम् । अन्नमिष्टान्नादिसकलपदार्थदानम् । हीरकमुक्ताफलादिदानम् । ततस्तान्प्रार्थयेत् । "दिव्यन्तरिक्षभूमिस्थाः सात्त्विका राजसास्तथा । प्रेताश्च तामसा येऽन्ये शांतिं यच्छन्तु तर्प्पिताः" ॥ [ सव्यम् ] "अन्नं च नो भवेदतिथींश्च लभेमहि ॥ याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥ १ ॥ मा याचेथा एता आशिषः सत्याः सन्तु ॥ स्वयमेव तिलकं कुर्य्यात् ॥ [ अपसव्यम् ] पिंडोद्धरणभाजनानि चालयेत् ॥हस्तप्रक्षालनम् । पुनः पृच्छा। अथ पूर्वोच्चारिते काले भवतां ब्राह्मणानां वचनात् श्रीतीर्थविष्णुप्रसादात्० ॥ अमुकमासे पक्षे तिथौ वासरे नक्षत्रे करणेत्यादि । एवंगुणविशिष्टशुभपर्वणि तिथौ [ अपसव्यम् ] यथानामगोत्राणां सत्त्वरजस्तमोरूपाणामनामयशाश्वतब्रह्मविष्णुशिवलोकप्राप्त्यर्थं त्रिपिंडीश्राद्धस्य विधेः परिपूर्णतास्तु०।अस्त्विदं ब्राह्मणो ब्रूयात् । अभिरम्यताम् । आमावाजस्य प्रसवो जगम्यादे मे द्यावापृथिवी विश्वरूपे ॥ आमागंताम्पितरामातरा चामासोमोऽमृतत्वेन गम्यात्

[ सव्यम् ] आचमनम् । "आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्तु तथा राज्यं प्रीता नॄणां पितामहाः ॥ १ ॥ इति ब्राह्मणैः कर्तुराशिषो देयाः । यंयं कामं कामयते सोऽस्मै कामः समृध्यते । श्राद्धं च परिपूर्णार्थं स्वर्गं मोक्षं सुखानि च ॥ १ ॥ विष्णुपूजनमहं करिष्ये । यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ १ ॥ यन्न कृतं तत्परिपूर्णमस्तु । स्वस्ति भवंतो ब्रुवन्तु स्वस्ति ॥ इति त्रिपिंडीश्राद्धपद्धतिः सम्पूर्णा ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥



इदं पुस्तकं मुम्बय्यां खेमराजश्रीकृष्णदास इत्यनेन स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणालये मुद्रितम् । संवत् १९६५, शके १८३० ॥

हि-

# कर्मकांडप्रयोगादि ग्रंथाः।



| नाम. | की. रु. |
|---|---|
| संस्कारभास्कर—( शुक्लयजुर्वेदीय गर्भाधानादिसे लेके सब प्रकारके संस्कारोंकी विधि, प्रयोग और मंत्रसहित ) सर्वत्रैवर्णिकयज्ञोपवीतवालेको अति उपयोगी है .... .... .... .... .... .... .... | २।।।) |
| शान्तिप्रकाश—इसमें पहिले गणपत्यादिपूजन पुण्याहवाचन कलशस्थापनादि और विनायकादि ३० शान्ति प्रयोग वास्तुशान्तिप्रयोगादि समेतक है | १।=) |
| गौडीयश्राद्धप्रकाश महानिबंध—इसमें श्राद्धस्वरूप श्राद्धमें ब्राह्मण लक्षण महालयादि निर्णय और श्राद्धप्रयोग क्षयाहश्राद्ध संकल्पश्राद्ध हेमश्राद्ध एकादशादिश्राद्ध मासिकश्राद्ध मन्वादिश्राद्ध नांदीश्राद्धादि बहुतसे श्राद्ध और विष्ण्वादिपूजन पितृतर्पणादि अपूर्व संग्रह है चारोंवर्णोंको उपयोगी है .... | ३) |
| ग्रहशान्ति—( शुक्लयजुर्वेदोक्त ) यज्ञोपवीत विवाहादि शुभकर्ममें बहुत उपयोगीहै .... .... .... .... .... .... .... | ।।) |

| नाम. | की. रु. |
|---|---|
| श्राद्धप्रयोगावली—( शुक्लयजुर्वेदीय ) गुर्जर और दाक्षिणात्यलोगोंको अत्यन्तोपयोगी .... .... .... .... .... .... .... | ।।।=) |
| नवग्रहविधानपद्धतिः—मनुष्यको ग्रह अरिष्ट होनेपरें प्रत्येक ग्रहके स्तोत्र पाठादि पढनेको अवश्य लेना चाहिये .... .... .... .... .... | १) |
| पूजापंकजभास्कर—पांचोंदेवताओंके वैदिक मंत्रोंसे यथोपचार पूजा प्रकरणहै ) | २) |
| श्राद्धविवेक—सब प्रकारके श्राद्धकी विधि प्रमाणयुक्त .... .... .... | ।।।) |
| श्राद्धमयूख— .... .... .... .... .... .... .... | ।।) |
| व्रतोद्यापनकौमुदी—व्रतोंके उद्यापनमें अति उत्तम है .... .... .... | ।।) |
| अन्त्येष्टिप्रकाशः—( यजुर्वेदीय प्रेतकृत्यका ) प्रथमदिवससे लेके एकादशादिश्राद्ध और मासिकश्राद्ध रजस्वलादिमरणे कर्तव्यप्रायश्चित्तादि अत्यंत उपयोगी है |  |
| गयायात्रापद्धतिः—( गयाजीमें श्राद्धादि करनेकी विधि है ) .... .... |  |

पुस्तक मिलनेका ठिकाना—

**खेमराज श्रीकृष्णदास, "श्रीवेंकटेश्वर" स्टीम्-प्रेस-मुंबई**

प्रकाशः